# न्यायवार्त्तिकतात्पर्यटीका

सर्वतन्त्रस्वतन्त्रश्रीमद्वाचस्पतिमिश्रविरचिता ।

काशिकराजकीयसंस्कृतपाठशालायां साहित्यदर्शनाध्यापकेन
महामहोपाध्यायगङ्गाधरशास्त्रिणा
संशोधिता ।



काश्यां

ई. जे. लाजरसकम्पन्याख्येन स्वमुद्रालये मुद्रिता ।

संवत् १९५४ ।

॥ श्रीः ॥

# भूमिका ।

अथेयं प्रकाश्यते न्यायवार्त्तिकतात्पर्यटीका मुद्रयित्वा । अस्याः किल रचयिता [illegible] श्रीमान् वाचस्पतिमिश्रः । अयं सर्वेषु दर्शनेषु निबन्धान् प्रणेतुमुद्यतो न्यायदर्शनस्य सर्वदर्शनोपयोगितामाकलयन् वात्स्यायनमुनिप्रणीतं गौतमसूत्राणां भाष्यं दिङ्नागप्रभृतिभिर्नास्तिकैर्दूषितमुद्दिधीर्षुणोद्योतकरेण निर्मिते न्यायवार्त्तिके पुनरपरैर्नास्तिकैर्दूषिते तदुद्धारायेमं निबन्धमरचयदिति यदक्षपादः प्रवरो मुनीनां शमाय शास्त्रं जगतो जगाद । कुतार्किकाज्ञाननिवृत्तिहेतुर्विधीयते तस्य मया निबन्ध इति वार्त्तिकावतरणिकेन कुतार्किकैर्दिङ्नागप्रभृतिभिरिति तद्व्याख्यानेन इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् । उद्योतकरगवीनामतिजरतीनां समुद्धरणादिति टीकाकृदुक्त्या चावगम्यते । अयं च श्रीवाचस्पतिमिश्रः श्रीमदुदयनाचार्यादतिप्राचीन इति ग्रन्थमवगन्तुमुदयनाचार्यकृततात्पर्यपरिशुद्धिनामके तात्पर्यटीकाव्याख्याने व्याख्येयनिबन्धादरातिशयदर्शिना

मातः सरस्वति पुनः पुनरेष नत्वा बद्धाञ्जलिः किमपि विज्ञपयाम्यवेहि ।
वाक्चेतसोर्मम तथा भव सावधाना वाचस्पतेर्वचसि न स्खलतो यथैते ॥

इति सरस्वतीं प्रति सत्प्रार्थनेन ।

> तर्काम्बराङ्क९०६प्रमितेष्वतीतेषु शकान्ततः ।
> वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ॥

इति श्लोको लक्षणावल्या अन्ते दृश्यते तेनोदयनाचार्यस्थितिशककाल: ९०६ इति लभ्यते । ततः पूर्वं वाचस्पतिमिश्रो वैक्रम ८९८ वत्सरे न्यायसूचीनिबन्धमकरोदिति तदीयेन ।

> न्यायसूचीनिबन्धोऽसावकारि सुधियां मुदे ।
> श्रीवाचस्पतिमिश्रेण वस्वङ्कवसु८९८वत्सरे ॥

इति श्लोकेनावगम्यते । तेनोदयनाचार्यकालाद् १४३ वर्षेभ्यः पूर्वं श्रीवाचस्पतिमिश्र आसीदिति प्रतीयते । न्यायभाष्यदूषणपरः प्रमाणसमुच्चयनामा ग्रन्थो दिङ्नागेन निर्मित इति श्रूयते स त्वद्याप्यन्विष्यमाणो ऽप्यनुपलब्धः । वार्त्तिकदूषणपरस्तु किंनामकः केन कृतो निबन्ध इति नाद्याप्यवधृतम् । तामिमां न्यायवार्त्तिकतात्पर्यटीकां साङ्ख्यतत्त्वकौमुद्यां न्यायतात्पर्यटीकायामुपपादितमस्माभिरिति लेखं पश्यद्भिर्दर्शनरसिकैरन्विष्यमाणामप्यनुपलभ्यमानां मनीषिमनः खेदयन्तीं विविधदर्शनानुरागवता काशिकराजकीयसंस्कृतपाठशालाप्रधानाध्यापकेन श्रीमदार्थरवेनिससाहिबमहोदयेन कलिकातास्थपुस्तकालयात्प्रथमतृतीयचतुर्थपञ्चमाध्यायानत्यन्तमशुद्धान् सं० १६०३ वत्सरे लिखितान् अत्रत्यपुस्तकालयस्थं च खण्डितं शुद्धप्रायं लेखकालप्रदर्शनविकलं पुस्तकं मैसूरनगराद् द्वितीयतृतीयचतुर्थाध्यायान् सं० १५५८ संवत्सरे लिखितान् ददता संपादितसमस्तपुस्तको वाराणसीनिवासिना विविधसंस्कृतपुस्तकसंपादनरसिकेन श्रीगोविन्ददासगुप्तमहोदयेन दत्तमशोधितं संपूर्णप्रायं नवीनं पुस्तकमाद्यपुस्तकस्थानउपयोज्य प्रदर्शितपुस्तकेभ्यः पाठभेदानप्युक्तान् प्रदर्शयन् सूत्राणि स्थूलतमाक्षरैर्भाष्यवार्त्तिकभागान् स्थूलाक्षरैष्टीकां सूक्ष्माक्षरैष्टिप्पणीं च सूक्ष्मतमाक्षरैर्निवेशयन् यथामति संशोध्य प्रकाशयन् संभावये दर्शनरसिकमनस्तोषकारिणीम् । अस्यां च मदीयमतेरपाटवेन सीसकाक्षरयोजकदोषेण चोपगता अशुद्धीः क्षाम्यन्तो गुणैकदृष्टयो महाशया आस्वादयन्तु प्राचीनतमदर्शनालोचनसमुत्थं प्रमोदं प्रसीदतु चानेन प्रयासेन भगवान् सर्वान्तर्यामी श्रीकाशीविश्वेश्वर इति शुभम् ॥

संवत् १६५४ का० शु० १ सोमे ।

महामहोपाध्यायो<br>गङ्गाधरशास्त्री ।



॥ श्रीः ॥

# न्यायवार्तिकतात्पर्यटीकायाः सूचीपत्रम् ।

## अ.

४०४ पृ २२ पङ्क्तौ वास्ते कृत्स्नावदिवादरभूतदिवेदित्यर्थसंग्रहो यथाकथं चित् क्रियमाणो दृश्यते परन्तु कुत्रेदं वाक्य कस्य तस्यार्थं इति नावधृतम् । उदयनाचार्यकृततात्पर्यपरिशुद्धावपि तस्य नार्थो विवृतो न च ग्रन्थस्थल प्रदर्शितम् । पाठभेदाश्चात्र नानाविधा दृश्यन्ते । कलिकातापुस्तके कृत्स्नावदिवादरभ्रादिति पाठः । श्रीविशुद्धानन्दसरस्वतीस्वामिवरपुस्तके कृ-त्स्नावदिवादरभूतदिवेति । काशीसंस्कृतपाठशालापुस्तके कृत्स्नावदिवादर-भूतदिवेति । एवं स्थिते महामहोपाध्यायसुधाकरपण्डिता ज्योतिषशास्त्रे चतुर्दशी रविवासरे विरुद्धेत्युक्त तदनुसारेण कृत्स्ना वदिवाकरभूतदिवो । पाठः । कृत्स्ना चान्तिकेत्यर्थः । सूर्ये विशाखा भरणी ज्येष्ठा मैत्रं मघा तथा । चतुर्दशी द्वादशी च विरुद्धा सप्तमी तथेति ज्योतिर्योगे दर्शनादित्याहुः ।

महामहोपाध्यायशिवकुमारमिश्राः कृत्स्नावदिवादरभूतदिवेति पाठम-भिप्रयन्ति । व्याचक्षते च विज्ञानमात्रसत्त्वस्थापनाप्रस्तावे कथं विज्ञानमात्रस्य सत्त्वं बाह्यार्थस्य चासत्त्वं भवतोपपाद्यत इत्यनुयुक्तो विज्ञानमात्रसत्त्ववादी संवे-दनो दृष्टान्तद्वयेन सिद्धान्तद्वयोपपादनप्रकारं स्वकीयं दर्शयति । कृत्स्नेत्यादि-ना । अत्र कृत्स्नावत् इव आदरभूतत् इवेति च्छेदः । अयमर्थः । अहम् बाह्या-र्थाऽसत्त्वोपपादने कृत्स्नावत् इव अस्मि कृत्स्नम् असत् यस्य स कृत्स्नावत् शून्यवादी स इवेत्यर्थः । यथा शून्यवादिना सर्वोऽसत्त्वमुपपाद्यते प्रातीतिक-त्वमुपपादयता तथैवाऽहं बाह्यासत्त्वमुपपादयामीति यावत् । विज्ञानसत्त्वोप-पादने तु आदरभूतत् इव भवामि आदरभूः स्वीकारविषयःसत् कृत्स्नम् यस्य स आदरभूतत् सर्वसत्त्ववादी नैयायिक इत्यर्थः । यथा नैयायिकेन बाह्यान्तरोभय सत्त्वमुपपाद्यते ऽनुभवबलमालम्ब्य तथैव मया विज्ञानसत्त्वमुपपाद्यत इत्या शय इति ।

श्रीविशुद्धानन्दसरस्वतीस्वामिवर्या अस्याः पङ्क्तेरयमर्थः (कथा कर्तरि) कर्तरि नासदिव नासदेव नादर अभूत् तदिव नाम तदेव इत्यां नादर अभूत् यथा कथ चिदर्थसंग्रहः क्रियते नाम वादिप्रतिवादिभ्यामुक्तार्थं व्याख्यायते तथा वादादिषु नाम कथासु तथार्थसंग्रहो न क्रियते पक्षप्रति पक्षग्रह पक्षेर्वादिप्रतिवादिनोः परीक्षणान्नाम परीक्षा परीक्षितस्य शास्त्रा भ्य शास्त्रितत्वान्नाम कथास्वधिकारात् । इति व्याचक्षाणाः कर्तरि ना दिवादरो ऽभूतदिवेति पाठ युक्तं मन्यन्ते ।

अनिरीक्ष्येतद्वाक्यपूर्वोत्तरग्रन्थसंदर्भं न निर्धारयाम्यस्य वाक्यस्य पा तात्पर्यं चेति संशोधक. ।

श्रीगणेशाय नमः ।

# न्यायवार्त्तिकतात्पर्य्यटीका ।

---

विश्वव्यापी विश्वशक्तिः पिनाकी विश्वेशानो विश्वकृद्विश्वमूर्त्तिः ।
विश्वज्ञाता विश्वसंहारकारी विश्वाराध्यो राधयत्वीहितं नः ॥ १ ॥

नमामि धर्मविज्ञानवैराग्यैश्वर्य्यशालिने ।
निधये वाग्विशुद्धीनामक्षपादाय तायिने ॥ २ ॥

ग्रन्थव्याख्यानच्छलेनैव निरस्ताखिलदूषणा ।
न्यायवार्त्तिकतात्पर्य्यटीका ऽस्माभिर्विधास्यते ॥ ३ ॥

इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ ४ ॥

अथ भगवता ऽक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते व्युत्पादिते च भगवता पक्षिलस्वामिना किमपरमवशिष्यते यदर्थं वार्त्तिकारम्भ इति शङ्कां निराचिकीर्षुः सूत्रकारोक्तप्रयोजनानुवादपूर्वकं वार्त्तिकारम्भप्रयोजनं दर्शयति ।

यदक्षपाद इति । यद्यपि भाष्यकृता कृतव्युत्पादनमेतत्तथा ऽपि दिङ्नागप्रभृतिभिरर्वाचीनैः कुहेतुसन्तमससमुत्थापनेनाच्छादितं शास्त्रं न तत्त्वनिर्णयाय पर्य्याप्तमित्युद्द्योतकरेण स्वनिबन्धोद्द्योतेन तदपनीयत इति प्रयोजनवानयमारम्भ इति । सूत्रोक्तप्रयोजनानुवादः प्रयोजनवच्छास्त्रव्युत्पा-

पर्यवसिताः पाप्मानो विलीयन्त इति । न चास्मदादीनां मन्दतपसामियं प्रसङ्गः । न हि मशकानामुदन्वति नौका घटकाष्ठमात्रेण पचतीत्यस्मदादीनामप्युद्यमेन तेजसा तथा भवितव्यम् । कुतार्किकैर्दुर्णयमतितिमिरावहितमज्ञानं कुतार्किकाज्ञानमिति । अविगीतशिष्टाचारपरम्पराप्राप्तः परमेष्ठिना वार्त्तिककृता कृतो ऽभीष्टदेवतानमस्कारो ग्रन्थे न निवेशितः न खल्वन्यदपि मङ्गलं शास्त्रे निवेशितम् । प्रसिद्धतरतया मङ्गलान्तरवच्छिष्या अवगमिष्यन्तीति सर्वमवदातम् ।

तदेवं सङ्क्षेपतः प्रथमसूत्रमवतार्य तस्य तात्पर्यमाह प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्येतच्छास्त्रस्यादिसूत्रं तस्य शास्त्रस्याभिसंबन्धवाक्यम् । आदिपदेन क्रमप्राप्तस्यैव प्रथमं व्याख्यानं युक्तं न द्वितीयादेरिति दर्शितम् । अभिमतसंबन्धो ऽभिसंबन्धः । शास्त्रनिःश्रेयसयोर्हेतुहेतुमद्भावः तस्येदं सूत्रं वाक्यमभिसंबन्धवाक्यम् । प्रमाणादिपदार्थतत्त्वज्ञानादित्यत्र हि तत्त्वं ज्ञायते ऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रमुच्यते । पञ्चम्या च तस्य हेतुत्वम् । न हि विषयमन्तरेणास्याव्ययमात्रेण तदविशेषितार्थे निःश्रेयसहेतुरिति । पदार्थतत्त्वावगमकरणतया शास्त्रमुपदिशति न तु स्वरूपेण । तेन शास्त्रस्य निःश्रेयसे कर्त्तव्ये प्रमाणादितत्त्वावगमो ऽवान्तरव्यापार इत्युक्तं भवति । तथा च प्रमाणादिपदार्थतत्त्वं प्रतिपाद्यं प्रतिपादकं च शास्त्रमिति शास्त्रप्रमाणादिपदार्थतत्त्वयोः प्रतिपाद्यप्रतिपादकभावः प्रमाणादिपदार्थतत्त्वज्ञाननिःश्रेयसयोः कार्यकारणभावलक्षणश्च संबन्धः सूचितो भवति । तदिदमभिधेयसंबन्धप्रयोजनप्रतिपादनार्थं प्रथमसूत्रम् । यत्पदार्थतत्त्वज्ञानस्य यथा निःश्रेयसाधिगमं प्रत्युपयोगस्तथा ऽग्रे निवेदयिष्यते । विनिश्चितप्रामाण्यस्य मुनेराप्तत्वेन तद्वाक्यात्प्रयोजनादि विनिश्चित्य प्रवर्त्स्यन्ति । आप्तत्वानिश्चये त्वर्थसंदेहात् । न चानु कृष्यादावपि निश्चितसस्याधिगमानां प्रवृत्तिः । अन्तरा ऽवग्रहादिना प्रतिबन्धेन फलानुत्पादस्यापि संभवात् । न च प्रयोजनादिसंशयाभावे ऽपि भगवतः साधकबाधकप्रमाणाभावेन न्यायप्राप्तत्वेन तदभिधानमनर्थकमिति साम्प्रतं विशेषस्मृत्यनपेक्षस्य संशयस्यानुत्पादात् । आप्तात् विशेषस्मृतिरिति नानर्थक्यम् ।

तदेवं प्रथमसूत्रतात्पर्यमुक्त्वा भाष्यस्यादिवाक्यतात्पर्यमाह प्रमाणतो ऽर्थप्रतिपत्तावित्यादि तस्यानुसंधानवाक्यम् । तस्य शास्त्रस्य निःश्रेयसाधिगमेन सह सूत्रेण घटितस्य कुतश्चिन्निमित्ताद्विघटनाशङ्कायाम् अनुसूत्रघटनायां. पश्चात्सन्धानं घटनम् अनुसंधानं तस्य वाक्यमनुसंधानवाक्यमिति ।

एवं किलात्र शङ्क्यते । यदशक्यानुष्ठानोपायोपदेशकं तदनर्थकं यथा ज्वरहरतक्षकचूडारत्नालंकारोपदेशकं वाक्यं तादृशं चेदं शास्त्रमिति । तथा हि प्रमेयादीनां तावत्पदार्थानां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनम् । न हि प्रमाणं तत्त्वेनानवधारितं बोधकत्वमात्रेण स्वगोचरावधारणायालम् । तावन्मात्रस्य तदाभाससाधारणत्वात् । अपि तु बोधकत्वैकार्थसमवेतेनाव्यभिचारित्वेन । तदेव हि प्रामाण्यं तत्तत्त्वस्यावधारणम् । तदनवधारणाच्च प्रमेयादयो दुरवधारणाः । तथा हि विज्ञानस्य तावत्प्रामाण्यं स्वतो वा निश्चीयते परतो वा । न तावत्पूर्वः कल्पः । न खलु विज्ञानमनात्मसंवेदनमात्मानमपि गृह्णाति प्रागेव तत्प्रामाण्यम् । नापि विज्ञानान्तरम् । तद्विज्ञानमित्येव गृह्णीयान्न पुनरस्याव्यभिचारित्वम् । ज्ञानत्वमात्रं च तदाभाससाधारणमिति न स्वतः प्रामाण्यावधारणम् । एतेन स्वसंवेदननये ऽप्यव्यभिचारत्वं प्रत्युक्तम् । नापि परतः । परं हि तद्गोचरं वा ज्ञानमभ्युपेयेत अर्थक्रियानिर्भासं वा ज्ञानान्तरं तद्गोचरनान्तरीयकार्थान्तरदर्शनं वा । तद्धि सर्वं स्वतो ऽनवधारितप्रामाण्यमाकुलं सत्कथं पूर्वं प्रवर्तकं ज्ञानमनाकुलयेत् । स्वतो वा ऽस्य प्रामाण्ये किमपराद्धं प्रवर्तकज्ञानेन येन तस्मिन्नपि तन्न स्यात् । न च प्रामाण्यं ज्ञायते स्वत इत्यावेदितम् । यदा च संवेदनप्रामाण्यमुक्तेन क्रमेण दुरधिगमं तदा कैव कथेन्द्रियादीनामव्यभिचारिसंवेदनकार्यव्यङ्ग्यप्रमाणभावानाम् । तदेव दृष्टार्थाः प्राणभृद्व्यवहारा भवन्तु सन्देहादपि यथा तथा अदृष्टार्थास्तु बहुवित्तव्यायाससाध्या वैदिका व्यवहारा दत्तजलाञ्जलयः प्रसक्ताः । तस्मात्प्रमाणादिपदार्थतत्त्वज्ञानाद्दूरेण न शास्त्रं निःश्रेयसेन सम्बध्यत इति सेयमाशङ्का प्रामाण्यज्ञानोपायकथनेन भाष्यकृता निराकृता । तथा हि । प्रमाणम् । अर्थवदिति । नित्ययोगे मतुप् । नित्यता चाव्यभिचारिता । तेनार्थाव्यभिचारीत्यर्थः । इयमेव चार्थाव्यभिचारिता प्रमाणस्य यद्देशकालान्तरावस्थान्तराविसंवादो ऽर्थस्वरूपप्रकारयोस्तदुपदर्शितयोः । अत्र हेतुः

**प्रवृत्तिसामर्थ्यात्** । समर्थप्रवृत्तिजनकत्वात् । यदि पुनरेतदर्थं न प्रामाण्यमभविष्यन्न समर्थां प्रवृत्तिमकरिष्यद् यथा प्रमाणाभास इति व्यतिरेकी हेतुः । अन्वयव्यतिरेकी वा । अनुमानस्य स्वतः प्रमाणतया ऽन्वयस्यापि सम्भवात् । प्रवृत्तिजनकत्वं तु प्रमाणस्य न साक्षात् किं त्वर्थप्रतिपत्तिजननद्वारेणेत्याह **प्रमाणतो ऽर्थप्रतिपत्ताविति** । सर्वस्य चास्योपपत्तिं वार्त्तिकव्याख्यानावसरे निवेदयिष्यामः ।

स्यादेतत् । भवन्तु प्रमाणादयः तत्त्वज्ञाना शास्त्रेण तु ते नाभिधीयन्त इति न निःश्रेयसेन सङ्गतिः शास्त्रस्येत्यत आह । **शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वात्** । यद्यपि श्रेयो दुःखनिवृत्तिमात्यन्तिकीं वदन्ति तथा ऽपि सोपायेन सा ऽत्र श्रेयःशब्देन विवक्षिता तस्या एवास्य शास्त्राभिधेयत्वात् । तदयमर्थः । शास्त्रं तावदेतत् पुरुषश्रेयो ऽभिधत्ते सहोपायेनेत्यनुभवसिद्धं सदवश्यानुष्ठानतया ऽपवदितव्यम् । स चेदवश्यानुष्ठानता ऽपनीता प्रमाणेत इत्यादिना सहितं निःश्रेयसेन सह शास्त्रमिति । शास्त्रस्येत्यादिग्रन्थवाक्यं विवृणोति **शास्त्रं पुनरित्यादिनोपभोगारम्भपर्यवसानेन** । प्रमाणादिवाचकपदसमूहेन तल्लक्षणानि तत्परीक्षाश्चोपलक्षयति तथा च **पञ्चाध्यायी शास्त्रमित्युक्तमित्यविरोधः** । पञ्चाध्यायीत्यनेन व्यूहः समूहितानुचितानुपूर्वी । उपलक्षकपदस्वरूपमाह । **पदं पुनरिति** । एकस्मृतिसमारूढा वर्णा एकार्थप्रतिपादनावच्छिन्नाः समूहः । एवं स्वार्थस्मृत्यवान्तरव्यापाराणां सूत्रपदानां नानापदार्थविशिष्टैकार्थप्रत्ययैककार्यावच्छिन्नानां समूहो वेदितव्यः । एवं क्व चित्केन चिदर्थेनैकेन सूत्रवाक्यानामेकवाक्यत्वं समूहः प्रकरणम् । प्रकरणानामपि क्व चित्स्वार्थसंगत्या समूह आह्निकम् । एवं तत्र तत्र वेदितव्यम् । एताः प्रकरणाह्निकाध्यायार्थपङ्क्तीस्तत्र तत्र लेखतो दर्शयिष्यामः ।

तदेवं शास्त्रस्वरूपं दर्शयित्वा नान्तरेण तदर्थकथनं पुरुषश्रेयोऽभिधायकत्वमस्य सिद्ध्यतीति तदर्थं कथयति **तत्पदार्था इति** । ननु प्रमाणादीनां प्रतिनरमानन्त्येन दुर्ज्ञानत्वमिति तदवस्थमेवानर्थक्यं शास्त्रस्य प्रसक्तमित्यत आह **षोडशात्मानः** । आत्मा स्वभावः प्रमाणादीनां प्रमाणत्वादिसामान्यविशेष इति यावत् । एतदुक्तं भवति । आन्तर्गणिकभेदानन्त्ये

द्वेधा व्यवतिष्ठते । तदाह दृष्टादृष्टभेदेन । न व्यापकत्वं किं तु प्रत्ये-
कमित्याह दृष्टं सुखं स्रक्चन्दनवनितादिभोगजन्यं अदृष्टं च सुखं स्वर्गादि ।
एवं च दुःखनिवृत्तिरपि श्रेयो दृष्टमदृष्टं चेति योजनीयम् । चकारलोपात् ।
अहितनिवृत्तेः श्रेयस आत्यन्तिकत्वानात्यन्तिकत्वे तद्दृष्टादृष्टस्य भेदमाह
११ अहितनिवृत्तिरपीति । अभिमतं श्रेयो निर्द्धारयति । आत्यन्तिकीति ।
पुनरिति निर्द्धारणमेव द्योतयति । आत्यन्तिकत्वं निवृत्तेर्निवृत्तस्य पुनरनु-
त्पादः स च कार्यकारणतदनुषङ्गनिवृत्त्या लभ्यते । न ह्यकारणं कार्यं जायते
तदिदमुक्तमेकविंशतिप्रभेदभिन्नदुःखहान्येति । गौणमुख्यभेदेन चैकविं-
शतेः शरीरादीनां दुःखत्वप्रकारानाह एकविंशतीति । षष्ठमिन्द्रियं मनः । तस्य
विषया इच्छाद्वेषप्रयत्नाः । यद्यपि विषयः शरीरमपि तथाऽपि अन्यथाऽस्य
दुःखहेतुभाव इत्याह शरीरमिति । शरीरावच्छिन्न आत्मप्रदेशो* दुःखायत-
नमिति शरीरं दुःखायतनमुक्तम् । इन्द्रियविषयबुद्धीनां दुःखत्वोपचारे का-
रणमाह इन्द्रियाणीति । तत्रेन्द्रियाणि तावद्गन्धादिविषयबोधनाद् विषया
बोध्यत्वात् । बुद्धयस्तु साक्षाद् दुःखसाधनानीति दुःखत्वेनोपचर्यन्ते । सुखे
दुःखत्वोपचारे बीजमाह सुखमिति । साधनपारतन्त्र्यं क्षयित्वं काम इति
दुःखहेतवः सकलसुखानुषङ्गिणः । तस्मात्सुखमपि दुःखानुषङ्गि तत्प्रकारदुः-
खहानिसाधनमाह तस्य हानिरिति । सम्यगादितत्त्वज्ञानपरिशोधितपरम-
न्यायमार्गः खलु हेयोपादेयमूलद्वादशप्रमेयतत्त्वपरिभावनमुखप्रसंख्यानेन
निर्मूलनिखिलप्रवृत्तिहेतुदोषानुषङ्गः ऽप्रवर्तमानो न शरीरेन्द्रियादिहेतुमपूर्वं ध-
र्माधर्मप्रचयमातनोति । अनादिभवपरम्परोपात्तं च धर्माधर्मप्रचयमनन्तम-
प्यनियतविपाकसमयमपि प्रसंख्यानपरिपाकप्रभावात्परिलब्धोपभोगभागिनः
कायान्निर्माय तत्फलोपभोगात्प्रक्षिणोति । अचिन्त्यसामर्थ्यातिशयो हि समा-
धिः । यथाऽऽहुरागमवन्तः पतञ्जलिपादाः "एको हि योगप्रभावादृते अग-
स्त्यस्य समुद्रं पिबति ॥ एव च दण्डकारण्यं सृजती"ति । सेयमात्यन्तिकी
दुःखनिवृत्तिः श्रेयः तदिदमुक्तं शास्त्रस्य पुरुषश्रेयोऽभिधायकत्वादिति ।

स्यादेतत् । केवलस्य दुःखस्यात्यन्तिकी निवृत्तिः श्रेयः पुरुषप्रवृत्त्य-
ङ्गम् । एवं [illegible] दुःखवत्सुखस्याप्यात्यन्तिकी निवृत्तिरिति कथं श्रेयः कथं च प्रेक्षा-
१८ वत्प्रवृत्त्यङ्गमित्यत आह । पुरुषा रागादिमन्त इति । यद्यपि रागादिमतां

* आत्मप्रदेश इति न पु पा० ।

पृथग्जनानामेतत् प्रवृत्त्यङ्गं ते हि मधुविषसंपृक्तमन्नं मधुमधुरतया आपातरम-णीयं विषविषङ्गान्मारयतु मा वा भीमरदुपभुञ्जते तावदापाततः सुखं को हि हस्तगतं पादगतं करोतीति विचिन्त्योपभुञ्जते विवेकिनस्तु आयतिमालोचयन्तः स्वर्गमपि क्षयितफलविषयामयबहुलच्छायप्रतिममित्यपजहति। तेन मा भूद्वेतद्रागादिमतां प्रवृत्त्यङ्गं विवेकिनां तु भविष्यति। अविवेकिनामपि चाप्रतिपन्नविप्रतिपन्नानां विवेकावलोकनाय पूर्वमावेदितः। शास्त्रप्रवृत्त्यङ्गमात्रमेव चेह विवेको वैराग्यमभिमतमिति। प्रवृत्तेर्द्वैविध्यम्। ऐकरूप्यं द्वैरूप्यं च। २। पुरुषे भेदो रागवैराग्याभ्यां प्राप्यस्य सर्वस्य सुखस्य दुःखसंभेदेनानिष्टपक्षनिक्षेपादनिष्टप्रतिषेधार्थैव प्रवृत्तिर्विवेकिनामेकरूपैव। अविवेकिनां तु प्रवृत्तिर्द्विरूपेत्युक्तम्।

तदनेन प्रबन्धेन प्रमाणतोऽर्थप्रतिपत्तावित्यादिवाक्यस्य तात्पर्यमभिधाय तदवयवं प्रवृत्तिसामर्थ्यादिति विवरीतुं भूमिमारचयति। प्रवृत्तेरपीति। दृष्टं प्रवृत्तिसामर्थ्यहेतुरिति रागादिमत्प्रवृत्तिसामर्थ्यमुपन्यस्तं न तु वीतरागाणाम्। न हि तत्प्रवृत्तेर्निःश्रेयसाधिगमलक्षणफलसंबन्धो दृष्टो निःश्रेयसस्यालौकिकत्वात्। प्रमाणस्यार्थवंदनर्थकत्वादित्युक्तं प्रमाणमनर्थकमिति हि विप्रतिषिद्धमित्यत आह प्रमाणं तावदिति। ३। न त्वप्रमाणमप्रमाणमिति गृहीतं प्रवृत्त्यै कल्पते किं तर्हि प्रमाणमिति। न चाप्रमाणे प्रमाणमित्यभिमानो विना प्रमाणादिसाधर्म्यादिति तत्साधर्म्यं पृच्छति। किं पुनरिति। उत्तरं सामान्यपरिच्छेदकत्वं तद्विवृणोति। प्रमाणेनापीति। रजतादिज्ञानमपि पुरोवर्तिशुक्लभास्वरं सद्द्रव्यं परिच्छिनत्ति। शुक्तिज्ञानमपि केवलमेकस्मिन्नेव विषये रजतसमारोपापवादाभ्यां बुद्ध्योर्बाध्यबाधकभाव इति भावः। तदेवमुभयतः प्रवृत्तिः समर्थात् प्रमाणादेव नाप्रमाणादर्थव्यभिचारित्वादित्याह सो ऽयं प्रमातेति। ततश्च सिद्धः समर्थायाः प्रवृत्तेरनर्थवद्व्यतिरेक इत्यभिसंधिः। तथा च समर्था प्रवृत्तिरनर्थवद्व्यतिरेकसंपन्नप्रमाणस्यार्थवत्त्वे हेतुरित्याह तस्याः समर्थायाः प्रवृत्तेर्हेतोः पुनः प्रमाणस्यार्थवत्त्वमर्थाव्यभिचारित्वम्। असमर्था त्वनन्तरा ऽपि न संबध्यते योग्यताविरहात्। संप्रत्यादिवाक्यमावेष्टुमनुवदति। प्रमाणत इति। आक्षिपति परस्परेति। समाधत्ते नेति। आक्षेपवाक्यं विभजते। यदि प्रमाणत इति। न तावदर्थप्रतिपत्तिः-

प्रवृत्तिहेतुरपि [illegible] तद्विनिश्चयः । न च तन्मात्रम् अपि तु तदर्थजातीयस्य श्रेयोहेतुतया ऽसकृदुपलभ्यमानस्यार्थस्य तज्जातीयतया श्रेयोहेतुभावानुमानसहिता विनिश्चितिः प्रवृत्तिहेतुः । सेयं श्रेय स वचनतानुमानसहिता प्रमाणतो ऽर्थप्रतिपत्तिः विनिश्चितिः समर्थप्रवृत्तिनिमित्तमुक्ता । न चार्थविनिश्चयः प्रामाण्यावधारणमन्तरेण । प्रामाण्यावधारणं च श्रेयोहेतुतानुमाननिमित्तव्याप्तिग्रहणं च न समर्थप्रवृत्तिं विना । न च समर्था प्रवृत्तिस्ताभ्यां विनेति १० परस्पराश्रयता तदिदमुक्तं यदि पूर्वं प्रमाणतो ऽर्थप्रतिपत्तिर्विनिश्चितिरपेक्षिता ऽनुमानसहिता प्रवृत्तिसामर्थ्यमन्तरेण किमिति प्रतिपद्यते किंचिन्नेति ( नोपायं पश्येति तोयमेव चेति )* । समाधानं विभजते । तत्र नैवमिति । यत्तावदुक्तं प्रामाण्यस्य दुरवधारणत्वादर्थविनिश्चयाभावान्न प्रवृत्तिसामर्थ्यमिति । तत्र ब्रूमः सत्यं न स्वतः प्रामाण्यं शक्यावधारणं परतस्तु दृष्टार्थेष्वभ्यासदशापन्नेषु प्रवृत्तिसामर्थ्यादेव तद्गम्यते । अर्थप्रतीत्यधीना तु प्रवृत्तिर्नार्थावधारणाधीना । अर्थसंदेहादपि प्रेक्षावतां प्रवृत्तेः । ते ह्यल्पायासा विनिश्चयेनापि प्रवर्तमाना अनायासफले न बाध्यन्ते । तदमी संदिहाना अपि प्रवर्तमानाः प्रवृत्तिसामर्थ्यात्प्रमाणस्य तस्य विनिश्चयस्य तज्जातीयस्यान्यस्याभ्यासदशापन्नस्य प्रवृत्तिसामर्थ्योत्पादेन तज्जातीयत्वेन लिङ्गेन प्रामाण्यावधारणादर्थविनिश्चयेन प्रवर्तन्ते । एवं च दृष्टार्थमन्त्रायुर्वेदप्रामाण्यं प्रवृत्तिसामर्थ्येनावधार्य तज्जातीयस्यादृष्टार्थस्य वेदस्य विना ऽपि प्रवृत्तिसामर्थ्ये प्रामाण्यावधारणमाप्तोक्तत्वेन निवेदयिष्यते । न च फलज्ञानं परीक्ष्यते प्रवा वद्धि तस्य यादृच्छिकत्वादपौरुषेयत्वादिदूषणत्वात् । फलस्य तत्साधनस्य ते परीक्षन्ते । तथा हि तोयपानं पिपासोस्तेन तत्र प्रवृत्तेन प्रवृत्तस्य तदाप्तिप्राप्तस्य पानं पानेन चोदन्योपशान्तिरित्येतावतैव प्रमाता कृती भवति न पुनरुदन्योपशान्तिमपि परीक्षते तस्य याद[illegible]त्यापौरुषेयत्वादिति के चित् । अत्र तु ब्रूमः । फलज्ञा[illegible] [illegible]विषयाप[illegible] [illegible]ज्जातीयत्वेन लिङ्गेनाव

तत्पूर्वसाधर्म्येण पूर्ववदन्येष्वनादित्वेनाथ परिहारः । एतेषु च मध्ये प्रत्यक्ष-
लक्षणस्य स्वप्नाद्युपभोगतुल्यतया शङ्किताव्यभिचारं तदनभ्यासदशापन्नमतः
प्रवृत्तिसामर्थ्ये तस्य प्रामाण्यावधारणाय निवेशनीयमित्यर्थः । प्रतिपत्तिप्रवृत्ति-
सामर्थ्ययोरनादित्वमुक्तम् । अनुमानस्य तु प्रवृत्तिसामर्थ्यलिङ्गजन्मनो
ऽन्यस्य वा निरस्तसमस्तव्यभिचारशङ्कस्य स्वत एव प्रामाण्यमनुमेयाव्यभि-
चारिलिङ्गसमुत्थत्वात् । न हि लिङ्गाकारं ज्ञानं लिङ्गं विना न च लिङ्गं लिङ्गिनं
विनेति । अत एव गृहीताव्यभिचारलिङ्गसमुत्थं निष्कम्पमुत्पद्यते ज्ञानम् । प्र-
त्यक्षज्ञानमर्थादुत्पद्यमानमपि न गृहीताव्यभिचारादपि तु सत्तामात्रेणावस्थि-
तात् । न च कारणान्तराण्यपीन्द्रियादीनि स्वरूपेण गृहीताव्यभिचाराणि न वा
ऽर्थेनाव्यभिचाराणि । शाब्दं तु ज्ञानं नार्थादुत्पद्यते तदभावे ऽपि शब्दे
भावात् । नापि लिङ्गस्येव शब्दस्यार्थाव्यभिचारः किं तु सङ्केतग्रहणमात्रा-
त्पदार्थप्रत्यायनेन वाक्यार्थमवगमयति शब्दः । तस्मात्प्रत्यक्षशाब्दविज्ञा-
नयोर्वेदे स्वतो ऽव्यभिचारग्रह इति प्रवृत्तिसामर्थ्यं तज्जातीयत्वं वा लिङ्ग-
मर्थाव्यभिचारानुसरणीयं ज्ञानगततज्जातीयत्वलिङ्गग्राहिणश्च ज्ञानस्य
मानसप्रत्यक्षस्य तादृशस्यादृष्टव्यभिचारतया परितो निरस्तसमस्तविभ्रमा-
शङ्कस्य स्वतः प्रामाण्यमिति नानवस्था । एतेनोपमानं व्याख्यातम् । संवे-
दनस्य चार्थाव्यभिचारिताकथनेन तत्कारणानामिन्द्रियादीनामपि प्रमाणत्व-
मुक्तं वेदितव्यम् । न ह्यव्यभिचारिज्ञानजनकत्वादन्यत्प्रामाण्यम् । न
चार्थव्यभिचारिणामिन्द्रियादीनां कथमर्थाव्यभिचारिज्ञानजनकत्वमिति साम्प्र-
तम् । कारणस्वभावनियोगपर्यनुयोगयोरशक्यत्वात् । तस्मादर्थसंदेहादन-
भ्यासदशापन्नात्प्रवृत्तौ प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यसंपत्त्या प्रवृत्तिसा-
मर्थ्यज्ञानस्य चाभ्यासदशापन्नस्य तज्जातीयत्वेन प्रामाण्यानुमानादनभ्या-
सदशापन्नस्य तु प्रवृत्तिसामर्थ्यानन्तरज्ञानेन प्रामाण्यानुमानादनादित्वादा-
र्थप्रतिपत्तिप्रवृत्तिसामर्थ्ययोः परस्पराश्रयत्वमस्तीति । अर्थस्यापेक्षितोपाय-
तानुमानप्रवृत्तिसामर्थ्ययोः परस्परापेक्षित्वमवशिष्यते । तत्राप्यनादिता
परिहारः । उत्पन्नमात्रस्य हि बालकस्य स्तनं दृष्ट्वा प्राग्भवीयस्तज्जातीया-
पेक्षितानुभवजनितः संस्कार आविरस्ति ततश्च स्मरणं ततो ऽपेक्षितोपा-
यतानुमानं ततः प्रवृत्तिस्ततः तस्याः सामर्थ्यम् । एवं पूर्वस्मिन् पूर्वस्मिञ्ज-

२० न्यनीत्यनादितया तु बीजाङ्कुरवत्परस्परापेक्षितेति । **अर्थप्रतिपत्तिरिति ।** अर्थस्यापेक्षितोपायस्य प्रतिपत्तिरित्यर्थः । तस्मात्सर्वमवदातम् ।

तदनेनोपक्रमेण प्रमाणतोऽर्थप्रतिपत्तावित्यस्य शास्त्रानुबन्धतया व्याख्यातस्य तात्पर्यं च समाहितम् । इदानीमस्यैव तात्पर्यमाह । **प्रमाणप्रवृत्त्योर्वेति*** । यदिदमाशङ्क्यते । मुनिर्हि प्रत्यक्षाद्यादिव्युत्पादनद्वारेण साक्षाद्वानेन शास्त्रेणान्वीक्षिक्या हेयोपादेयभावाव्यवस्थितद्वादशविधप्रमेयव्युत्पादकं न्यायमनुमानापरनामानं निःश्रेयससिद्धये व्युत्पादयाम्बभूव । न च न्यायतः प्रमाणात्प्रमेयतत्त्वनिश्चयमात्रादि श्रेयसाधिगमोऽपि तु भावनापरिवर्तिना तथाभावाना प्रमेयाणां तु तत्तद्भावनम् आत्मनश्च याथात्म्यभावनाविरत्यादिभ्य प्रवृत्तिभिः आत्मतत्त्वसाक्षात्कारवैराग्यपरिपाकक्रमेणापूर्वयोर्धर्माधर्मयोरनुत्पादेनोत्पन्नयोश्चोपभोगात्प्रक्षयेणेति । तथा च निःश्रेयसप्राप्तेः कारणत्वात्प्रमाणान्न्यायात्प्रवृत्तिरेव बलीयसी न न्यायः । तस्मात्प्रवृत्तिरेव व्युत्पादनीया न

भा न्यायो निःश्रेयसहेतुरपि प्रवृत्तेरन्तरङ्गत्वादिति । तदेतदनुपपन्नं **प्रमाणतोऽर्थप्रतिपत्तौ** सत्यां प्रवृत्तिः सामर्थ्यं फलेनाभिसम्बन्धो न तु प्रमाणतोऽप्रस्यामर्थप्रतिपत्तौ । तस्मादर्थप्रयोजनत्वान्मानमपि प्रवृत्तिवदेव । एतदुक्तं भवति । यथान्तरङ्गतया प्रवृत्तिर्बलीयसी एवं मूलकारणतया प्रमाणमपि । न ह्यप्रमाणात्प्रवृत्तिः फलेनाभिसम्बध्यते किं तु प्रमाणात् । तस्मात्तुल्यमुभयमपि । तथाऽपि प्रमाणव्युत्पादनेन प्रवृत्तिरपि व्युत्पादिता भवतीति प्रमाणस्य व्युत्पादनमेवाकारि शास्त्रे न तु प्रवृत्तेः । सामान्याभिधानं परमन्यापरं तत्रैव प्रकृतत्वादिति प्रामाण्यज्ञानोपायप्रतिपादनपरतयाऽनुसन्धानवाक्यस्यास्य पूर्वमुक्तं सम्प्रति पर्यनुयोगमुखेनानुसन्धानवाक्यस्य

१० प्रतिपादयति । **लोकवृत्तेति ।** तथा हि प्रमाणप्रवृत्त्युपायं प्रत्याचक्षाणं यत प्रवृत्ती जायते किं प्रथमप्रमाणेन प्रमाणज्ञानोपायं प्रत्याचष्टे अप्रमाणेन वा । यदि ब्रूयात्प्रमाणेनेति स प्रतिवक्तव्यः प्रमाणज्ञानोपायमविद्वान्कथं भवान्प्रमाणादिति । अप्रमाणेनेति चेत् । अनुपपन्ना वाचालता । अथ प्रमाणेनागृहीतप्रामाण्येनेति । बाह्यशयोर्विसंवाद । तस्मादनिच्छताऽपि त्वया लोकवृत्तमनुसरणीयम् । अन्यथा न लौकिको न परीक्षक उन्मत्तवदुपेक्षणीय स्याद् इति । तदिदं लोकवृत्तमाश्रित्य बोधयितुमनेन भाष्येणानूद्यते

* प्रमाणप्रवृत्त्योर्वेति मुद्रितवार्त्तिकपाठः । ए ३ । प ५ ।

प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्. यतो ऽतः
सर्वः प्रमाता प्रमाणेनावगतार्थतत्त्वेनार्थमवधार्य प्रवर्तमानः फलमुपलभतइति ।
लोकवृत्तं सत्प्रमाणत इत्यादिना वाक्येन कारणप्रदर्शनद्वारेणानूद्यते ।

अस्यैव भाष्यस्य तात्पर्यान्तरं वक्तुं भूमिमारचयति । हेयहानेति । अर्थो ४ ।
ऽर्थशब्दः प्रमाणतो ऽर्थप्रतिपत्तावित्यत्र स्थितः पदं वाचकं येषां तानि तथा ।
एतद्वार्त्तिककारस्यैतादृशं व्याख्यानं भाष्यगतस्य त्वन्यथा भविष्यति । उपायः
शास्त्रमिति । शास्त्रशब्दस्तदर्थपरः अर्थस्यापि शब्दवच्छास्त्रशरीरत्वात् ।
अत एव हेयहानाधिगन्तव्यपदैः प्रमाणप्रमेययोरुपादानाद्गोबलीवर्दन्यायेन
संशयादिषु निग्रहस्थानान्तेषु शास्त्रपदं प्रवर्तते । तेनोपायपदेन संशयादयो
निग्रहस्थानान्ता यथोक्ता इति । ग्रहणवाक्यं विवृणोति । हेयमिति ।
तात्पर्यमाह । एतस्मिंश्चेति । येन प्रमाणप्रमाप्रमेयप्रमातृरूपं चतुर्वर्गान्तरमपि
सूचयति । तत्र हेयादिचतुर्वर्गे अर्थ्यमानतया ऽर्थपदसूचिते प्रमाणादिचतु-
र्वर्गे च प्रमाणस्य प्राधान्यप्रदर्शनार्थमिदं भाष्यम् । यद्यपि चतुर्वर्गद्वयतत्त्वा-
वगमो निःश्रेयसाधिगमहेतुस्तथा ऽपि प्रमाणमेव प्रधानम् । तन्मूलत्वात्त-
त्सिद्धेः । तदिदमुक्तमर्थवदिति । अतिशायने मतुप् । हेयाद्यपेक्षया
प्रमात्राद्यपेक्षया चातिशयेन प्रयोजनवत्प्रमाणम् । कस्मात् प्रमाणतो ऽर्थप्र-
तिपत्तौ सत्यां प्रवृत्तस्य प्रमातुस्तदभिमतलाभात् । प्रमाणस्य च तत्कार्य-
त्वात् । तदिदमुक्तं प्रवृत्तिसामर्थ्यादिति । तदेतस्मात्प्राधान्याद्विशदाभे भ-
देन विपर्ययादुपादानात्प्रागुद्देशः प्रमाणस्येति । एतेन यदाहुरेके यदि प्राधान्यात्प्राथम्य
तत् प्रमेयस्यैव । अन्योपायत्वात्तु संशयादीनां तेषां प्रमाणोपायत्वात् ।
कस्मात्प्रमाणादिभ्यः प्राथम्यं प्रमाणस्येति तन्निरस्तं प्रमाणोपायानामपि
संशयादीनां प्रमाणाधीनत्वादिति । नन्वर्थगतमर्थपदतया हेयादिचतुर्वर्गो
दर्शित इति । प्रमाणादिचतुर्वर्गस्तु कथं प्रदर्श्यतइति पृच्छति । कथं पुन-
रिति । इतरं प्रमाणप्रमेयाधिगतय इति । तदेवं तात्पर्यं व्याख्याय अव-
यवार्थं व्याख्यातुमुपक्रमते । तदिदं वाक्यमवयवश उपन्यस्य वर्ण्यते ।
व्याख्यायते अवयवश इति । तथावयवेषु व्याख्यातव्येषु प्राथम्यात्प्रमाणत
इति विवृणोति । तत्रेति । विभजते प्रमाणत इतीयं निमित्तपञ्चमी चेत् !
कस्मात्प्रमाणादिति नाभिहितमित्यत आह । अस्य प्रमाणत इति । यत्सू-

तस्याभिधानं वचनव्याप्त्या विभक्तिव्याप्त्या [illegible] व्याप्त्यार्थे भात मृष्या-
महे न तु विभक्तिव्याप्त्यर्थमिति षड्भ्यो व्यतिरेकेण तस्याभावादित्याह । कथं
पुनरिति । परिहरति । लभ्यत इति । व्याप्तेः प्रयोजनं पृच्छति । किं सिद्ध-
मिति उत्तरं वचनव्याप्त्या संप्लवो व्यवस्था च । तदुभयं विभजते प्रमा-
णेनेति । यत्र द्वयोर्बहूनां च समूहः प्रमाणानां तत्रैकस्याप्यस्ति प्रतिपत्तिसाधनत्वं
प्रमाणस्येति कथयितुं संप्लवावसरेऽपि प्रमाणेनेत्युक्तम् । अत एव व्यवस्था-
मेवकारः प्रमाणेनैवेति । विभक्तिव्याप्तेः प्रयोजनमाह । विभक्तिव्याप्त्या
हेतुफलभावः । अनुवर्त्तत इत्यनुवर्त्यते । तद्विभजते । प्रमाणादर्था-
धिगतिर्भवतीति हेतुत्वं गम्यते । प्रमाणेनार्थाधिगतिर्भवतीति करणरूपार्थो
गम्यत इति संबन्धः कस्मात्पुनः करणार्थो गम्यत इत्यत आह । प्रमाणेनेति ।
कर्त्रीमर्थाधिगतिं साधयतीति साधकतमत्वात् । अत्र च करणभावनान्तरीयकस्य
हेतुभावस्य पञ्चम्या अभिधानं प्रमाणफलयोस्तादात्म्यप्रतिषेधार्थं भेदाधिष्ठान-
त्वाद्धेतुफलभावस्य न खलु परशुरेव छिदेति । प्रमाणप्रातिपदिकलभ्यकरणत्वा-
नुवादेन प्रमाकारकान्तरेभ्योऽभ्यर्हितत्वेनास्य व्युत्पाद्यत्वं च प्राधान्यं च युक्त-
मिति दर्शयितुम् । संप्लवमाक्षिपति । संप्लवेति । समाधत्ते । नेति । आक्षेपं विभजते
[illegible]रिति । विभिन्नो भिन्नो विषयो येषां तानि तथा । बहुवचनमानन्त्यावि-
कभेदाभिप्रायम् । अर्थसामर्थ्यसमुत्थं हि प्रत्यक्षमर्थगोचरम् । स यथार्थः प्रत्यक्ष-
गोचरो यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति । न च सामान्य
निरस्तसमस्तार्थक्रियासामर्थ्यमेवं भवितुमर्हति । स्वलक्षणं तु स्यात् तदेव पर-
मार्थसत् । अर्थक्रियासामर्थ्यलक्षणत्वाद्वस्तुनः । एतदेवास्य स्वमसाधारणलक्षणं
यद्देशतोऽननुगमेनादेशात्मकस्य परमार्थस्य कालतोऽननुगमेन च क्षणिकत्व-
म् । तस्मात्स्वलक्षणविषयं प्रत्यक्षम् । न च स्वलक्षणमनुमानस्यापि गोचरः । त-
द्धि गृहीतप्रतिबन्धलिङ्गहेतुकं प्रतिबन्धश्च तादात्म्यतदुत्पत्तिलक्षणः स्वल-
क्षणविषयोऽनुपपद्यत इति सामान्यधर्माश्रीयते । न च सामान्यमेकमनेकदेश-
कालावस्थापर्यायं भवितुमर्हति । तदिदमनादिवासनोद्भूतविकल्पाधिष्ठानं विक-
ल्पाकारस्य वा ऽलीकस्य वा स्वमनुमानगोचरोऽभ्युपेयम् । तत्र साधारणासा-
धारण[illegible]विषयप्रतिभासपरम्परयाप्यन्यथानुपपत्तिनिष्ठम् । यत्तु साधारणासा-
धारणं तदन्यथानुपपत्तिनिष्ठमेव यथा ऽनुमेयम् । तद्विज्ञानादौ भावे यथावि-

घटादौ भावाभावे साधारणम् भावाभावसाधारणश्च विकल्पगोचरो ऽस्ति घटो ऽस्ति नास्ति घट इति । यदि पुनरसाधारणो भावो भवेदस्तिशब्दो न युज्येत पुनरुक्तत्वात् । नास्तीत्यपि न वक्तव्यं विरोधात् । एवमभावासाधारणत्वे ऽपि वाच्यम् । न चालीकस्य सर्वसामर्थ्यविरहिणः परमार्थसता स्वलक्षणेन सादृश्यं मन्यते ऽन्यथाकृतेः । न च गोरिति नियतो बुद्धिव्यपदेशौ विना ऽश्वादिव्यावृत्तिम् । तस्मात्सामान्यमन्यव्यावृत्तिरूपमग्राह्यं ग्राह्यभेदाग्रहाद्ग्राह्यत्वेनाध्यवसीयमानमनुमानं ग्राह्ये प्रवर्तयति । पारम्पर्येण च ग्राह्यप्रतिबन्धाद्ग्राह्ये प्रापकत्वसंवादकं सद् भ्रान्तमपि प्रमाणमध्यवसायात्प्रमाणम् । तदस्य न स्वलक्षणं गोचरः । प्रत्यक्षमपि न सामान्यगोचरमित्यावेदितम् । न चाभ्यामन्यत्प्रमाणमस्ति । प्रमाणस्य गतो ऽधेयान्तराभावात् । अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः । न च सामान्यविशेषाभ्यामन्यदस्ति प्रमेयान्तरं इत्येते तत्सम्प्लोष्येते इत्यर्थः । समाधानग्रन्थं विवृणोति । एतच्च नेति । यथा चैतत्तथा तत्र निवेदयिष्यते । विशेषो व्यक्तिरूपः स च घटकोटरादिरन्यस्य व्यवस्थासंकरो ऽग्राह्यत्वान्नाह । इन्द्रियवदिति । संप्लवमुपपाद्य आह । अधिगतत्वादिति । समाधत्ते नान्यथेति । आक्षेपं विभजते । यदीति । स्यादेतत् । नास्ति वैयर्थ्यमधिगतीनामपुनरविनाशितया तद्गोचराधिगत्यन्तरोत्पादं प्रति प्रमाणान्तरस्यार्थवत्त्वादित्यत आह । अधिगतं चार्थमधिगमयता प्रमाणेनेति । यद्यप्यधिगतय आशुतरविनाशिन्यस्तथा ऽप्यनन्तरप्रमाणजनिताऽधिगतिलब्धजन्मनः संस्कारादेव स्थायिनस्तदर्थस्मृतिसंगतिसंभवादधिगतमर्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात् । समाधिवाक्यं विवरीतुमनुवदति । नान्यथेति । विवृणोति । न ब्रूम इति । अयमभिसंधिः । न हि प्रमाणकारणानि प्रेक्षावन्ति येनैवमालोचयेयुः यदधिगतमेव चास्माभिः केन किमर्थं पुनरिहोदास्महे इति । नापि स्वकारणलब्धजन्मानि प्रमाणानि द्रष्टारो ऽसमर्थौ ऽन्यतमेन चास्मासु प्रमाणेन कृतमस्माभिरिति विरन्तुमर्हन्ति । प्रमातुश्चेतनत्वादयमनुयोग इति चेत् न प्रियस्य वस्तुनो ऽनेन भूयो भूयः प्रमित्सितत्वात् । अप्रमित्सितस्यापि च दुर्जनवचनादेः प्रमेयस्यानेन प्रमीयमाणत्वात् । तस्मात्र प्रमाणसंधानात्प्रमाणस्य प्रवृत्तिनिवृत्ती ऽपि किन्तु सामर्थ्याद् अन्यथा ऽनिष्टाद् द्विष्टदुःखस्याप्रत्यक्षत्वप्रसङ्गः । यत्तु प्रमाणं

प्रमित्साधीनप्रवृत्ति तथाहि प्रमाता न व्यापारयेत् किमायातं प्रमाणस्य न हि
तोयमपि पिपासुना न पीयत इति तस्य पिपासोपशमशक्तिरपैति । तस्मा-
दव्यभिचारिसामग्रीजनिता बुद्धिः प्रमा तज्जनकानि च प्रमाणानि समानविषया-
ण्येव । स यत्र चानेन सामग्रीमेव प्रदर्शितोऽन्यथा तु प्रत्यक्षेणेत्यादिना ।
यद्यपि साक्षात्कारासाक्षात्कारादिरपि प्रकारभेदोऽस्ति तथाप्यसौ प्रकृता-
नुपयोगान्नोक्तः । यद्धि च दृष्ट्वा त्वया गृहीतमिति कृत चक्षुषा चक्षुषा वा
गृहीतमिति कृत त्वचेत्युच्येत न रूपविज्ञानं स्पर्शविज्ञानं वोपलभ्येत ।
तदर्थे यत्न स्तच्चाभ्युपेतो तथा च सामग्रीपक्षेऽपि व्यवस्थाया न वैयर्थ्य-
३ मित्याह । विषयान्तर इति । प्रकृतमुपसंहरति । तस्मादिति ।

विभक्तार्थं निरूप्य प्रतिपदिकार्थनिरूपणमवतारयति प्रमाणेति ।
अथ यथार्थेनेत्यवधारणं विचार इति । विचारणीय भावमभिसारो पृच्छति ।
किं पुनरिति । के चिदाहुरनधिगतार्थगन्तृ प्रमाणमिति । विषयसारूप्यमा-
कारस्य विज्ञानस्येत्यन्ये । विज्ञानस्येश्वराकारस्यात्मानात्मप्रकाशनसामर्थ्य-
मित्यपरे । उपलब्धिसाधनमिति वृद्धाः । तस्माद्विप्रतिपत्तेः संशयात्प्रश्न ।
४ भाष्यप्रश्नव्याख्यानेन भाष्यप्रश्नो व्याख्यातः । उत्तरम् । उपलब्धिहेतुः
प्रमाणं न च संशयविपर्ययस्मृत्युपलब्धिकारणयोः प्रसङ्गः अर्थवदित्यधि-
कारात् । तयोश्चापदर्शितार्थव्यभिचारेणानर्थकत्वात् । नो खलु विकल्प्यमान-
वस्तूनि अर्थक्रियासु योपयुज्यते । स्यादेतत् स्मृतिहेतोरपि प्रामाण्यप्रसङ्गः ।
स ह्यसौ नोपलब्धिहेतुः न चार्थसहकारि प्रमाणमिति संस्कारस्यार्थसहकारि-
ताविरहादप्रमाण्यमिति साम्प्रतम् । नष्टोपूरस्य पिपीलिकापङ्क्तिपथस्य चाती-
तानागतपर्यन्तस्य शब्दस्यातीतानागतगोचरस्यार्थसहकारितायिरहितो प्र-
माणत्वप्रसङ्गात् । ज्ञापकत्वेन कार्यत्वेन वा क्वचिदर्थसम्बन्धे संस्कारस्यापि
तत्समानमिति तस्यापि स्मृतिरूपोपलब्धिहेतोः प्रामाण्यं प्रसक्तम् । मैवम् ।
प्रमाणशब्देन तत्समानाम्नात् । प्रमासाधनं हि प्रमाणं न च स्मृतिः प्रमा लोका-
धीनावधारणो हि शब्दार्थसम्बन्धः । लोकश्च संस्कारमात्रजन्मनः स्मृतेर-
न्यामुपलब्धिमव्यभिचारिणीं प्रमामाचष्टे तस्मात्तद्धेतुः प्रमाणमिति न स्मृति-
हेतोः प्रसङ्गः । अनधिगतार्थगन्तृत्वं च धारावाहिकविज्ञानानामधिगतार्थ-
गोचराणां लोकसिद्धप्रमाणभावानां प्रामाण्यं विहन्तीति नाद्रियामहे । न च

कालभेदेनाधिगतगोचरत्वं धारावाहिकानामिति युक्तम् । परमसूक्ष्माणां कालकलादिभेदानां पिशितलोचनैरस्मादृशैरनाकलनात् । न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्तितत्वात्पुरुषस्य प्रापितत्वाच्चोत्तरेषामप्रामाण्यमेव ज्ञानानामिति वाच्यम् । न हि विज्ञानस्यार्थप्रापणं प्रवर्तनादन्यद् न च प्रवर्तनमर्थप्रदर्शनादन्यत् । तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्तकं प्रापकं च । प्रदर्शनं च पूर्ववदुत्तरेषामपि विज्ञानानामभिन्नमिति कथं पूर्वमेव प्रमाणं नोत्तराण्यपि । पुरुषापेक्षया तु प्रामाण्ये चन्दनादिविदां तस्य पुरुषान्तरापेक्षितस्याप्रामाण्यप्रसङ्गः । न चानिदर्शितया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितं तस्योपेक्षणीयविषयत्वात् । न चोपेक्षणीयमप्युपादेयत्वाद्धेयमिति निवेदयिष्यते । उपलब्धिहेतुं च प्रमाणं वदता अनधिगतार्थगन्तृत्वं च बाह्यस्य चात्मनोऽत्मव्यापनशक्तिश्च प्रमाणमिति निरस्तानि भवन्ति । उपलब्धिमात्रस्यार्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाणशब्देनाभिधानात् । हेतुपदेन बाह्यप्रमाणयोः फलादभिन्नयोरपाकरणात् हेतुहेतुमद्भावस्य तादात्म्ये ऽनुपपत्तेरिति । उपलब्धिहेतुत्वं च प्रमाणत्वम् । भवितृव्याख्यानेन भावो व्याख्यातः । तदेव चात्मसत्त्वं वा । उपलब्धिहेतुः प्रमाणं तस्य च भावस्तत्त्वमिति स्थितम् । तदेतदतिव्यापकत्वेनाक्षिपति । समानत्वादिति । समाधत्ते अयं विशेष इति । अयमर्थः । सर्वः कर्ता करणगोचरव्यापारो न साक्षात्फले व्याप्रियते । करणं च द्विधा सिद्धमसिद्धं परश्वादि दारुद्वैधीभावायोद्यम्योद्यम्य दारुणि पातयन् दारु छिनत्तीत्युच्यते न तु साक्षात्कर्तृव्यापारगोचरो दारुद्वैधीभावः किं तु स्वगतद्वैधगतः करणीभूतस्य परशोः संयोगस्योद्यमननिपातनलक्षणस्तु कर्तृव्यापारः परशुगोचर एव । एवं स्वर्गकामोऽपि कर्ता न साक्षात्स्वर्गे व्याप्रियते किं तु तत्करणं यागमसिद्धं साधयति । स्वर्गस्तु यागव्यापारादेवापूर्वाभिधानाद्भवत्यहेयकालान्तरस्थदेहासादितपरिणतिविशेषात्साक्षादुत्पद्यते तद्वदिहापि सिद्धमिन्द्रियादि असिद्धं च तत्संनिकर्षादि व्यापारयन्नुत्पादयत्करणत्वं चरितार्थः करणं त्विन्द्रियादि तत्संनिकर्षादिर्वा नान्यत्र चरितार्थमिति साक्षादुत्पत्त्यावेव फले व्याप्रियते । प्रमेयस्य तु प्रत्ययादन्यत्रोपलब्धिहेतुभाव एव नास्ति केवलं प्रमाणविषयभावमात्रेणोपयुज्यते । प्रमाणस्य हेतुभावः प्रत्यक्षे ऽभिप्रेतो यथाऽऽन्द्रिय-

सत्त्वस्माच्च उपयुज्यते प्रमेयम्। इन्द्रियमेव तावत्सन्निकर्षादिना साक्षात्प्र-
माहेतुः। तत्सिद्धमेतन्न प्रमाता साक्षात्प्रमाहेतुः कर्तृत्वात्। यो यः कर्ता
स सर्वो न साक्षात्फलहेतुः यथा वृश्चनः। यथा वा यजमानादिस्तथा
तस्मात्तथा। तथा प्रत्यक्षप्रमेये न साक्षात्प्रमाहेतुः प्रमेयत्वात्। यद्यत्प्रमेयं
तत्तत्सर्वं न साक्षात्प्रमाहेतुः अनुमेयाग्निवत् तथा चेदं तथा। तदिदं प्रमा-
तृप्रमेययोः प्रमाणे चरितार्थत्वम् अचरितार्थत्वं प्रमाणस्य तस्मात्तदेव फलहेतुः।
प्रमातृप्रमेये तु फलोद्देशेन प्रवृत्ते इति तद्धेतू इव विदिते। चोदयति। एक-
१० देशेति। एकदेशः कर्ता प्रमाणमपि व्याप्तुमर्हतीत्यर्थः। परिहरति। नेन्द्रि-
यार्थसन्निकर्षस्येति। यदि ज्ञानं प्रमाणं तदा ज्ञानस्य प्रमाणत्वोत्पत्तावि-
त्यर्थः। पुनश्चोदयति। यदि तर्हीति। परिहरति। तस्मिन्नपीति। चोद-
यति। यदि प्रमातृप्रमेयाभ्यां सदृशं प्रमाणमिति। प्रमाणत्वादेव
प्रमाया असाधारणत्वात् प्रमातृप्रमेययोरप्रसिद्धिरित्यर्थः। पृच्छति। कथमिति। उत्तरं
प्रमाणमितीति। अथ स्वरूपमेव कारकं कस्मान्न भवति तत्र क्रियावत्त्वस्य
पुरस्तादपदर्शितत्वात् आह न च द्रव्यमात्रमिति। अस्तु तर्हि तद्द्वयोर्व्यापारः
प्रधानक्रियायाः कारणं तस्य च प्रधानक्रियाया निमित्तत्वादित्यत आह। न च
क्रियामात्रम्। न हि स्वरूपेण देवदत्तो वृश्चनः नापि शुद्धोऽयं व्यापारः उद्यमन-
निपातनादि काष्ठच्छेदः। कुतस्तर्हि कारकशब्दं प्रवर्तत इत्यत आह। कार-
कशब्दो हीति। प्रधानक्रियासाधने हेतौ अवान्तरक्रियाविशेषयुक्ते कारके
शब्दः प्रवर्तते। *द्वैधीभावो हि फले प्रधानव्यापारे कर्तुः करणेऽवर उद्यमन-
निपातने अवान्तरव्यापारः कर्मणश्च दारुणः स्थाणोर्द्वैधीभावः कुठारसंयोग
अवान्तरव्यापारः। तेन हि दारु स्वावयवपरिस्पन्दजन्मना अवयवविभागद्वैधी-
भावमनुभवति। तस्मादवान्तरव्यापारस्यैव कारकमिति सामान्येन प्रसाध्य
१५ प्रकृते योजयति। प्रमातृप्रमेयशब्दौ चेति। तावन्तरेण क्रिया प्रधानक्रियासि-
द्ध्यर्थं। परिहरति। न पाचकादिशब्दवदिति। लोकाधीनावधारणाधीनः
सन्त्व शब्दार्थसम्बन्धः लोकस्यातीतानागतवर्तमानक्रियासम्बन्धमात्रविवक्षया
कारकशब्दान्प्रयुङ्क्ते पाचकमानय पक्ष्यति पाचको ऽयमपाक्षीत्पाचको ऽयं पच-
तीति च तुल्यवदेवास्य प्रत्यययोगदर्शनं तत्कस्य हेतोः अपचत्यपि पाच-
कशब्दः प्रवर्तते स्वरूपमात्रनिमित्तादिति। द्वयी हि शक्तिः कारकाणां

* द्वैधीभावो हि फले प्रधानव्यापार इति क. पु. पा.।

कार्योत्पादनं प्रति स्वरूपं च सहकारिसमवधानं च । तथासत्यपि सह-
कारिसमवधाने कारकशब्दानां प्रवृत्तेः सत्यपि च स्वरूपे त्रैकाल्यव्या-
पिनि त्रैकाल्ययोगिकार्यासंभवे प्रवृत्तेः त्रैकाल्ययोगिकार्योपहितमर्यादमेव
स्वरूपं कारकशब्दानां प्रवृत्तिनिमित्तमित्यसत्यपि प्रत्युत्पन्नप्रमाहेतुप्रमाणसं-
बन्धे प्रमातृप्रमेयशब्दयोः प्रवृत्तिरित्युपपन्ने प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत
इति । तत्प्रमाणमुपलब्धिसाधनं साक्षान्न प्रमातृप्रमेये इति सिद्धम् ।

सत्यपि चोपलब्धिसाधनत्वे प्रमातृप्रमेययोरुपलब्धिहेतुरित्यप्रसङ्गः
साधकतमासाधकतमयोः साधकतमे कार्यसंप्रत्ययात्तत्वातिशयत्वेनोद्भूतत्वात-
स्येत्याह । **साधकतमत्वादिति** । साधकतमार्थं पृच्छति । कः खल्विति । ७
उक्तं प्रमाणस्य **भावाभावयोः** प्रमायाः कार्यस्य तद्वत्ता भावाभाववत्ता साध-
कतमार्थः । लक्ष्यलक्षणयोरभेदविवक्षया सामानाधिकरण्यं न तु प्रमातृप्रमेयान्व-
यव्यतिरेकानुविधानमप्यप्रमाया अन्वयव्यतिरेकयोरित्यत आह । **न प्रमात-
रीति** । प्रमातृप्रमेयाभ्यां सह प्रमोत्पादस्यान्ययोगव्यवच्छेदेन संबन्धः प्रमाणेन
सह प्रमोत्पादस्यायोगान्ययोगव्यवच्छेदाभ्यामित्यतिशयः । प्रमातृप्रमेये हि
प्रमाणोपनीतवृत्तिनी प्रमायां न व्याप्रियेते । तेनान्तरायसंभवान्नावश्यं प्रमातृप्र-
मेयव्यापारे सति प्रमा भवति । प्रमाणव्यापारे तु प्रमा भवत्येवेति । कल्पा-
न्तरमाह । **यद्वान्यः प्रमिमीते सोऽतिशयः** । प्रमिमीत इति स्वतन्त्रं
कर्तारं दर्शयति प्रतिपाद्यात्करणाद्व्यवच्छेत्तुम् । यद्वानेनेति च सावधारणम् ।
तत्र यद्वानेनेति करणान्तरं व्यवच्छिनत्ति न हि कर्ता कर्तृमान् किं तु प्रमाणवान्
स्वतन्त्रो ह्याश्रयः परतन्त्रेणाश्रीयते । कर्त्रधीनं हि करणमित्यावेदितम् । प्रमाता
प्रमेयवानपि तु विद्धत्वेनतन्त्रत्वात् प्रमेयस्य न तु प्रमेयवानेव । अनुमानादिषु
प्रमेयस्यातीतत्वादिना सद्भावविरहात् । न तु लिङ्गादिज्ञानवान्न कदा चिदि-
त्यवधारणफलम् । सोऽयं विशेषः प्रमातृप्रमेयाभ्यां प्रमाणस्य । अस्यैव
विशेषस्यातिशयत्वमन्वयव्यतिरेकाभ्यामादर्शयति । **प्रमाणे सतीति** । कल्पा-
न्तरमाह । **सतो वेति** । पूर्वत्र भावप्रधानोऽतिशयो यादृशस्य दर्शितस्तादृग-
न्येषेह व्यतिरेकप्रधानोऽतिशय इति विशेषः । अकर्तृत्वमहेतुत्वमित्यर्थः ।
कल्पान्तरमाह । **संयोगवच्चरमभाविना वा** । इतिकर्तव्यतायां हि व्याप्रिय- ११
माणत्वं न तु कारणादिस्वरूपं करणादिशब्दप्रवृत्तिनिमित्तमपि तु स्वरूप

स्यादिति पूर्वभावेऽपि तत्तु सिद्धमसिद्धं वा प्रमातृप्रमेयस्य पश्चादेव तथा
त्वेन सम्पद्यत इति चरमभावीत्युच्यते सोऽयमस्य चरमभाविता ऽतिशय ।
यथा तन्तूना पटे जनयितव्ये अन्त्या संयोगभेदा यदनन्तरं पट उत्पद्यत-
२२ इति। कल्पान्तरमाह। प्रतिपत्तेरानन्तर्यं वा। यत्र यत्र प्रमाण चरमभावि
तत्र तत्र तदनन्तरं प्रतिपत्ते प्रमाणा भावात् । प्रतिपत्तेरानन्तर्यमेव प्रमा
णस्यातिशयः । स चेति । यो ऽयथार्थो । तदमपि लक्ष्यलक्षणयोरभेदवि-
वक्षयोक्तम्। कल्पान्तरमाह। असाधारणकारणता वा। यतत्र खल्विमा-
प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजो ऽनुभूयन्ते। न च प्रमाता तद्भेद
हेतु । तस्य साधारणत्वात् । न च प्रमेयमेकस्यापि प्रमेयस्य सर्वत्र सर्वप्रति
पत्तिसाधारणत्वात् । प्रमाणानि तु यथायथ मसाधारणानीति भिन्नबुद्धि-
व्यपदेशनिबन्धनानि । तदिदमसाधारण्यमतिशयः अर्थः पुरुषः प्रमाता
ऽथ विवक्षितः । कल्पान्तरमाह । प्रमाकारणेति । प्रमाया असमवायिकारण
मात्मात्मनः संयोगः स च सर्वप्रमासाधारणो नार्थो प्रमाता प्रमेयेण वा सम्यौ
विशेषुम् । तयोरपि तद्वदेव साधारणत्वात् । असाधारणं तु प्रमाण यथायथमा
त्ममनःसंयोगमवच्छिनत्ति। यथ सुखादिप्रमेयाणामपि मन असाधारण व्यव-
च्छेदक द्रष्टव्यम् । सो ऽयमस्यातिशय । अतिशयातिशयिनोरभेदविवक्षया
ऽतिशयशब्दवाच्यमित्युक्तम् । क्रमप्राप्तमर्थवत्पद तात्पर्यतो व्याचष्टे । अर्थ-
ग्रहणमिति । कस्मात्पुनर्निषिध्यते प्रमाणविषया प्रतिपत्तिरित्यत आह ।
यतो न प्रमाणविपर्ययेति। इतिकर्तव्यतानुष्ठान तस्मिन् अर्थ्यत इत्यर्थस्तो
मकरटकादि तथाभावो ऽर्थनीयत्वम् । तत्र सुखदु खसाधनत्वम् । सुख-
साधन उपादेयत्वेन दु खसाधन च हेयत्वेनार्थ्यते । तात्पर्यान्तरमाह ।
उपचर्यायेति । उपेक्षणीयविषये प्रमाणे प्रवृत्तिसामर्थ्य नास्तीति तत्प्रति
षिध्यते । न च तदप्रमाणमिति समर्थस्यापि* दृष्टप्रमाणसाधर्म्येण लिङ्गेन
प्रामाण्यानुमानादिति। चोदयति। प्रमाणार्थग्रहणमिति। समर्थप्रवृत्तिजनिका
हि प्रतिपत्तिःप्रमाणाद्भवतीति अर्थादेव प्रमाणादिति गम्यत इत्यर्थः ।
।११ परिहरति । न प्रमाणविशेषज्ञापनार्थत्वात् । अयमभिसन्धि ।
प्रवृत्तिसामर्थ्येन हि कार्येण प्रमाणस्यार्थवत्त्वमनुमातव्यम् । न चैतस्मादात्म

* समर्थमिति ग पु पा ।

माणस्य कार्ये किं त्वर्थप्रतिपत्तेः । तदनन्तरं समर्था प्रवृत्तिरुपजायते । अर्थ-
प्रतिपत्तिस्तु प्रमाणकार्येति समर्था प्रवृत्तिः प्रमाणकार्या सती प्रमाणस्यार्थवत्त्वं
प्रमापयति । तस्मादर्थगम्यमपि प्रमाणमर्थप्रतिपत्तिकारणत्वेन द्योतनीयम् ।
अन्यथा प्रमाणमर्थवदर्थप्रतिपत्तेः समर्थप्रवृत्तिजनकत्वादिति किं केन संग-
तम् । प्रमाणस्य विशेषः प्रमाणाभासाद्व्यावृत्तिस्तस्य ज्ञापनं स तथार्थो यस्य
प्रमाणग्रहणस्य तत्तथोक्तम् । तस्य भावस्तत्त्वम् । तस्मादेतदुक्तं भवति ।
प्रमाणकार्याया अर्थप्रतिपत्तेः प्रवृत्तिसामर्थ्यं न तदाभासकार्यायास्तस्मात्प्र-
माणस्यार्थवत्त्वं गम्यत इति । तदिदमुक्तं **तथेह प्रमाणेन प्रतिपत्तिः** ८
**सा प्रवृत्तिसामर्थ्यं प्रतिपादयति प्रमाणम्** । अयमर्थः प्रमाणं कर्तृ
प्रवृत्तिसामर्थ्यं प्रतिपद्यमानं प्राप्नुवत् प्रतिपादयति प्रापयति प्रमाणकार्या
ऽर्थप्रतिपत्तिरिति । इदमपि प्रमाणग्रहणस्य प्रयोजनमित्याह । न च प्रमा-
णग्रहणमिति । एकदेशिव्याख्यानमुपन्यस्यति । सुखेति । न केवलं सुख-
दुःखतद्धेतुत्वाद्ध्यमानत्वाज्जायमानत्वात् । दूषयति । नेति । सर्वस्य
सुखदुःखतद्धेतुत्वेन हेयत्वानिःशेषणात् । उपादेयानां प्रमाणशास्त्रापवर्गाणा-
मभावप्रसङ्गाद्व्याघातः । अविवक्षितमर्थेति । चशब्दसमुच्चितमशक्यहा-
नत्वं हेत्वन्तरमादर्शयति **न च प्रमाणादिहानमिति** । सुखदुःखतद्धेतवो
हि हेयाः सन्तो हानोपायमपेक्षन्ते । न च प्रमाणादेरन्यस्तदुपायः संभवति ।
न च प्रमाणादिः स्वोच्छेदाय पर्याप्तः । न चास्मादपवर्गो नाधिगम्यते ।
तस्मान्न शक्यं प्रमाणादिना प्रमाणहानमिति । न चैतन्निःश्रेयसहेतुं शास्त्रं
प्रणयतः सूत्रकारस्य तदनुवर्तिनो वा भाष्यकारस्य विवक्षितमित्याह ।
**न च प्रमाणादिहानं विवक्षितं** तस्मादस्याव्याख्यानमेव शोभनमित्याह
किं त्विति । प्रवृत्तिसामर्थ्याधानयोग्यत्वमधिकारः तस्मात्सुखदुःखतद्धेतूप-
पार्थप्रतिपत्तिरेव हि समर्थां प्रवृत्तिमाधत्ते न त्वर्थमात्रप्रतिपत्तिरित्यर्थः । न
केवलं व्याघातादशक्यहानत्वादविवक्षितत्वादर्थपदेन सर्वसंग्रहो ऽशक्यत्वादपि न
सर्वसंग्रह इत्याह । न संविद इति । सुखदुःखतद्धेतुतया न संविदां ग्रहणं
संग्रहः सर्वमध्यपतिताया अपि । कुतः अनधिकारात्सुखदुःखतद्धेतुयोग्यता-
विरहात् । नाप्यर्थ्यमानत्वेन संग्रह इत्याह । अकर्मत्वाच्च । न तावत्सर्वा ९ ।
एव संविदः संविद्गोचरा मनोयोगेनयः संवेद्या भवितुमर्हन्ति । एकनीलविषय-

सम्यक्त्वमिदमेव यद्यादृशं प्रमाणेनोपदर्शितस्तथात्वं न पुनरन्यथाभाव इति ।
यदा त्वादिभाष्यवाक्ये ऽर्थशब्दः प्रयोजनवचनस्तदेव व्याख्यानम् । अर्थवन्ति
च प्रयोजनवन्ति च यत्समर्थं शक्तं प्रमाणं प्रतिपत्त्यादिक्रमेण पूर्वोक्तेन प्रयोजनं
प्रति अतः समर्थे प्रमाणे प्रमात्रादीन्यर्थवन्ति प्रयोजनवन्ति भवन्ति यतस्ता-
न्यपि प्रमाणवदेव समर्थानि शक्तानि प्रयोजनं प्रतीति अत्र हेतुरन्यतमापाये भा
इति । तस्यार्थं व्याचष्टे । अन्यतमत्वार्थं इति । नन्वन्यतमशब्दो बहूनां ६ ।
निर्द्धारितविशेषमेकमाह न तु साधकतममित्यत आह । प्रकरणादिति ।
साधारणशब्दो हि प्रकरणाद्विशेषे वर्त्तते तद्यथा विविक्षायामहनप्रक्रमे पुरुष-
मानयेति पुरुषशब्दो विप्रे तद्वदिहापि प्रमात्रादिपरिहाराय प्रमाणस्यार्थवत्त्वा-
भिधाननियमप्रक्रम इति प्रमात्रादिभ्यः प्रमाणस्य विशेषो वाच्यस्तत्रैवान्य-
तमशब्दो वर्त्तते । यद्यप्यर्थप्रतिपत्त्यव्यभिचारद्वारेण प्रमाणस्याव्यभिचारो ग-
म्यते दृष्टे विषये तथाऽप्यदृष्टविषये न तज्जनितप्रतिपत्त्यव्यभिचारेणाव्य-
भिचारः शब्दस्य प्रमाणस्य शक्यो विज्ञातुं प्रतीत्यव्यभिचारस्य प्रमाणाव्यभि-
चारग्रहणमन्तरेणाशक्यज्ञानत्वात् । तस्माद्दृष्टार्थस्य मन्त्रायुर्वेदस्य प्रवृत्तिसा-
मर्थ्याद्यथार्थाव्यभिचारस्य सामान्यादाप्तप्रणीतत्वादग्निहोत्रादिवाक्यानां प्र-
माणानामव्यभिचारग्रहणपुरस्सरमेव स्वर्गेऽस्याव्यभिचारग्रहणं न पुनरत्र स्व-
र्गेऽव्यभिचारः शक्यो ऽन्यतः परिच्छेत्तुम् । अदृष्टार्थविषयस्य च चतुर्वर्गस्येहार्थ-
त्वेन प्रयोजनं दृष्टार्थं सदेहादपि व्यवहारसिद्धेः । तदिदं चतुर्वर्गे प्रमाणस्य
प्राधान्यमिति । चतुर्वर्गविभागपरे भाष्ये प्रमाता प्रथमं दर्शितः । तथास्य लक्ष-
णमाह । **प्रमाता स्वतन्त्र** इति । स्वातन्त्र्यं पृच्छति । **किं पुनः स्वातन्त्र्यं**
यस्याभिसम्बन्धात् स्वतन्त्र इति । तत्र भाष्यकृता प्रमातृत्वोपलक्षितो न
लक्षितः स्वन्वीप्साजिहासयोर्वा प्रवृत्तौ वा स्वातन्त्र्यं प्रमातृत्वमपि तु
प्रमाणसामीप्यादिस्वातन्त्र्येण तदुत्तरभाविना प्रमायां स्वातन्त्र्यं पूर्वकाल-
भाव्युपलक्षितम् । तेन तच्चरितमनुवर्तमानो वार्तिककृदुपलक्षणान्तरं कृत्वो-
त्तरकालभाव्याह । **कारकफलोपभोक्तृत्वं** न हि सर्वः कर्ता समस्तकारकज- ,, । १
न्यसुखादि वेदनादि वा भुङ्क्ते ऋत्विक्पाचकादिषु व्यभिचारात् । कार-
कस्य तु सतः कर्तृत्वोत्तरकालभाविनी फलभोक्तृता कर्तृत्वनान्तरीयकतया
तदुपलक्षयति । यजमानस्य राज्ञश्च प्रैषादिना तत्तद्व्यापारकर्तृत्वात् । यथा

ऽऽहुरचमयन्तः । "तदभिसंधिपूर्वकं प्रेषणमध्येषणा वा युक्तं तत्स्वयं पच्यर्थे"* १९ इति । स्वातन्त्र्यलक्षणमाह । तत्समवायो वा । कारकाभिधानेन संनिधापिता क्रिया तदिति सर्वनाम्ना परामृशति । यस्य हि व्यापारं प्राधान्येन धातुराख्यातप्रत्ययो वा ऽभिधत्ते स स्वतन्त्रः कर्ता । तथा हि विक्लिद्यन्तीत्यत्र तन्दुलादयः कर्तारः, पचतीत्यत्र देवदत्तादयः तत्कस्य हेतोः । एकत्र तन्दुलादेर्व्यापारः प्रधानो ऽपरत्र देवदत्तादेरिति । प्राधान्येन चाशेषकारकनिरपेक्षत्वं प्रधानक्रियायाम् इति । अवान्तरे व्यापारभेदे ऽपि प्रधानक्रियोद्देशेन समस्तकारकप्रवृत्तेरिति । पुरुषइति प्रकृतक्रियापेक्षः प्रमाता पुरुषाप्ययनादिति । लक्षणान्तरमाह । तत्प्रयोक्तृत्वमितराप्रयोज्यता वा तस्य चेतनस्य सर्वकारकाणि प्रति प्रयोक्तृत्वं तैश्च कारकैरप्रयोज्यता वा । अचेतनस्य तु भाक्तं कर्तृत्वं न स्वाभाविकमिति भावः । परिसमाप्तिपदार्थं व्याचष्टे । तत्त्वपरिसमाप्तिरिति । तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्वं तच्च हानोपादानोपेक्षाभिः पर्यवस्यति पर्यवसानं समाप्तिः । विनियोज्यतेति वक्तव्ये योग्यताबहुलमीप्सते ऽपि दृष्टे कुतश्चित्प्रतिबन्धात् पुरुषेणानुपात्ते मा भूत्तत्त्वापरिसमाप्तिरिति । यद्यपि हि तत्पुरुषेणानुपात्तं तथा ऽप्युपादानयोग्यताप्रदर्शनादस्ति तत्त्वपरिसमाप्तिरिति । तत्प्रतिषेधश्चेत्यत्र तच्छब्देन हानोपादानलक्षणं विनियोगं परामृशति । किं पुनस्तत्त्वमित्यादि भाष्यं व्याचिख्यासुस्तत्त्वस्वरूपप्रकृतेस्तदो ऽर्थं पृच्छति । किं पुनरिति । उत्तरं सदसती इति । प्रश्नं विभजते । तस्य भावस्तत्त्वमिति । उत्तरं विभजते । सदसती तत् । अथ कस्मात्प्रकृतिपुरुषौ† वा पञ्चस्कन्धा‡ वा परं ब्रह्माद्वैतं वा§ जीवाजीवास्रवादयो वा सप्त‖ पृथिव्यापस्तेजो वायुरिति ¶चत्वारि भूतानीत्यादीनि न तदो वाच्यानि भवन्तीत्यत आह । प्रमाणविषयत्वेनाधिकारात् । सूत्रभाष्ययोरस्य तद्विवरणेषु प्रमाणं प्रमाणविषयत्वाधिकृतम् । न च सांख्यादिसिद्धान्तभेदानुपातिनो ऽर्थाः प्रमाणविषयाः । यथा चैतत्तथा तत्र तत्र निवेदयिष्यते । उपसंहरति । तस्मादिति ।

१६ प्रकृत्यर्थं व्याख्याय प्रत्ययार्थं व्याचष्टे । तद्भाव इति । सदसतोर्यथावस्थितविधायकप्रमाणविषयता सतो भावः । तत्प्रतिषेधस्यासतो भावः । सदिति

* महाभाष्य अ॰ १ पा॰ ४ सू॰ ५४ । † सांख्यमतम् । ‡ बौद्धमतम् ।
§ वेदान्तमतम् । ‖ आर्हतमतम् सर्वदर्शनसंग्रहे । ¶ चार्वाकमतं सर्वदर्शनसंग्रहे ।

विधायकप्रमाणविषयता परामृशति । तत्प्रतिषेधेन च प्रतिषेधकं प्रमाणमुप-स्थापितम् । तेन प्रतिषेधकप्रमाणविषयत्वमेव प्रतिषेध इत्यनेनोक्तं भवति । एतद्विभजते तयोः खल्विति । शङ्कते प्रमाणविषयत्वादिति । सर्वेषाम- १० । १० र्थविरहेण त्वसत्सतो व्यावर्तते । यदि चासदपि प्रमाणविषयः तर्हि नासमर्थं तथा च सदसतोरभेद इत्यर्थः । निराकरोति । नानैकान्त्यात् । न वयमवा-मर्थेनासतो भेदमाचक्ष्महे येनैवमुपालभ्येमहीति भावः । शङ्कां विभजते । तत्र भवेदिति । निराकरणं विभजते । तन्न नेति । यथाहि चेतनमचेतनं घटादीति । यदि सदसती समर्थे कुतस्तर्हि तयोर्भेद इत्यत आह । स्वत-श्चेति । असदुपलब्धिरेव सदुपलब्धेरन्या ऽनुपलब्धिः । ननु संयोगविभागा-दिषु सत्स्वपि परतन्त्रोपलब्धिकारकत्वमस्ति । तेषां संयुज्यमानवियुज्यमाना-धारनिरूपणाधीनत्वादित्यत आह । प्रतिषेधमुखेन प्रतिपद्यते । प्रतीयते सतां केषाञ्चित्पारतन्त्र्ये ऽपि न निषेध्यनिषेधाधिकरणपारतन्त्र्यमित्यर्थः ।

सम्प्रति सदुपलम्भकस्य प्रमाणस्यासदुपलम्भकत्वं प्रतिपादयिष्यता भाष्यकारेण प्रदीपो दृष्टान्त उपन्यस्तः स तु साध्यसमः । तस्यापि प्रमाण-सामग्रीनिवेशादिति शङ्कमानो ऽत्यन्तलोकप्रसिद्धतया ऽस्य दृष्टान्तत्वं सम-र्थयति । प्रदीपवदिति । गोपालाङ्गना अपि हि किमयमस्ति स्तेनो ऽस्मद्गृहे वा अपवरके न वेति सन्दिहानाः प्रदीपमुपादाय समन्तादवलोकयन्त्यपवरकम-स्तीहास्मद्गृहे नास्ति स्तेन इति समग्रमेव निश्चिन्वन्ति न तु स्तेनाभावनि-श्चयायोपायान्तरमुपाददते तेनागोपालमा च पण्डितेभ्यः सिद्धः प्रदीपो दृष्टान्त तदिदमुक्तं । *न ह्येतत्प्रतिपत्तावुपायान्तरमास्थीयते लोकेन । अनाश्रयणे हेतुमाह । दीपेन दृश्यमाने हि घटादिके ऽर्थे स्वतन्त्रे नानेन समान-जातीयं तुल्योपलम्भयोग्यं दृश्यान्तरमस्ति । नीलपीतौ हि परस्पराभाव-रूपौ तेन नीलनिषेधे नावश्यं पीतविधिः । भावाभावौ तु परस्पराभावा-त्मानौ नो खलु अभावाभावो नाम कश्चिदन्यो भावाद्यथाचापि भावो ऽन्यो ऽभावात् । तेन समानजातीयं दृश्यान्तरं निषेधत् दृश्यान्तरभावमेव विधत्ते प्रदीपः । तदेवं प्रदीपोपायस्य प्रतिपत्तुः प्रतीतिक्रममुक्त्वा परीक्षका-णामुपपत्तिक्रममाह यद्यभविष्यदिति । यदि कश्चिद्घटवद्देशे दृश्यतामभावः ॥ । २

* न ह्येतत्प्रतिपत्ताविति मुद्रितभाष्यपुस्तकेषु पाठः ।

वृत्यस्य भाष्यस्य तात्पर्यमाह । यथावचनमिति । अन्योऽन्यनिरपेक्षाणां प्रत्येक ११ ।
प्रमाहेतुभाव॰ प्रमाणानामिति हि बहुवचनप्रयोजनम् । प्रमेयेषु तु यद्यपि प्रमेयता
वास्तवी प्रत्येकमस्ति तथा ऽप्यपवर्गहेतुभावेन प्रमेयत्वं समुदाये समाप्यते न तु
प्रत्येकम् । आत्मादीनामन्यतमस्याप्यतत्त्वज्ञाने संसारानिवृत्तेरिति हि निर्देशे व-
चनभेदस्य प्रयोजनं तदेव चोद्देशे ऽपि तयोरेकवाक्यत्वादिति भावः । प्रमाणादी-
नामिति विभक्त्यर्थव्याख्यानपरं भाष्यं पठित्वा पृच्छति । कः पुनरिति । उत्तरं
कारकाणामिति तद्विभजते । यत्रेति । कारकार्थं प्रधानक्रिया यदुद्देशेन सर्व-
कारकप्रवृत्तिः । कारकग्रहणेन च तन्नान्तरीयकतया प्रधानक्रिया ऽप्यानीतेति
विवरणे सा ऽपि दर्शिता । यद्यपि स्वस्वामिभावादावपि सम्बन्धे ऽन्तर्गतक्रिया-
कारकसम्बन्धो ऽस्ति सम्बन्धमात्रस्य क्रियागर्भत्वान्नान्तरीयकत्वाच्च कारकस्य
तथा ऽप्यसौ न विवक्ष्यते सम्बन्धमात्रमेव तु विवक्ष्यत इत्यर्थः । अथ चोदयति ।
तत्त्वस्येति । षष्ठी चानर्थिका व्यतिरेके तदनुपपत्तेरित्यपि द्रष्टव्यम् । तथानि
यमवाद्येकदेशी परिहरति । नोभयथा ऽपीति । भावस्य भवित्रधीननिरूपण-
त्वाद् भावनिरूपणमेव भवितृनिरूपणमाक्षिपति । अभेदे ऽपीति । इषुस्थित्या
यथा तद्भावप्रतिषेधयोर्भावो धर्मो गतिः । तस्य प्रतिषेधः स्थितिः तिष्ठतेर्गति-
निवृत्त्यर्थत्वात् । एवमत्रापि न प्रमाणप्रमेयादिमात्रमुच्यते तत्त्वग्रहणेनापि त्वर्था-
न्तरं तेनैव वस्त्वमारोपितं रूपमन्यथान्यमिति या वस्तु तत्प्रतिषिध्यते गतिम-
द्विति भावप्रधानो निर्देशः । यथा द्व्येकयोर्द्विवचनैकवचने इति द्वित्वैकत्वयो-
रिति सङ्ख्येयविषयाया द्व्येकेष्विति स्यात् । तेन गतिमत्त्वमर्थान्तरमिषोर्न भवति ।
किन्त्वस्मिन्नर्थे इषोः स्थितिरिति भाष्यं प्रयुक्तमित्यर्थः । तदेतदेकदेशिमतम-
र्थान्तरत्वनियमवादी दूषयति । तत्रेति । प्रमाणादिभ्यो ऽर्थान्तरस्य तत्त्वस्य
इषोरनर्थान्तरस्य प्रवृत्त्यभावस्य चासिद्धेः । यथा च भावातिरिक्तो ऽभावस्तथा
सप्तभङ्गभङ्गाधिकारे निवेदयिष्यते । प्रमाणाद्यतिरिक्तं च तत्त्वमनन्तरमेव दर्श-
यिष्यति इति । तत्त्वस्य ज्ञानमित्यादि भाष्यं व्याचष्टे । तत्त्वं ज्ञायमानमि- १२ ।
ति । उभय पृच्छति । किं पुनरिति । तत्त्वप्रश्नस्योत्तरम् । तत्त्वमिति । निमि-
त्तस्य शक्तिः प्रमाणादीनां या च द्वयी स्वरूपलक्षणा सहकारिवैकल्यलक्षणा च ।
अतीन्द्रियस्य सामर्थ्यस्य नैयायिकैरनभ्युपेतत्वात् । शक्तेश्च भावत्वेन भवि-
तृनिरूपणाधीननिरूपणत्वाद् भवितुरपि निरूपणं भवतीत्युक्तम् ।

अभिमतं निःश्रेयसं ग्रहीतुं निःश्रेयसद्वैविध्यमाह । निःश्रेयसं
१ भा पुनरिति । तत्रादृष्टं निःश्रेयसं ग्रहीतुं दृष्टमतिप्रसङ्गापादनेन दूषयति । एवं
च कृत्वेति । सूत्रकाराभिमतं निःश्रेयसमाह । परं त्विति । एतदुक्तं भवति ।
यद्यपि निःश्रेयसपदमभिमतमात्रवाचि प्रमाणादितत्त्वज्ञानस्य दृष्टमपि निःश्रे-
यसं भवतीति तस्यैव ततः साक्षादुत्पत्तेः । तथाऽप्यात्मादिषोडशप्रमेयपद-
समभिव्याहारादादृष्टमेव निःश्रेयसमभिप्रेतं सूत्रकारस्य तत्र च प्रमाणादितत्त्वज्ञा-
नस्यापि पारम्पर्येण हेतुभावोऽस्त्येवेति । चोदयति दृष्टमिति । दृष्टं दर्शन-
मेव प्रमाणम् । अदृष्टन्तु निःश्रेयसमप्रामाणिकं दर्शनाभावादित्यर्थः । परिह-
रति न नास्ति अर्थस्य तथाभावात् । अयं आत्मादिस्तस्य आगमानुमा-
नसहकारिणा कारणाभावेन कार्याभावानुमानमेवात्रार्थे प्रमाणमिति भावः । ये
तु वैयात्यान्मन्येरन् पदार्थतत्त्वज्ञानमात्रमेव परनिःश्रेयसहेतुरिति । यथा
ऽऽहुरेको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टा इति तान्
प्रत्याह । यदि पुनरिति । न हि भावानां तत्त्वमन्यत् प्रत्यक्षविषयीकृताद्रू-
पादिति भावः । मोक्ष्यमाणा इति । सति सुखो ऽप्येकैकस्य गुणो वेति गुणा-
भ्यासलेशे । न केवलं पश्यामि सूत्रकारस्यापि सम्मतमेतदित्याह । पृथगु-
पदेशाच्च प्रमेयस्य प्रमाणादिभ्यः । यदि च यत्किंचित्प्रमेयतत्त्वपरिज्ञानान्निः-
श्रेयसस्य परस्य प्राप्तिः किमर्थमात्मादिसूत्रेण द्वादशैव प्रमेयाणि नाधिकानि
न न्यूनानि चेत्यवधार्य्यन्ते सूत्रकारेण । तस्मात्तदेतत्त्वज्ञानादुपयोगि निःश्रेयसे
पदार्थमात्रमित्याह प्रमेयावधारणार्थायां घोरारब्धप्रक्रियायामकु-
शलः सूत्रकारः स्यात् । कुतः प्रमेयस्य विहितत्वाद् भाष्येण सूत्रेणे-
ति । तस्मात्तदुपपत्त्यर्थमपि च सूत्रकाराभिमतमुभयथा प्रमेयतत्त्वपरिज्ञानं
परस्य निःश्रेयसस्य हेतुः । तदनेनात्मादेरिति भाष्यं व्याख्यातम् ।

अथ किं तत्त्वज्ञानमात्मादिविषयमात्राद् दृष्ट एव को ऽपि सामर्थ्यातिशयो
येन परनिःश्रेयसोत्पादकमेव किं तर्हि दृष्टेनैव द्वारेणेत्याह भाष्यकारः । तदे-
भा तदिति । कर्थ्यो ऽनवधारणात्मको ऽपि तु तद्विपरीतनिश्चयवचन किं स्विदिति
दोलायमानमुभयकोटिस्पृशः प्रत्ययस्यापि ऽनवधारणात्मकत्वादपि प्रत्यात्म-
१ १० मानमेव प्रत्यक्षेणावधार्यमाणत्वादिति । परिहरति । न व्याघातात् इति ।

ततस्मादुभयमिति । तत्र नानुपलब्धे इत्यादिभाष्यमवतारयितुं पृच्छति । स कथं न्यायस्येति । यदि न्यायस्याङ्गं संशयो भवेत्सो ऽपि व्युत्पाद्येतेति १४ । भावः । उत्तरं यस्मादिति । एतदाक्षिपति । उपलब्ध इति । पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः । प्रतिज्ञाद्यवयवसमूहो वा न्यायः । नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति । तस्याश्च यो विषय उपलब्ध उच्यमानो निर्णीत एव वक्तव्यः । संदिग्धे हि तस्मिन् हेतुः संदिग्धाश्रयतया ऽसिद्धः स्यात् । यथेह नगनिकुञ्जे मयूरः केकायितापातादिति । तदापातसंदेहे ऽप्यतो ऽयमनिर्णीतश्चेन्नोपलब्धः ततश्चोपलब्धश्च न निर्णीतश्चेति व्याहतमित्यर्थः । परिहरति । नास्ति व्याघात इति । सामान्यतः पर्वतमात्रमुपलब्धं निर्णीतं तद्विशेषस्तु वह्निमत्त्वादिरनिर्णीत इति । पुनश्चोदयति । एवमपीति । उपलब्धो निर्णीत इति हि सामानाधिकरण्यात्समानविषयत्वं दर्शयति तथा च व्याघातः । सामान्यविशेषयोर्भेदेन तु व्याघातं परिहरन् सामानाधिकरण्यं न समर्थयत इति भावः । परिहरति । यथा तथेति व्यपदेशादिति । सामान्यविशेषयोः सामानाधिकरण्यात् । य एव सामान्यतो निर्णीतः स एव विशेषतो ऽनिर्णीतो ऽपि संभवतीति न व्याघात इत्यर्थः । एवमर्थं न्यायप्रवृत्त्यर्थमसंदिग्धे न्यायप्रवृत्तेरनुपपत्तेः । न हि प्रत्यक्षेण करिणि दृष्टे ऽपि चीत्कारेण तमनुमिन्वते प्रेक्षावन्त इति । प्रयोजनस्वरूपप्रतिपादनपूर्वं प्रयोजनपदोपादानप्रयोजनप्रदर्शनार्थं भाष्यमनुभाषते । अथ प्रयोजनं व्याख्यातुं पृच्छति । किं पुनरिति । उत्तरं येनेति । स्फुटतरमेवैतदित्यर्थः । पुनः पृच्छति । केनेति । एकदेशिमतेनोत्तरमाह । धर्म्मेति । तत्र काम इतीच्छामात्रं वोच्यते कामिनीविषयो वा राग इति पूर्वस्मिन् कल्पे काम इत्येवास्तु कृतं धर्म्मादिभिः । सर्वेषामेव काम्यत्वात् उत्तरस्मिन्नव्याप्तिः । सरकमृगयादीनां काम्यानामसंग्रहात् । धर्म्ममोक्षयोरपि नास्तिकान् प्रत्यप्रयत्नकत्वात्तस्मादयुक्तमेतदिति मन्वान आह । वयं तु पश्याम इति । सुखस्याप्त्या दुःखस्य हान्या वि- ,, । षयेण विषयिणं प्रत्ययमुपलक्षयति । असत्योरकारणत्वात्सत्योर्वा अनर्थकत्वात्प्रवृत्तेरिति । तथा ऽपि सुखदुःखाप्तिहान्योरेव कर्तुः प्रवृत्तिप्रसङ्गो न तत्साधने न ह्यन्यद्विजानाति इच्छति च करोति चान्यदिति घटते अतिप्रसङ्गात् । न हि फलं पुरुषप्रवृत्तिगोचरः । तत्साधनं तु तद्गोचरः । तत्साधनत्वधि-

धानात् । तत्साधने यत्र प्रवर्तते तत्राप्रवृत्तिप्रसङ्ग इति चेद् हन्त तर्हि तत्सा-
धनत्वज्ञानमेव प्रवर्तयति न फलज्ञानं ज्ञानेच्छाप्रवृत्तीनां कार्यकारणभूतानां
१२ सामानाधिकरण्येन प्रतिपत्तेरित्यभिप्रायेणाह । **सुखदुःखसाधनभावात्तु सर्वे
ऽर्थाश्चेतनं प्रयोजयन्तीति** । सुखञ्च फलाद्यवच्छिनत्ति । यद्यपि विषयेण
प्रत्ययमुपलक्षयति । एतदुक्तं भवति । सोऽयमुपलभ्य तज्जातीयस्यापेक्षितसाध-
नतां दृष्टपूर्वीमनुस्मरति । अथ तज्जातीयतया लिङ्गेन दृश्यमानस्यापेक्षित-
साधनभावमनुमिमीते । अनुमाय च पिपासुः प्रवर्तते । तेनोपायत्वज्ञानस्य
साक्षात्पुरुषप्रवृत्तिहेतुत्वम् । फलज्ञानस्य त्वीप्सिततमस्योद्देश्यतयेति सर्वं
सुन्दरम् । तदाश्रयश्च न्यायः प्रवर्तत इति भाष्यं व्याचष्टे । **तदिदं प्रयो-
जनं न्यायस्येति** । आक्षिपति क इति । समाधत्ते **उपकारकत्वमिति** । यथा
राजाश्रितः पण्डित इति । उपकारकत्वमेव दर्शयति । **तन्मूलत्वादिति** ।
विधि॰ प्रवृत्ति. । न जातु निष्प्रयोजने काकदन्तादावारभन्ते परीक्षां प्रेक्षावन्त
इत्यर्थः । आक्षिपति । **का पुनरिति** । न्यायाश्रयस्य प्रयोजनस्य प्रतिज्ञाय
परीक्षाश्रयत्वमसमर्थनमसङ्गतमिति भावः । उत्तरम् । **न्यायः** तस्मादागतम्
इत्यर्थः । नन्वेवमपि मीमांसा प्राप्ता विवक्षितार्थसिद्धिरनेनेति व्युत्पत्त्या
प्रत्यक्षादि प्रत्येकं न्यायः । न चैतत्त्वेन प्रयोजनमाश्रयते । अजिहासिता-
नुपादित्सितानामप्यजिज्ञासितानामपि प्रत्यक्षादिगोचरत्वदर्शनादित्याक्षि-
पति । **कः पुनरयं न्यायः** । समाधत्ते । **प्रमाणैरिति** । प्रत्यक्षादिप्रमाणमूला-
प्रतिपाद्य पञ्चावयवा प्रमाणानि तैरर्थस्य लिङ्गस्य परीक्षा परीक्षणम् । परी
लिङ्गं [illegible] लिङ्गं पञ्चावयवोपपन्नमनुमेयप्रत्ययफलं भावयत्येव न त्वनुमेयार्थप-
रीक्षा । तस्य सन्दिग्धत्वे ऽपि स्वरूपेण परीक्षानास्पदत्वादिति । नन्ववयवे-
ष्वेवार्थपरीक्षणं न तर्हि प्रमाणैः कार्यकारणयोरभेदस्माभावादित्यत आह ।
**किमुक्तं भवतीति** । न साक्षात्प्रतिज्ञादयो ऽवयवा अर्थपरीक्षायामुपयुज्यन्ते ।
अपि तु स्वकारणतत्प्रमाणसूचनेन । तस्मात्प्रमाणानामवान्तरव्यापारः प्रतिज्ञा-
द्यवयवास्तत्र प्रमाणैरर्थपरीक्षणं तदिदमुक्तं **समस्तप्रमाणव्यापारादिति** ।
इति तस्मादेकैकं प्रमाणमिति । समस्तप्रमाणोपकारकत्वादेव चास्य परम-
१८ त्वमित्याह । **सो ऽयमिति** । पञ्चावयवोपपन्नतया च प्रत्यक्षागमाश्रितस्य न
तद्विरोध इति । तत्प्रदर्शनाय भाष्यमनुभाष्य तात्पर्यं व्याचष्टे । प्रत्यक्षाग-

मेति । कथं पुनरनेन भाष्येण एतदुच्यतइत्यत आह । **यदिहाऽनुमा-
नेति** । यत्पुनरनुमानमित्यादि भाष्यं व्याचष्टे **यत्र पुनरिति** । यत्र विरोध- १५ । १
स्तत्र प्रमाणमूलानामवयवानां प्रतिज्ञादीनामितरेतरप्रतिसंधानमेकवाक्यता
नास्ति । प्रमाणविरोधेन योग्यताविरहिणां तत्पदार्थानां पारमार्थिकान्वया-
भावादिति । सोऽयं दर्शनं तस्य प्रतिरूपकः अदर्शनमेव दर्शनं प्रतिरूपयति
दर्शनमिव दर्शयतीति यावत् । स खलु तादृशः पञ्चावयवप्रयोगो लाभपूजाख्या-
तिकामैः पण्डितव्यञ्जनैरुपवर्ण्यमानः न प्रत्ययाय प्रागेव त्वपवर्गायेत्यर्थः ।
तदेवं समुदायतो भाष्यं व्याख्यायावयवविभागाय पठति । **यत्पुनरनुमान-
मिति** । प्रत्यक्षविरोधोदाहरणमाह । **अनुष्णोऽग्निरवयवी कृतकत्वाद्
घटवद् इति** । अत्र चोदयति । **कः पुनरिति** इदमत्राकूतम् । रूपत्रयसंप-
न्नमेतत्कृतकत्वं न वा । न चेत्तत एव तर्हि तदनुमानाभासत्वमिति कृतं
प्रत्यक्षविरोधेन । अथान्वयव्यतिरेकपक्षधर्मत्वसंपन्नमपि बाधितविषयत्वेनैत-
दप्रमाणम् । तदयुक्तम् । रूपत्रयसंपत्त्या खल्वेतत् स्वसाध्येनाविनाभूतं भवति
न च बाधाविनाभावयोः सह संभवः । बाधायामपक्षधर्मो भवेत् । अने-
कान्तिकश्च हेतुः । जिज्ञासितधर्मको धर्मिणः पक्षमात्रत्वेन पक्षत्वं न
पुनः प्रत्यक्षावधृतसाध्यधर्मविरुद्धस्य । तस्याजिज्ञासितत्वेनापक्षतया तद्ध-
र्मस्य पक्षधर्मत्वं न चैकान्तिकम् । साध्यधर्मिण्येव प्रत्यक्षोपस्थापितसाध्य-
धर्मविरुद्धधर्मदर्शनेन व्यभिचारात् । न च सपक्षासपक्षयोरन्वय-
व्यतिरेकगम्याविनाभावदर्शनविषयो न पक्ष इति सांप्रतम् । यदि हि पक्षं
विहाय बहिरेव सपक्षासपक्षयोरविनाभावो गम्येत तदा बहिर्व्याप्तिमात्रब-
लेन पक्षधर्मोऽपि हेतुर्न पक्षे साध्यं साधयेत् । अपेक्षिता हि तत्र स्वसा-
ध्येन व्याप्तिः । तदेतत्षण्डकमुद्वाह्य मुग्धायाः पुत्रार्थनमिव । तस्मादन्त-
र्बहिर्वा सर्वोपसंहारेणाविनाभावोऽवगन्तव्यः । एवं च सिद्धः पक्षेऽपि व्य-
भिचारः साधनधर्मस्येत्यनैकान्तिकत्वम् । तथा च रूपत्रयसंपन्नो हेतुर्बाधि-
तविषयश्चेत्यसंभवः । तस्मात्सूक्तं **कः पुनरस्यानुमानस्य** रूपत्रयसंपन्नस्य
**विरोधः** । न ह्यस्ति संभवो रूपत्रयसंपन्नं विरुद्धं चेत्यर्थः । तत्र समा-
धिमाह । **अनुमानाविषये प्रयोगः** । वक्ष्यते ह्यनुमानाधिकारे यथाऽनौ- ११ ।
पाधिकः सम्बन्धो हेतुसाध्ययोरनुमानाङ्गं न तु कार्यकारणभावादिरव्यापक-

स्यादतिप्रसङ्गान्नेति । स चैव प्रवर्त्तते यो यः कृतकः स सर्वो ऽनुष्णो यथा घटादिरिति । न च वह्नेरिव धूमसम्बन्धे आर्द्रेन्धनसंयोगः पूर्वस्येवाग्नेरौ-साहचर्ये स्वाभाव्यानध्ययनमुपाधिः कृतकत्वानुष्णत्वयोः सम्बन्धे उपलभ्यते । सो ऽयं शङ्कितः समारोपितो वा प्रयत्नेन पुनः पुनरन्विष्यमाणो ऽनुपलभ्यमानस्तत्र तत्र घटादावुपाधिर्नास्तीति प्रत्यक्षेण यथाभविष्यद् घटादिवदेव व्यवहितस्य विशेषाभावान्नास्त्येवेति तर्कसहायेन निश्चीयते । सो ऽयं दृष्टेव रसस्य रसनेनेव सवितुरुदयेनाद्यतनस्य तदुदयस्य समुद्रवृद्ध्येव चन्द्रोदयस्य समानकालस्य कृतकत्वस्यानुष्णत्वेन स्वाभाविकः औत्सर्गिकः सम्बन्धः सामान्येन यो यः कृतकः स सर्वो ऽनुष्ण इत्यवधारितो न तु निर्विभज्य तेजो ऽवयविनि न हि सर्वोपसंहारवती व्याप्तिरेकदेशविषया भवितुमर्हति । एकदेशविषयत्वे च सैव न दर्शिता तेनैवानैकान्तिकत्वमाशङ्क्येत । तथा च तत्र तत्रैकदेशे प्रत्येकं व्याप्तिग्रहणे तदनन्तरमानन्त्यात् । तस्मात्सर्वोपसंहारेणैव तदुपदर्शने तदिह कृतकत्वमनुष्णत्वसामान्यविषयव्याप्तिस्मरणसधीचीनं पक्षधर्म्मतावशाद्विशेषे तेजो ऽवयविनि सा ऽवयितुमनुष्णत्वमुन्मुखं मनः साधयेत न हि प्रत्यक्षेणापहृतविषयत्वादाहो स्विदनैकान्तिकत्वात् । न तावदनैकान्तिकत्वं प्रागेव सामान्यतो ऽनौपाधिकसम्बन्धावधारणात् । तेजो ऽवयविनि कृतकत्वस्य दर्शनादनैकान्तिकमपक्षधर्म्मो वा कृतकत्वमिति चेद् नानुमानेन सामान्यतो ऽवधृतव्याप्तितस्यानैकान्त्यसाधनात् । प्रत्यक्षेण तेजो ऽवयविन औष्ण्यग्रहणेन तस्य कृतकत्वस्य हेतोर्भूतानुष्णत्वमपि व्याप्तिविधान बाध्यते । ततश्चानैकान्तिकत्वादप्रवृत्तिरनुमानस्येति चेत् । नानुमानप्रवृत्तिविषयसाध्यधर्म्मिणि हेतोर्व्यभिचारानुद्भावनात् । अन्यथा तद्गतसाध्यधर्म्मसन्देहे तत्रोपलभ्यमान साधनधर्म्म सन्दिग्धव्यतिरेकित्वादनैकान्तिकः स्यात् । सन्दिग्धसाध्यधर्म्मे दृष्टान्त इव साधनधर्म्म तथा चानुमानमात्रमुच्छिद्येत प्रत्यक्षेण साध्यधर्म्मविपर्य्ययसाधनात् । तेजो ऽवयविनो ऽनुष्णत्वेनासाध्यत्वम् तथा चानैकान्तिकत्वमपक्षधर्म्मता वेति चेत् । सदिदं प्रत्यक्षेण साध्यविपर्य्ययसाधनं बाधनमित्यनर्थान्तरम् । तदिदमुक्तं यस्मिन् विषये तेजसो ऽनुष्णत्वे पतत्ययुक्तं* स प्रत्यक्षेणापहृत इति । अथ चानुमाने दूषिते कृतकत्वपक्षधर्म्मत्वव्यभिचाराभ्यां तदुपजीविभ्या-

* पततयुक्तमिति मुद्रितवार्त्तिके पृ [illegible] ।

मिति भावः । यत्पुनर्दिङ्नागेन प्रत्यक्षविरुद्धमनुमानमुदाहृतं तदुपन्यस्यति । अपरे पुनरिति । अश्रावणः शब्दः कृतकत्वाद् घटादिवदिति श्रावणः शब्द- १५ । ६ स्वरूपमेवापलपति । न हि श्रवणेन्द्रियादन्यदस्ति शब्दग्रहणकारणम् । न चाग्रह्यमाणः शब्दस्तद्व्यवहारगोचरः । तस्मादेव वादिनोऽभिप्रायस्याप्रमत्वं शब्दस्य तथा च प्रत्यक्षविरोध इति भावः । दूषयति । तैस्त्विति । सविशेषणौ हि विधिनिषेधौ विशेषणमुपसंक्रामत इत्युत्सर्गः । क्व चित्पुनर्विशिष्टविधा- नमपि भवत्यगतित्वात् यथा लोहितोष्णीषा ऋत्विजः प्रचरन्ति इति विभवे न जीर्णमलवद्वासाः स्नातकः स्यादिति । तदुदिहापि अश्रावणः शब्दः इति श्रुतिवाक्ययोः सामर्थ्यात् श्रावणत्वविशेषणोपसंक्रान्तो निषेधो न विशेष्येण शब्देन सह संबध्यते नापि श्रावणत्वनिषेधार्थः शब्दनिषेधो वाद्यभिप्रायस्याप्रः । वचनार्थाविरोधिनोऽर्थस्यार्थगम्यत्वान्न तद्विरोधिनः श्रावणस्य निषेधस्य चाधिकरणं शब्द इति न शब्दाभावे तन्निषेधोऽव- कल्पते न चाभावस्तुच्छ इति च तृतीय उपपादयिष्यते । न च श्रावणत्वं प्रत्यक्षगोचरः । तद्धि शब्दश्रोत्रयोः संबन्धः कृत्तद्धितसमासेषु संबन्धाभि- धाने त्वतलावितिः कात्यायनीयवचनात् । न च प्रत्यक्षाप्रत्यक्षवृत्तिः सं- बन्धः प्रत्यक्षस्तस्मात् श्रावणत्वमप्रत्यक्षमिति नात्र प्रत्यक्षविरोधस्तदिदमुक्त- मिन्द्रियवृत्तीनामतीन्द्रियत्वादिति । वृत्तिः स्वार्थे संबन्ध इत्यर्थः । आग- मविरुद्धमुदाहरति । शुचीति । मन्वादिभिर्नरास्थिस्पर्शप्रतिषेधात् स्पर्शे च प्रायश्चित्तोपदेशादशुचित्वं नरशिरःकपालादीनामिति । कापालिक आक्षिपति । कथमिदमिति । नास्माकं वेदस्तन्मूलाश्च स्मृतयः प्रमाणमित्यभिप्रायः । उत्त- रम् । शुचि नरशिरःकपालमिति ब्रुवता श्रुतिस्मृतीतिहासपुराणनिषे- धानुमानमात्रसहायेनात्र वस्तुनि त्वया शुचित्वयोऽर्थो वक्तव्यः किमुक्तं भवति शुचीति यद्युच्येत स्पष्टः प्रत्यवायाभावः । सिद्धान्ती पृच्छति स कस्येति । यथात्मन इति ब्रूयात्कापालिकः । अविगीता हि व्यवहारपरम्परा ऽस्माकं कापालिकानां नरशिरःकपालस्पर्शेतदवस्थितान्नपानोपयोगलक्षणा दाक्षिणा- त्यानामिवाह्नैष्ठुकादि*लक्षणा क्रिया श्रेयस्करी तस्मादस्माकमप्रत्यवायकरत्वया

* आह्नैष्ठुकादय इति लिखितवार्त्तिकपुस्तकपाठः । करञ्जकादिस्वपरदेवतापूजन मदर्पं इति जैमिनीयन्यायमालाविस्तरे होलाकाधिकरणे ।

पक्षत्वानुमानं चरममन्वयव्यतिरेकसंपन्नमपि न स्वोचितं कार्य्यं जनयति । एवं तनुभुवनादीनां न कर्त्तृत्वरो ऽस्मदादिरित्यानुमानात्प्रभवत् प्रयोजनाभावादित्यादावीश्वरधर्म्मिग्राहिमूलानुमानेनापहृतविषयतया न्यायाभासं वेदितव्यम् । तस्मात्परस्परानपेक्षसमानकालप्रवृत्तिसमर्थानुमानद्वयसमावेशाभावाभिप्रायमेतदुक्तम् । न ह्यनयोरन्यतरद्बाध्यं बाधकं वा संभवति किन्तु मिथः सत्प्रतिपक्षतया न प्रमां कुरुतः । कस्मात्पुनः समावेशोऽनुमानयोरसमावेशो वा कुतः सत्प्रतिपक्षतेत्यत आह । न ह्यन्वयव्यतिरेकसंपन्नयोरिति* । एतदन्वयव्यतिरेकग्रहणेन समानबलयोरन्वयव्यतिरेकपक्षधर्म्मत्वासत्प्रतिपक्षत्वान्युपलक्षितानि । यतः संपन्नयोर्यदि समावेश एकस्मिन्विषये भवेत्तत एकतरस्य बाध्यत्वं बाधकत्वं वा गम्येतापि न त्वेतदस्ति । असत्प्रतिपक्षतासंपत्तेरभावादिति । उपसंहरति । **तस्मान्नानुमानविरुद्धम्** अनुमानं तुल्यबलम् अपि तु सत्प्रतिपक्षमित्यर्थः । प्रत्यक्षमप्यनुमेयविरुद्धसाधनादनुमानस्य प्रतिपक्ष इति सत्प्रतिपक्षतया ऽन्वयव्यतिरेकादिसंपन्नस्यानुमानस्य प्रत्यक्षेण तद्विरुद्धार्थोपसंहारिणा न समावेश इति न बाधकाभाव इत्यभिप्रायेण चोदयति । **प्रत्यक्षविरोधेऽपी**ति । परिहरति । **न नेति** । तुल्यबलो हि मिथः प्रतिपक्षो भवति न तु दुर्बलोऽसमबलो । न हि भवति तरक्षुः प्रतिपक्षी हरिणशावकस्य किन्तु समरकण्डूमिद्धविषाणकोटिसमुल्लिखितगण्डशैलस्य विपिनमहिषस्य तस्मात्पूर्वमपि प्रत्यक्षमन्यथासिद्धं यदसत्प्रतिपक्षमनुमानं समानविषयसमावेशाद्बाधत इति युक्तमित्यर्थः । चोदयति । **अथोपमानविरुद्धमनुमानं कस्मान्न भवति** । गोसदृशो गवय इत्यारण्यकस्य वाक्यं श्रुत्वा यदा नागरिको वनं गतो गोसदृशं पिण्डमुपलभते तदा ऽस्य वाक्यार्थानुभवाहितसंस्कारप्रबोधजनिततत्स्मृत्यपेक्षं गोसादृश्यज्ञानमुपमानं पुरोऽवस्थितस्य पिण्डस्य गवयशब्दवाच्यत्वे प्रमाणम् । तत्र यदि कश्चित्प्रमाणयेत्सैव पिण्डो गवयशब्दवाच्यः गोपिण्डसादृश्याद् गोपिण्डान्तरवदिति तदिदमनुमानमुपमानेन बाधितविषयमित्यर्थः । संप्रतिपत्तिरुत्तरम् । **नोपमानं न भवतीति** अनुषज्यते । अस्ति चेत् कस्मान्नोक्तमित्यत आह । **पूर्वप्रमाणविरोधानुविधानान्नोक्त**मिति शेषः । तद्दर्शयति **उपमानविरोध इति** । स्वफलद्वारा शब्दं प्रमाणं दर्शयति । घात-

१५ । २

१६ । ३

* संपन्ने [illegible]

मेति । स्वफलद्वारेण प्रत्यक्षं प्रमाणं दर्शयति । तारूप्यज्ञानमिति । उपबृंह-
यति । प्रत्यक्षागमयोर्विरोधाभिधानादुक्तं तदनुमानमिति । 'भाष्यमनुभाष्य-
१५ विवृणोति तत्र वादजल्पाविति । प्रयोजनस्वरूपोपयोगाभिधानानन्तरं दृष्टा-
न्तपदे व्याख्यातव्ये तदुल्लङ्घनेन वादजल्पयोः को ऽवसर इत्यर्थः । अव-
सरमाह । तेनानेनेति । प्रयोजनव्याख्याक्रमेणेदं न वादजल्पव्याख्याक्रमे-
णास्यावसर इति । तच्छब्दार्थं व्याचष्टे । तस्मिन्न्यायाभासे इति । वाद-
जल्पकथयोर्हि न द्वयोर्वादिप्रतिवादिनोः साधने समीचीने संभवतः वस्तुनि
विरुद्धधर्मद्वयसमवायाभावात् । तस्माद् द्वयोरेकस्य न्यायः एकस्य तु न्याया-
भास इति वादजल्पाभ्यां विविच्यते । न्यायाभास इति तु सन्निधानादुक्तम् ।
सन्निहितार्थत्वात्तच्छब्दस्य इति । वितण्डा तु परीक्ष्यते सप्रयोजना
निष्प्रयोजना चेति । तुशब्दः प्रसिद्धप्रयोजनाभ्यां वादजल्पाभ्यां व्यवच्छि-
नत्ति प्रतिपक्षस्थापनाहीना हि वितण्डोच्यते । तत्र स्थापनाहीनत्वात् प्रतिपक्ष-
हीनेति, प्रतीयते न खलु स्थाप्यसंभवः । तया वितण्ड्यते व्याहन्यते ऽनया
प्रतिपक्षसाधनमिति व्युत्पत्त्या परपक्षोपघातेन पारिशेष्यात्स्वपक्षसिद्धिरस्याः
'प्रयोजनं प्रतीयते । तदेवं संदिग्धप्रयोजना सती वितण्डा परीक्ष्यते प्रयोजन-
वती न वेति । तत्र यदि निष्प्रयोजना ततो न कर्त्तव्या विद्याः सर्वाण्यपि कर्माणि
'तन्मुखेन च सर्वे प्राणिनः प्रयोजनेन व्याप्ता वितण्डायां तत्र कर्मरूपाया विद्या-,
रूपाया वा निष्प्रयोजनत्वात् । अथ तु प्रयोजनवती तत उपपन्ना प्रयोजन-
व्याप्तिः । किं तावत्प्राप्तम् । केचिद् ब्रुवते निष्प्रयोजना वितण्डेति । स्थापना-
हीनतया तावत् स्थाप्यः पक्षो नास्ति । अवयवव्युत्पत्त्या ऽपि परसाधनविघातः
प्रतीयते न च तावन्मात्रेण स्वपक्षसिद्धिरस्ति । न हि पर्वतनितम्बवर्त्तिधूमे
ऽसिद्धत्वादिना दूषिते वह्निसद्भावाभावौ निश्चीयेते । तदिदमुक्तम् । दूषणमा-
त्रत्वादिति । तमिमं निष्प्रयोजनवितण्डावादिनं प्रत्याह । तच्च नैवमिति ।
परसाधनदूषणेनास्य स्वपक्षः सिद्ध्यतु मा वा सैत्सीत् स तु स्वपक्षसिद्ध्येव प्रयोज-
नेन परसाधनमाहन्तीति भावः । तदनेन स प्रयोजनमनुयुक्त इति भाष्यं
व्याख्यातम् । अथ न प्रतिपद्यत इत्यादि भाष्यं व्याचष्टे । अथ पक्षमपीति ।
१३ अपार्थीत्यादि भाष्यं व्याचष्टे । अथ परपक्षेति । नास्तिको हि सदसदुभयानु-
भयरूपतया न विचारं सहन्त इति प्रमेयाणि सर्वथा दूषयति । तदयं पर-

पक्षप्रतिषेधमात्रप्रयुक्तं प्रवर्तते । न त्वस्याऽस्ति पक्षो ऽनवस्थापनात्तयोरपि प्रमेयपक्षप्रतिद्वन्द्वित्वादित्यर्थः । एतदपीत्यादि व्याचष्टे । तादृगेवैतत् । १६ । यतद्विभजते । एतस्मिन्नपि पक्षे चतुर्वर्गं चेत्प्रतिपद्यते सो ऽस्य पक्षः । प्रतिपत्तिरभ्युपगमः । यद्यपि स्थाप्य पक्षस्तथा ऽपि तन्नान्तरीयकतया अभ्युपगमसामर्थ्याच्चतुर्वर्गो ऽपि पक्ष उक्तः । कश्चतुर्वर्ग इत्यत आह । चतुर्वर्ग इति । एष साधनवादी ज्ञापयति । अहो वैतण्डिको ऽजानि अनेन पञ्चावयववाक्येन इदं साध्यं साध्यत इति चतुर्वर्गः । तत्प्रतीत्या च वैतण्डिकस्य परपक्षप्रतिषेधः प्रयोजनं सिद्ध्यति । तथा च न निष्प्रयोजनो ऽयं वैतण्डिक इत्यर्थः । द्वितीयं पक्षं दूषयति । अथ न प्रतिपद्यत इति । चतुर्वर्गनान्तरीयकं स्वदूषणमपि प्रतिपद्यतामित्युन्मत्तवदुपेक्षणीय इत्यर्थः । अपरमपि नास्तिकवैतण्डिकं प्रति दोषमाह । प्रतिपद्येतेति । असिद्धविरुद्धादिदोषो वाक्यस्य वैतण्डिकप्रयुक्तस्यार्थः स यदि प्रतिपद्यते सो ऽस्य पक्षः । अथ असिद्धविरुद्धादीनां सदसत्त्वाभ्युपगमे प्रमेयपक्षपातिना प्रमेयमात्रविचारासहत्वाभ्युपगमो विघटत इति स्ववाक्याभिहितमेव असिद्धविरुद्धादि न प्रतिपद्यते पूर्ववद्दोषः नायं लौकिको न परीक्षक इति । तस्माद्वितण्डा ऽपि प्रयोजनवती नाव्यापकं प्रयोजनमिति सिद्धम् । सो ऽयं सर्वः प्रसक्तानुप्रसक्तवादः प्रयोजनव्याख्यानार्थमित्याह । उक्तं प्रयोजनम् । दृष्टान्तपदव्याख्यानपरं भाष्यमनुमायते प्रत्यक्षविषय इति । आक्षिपति । किमुक्तं भवतीति । न तावद्यो यः प्रत्यक्षविषयः स सर्वो दृष्टान्तो ऽदृष्टान्तस्यापि प्रत्यक्षविषयत्वात् । नापि यो दृष्टान्तः स सर्वः प्रत्यक्षविषयः आगमादिविषयस्यापि दृष्टान्तत्वात् । तस्मादयुक्तमेतदित्याक्षेप इति । तत्समाधानभाष्यं यश्चेत्यादि तद्व्याचष्टे । लौकिकपरीक्षकाणां दर्शनाविघातहेतुरिति । यत्र क्वचिल्लौकिकपरीक्षकाणां क्वचिल्लौकिकानां क्वचित् परीक्षकाणामिति मन्तव्यम् । अन्यथा यत्प्रसिद्धं लौकिकानां केवलं परीक्षकपर्येषणीयं परमाण्वादि तस्य न दृष्टान्तता स्यात् । अत्र च यो दृष्टान्तः स सर्वो न [illegible] य सर्वं [illegible] दृष्टान्त इति द्रष्टव्यम् । [illegible]व्याख्यानस्य प्रयोजनं दर्शयति । इदं चेति । यतद्विभजते । दर्शनाविघातेति । न केवलं प्रमेयविरोधः सूत्रविरोधश्चेत्याह । तदर्थाद्वाह- ॥ १७

रणलक्षणं व्याचष्टेऽन्येन । यत्तेषु तेषु शास्त्रप्रदेशेष्वतीन्द्रियोदाहरणसूचनं
सिद्धान्ते पूर्वपक्षे वा यथा मन्त्रायुर्वेदप्रामाण्यवदणुश्यामतानित्यत्वप्रदेशमादि
सद् व्याहन्यते । न तूदाहरणलक्षणसूचनम् । तद्धि प्रत्यक्षविषयदृष्टान्तत्वे ऽप्यु-
पपद्यते । तस्माद्भाष्ये प्रत्यक्षवचनं दृष्टान्तविषयप्रमाणप्रदर्शनार्थं लक्षयति प्रत्यक्ष-
मूलत्वाद्वा प्रत्यक्षो दृष्टान्तः । अन्यथा ऽनवस्थाप्रसङ्ग इति । सो ऽयं दृष्टान्तः
२२ प्रमेये ऽन्तर्भवन्नेवमर्थं पृथगुच्यत इत्याह । सो ऽयमिति । न्यायस्य पञ्चावय-
वात्मकस्य वचनसमूहस्य दृष्टान्तो मूलमतस्तस्य पृथगुपदेशः । अनन्तरवाक्य
पृथगुपदेशो यस्मिन्निति तस्मिन्निति अनुमाननिमित्तत्वमाह । पूर्वं प्रत्यक्षेति ।
दृष्टान्तधर्मिणि दृष्टान्तप्रमाणावधारितमित्यर्थः । शास्त्रमूलतां दृष्टान्तस्य दर्श-
यति । पूर्वं ज्ञातं चार्थमिति । अन्वयग्रहणविषयो ऽसौ दृष्टान्तः दृष्टान्तः
अन्वयग्रहणं च शाब्दज्ञानस्यापि निमित्तं प्रथमव्युत्पत्तिः शब्दार्थज्ञानाभावात् ।
तस्माद्वैदिके शब्दे ऽपि दृष्टान्तस्योपयोग इति । अपरं पृथगुपादानप्रयोजनमाह ।
नास्तिकस्येति । अत्रप्रश्ने हेतुमाह । तदुक्तं भाष्य इति । सिद्धान्तपदवि-
वरणभाष्यं व्याचष्टे । अभ्युपगमेति । तद्विभजते । अभ्युपगम इदमित्थंभूतं
चेति । तद्विभजते । इदमितीति । इदमिति हि धर्मिनियमसिद्धान्तं दर्शयति
धर्मी सर्वतन्त्रसिद्धान्तविषयः । इत्थमिति प्रतितन्त्राधिकरणाभ्युपगमसिद्धा-
न्तविषयं दर्शयति । व्यवस्थायामनुपपन्नतया प्रतितन्त्रसिद्धान्तमात्रमुदाहरति ।
इदं सांख्येऽस्तीति । उभयपक्षाणामुदाहरणस्याज्ञानाच्चोदयति । सर्वतन्त्रे-
ति । परिहरति । सो ऽयमिति । अभ्युपगमव्यवस्थितिरनभ्युपगमाद् व्यवच्छि-
नत्ति । न तु पुरुषविशेषे व्यवस्थाप्यत इत्यभिप्रायः । अस्यापि* प्रमेयान्तर्भू-
१८ तस्यापि सतः पृथगुपादानप्रयोजनमाह । तस्य प्रमेये इति । तत्र सर्वतन्त्रसि-
द्धान्तसिद्धस्यार्थस्य द्वैतनिपक्षाणामपि वादिनां धर्मी तस्य सर्वतन्त्रसिद्धान्तसि-
द्धस्य विशेषेषु प्रतितन्त्रसिद्धान्ताः प्रवर्त्तन्ते । तथा हि । यदि घटो नाम न
सर्वतन्त्रसिद्धान्तसिद्धः किमयम् अवयवी वा परमाणुसमूहो वा ज्ञानाकारो
[illegible] प्रधानपरिणामो वा ब्रह्मपरिणामो वा तद्विवर्त्तो वेति प्रतितन्त्रसिद्धान्ताः
प्रवर्त्तेरन् । यत्र च प्रतितन्त्रसिद्धान्ता[illegible] प्रवर्त्तन्ते किमा-
श्रयश्च न्यायः स्यात् । तथा यदा चकारापसिद्धान्तो न भवेत् तत्र वाद-

* इदं [illegible] नास्ति ।

सामान्यव्याप्तं साधनसामान्यमिति साधनविशेषात् साध्यविशेषो गम्येत तस्मादस्ति प्रमेयस्यापि सिद्धान्तस्य पृथगुपादानप्रयोजनम् । अभ्युपगमसिद्धान्तमुपरिष्टाद्विचारयिष्यति वार्तिककारो ऽतस्तत्प्रयोजनमस्माभिर्नोक्तमिति ।

क्रमप्राप्तानवयवानाह । अथावयवाः । ननु यथा तन्तवः पटस्य समवायिकारणं किमेवमेते प्रतिज्ञादयो वाक्यस्य । नो खलु गगनगुणा वर्णाः समवायिकारणतां प्रतिपद्यन्त इति आह । वाक्यैकदेशा इति । अवयवा इव अवयवाः । न पुनः समवायिकारणम् । यथा ह्यवयवाः समुदायिन एकस्मिन्नवयविनि कार्ये धारयितव्ये एवमेकस्मिन् विवक्षितार्थे प्रतिज्ञादयो ऽवयवा वाक्यस्य समुदायस्य समुदायिन इति । ननु वर्णानामाशुतरविनाशिनां क्रमवतामेककालताभावे समुदायाभावात् कुतस्तत्समुदायो वाक्यं कुतश्चैकदेशतेत्यवयवानामिति । किम्पुनर्वाक्यम् । उत्तरम् । पूर्वपदस्मृत्यपेक्षो ऽन्त्यपदप्रत्ययः । स्मृत्यनुग्रहेण प्रतिपद्यमानो विशेषप्रतिपत्तिहेतुर्वाक्यं विशिष्यत इति विशेषः पदार्थो यतः क्रिया वा कारकं वा प्रातिपदिकार्थो वा पदार्थान्तरविशिष्टो वाक्यार्थः । यथा सोमेन यजेत गोदोहनेन पशुकामस्य यस्य पिता पितामहो वा सोमं न पिबति स व्रात्य इति तस्य विशेषस्यैकस्य प्रतिपत्तिहेतुः । तदेवं समूहनिबन्धनं पदानामेकार्थत्वं सूचयति । को विशेषप्रतिपत्तिहेतुरित्यत उक्तमन्त्यपदप्रत्ययः । अन्त्यं विशेष्यं विशेषणपूर्वत्वात्तस्य पदं न च तदविदितं चक्षुरादिवद्विशेष्यं प्रतिपादयतीत्युक्तं प्रत्यय इति । प्रतीयमानं विशेष्यवाचि पदं विशेष्यं बोधयति प्रतीतिश्च नानुभवो ऽपि तु स्मृतिः । न हि क्रमवद्वर्णसमुदायः पदं श्रवणेन्द्रियजनितानुभवगोचरः संभवति संभवन्ति तु प्रत्येकं वर्णाः । न च ते प्रत्येकं पदं न च पूर्ववर्णस्मृतिनिचयसहितो ऽन्त्यवर्णानुभवः बोधक इति युक्तम् । स्मृतीनां स्वकार्यस्वकारणविरोधिनीनामसहभावात् । विनश्यदविनश्यदवस्थयोरुपान्त्यान्त्यवर्णस्मृत्यनुभवयोस्तु स्यान्न चैतावतार्थप्रत्ययः । पूर्ववर्णस्मृतीनां तिरोभावात् । न च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहकारिणः श्रवणादेव तज्जन्मनः प्रत्ययस्यैकस्याव्यस्तस्मृत्यनुभवरूपस्य विषयस्य सदसद्रूपतया हि नो विषयभावमापन्ना वर्णा बोधयितुमर्हन्तीति साम्प्रतं स्वप्नसंवेदनादिवत्संस्कारोद्बोधसमय-

१७ । १
„ । १२

न्मना स्वज्ञातेन संस्कारेण सकलपदस्मृत्युत्पत्तिसमये विनाशात्पदार्थावबोध
कत्वानुपपत्तेः । तस्मात् स्मृतिरेव प्रत्ययः । अत यथाध्ययनसमये गुरुमुखा-
द्गृहीतो वेदराशिर्वेदाङ्गोपाङ्गज्ञानसंस्कृतेन स्मर्यमाण एव तस्यार्थं बोधयति ।
एव च यदा पदार्थप्रत्यायनाय पदानुभवो न कारणं तदा वाक्यार्थज्ञाने
नानापदार्थस्मरणाकाङ्क्षायोग्यतासन्निधानावधारणादिव्यवहिते कैव कथेति ।
यदि तर्हि विशेष्यपदमेव स्मर्यमाणं विशिष्टमर्थमवगमयति कृतं पदान्तरे-
। १० स्तत एव वाक्यार्थप्रतिपत्तेरित्यत उक्तम् । पूर्वपदस्मृत्यपेक्षः । पूर्वं विशे-
षणं तत्पूर्वकत्वाद् विशिष्टप्रतीतेस्तस्य पदं स्मर्यमाणपूर्वपदापेक्षः । यद्यपि
स्मरणानि सह [illegible] भवन्ति तथाप्येकस्मृतिसमारूढानि पदानि भिन्नाव-
मस्तस्मृतिसमारूढानि वा परस्परापेक्षाणि । तथा च स्मर्यमाणं विशेष्यपदं
विशेषणपदापेक्षं विशिष्टमवगमयति । स्यादेतत् पदमाला चेत् स्मर्यमाणा
वाक्यार्थबोधिनी कृतं पदार्थबोधनेन कृतञ्च पदतदर्थसम्बन्धबोधनेनेत्यत
उक्तम् । स्मृत्यनुग्रहेणेति । प्रत्येकं याः पदेभ्यः पदार्थस्मृतयस्तदनुग्रहेण ।
एतदुक्तं भवति यद्यपि वाक्यार्थबोधनाय पदमाला प्रवृत्ता तथाऽपि पदा-
र्थस्मृतीरवान्तरव्यापारभूता अपेक्षते काष्ठानीव पाकप्रवृत्तानि ज्वलनमवान्त-
रव्यापारम् । न च पदान्यगृहीतसङ्केतानि पदार्थान् स्मारयन्ति इत्युपपन्ना
पदार्थस्मृतिसम्बन्धवेदनयोरपेक्षेति । यदि पदार्थस्मृत्यपेक्षा पदमाला वाक्या-
र्थबोधिनी हन्त दश दाडिमानि षडपूपा भवन्तीत्येवमादीनामपि वाक्या-
र्थबोधकत्वं स्यादित्यत आह । प्रतिसंधीयमानः । प्रतिपदं संधानं
घटनं प्रतिसंधानम् । तच्च स्वार्थद्वारेणाकाङ्क्षायोग्यतासन्निधानं न च दशदा-
डिमादिवाक्येषु तदस्तीति न ततो वाक्यार्थबोध इत्यर्थः । तदेवमेकस्मृ-
तिसमारोहेण प्रकारान्तरव्यवच्छेदेन पदानां समूहो वाक्यं तस्य भागा एकदेशा
इति । यावन्तीत्यादि भाष्यमवतारयति ते कियन्तः । भाष्यव्याख्यानेनो-
त्तरं वार्त्तिककृदिति । पृच्छति । केति । न हि समग्रोनिष्पत्तेरन्या सिद्धिरस्तीत्य-
भिप्रायः । उत्तरम् । पदार्थस्येति । धर्मिणः सिषाधयिषितधर्मविशिष्टस्य
। १५ साध्यमर्थयं । समासं पृच्छति । केति । उत्तरं विशेषेति । साध्यो
धर्मः सिद्धमन्तेऽस्मिन् निश्चयः पुरुषधर्मो निष्पत्तिरिति विशेष इत्यर्थः ।
विपत्तिः विप्रतिपत्तिरेव मतेः, सिद्धि परिसमाप्यते यस्मात्सा भाष्यकारो-

लम् । तस्य प्रपञ्चेति । तद् व्याचष्टे । समाख्येति । भाष्यमनुभाष्या-
भिप्रेति । तत्रागम इति । न ह्यागमवत् प्रतिज्ञावचनं निश्चायकं हेतुवच-
नादिवैयर्थ्यात् । निष्पादितक्रिये कर्मणि साधनस्य साधनन्यायातिपाता-
दिति समाधत्ते । आगमाधिगतस्येति । आत्मादिप्रमेयप्रतिपादनोद्देशेन १७ । १८
हि शास्त्रमेतत्प्रवृत्तं तन्नान्तरीयकतया न्यायं व्युत्पादयत्तमेव व्युत्पादयेद्
आत्मादेः प्रमेयस्य साक्षान्निश्चायकस्तत्प्रतिपादकागमप्रामाण्यनिश्चायको
वा । तस्य च न्यायविशेषस्याद्यो ऽवयवः प्रतिज्ञा । आगमार्थविषया साक्षात्त-
द्विषयागमप्रामाण्यप्रतिपादकस्य च परम्परया । तस्मादागम प्रतिज्ञा । आगमो-
पचारस्य प्रयोजनमिदं पदार्थवशादेनागमेनानुगृह्यते न्यायः सप्रयोजनश्च
भवति । आगमार्थज्ञानस्य हि मेयसहेतुभावेन निष्फलत्वात् । तस्माद्यद्यपि
न न्यायमात्रवर्तिनी प्रतिज्ञा ऽऽगमस्तथा ऽपि प्रकृतन्यायाभिप्रायेण द्रष्टव्यम् ।
तथा चागमानुसंधानेन प्रतिज्ञाया कल्पितविषयत्वमपि निराकृतं वेदित-
व्यम् । यदाहुरेके सर्वो ऽयमनुमानानुमेयव्यवहारो बुद्ध्यारूढेनैव धर्मधर्मिभा-
वेन न बहिः सदसत्त्वमपेक्षत इति । तथा ऽनुमानस्य न्यायानुग्राहकत्वं
हेतुवचनस्यानुमानत्वोपचारेण भाष्यकारेणोक्तम् । हेतुरनुमानमिति । तत्
खलु हेतुवचनमनुमानप्रतिपादकं विषयतया ऽनुमानेनानुगृहीतव्यं न च लिङ्ग-
दर्शनमात्रमनुमेयप्रतिपत्तिहेतुरपि तु सम्बन्धस्मृतिसहकारि न च हेतुवचन-
मात्रात्तत्सहकारिता ऽवगम्यते । तस्मान्न लिङ्गवचनमनुमानप्रतिपादकमिति
कथमनुमानत्वोपचार इत्यत आह । एवं लिङ्गदर्शनसाम्ये । दृश्यमाने लिङ्ग-
रूपे सम्बन्धस्मृतिरहिते । हेतूपचारात् । अनुमानत्वोपचाराद् हेतुरनुमानमि-
त्युक्तं भाष्यकृता । तदेव विभजते । यत्तु द्वितीयं लिङ्गदर्शनं सम्बन्धग्रह- ,, । १९
णसमये लिङ्गदर्शनं प्रथमं तदपेक्षया लिङ्गदर्शनं साध्यधर्मिणि द्वितीयं तत्स-
म्बन्धस्मृतिव्यक्तिहेतुभावात् स्मर्यते ऽनेनेति स्मृतिः संस्कारस्तस्य व्यक्तिः
कार्याभिमुखीकरणं तत्र हेतुभावात् । क्व चित्पाठः सम्बन्धस्मृतिहेतुव्यक्तिहे-
तुभावात् स तु सुगम एव । अतो हेतुरित्युच्यते । एतदुक्तं भवति । यत्तु द्वितीय-
लिङ्गदर्शनं शुद्धमप्यापाततः सम्बन्धस्मृतिहेतुभावात् सम्बन्धस्मृतिसहकार्येव,
तथा चानुमानम् । एवं च तत्प्रतिपादकस्य वचस उपपन्नो ऽनुमानत्वोपचार
इति सिद्धम् । एवं च पारमार्थेन लिङ्गेन संबन्धासङ्गवनस्य बुद्धिविकल्पितत्व-

लिङ्गविषयत्वं प्रत्यस्तं वेदितव्यम् । एवमन्येष्वप्यवयवेषु यदप्रमाणेष्वेतदेव प्रयो-
जनं योजनीयमिति । उदाहरणं प्रत्यक्षमिति भाष्यं तद् व्याचष्टे । स्मृति-
विषयस्येति । यत्र प्रत्यक्षविषये पूर्वं व्याप्तिर्गृहीता तस्य स्मृतिरिति स्मृतिवि-
षयस्य प्रत्यक्षस्य पुनरुपदर्शनादविप्रतिपत्त्या पुनः स्मरणात् तस्मात्तदेव वचन-
१ मुदाहरणं प्रत्यक्षम् । मूलभूतप्रत्यक्षप्रमाणसमुत्थत्वादिति । कः पुनरुपमानार्थ
इति । प्रत्यक्षमिव प्रत्यक्षमित्यत्रेवकारे तथोपमार्थः स इत्यर्थः । एतदेव विभ-
जते । यस्मादिति* । उपमानमुपनय इति भाष्यं तद्व्याचष्टे । यथा तथेत्यु-
पमानैकदेश इति । उपनयो हि तथा चेतदिति प्रवर्तमान उदाहरणस्थं यथाश-
ब्दार्थमपेक्षत इति यथा तथेति प्रवर्तत इति । किं पुनरुपमानं यस्यायमेकदेश
इत्यत आह । उपमानं यथा गौस्तथा गवय इति । उपदेशोऽपयोगि उपयोग-
स्तदर्थविषयोऽनुभवः । तस्मिन्सति पश्चाद्वनं गतो नागरः प्रत्यक्षेणादृष्टपूर्वं पिण्डं
पश्यति स्मरति चोपदेशार्थं पिण्डस्य च पुरोवर्तिनः समर्थमानेन गवा सादृश्यं
प्रत्यक्षेणैव पश्यति । तदेवंभूत सादृश्यज्ञानं गवयशब्दवाच्यो ऽयं पिण्ड इति
प्रतीतिहेतुरुपमानम् । तदेतस्योपमानस्योपदेशार्थस्मरणगवयपिण्डगोसादृश्य-
प्रत्यक्षरूपस्यैकदेशे सादृश्ये यो यथातथाभावः स उपनये ऽप्यस्तीत्येतावतोपमा-
नत्वोपचार उपनय इत्यर्थः । सो ऽयं सर्वप्रमाणनिवेशेन परमो न्यायः स्तूयते ।
निगमनव्याख्यानमप्यमनुमाप्याविशति । कः पुनरिति । न खल्ववयवानां
प्रमाणानां वा वाक्ये समग्रासंबन्धः संभवतीत्यर्थः । उत्तरम् । एकवा-
क्येति । अवयवैर्बुद्ध्या प्रतिसंधानम् । सामर्थ्यं पृच्छति । किं पुनरिति ।
उत्तरम् । इतरेतरेति । सामर्थ्यं हि पदानां धर्मः । इह तु विभज्यमा-
नानामवयवानां तन्मूलानां प्रमाणानां साक्षाद्रूपमेव धर्मः सामर्थ्यं
तदाह असमस्तानिरूपसपदज्ञानिरूपतिपादनमेकं प्रयोजनं विभज्यमानसाका-
ङ्क्षं मा ऽभूदिति मिलितमेकवाक्यत्वमवयवानामिति । निगमनपदं व्युत्पाद-
यति । निगम्यन्त इति । सो ऽयमिति भाष्यमनुभाष्य पृच्छति ।
१० कः पुनः परमशब्दस्यार्थ इति । उत्तरम् । विप्रतिपन्नपुरुषप्रतिपाद-
कत्वं पञ्चावयवस्यास्य परमत्वमिति । तदेव व्यतिरेकमुखेन प्रतिपाद-
यति । एवं तस्य इति । यद्यपि सोऽप्यन्यशब्दादीनामेकैकशो ऽपि विप्रतिपन्नपुरु-

* इत्यत्राग्रे मूले कः पुनरुपमानार्थ इति वैशेषिकपुस्तके पाठो दृश्यते ।

यप्रतिपादकत्वं तथ तथोपलभ्यते तथा ऽपि यदेतद्वेदप्रामाण्यमात्मादिप्रति-
पादनं च निःश्रेयसोपयोगि न तत्स्वव्यवयवास्यादेतच्छास्त्रोपदिष्टोपकार-
काद्विना सिद्ध्यतीत्यनेनाभिप्रायेण द्रष्टव्यम् । अवयवानां पृथगभिधानमाक्षेप्तुं
विकल्पयति । **किं पुनरवयवा** इति । विकल्पप्रयोजनं पृच्छति । **किं चातः** । १८ ।
उत्तरम् । **यदि प्रमाणान्तरमिति** । समाधत्ते । **न प्रमाणान्तरमिति** ।
प्रयोजनान्तरमाह । **तएते** इति । यत एव वादादिप्रवृत्तिहेतवो ऽत एव
तत्त्वव्यवस्थायाश्चाश्रया भवन्ति । पृच्छति । **किमिति** । न हि कुण्डमिव
बदराणि तत्त्वव्यवस्था ऽवयवानाश्रयतीत्यर्थः । उत्तरम् । **विशेषप्रतिपा-
दकत्वम्** । धर्म्मविशिष्टो धर्म्मी विशेषः विशिष्यत इति व्युत्पत्त्या तत्प्रति-
पादकत्वमवयवानां तत्त्वव्यवस्थाश्रयत्वमित्यर्थः ।

क्रमप्राप्ततर्कपदव्याख्यानाय भाष्यमनुभाषते । **तर्को न प्रमाणसंगृ-
हीतः** । प्रमाणपदेन हि चत्वारि प्रमाणानि संगृहीतानि न चैतेष्वन्यतम-
स्तर्क इत्यर्थः । अस्तु तर्हि प्रमाणपदसंगृहीतेभ्यः प्रमाणेभ्यः प्रमाणान्तर-
मसंगृहीतं प्रमाणपदेन प्रमेयपदेन वा संगृहीताः संशयादयः प्रमेया इत्यत
आह । **न प्रमाणान्तरम्** । भाष्यमनुभाष्य हेतुमाह । **अपरिच्छेदक-
त्वात्** । अनिश्चायकत्वात् । तदेव व्यतिरेकमुखेन तद्दूषयति । **प्रमाण-
मिति** । स्यादेतत् । अपरिच्छेदकत्वमसिद्धं तर्कज्ञानस्य संशयादिवद्गुण-
त्वेनात्मलिङ्गत्वात् । अन्यथा त्वकिंचित्करत्वादुपादानवैयर्थ्यमित्यत आह ।
**प्रमाणविषयविभागात्त्विति** । न हि वयं गुणत्वेनोत्पत्तिमत्त्वेन वा
रूपेणानिश्चायकत्वं तर्कस्यावदमहे किन्तु प्रमाणविषयविभागहेतुतया [illegible]
चैवमस्याकिंचित्करत्वमित्यर्थः । पृच्छति । **कः पुनरिति** । उत्तरम् ।
**युक्तायुक्तेति** । इदं युक्तमिदमयुक्तमिति इतिकारेण युक्तायुक्तविषयं
तर्कज्ञानं परामृशति । तदनेन तर्कस्य स्वरूपं दर्शितं तस्य व्यापार-
माह । **यदत्र युक्तं भवति** । समर्थति । तदनुजानाति न त्ववधारयति १९ ।
तर्कः । एतदुक्तं भवति प्रमाणं तत्त्वावधारणाय प्रयुक्तं करणतयेति-
कर्त्तव्यतामपेक्षते । तर्कश्च प्रमाणविषययुक्तायुक्तविचारात्मा प्रमाणं युक्ते
तत्त्वे प्रवर्त्तमानमनुजानत् प्रमाणमनुगृह्णाति । तदनुगृहीतं प्रमाणं तत्त्व-
निर्णयाय पर्य्याप्तम् । न च प्रमाणविषये चेत्तर्कः प्रवर्त्तते कृतमस्य प्रमाणा-

तुषया मन्त्यमेव निश्चायकः कस्मान्न भवतीति अत्राह तस्य प्रसङ्गतया पारतन्त्र्येण स्वयमसाधनत्वात् । अस्ति हि प्रसङ्गो न प्रसङ्गो हेतुः । तथा हि । प्रत्यक्षमेव तावद्भूतले प्रवर्त्तमानं तद्विशेषणतया घटाभावे ऽपि प्रवर्त्तमानं यद्यत्राभविष्यद् घटो भूतलमिवाद्रक्ष्यत तेन सह तुल्यदर्शनयोग्यत्वात् न च दृश्यते तस्मान्नास्तीति तेन तर्केणानुग्राह्यमाणं घटाभावविशिष्टभूतले प्रवर्त्तते केवलमेवेदं भूतलं नेह घट इति । एवं स्वर्गकामो यजेतेति शब्दो ऽपि प्रवर्त्तमानः परमाप्तस्य भगवत ईश्वरस्य नियोगो नास्वर्गफलायां यागभावनायामवकल्पते इति समानपदैनोपात्तो ऽपि दुःखतया धात्वर्थः साध्य इति न युक्तं भिन्नपदोपात्तो ऽपि पुरुषविशेषणमपि स्वर्ग एव भावनाफलं युक्त इति तर्केणानुग्राह्यमाणः प्रवर्त्तते । न च यद्यत्राभविष्यद् घट इति वा यद्यभविष्यद्धात्वर्थः साध्य इति वा क्रियातिपत्तिरस्ति यद्यप्यविशिष्टप्रसङ्गेनानुपलब्धिविपरीतया च युक्त्या यत्तर्केण निरणीयते । तस्मान्न प्रमाणम् । निश्चयाय तु प्रवर्त्तमानं प्रमाणं तद्विषयविवेकेनानुगृह्णातीति तर्कस्य तत्त्वज्ञानायेत्येनोपयुज्यत इति । यथोक्तम् । मीमांसाभाष्यकारैः सर्ववेदसमुद्रयः । सो ऽसौ वेदो ऽनाप्रप्रकाशादित्यवगम्यताम् । पूर्वापरविचारयत्नो हि मीमांसायामन्वो ऽयुक्तप्रतिषेधेन युक्ताभ्यनुज्ञानं तर्कः प्रमाणेतिकर्त्तव्यतात्वेन च प्रमाणाद्भेदाद् भेद उक्तः । सो ऽसौ वेद इति । अङ्गाङ्गिनोर्भेदविवक्षया इतिकर्त्तव्यतात्वं चास्य साक्षाद् दर्शितम् । धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यतीति सर्वमवदातम् । तस्योदाहरणं भाष्ये कर्म्मेति । कर्म कारणमपूर्वं धर्म्माधर्म्माविति यावत् । कार्य्ये कारणत्वोपचारात् । एतदुपपादनाय पृच्छति । कथं पुनरिति । निकायविशिष्टाभिरपूर्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिरभिसम्बन्धो जन्म तस्य कथं कर्म्मनिमित्ततेत्यर्थः । अत्र प्रमाणमनुमान-

। १ माह । भेदवत्त्वात् । विचित्रत्वादित्यर्थः । पृच्छति कः पुनरिति । भेदमाह । सुगतिरिति । प्रमाणपृष्ठः तस्येतिकर्त्तव्यताभूतं तर्कमवतारयति । सो ऽयं भेद इति । यद्येवं निमित्तं स्यात्त्रैविध्यं न भवेत् न ह्यविशिष्टात् कारणात् कार्य्यवैचित्र्यमुपपद्यते । तस्मादाकस्मिकत्वप्रसङ्गात् । अत एतदनेकमिति । नन्वीश्वरो यागादि ... क्रियाद्वयं कारण-

। १० मस्तु कृतमपूर्वेणेत्यत उक्तम् । अवस्थिते यागादिका तु क्रिया अनुत्पन्न-

ऽविनाशिनी न चिरभाविने स्वर्गाय कल्पतइति । अथास्थिरा चेद् यागाद्या-
हितमपूर्वं धर्मोऽस्तीति सदैव सुखिना भाव्यम् । एवमधर्मोऽस्तीति
सर्वदैव दुःखिना भाव्यमिति सुखदुःखयोः कादाचित्कत्वं व्याहन्येत ।
न ह्यवस्थितात् कारणादनवस्थितं कार्यमित्यत उक्तम् । अनित्यं सद्व्य-
वस्थानं न नित्यतां ब्रूमः । किन्तु तावदनेन स्थातव्यं यावदन्त्यसुखदुःखसं-
विधानं जनयति अथ नश्यति चेति । ननु भिन्नानि जन्यपूर्वाण्यपि तथा
ऽपि सर्वेऽपि सर्वात्मसमवेतानि । यथा ऽवयवी स्वावयवेषु । तथा च
सर्वसाधारण्यान्नोक्तवैचित्र्योत्पाद इत्यत उक्तम् । एकद्रव्यम् । एकद्रव्यं
चेदस्तु सर्वसाधारणे पृथिव्यादौ यत्र कुत्र चित् । तथा ऽपि वैचित्र्या-
नुपपत्तिरित्यत उक्तम् । प्रत्यात्मनियतम् । अथ पृथिव्यादेश्च कारण-
जन्मवैचित्र्ये कस्मान्न भवतीत्याशयवान् पृच्छति । किं कारणं कस्मा-
त्कारणादित्यर्थः । उत्तरम् । पृथिव्यादीनामिति । मा भूत् पृथिव्यादि-
गतं किं चिद्वैचित्र्यमस्तीत्यत आह । पृथिव्यादिगतस्येति । भाष्योक्तप्रमे-
यत्वे तर्कस्य हेतुमाह । उपलब्धिविषयत्वादिति ।

तर्कानन्तरं निर्णयं उद्दिष्टस्तर्कहेतुकत्वात् । तस्य स्वरूपमाह ।
**निर्णयस्तत्त्वज्ञानमिति** । यद्येवमिन्द्रियार्थसन्निकर्षजन्यप्रत्यक्षज्ञानमपि तत्त्व-
ज्ञानमिति निर्णयः स्यादित्यत आह । प्रमाणानामिति । अनेन
पञ्चावयववाक्यमुपलक्षयति । तत्र सतर्काणां प्रमाणानां समवायात् । परमा-
र्थतस्तु तर्कपूर्वकस्तत्त्वनिश्चयो विनिर्णय इति । प्रत्यक्षादीनामपि तर्कस-
हायानां निर्णयः फलत्वमिति । स्यादेतत् । धूमादिगोचरेण तत्त्वनिर्णयेन
वह्न्याद्यनुमीयमाने प्रमाणमेव निर्णयो न फलमित्याशयवान् पृच्छति ।
कदा पुनरिति । विदिताभिप्रायस्योत्तरं यदेति । संकलय्य तर्क-
निर्णयव्युत्पादनस्य प्रयोजनमाह । तावेताविति । परीक्षको ऽत्र लोक-
शब्देनोच्यते । तदितरस्य तर्काद्यसम्भवात् । बुद्ध्वेति । परीक्ष्य निर्णयं कृत्वे-
त्यर्थः । शेषं निगदव्याख्यातम् ।

निर्णयानन्तरं वादव्याख्यानार्थं भाष्यं वादः खल्विति । तदनु-
भाष्योपपत्तिमाह । वाद इति । नाना प्रवक्तारो यस्मिन् स तथा एक- २० ।
स्यापि शास्त्रकर्तुः पूर्वपक्षोत्तरपक्षसाधनद्वयप्रतिपादको वचनसमूहो, वादः ।

स्यादिति नानाप्रवक्तृक इत्युक्तम्। सिद्धान्तभेदानुविधानेन द्वावपि स्वसिद्धा-
न्तानुरूपं साधनं दूषणं चाहतुरिति। प्रत्यधिकरणेत्यादि भाष्यमनुभाष्य
५ चष्टे। **प्रत्यधिकरणमस्य साधनम्॥** अधिक्रियन्त इत्यधिकरणम्
साध्यं तदधिकृत्य साधनप्रवृत्तेः प्रत्यधिकरणं साधनं यस्मिन्वादे स
तथोक्तः। तस्यैवार्थं निष्कृष्टुं पृच्छति। किमुक्तं भवतीति। निष्कर्षति।
उभाभ्यां वादिप्रतिवादिभ्यां स्वस्वसाध्ये साधनं वक्तव्यम्। तथा च
नानाप्रवक्तृकत्वेन तुल्यत्वेऽपि वादस्य वितण्डायाः प्रत्यधिकरणसाधनत्वेन
भेदः सिद्धो भवति। वितण्डायाः प्रतिपक्षस्थापनाहीनत्वेन प्रत्यधिकरण-
साधनस्याभावात्। तथाऽपि जल्पाद्भेदो वादस्य नास्ति हि जल्पस्य
प्रत्यधिकरणसाधनत्वं च नानाप्रवक्तृकत्वं चेत्यत आह। **अन्यतरस्मि-
न्नधिकरणे निर्णय** इति। वादे हि तावद्वृत्ते यावदन्यतरस्मिन् पक्षे निर्णयो
न जातः। तत्त्वबुभुत्सोर्वीतरागैर्वादेऽधिकारात्। जल्पे तु पुरुषशक्ति-
परीक्षणार्थे ऽप्रतिभादिना ऽपि पराजयोपपत्तेर्नावश्यं तत्त्वनिर्णयः।
तस्मादन्यतरनिर्णयावसानत्वेन जल्पाद्भेदो वादस्येति सिद्धम्। यथा चैत-
त्तथा चोपरिष्टात्प्रतिपादयिष्यत इत्याह। तथेति। तस्य स्वरूपं पृच्छति
सोऽयमिति। उत्तरं। वाक्येति। चोदयति। ननु चेति। वाक्यसमूहश्च
वादं चेति प्रतिषिद्धमेतदित्यर्थः। परिहरति। नेति। साधनोपालम्भद्वयस्य
पक्षद्वयविषयत्वादविरोध इत्यर्थः। युगपदेव जल्पवितण्डे व्याचष्टे।
तद्विशेषाविति। विशेष्येते भिद्येते इति विशेषौ। तस्माद्वादाद्विशेषौ भिन्नौ।
भाष्यमनुभाष्य पृच्छति। कः पुनर्विशेषोऽनयोर्द्वयोर्वादाज्जल्पवितण्डे
इत्यर्थः। उक्तम्। अङ्गाधिक्यमङ्गहानिश्च यथासंख्यम्। तदेव दर्शय-
ति। छलेति। तत्किमिदानीं भव्यादिभिरिवात्यन्तवैरूप्यं वादेन जल्पवि-
तण्डयोरित्याह। एतावता विशेषेण कथामार्गभेद इति। एतावानेव
विशेषो न सर्वथा कथात्वेन गव्यादिव्यावृत्तेन सामान्यविशेषेण कथाना-
१५ मभेदादित्यर्थः। अपरमपि भेदहेतुमाह। विषयभेदाच्चेति। तद्विभजते।
शिष्यादीति। शिष्यमाणो ऽत्यन्तविपर्यस्तः दुर्ज्ञानावलेपदुर्विदग्ध इति
यावत्। न त्वेवंभूतः शिष्यादिर्विपर्यस्तोऽप्यनवलिप्तत्वादिति भावः।
क्रमप्राप्तानां हेत्वाभासानां स्वरूपमाह। अन्यतमेति। पञ्चसु चतुर्षु

वा लिङ्गरूपेष्वन्यतममलिङ्गं धर्ममेकं द्वयं त्रयं वा अनुविदधाना अहेतवो हेतुवदवभासन्त इति हेत्वाभासा उक्ताः । निग्रहस्थानेभ्य इति भाष्यमवतारयितुमाह । ते च निग्रहस्थानमिति । अवतारयति । निग्रह- २० । स्थानेति । अवतार्य्यं दूषयितुमेकदेशिमतेन व्याचष्टे । यस्मात् किलैते इति । किलशब्दोऽयमरुचौ । तदेकदेशिव्याख्यानं दूषयति । नोभयथाप्यसंबन्धात् । किं ये ये निग्रहस्थानेभ्यः पृथगुद्दिश्यन्ते ते सर्वे वादे चोद्यन्ते । अथ ये ये वादे चोद्यन्ते ते सर्वे पृथगुद्दिश्यन्ते । उभयथाऽप्यनैकान्तिकत्वात् । अविनाभावलक्षणः संबन्ध इत्यर्थः । तदेतदुभयतो न वादे चोदनीयत्व*मिति । कुत उभयथाप्यविनाभावाभाव इत्यत आह । यदि तावदिति । तस्मान्नाविनाभूतौ हेतुर्वादे चोदनीयत्वं वा पृथगुपदेशो वा भाष्यकारेणोक्त इत्युपसंहरति । तस्मादिति । वादे देशनीयत्वादित्युपलक्षणं पृथगुपदेशादित्यपि द्रष्टव्यम् । तदेतदेकदेशिमतं दूषयित्वा स्वमतेन भाष्यं व्याचष्टे । एतदेव तु न्याय्यमिति । निग्रहस्थानेभ्यो हेत्वाभासानां पृथगुपदेशे प्रयोजनं यद्वाप्याकरेभ्यः साक्षात्प्रतीयते सामान्योपदेशेन विशेष उपदिष्टे विशेषोपदेशः प्रयोजनाधिक्यं सूचयति । एतावानेव सूत्रकृतो व्यापारो यत्सूचनं नाम । तत्र निग्रहस्थानविशेषाणां हेत्वाभासानां स्वरूपं वादस्य ■ तत्त्वनिर्णयावसानत्वमालोच्य वादे देशनीया भविष्यन्ति निग्रहस्थानत्वेन हेत्वाभासा नाप्रतिभादय इति प्रयोजनं वर्णयां चकार भाष्यकारः । स्यादेतत् । वादे भवन्तु देशनीया हेत्वाभासा मा भूवन्नप्रतिभादयः किमेवमपीत्यत आह । विद्याप्रस्थानभेदज्ञापनार्थत्वात् । वादजल्पवितण्डाः विद्याः परंपरया निःश्रेयसोपयोगात् तासां प्रस्थानं व्यापारः तस्य भेदस्तज्ज्ञापनार्थत्वात् । अत एव जल्पवितण्डयोरित्य- भा० स्याह । चोदयति । अथ कस्मादिति । यदि वादे हेत्वाभासाः प्रयुज्येरन् ततो निग्रहस्थानत्वेन चोद्येरन् न तु तेषामस्ति प्रयोगोऽप्रमाणत्वात् प्रमाणतर्कसाधनोपालम्भत्वाद्वादस्य तस्मान्निग्रहस्थानमात्रत्वं हेत्वाभासानां तथा चापृथगुपदेशो निग्रहस्थानोपदेशेनैव लब्धत्वादित्यर्थः । परिहरति । प्रमाणसामान्यादिति । न खलु हेत्वाभासान् तद्बुद्ध्या प्रयुङ्क्ते २१ । ८

* देशनीयत्वमिति मुद्रितवार्त्तिकपाठः ।

धादिप्रतिवादिनो ऽपि तु हेतुरुक्तः । तथा चास्ति तेषां वादे प्रयोग इति
वादे निग्रहस्थानत्वेन हेत्वाभासाख्येयान्ता नाप्रतिभादीनीत्यर्थस्तानु पृथ-
गुपदेशः । तदेतद्विकल्प्याक्षिपति वादे कानि चिदिति । समाधत्ते । न
१५ लक्षणपरतन्त्रत्वाद् अर्थतथाभावस्येति ब्रूमः । लक्षणत इति लक्षण प्रमा-
णसमानशालीनव्यापृत रूप वादस्य च निग्रहस्थानानां च । तदधीनो हि
तयोः तथाभावो व्यवस्था कानि चिदेव निग्रहस्थानानि वादे न तु सर्वा-
णीति सामान्यतो ऽभिधाय तदेव लक्षणपरतन्त्रत्वमभिमते विशेषे योज-
यति । वादस्येति । उक्तमाक्षिपति । प्रमाणप्रतिरूपकत्वादिति । निश्चितो
हि वादं कुर्वतो निश्चयश्च प्रमाणफलमिति कुतो ऽप्रमाणस्यावकाश ।
उत्तरं भ्रान्तेरिति । न निश्चयः सर्वः प्रमाणमूलो ऽप्रमाणमूलस्यापि
तस्य दर्शनात् । अन्यथा विपर्ययादप्रवृत्तिप्रसङ्गात् । वादिनो ऽप्यभ्रान्तत्वे
वस्तुनो विरुद्धधर्मद्वयसमालिङ्गितत्वमेकदा स्यादिति भावः । पृच्छति ।
कः पुनः शिष्येति । उभयोरप्युपकार्यो परस्परोपालम्भेन न संभवतीत्यर्थः ।
उत्तरं । विपक्षितार्थप्रतिपादकत्वमेव चलीकार इति । हेत्वाभासानां
च पृथक्करणं न वादे तावन्मात्रावधारणार्थमपि तु यस्मिन्ननुद्भाविते ऽपि
निग्रहस्थाने तत्त्वप्रतिपत्तिव्याघातो भवति तस्य सर्वस्य ग्रहणार्थम् । एवं
न्यूनाधिकापसिद्धान्ता अपि गृहीता भवन्ति तत् पृच्छति । न्यूना-
धिकेति । उत्तरं प्रमाणेति । तत्त्वबितण्डयोस्त्विति भाष्यमनुभाष्योपपाद-
यति । जल्पवितण्डयोस्त्विति । साहङ्कारो हि विजिगीषुरप्रतिभादिभि-
रपि निग्रहस्थानैः स्तम्भितो गलिताहङ्कारस्तत्त्वबुभुत्सुर्नीतः पश्चाद्वा-
देन व्युत्पाद्यत इत्यर्थः । छलजातिनिग्रहस्थानानां पृथगुपदेशप्रयोजनपरं
भाष्यमनुभाषते । छलेति । उपलक्षणार्थं चलि भाष्यावयवार्थं व्याचष्टे ।
परिज्ञानार्थमपि केवलपरिज्ञानस्य च फलमुक्तम् । स्ववाक्ये परिवर्जन-
प्रयोग, परवाक्ये चोद्भावनमिति । चोदयति । छलजातिनिग्रहस्था-
नानीति । अथ हि वाक्ये परिवर्जनमुक्ता पुनः स्वयं प्रयोजनयुक्तः कस्मात् ।
व्याघातात् । प्रत्युद्भवते । स्ववाक्यपरिहरति । परिहरति न व्याघातः
१२ पुनः परनापाकरणार्थत्वात् । फलद्भवते । स्वयं च सुकरः प्रयोग
इति । अनेन भाष्येण किमुक्तं भवति । परेण प्रतिवादिना जातेः प्रयु-

ज्ञायां यदि प्राश्निकान् सभ्यान् ब्रवीति जातित्वेन प्रतिवादिना प्रयुक्तेति ते प्राश्निका एनं पर्यनुयुञ्जीरन् हे वादिन् कथं केन प्रकारेण जातिः चतुर्विंशत्यां जातिषु कतमा जातिः । सो ऽयं प्राश्निकानां प्रश्नः तदुपाकरणार्थे स्वयं सुकरः प्रयोग इत्यर्थः । प्रकृतमुपसंहरति । तस्मादेत- २२ । १ दिति ।

सूत्रकारेण शास्त्रस्यात्यन्तिकदुःखोपरमरूपनिःश्रेयसाधिगमः प्रयोजनमुक्तम् । भाष्यकारस्तु नास्त्येव तत् प्रेक्षावतां प्रयोजनं यदान्वीक्षिकी न निमित्तं भवतीत्याह । सेयमान्वीक्षिकीति । तदेतद्भाष्यं व्याचष्टे । सेयमान्वीक्षिकी न्यायविद्या । यद्यपीतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते तथा ऽप्येतद्विद्याप्रतिपाद्यमेव प्रमाणादुपजीव्य स्वे स्वे व्युत्पाद्ये ऽर्थतत्त्वे प्रवर्त्तन्ते न तु प्रमाणान्यपि व्युत्पादयन्ति । यथा प्रत्यक्षादुपजीव्य प्रवर्त्तमानमनुमानं न प्रत्यक्षादिविषयमपि तदानीमेव गोचरयति तदनेन विद्योपकरणप्रदर्शनेन व्यापार आन्वीक्षिक्या दर्शितः । येऽपि विद्यानां यानि कर्म्माणि प्रतिपाद्यानि सामाग्निहोत्रकृष्यादीनि तत्राप्यान्वीक्षिक्युपाय इत्याह । उपायः सर्वकर्म्मणां विद्याव्युत्पाद्यानाम् । ननु हालिकमृग- २३ । यादिकर्म्मणामपि न हि विद्यापदेभ्यो यावन्नावगतिः तावन्नैव प्रेक्षावतां परितोषः । मा भूदादित्यो वै यूप इत्यादिभ्यः आदित्यादीनां यूपादिना तस्मात् संशयपरीक्षाप्रमाणविनिवेशद्वारेण तदर्थतत्त्वमवधार्य तत्र पदी विनिवेशनीया । एवं दण्डनीतिवार्त्तयोरप्यवगन्तव्यम् । यस्मादान्वीक्षिकीपरिशोधितप्रमाणप्रकाशिते सामादि इतराः विद्याः कुर्वन्ति । विषयमिति शेषः अपि च द्रव्यगुणकर्म्मणामभिमतानभिमतोपायतापरिज्ञापनेन यथास्वं सर्वा विद्याः प्रेक्षावतः प्रवर्त्तयन्ति निवर्त्तयन्ति च । तत्र किमविशेषेण साध्यसाधनेतिकर्त्तव्यतासु प्रवर्त्तयन्ति आहो स्वित् साधनेतिकर्त्तव्यतामात्रे । तत्र यदि साध्यांशे ऽपि प्रवर्त्तनागोचरः तदा श्येनादिसाध्यायाः हिंसाया विहितत्वेन नानर्थत्वम् । अथ साध्यं रागतः प्राप्तमनूद्य साधनेतिकर्त्तव्यते एव विधीयेते ततः श्येनादिसाध्याया हिंसाया अविहितत्वेन न हिंस्यात् सर्वा भूतानीति प्रतिषेधादनर्थत्वम् । तदिह साध्यांशे प्रवर्त्तनमान्वीक्षिकीगम्यम् । यथानुष्ठानगताः प्रयोजकत्वाप्रयोजकत्वादयः

आन्वीक्षिकीगम्या एव वार्तादिष्वपि तदेवमान्वीक्षिकीमाश्रयन्ते सर्वविद्या इत्याह । आश्रयः सर्वधर्म्माणां सर्वेषां विद्यानां पुरुषप्रवर्तना धर्मा-स्तेषामाश्रयः । वार्त्तिककारस्तु धर्म्मद्वारेण विद्यानामेवाश्रय इति व्याचष्टे । सर्वविद्योपकारकत्वादाश्रयः सर्वेषां विद्यानामियमुपकरोति विद्या प्रवर्तनायां फलंत्यायामियं सहकारितया उपकरोतीत्यर्थः । स्यादेतद् व्युत्पाद्याश्चेत्प्रमाणादयः सर्वविद्योपयोगिनो न तर्ह्यात्यन्तिकी दुःखनिवृ-त्तिरान्वीक्षिक्याः फलं निःश्रेयसपदादवगम्येत व्युत्पाद्यस्वभावालोचनया हि तद्गम्येत स च विद्यान्तरसाधारण इति विद्यान्तराधिगम्येन निःश्रेयसेन संकरप्रसङ्ग इत्यत आह । तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथा-विद्यं वेदितव्यम् । विद्यान्तराणि तावत्तत्त्वज्ञानं कुर्वन्ति इति तत्स्व-भावालोचनया हि तत्तद्विद्यासाध्ये एव निःश्रेयसे भेदे उपयुज्यन्ते नान्यत्र इह तु प्रमाणादि यद्यपि साधारणं तथाप्यात्माद्यसाधारणात्मादि-रूपप्रमेयसमभिव्याहृतं तद्विषय एव निःश्रेयसे अवतिष्ठत इति । विशुद्धि-मार्जनेन होमसाधनस्य द्रव्यस्य प्राप्तिः स्वागतम् । आदिग्रहणेन क्रम-प्राप्ताङ्गग्रामसमाकल्पं गृह्यते स्वमार्जारादिभिरनुपघातो अनुपहतत्वम् । आदिग्रहणाद्विशुद्धो ऽभिसंधिरिति शेषमतिरोहितम् । वादादीनां नियत-स्यानात्मनामुद्देशः परामिमर्षोपायत्वान्मदमानादिहेतुत्वेन निःश्रेयसपरि-पन्थीनि मन्यानश्चोदयति । मदमानादीति । परिहरति । न सूत्रार्था-परिज्ञानात् । नायं सूत्रार्थः सर्वदा तत्त्वज्ञानं साक्षान्निःश्रेयसोपयोगि किं त्वात्मादितत्त्वज्ञानं तद्वितरेषां पारंपर्य्येण तत्र जल्पादीनां पराहंकारप्रश-मनमप्यान्तरो व्यापार इति न निःश्रेयसपरिपन्थिता किं त्वानुकूल्यमित्यर्थः । मदमानादिहेतुत्वं च हेतुरसिद्ध इत्याह । यच्चेदमिति । उपसंहरति ।
१० तस्माच निमित्तं वादादिपरिज्ञानं रागादीनामिति । इति सूत्र-भाष्ये ।

तदेवं प्रथमसूत्रेण शास्त्रस्याभिधेयप्रयोजनसंबन्धान् दर्शयता पदार्थाः प्रमाणादयः उद्दिष्टाः तेषां च लक्षणमुक्त्वा तत्परीक्षा वर्णयिष्यते अपरीक्ष्य तत्त्वनिर्णयायोगात् । न चानिर्णीतप्रयोजनसंबन्धानां लक्षणपरी-क्षयोरवकाशः । न च प्रयोजनसंबन्धनिर्णयः परीक्षां विनेति तत्परीक्षार्थं

द्वितीयं सूत्रम् । तत्र प्रयोजनाभिधानस्य द्वैविध्यात् संशयः । द्विविधं हि प्रयोजनाभिधानं ग्रन्थकृतां दृष्टं समीचीनमसमीचीनम् । यथा वार्त्तिकादि-प्रयोजनाभिधानम् आयुर्वेदादिप्रयोजनाभिधानं च । तस्मादभिधानसामान्या-द्विशेषादर्शनाच्च संशयः । तन्नोत्सूत्रेण प्रयोजनाभिसंबन्धप्रतिपादनपरं पूर्वपक्ष-भाष्यं तत्र खलु वै निःश्रेयसमित्यादि तद्विभजते । **न तत्त्वपरिज्ञानात्** । २४ । कुतः उभयथा दोषात् । तदत्यन्तविमोक्षलक्षणो ऽपवर्गो निःश्रेयसं तच्चेत्त-त्त्वज्ञानानन्तरं संप्रदायोच्छेदो वाप्तपूर्वीयं वा शास्त्रं स्यात् तस्मान्न तत्त्वज्ञाना-नन्तरं निःश्रेयसम् । तथा सति प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति मिथ्या । न चान्यन्निःश्रेयसमित्यभिसंधिः पूर्वपक्षवादिन इति । अथेदं विद्वा-न्सूक्ष्ममुपतिष्ठते दुःखजन्मेति । तस्य तात्पर्यमभिधायावतारयति । न प्रयो-जनानभिसंबन्धः । कुतः । **निःश्रेयसस्य परापरभावात्*** । चतस्रो हि प्रतिपत्तयः । प्रमेये आत्मादौ प्रथमा तावदागमाद् यामाचक्षते श्रवणमिति । द्वितीया तु श्रुतस्य परीक्षा न्यायेनैवोपस्थापनं यामाहुर्मननमिति सा आन्वी-क्षिक्यामायत्ता । आन्वीक्षिकी च संशयादितत्त्वज्ञापनं प्रमाणतत्त्वज्ञापनायोप-दिशति प्रमाणतत्त्वज्ञापनं च हेयोपादेयभेदव्यवस्थितप्रमेयतत्त्वपरिज्ञापनाय । तत्राप्याद्यन्तवर्जितदशवर्गज्ञापनेनाद्यन्तयोरात्मापवर्गयोरुपादेययोस्तत्त्वज्ञा-नस्योपकारो न चायमान्वीक्षिकीविद्यायत्तप्रमेयतत्त्वो ऽपि परितुष्यति पूर्ववदे-वात्मादिगतविपर्ययवासनानुवृत्तेः । सो खलु विद्वान् सहस्रेणाप्यनुमानैर्विप-र्ययसंस्कारमपनयति । तत्त्वसाक्षात्कारस्तु विपर्ययसाक्षात्कारं निवर्तयति तज्जनिता च वासना विपर्ययवासनामिति लोकसिद्धम् । तस्मादात्मादिसा-क्षात्कारवती चतुर्थी प्रमाणफलभूता ऽवद्योतनाविपर्ययशमनी मध्यमानेनादर-नैरन्तर्याभ्यां ध्यानाभ्यासादिशब्दवाच्या तज्ज्ञा या प्रतीतिः साक्षात्कारफला दीर्घकालमुपासनीया । अथ परिनिष्पन्नध्यानोपायः साक्षात्कारवतीं प्रतिपद्य चतुर्थीं प्रतीतिं निर्मुक्तसकलक्लेशजालो ऽप्रवर्तमानो धर्माधर्मसाधनेषु निरुद्धा-नागतधर्माधर्मप्रबन्धोत्पादो भूतेन्द्रियविजयी प्रज्ञाज्योतिर्जीवन्नेव मुक्त इत्यु-च्यते । न चैवमवस्थो वीतरागो ऽपि सहसैव देहादिभिर्वियुज्यते । प्रागुपा-त्तस्य धर्माधर्मप्रचयस्य भुज्यमानस्य वा भुक्तस्य वा ऽक्षीयमाणत्वान्न च

---

* परापरभेदादिति पु० वा० पु० पाठः ।

प्रायश्चित्तेनेवात्मज्ञानेनादत्तफलान्येव कर्म्माणि क्षीयन्ते इति युक्तम् । नाभुक्तं क्षीयते कर्मेति स्मृतेः । अन्त्यसुखदुःखसंविज्ञानविरोधस्य कर्म्मणामवधारणात् । औत्सर्गिकस्य क्व चित् प्रायश्चित्तादौ विशेषवचनेनापवादात् । क्षीयन्ते चास्य कर्म्माणीति श्रुतेः । योगर्द्धिवशाद्युगपदुत्पादितानेकविधदेहोपभोगेनाप्युपपत्तेः तावदेवास्य चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्ये इति वा मुक्तोपभुज्यमानफलकर्म्मप्रचयावधित्वप्रदर्शकम् । योगर्द्धिवशात्त्वा यत्तन्नियतविपाककालान्यपि दीर्घकालफलान्यपि कर्म्माणि पिण्डीकृत्य मुनेन्द्रियविजयितया युगपदेव भुङ्क्ते अचिन्त्यो हि समाधिप्रभाव इत्युक्तम् । न चाचिन्त्यप्रभावत्वाद्विनैवोपभोगं कर्म्मक्षयात् प्रवर्त्तिष्यतीति युक्तम् । दृष्टानुसारेण कथं चिदुपपत्तौ अत्यन्तादृष्टकल्पनाया अयोगात् । तस्मादुत्पन्नतत्त्वसाक्षात्कारस्य दोषाभावात् प्रवृत्त्युपरमे यो ऽनागतापूर्वानुत्पादलक्षणमपरं निःश्रेयसं तत् तत्त्वसाक्षात्कारानन्तरं भवति ईदृशस्य मुनिस्तत्त्वज्ञानवान् शास्त्रप्रणेतेति न चानुचीयं शास्त्रं परं तु निःश्रेयसं समाधिप्रभवमपरं युगपदुपभोगेनोपात्तकर्म्माशयस्य क्षयात् सर्वदुःखोपरम इत्युपपन्नं निःश्रेयसद्वैविध्यमिति भावः । तदेतद्दर्शयति । तस्यावस्थितिरिति । तत्त्वसाक्षात्कारस्तत्त्वज्ञानपदार्थः सुखम् । आयासो दुःखं तत्रानागताभ्यां तावत् प्रवृत्त्यभावात् अनुत्पादाद्वैषमुत्पत्तेर्विद्यमानकारणे अपि सुखदुःखे अशक्तो ऽद्विर्वेदयं भुञ्जानो न सुखदुःखतया ऽनुमन्यते न ह्यस्ति संभवो न ताभ्यां तृप्यति रागस्तस्य सुखं न द्वेष्टि तस्य तस्य तु दुःखमिति । स्यादेतत् । भवत्वेतदपरं निःश्रेयसं प्रकृते तु किमायातमित्यत आह । अयं शास्त्रार्थः । अयंशब्दो निमित्ते अपरं निःश्रेयसं शास्त्रनिमित्तमिति । अथापरनिःश्रेयसोत्पादक्रमेण परमनिःश्रेयसमपि कस्मान्न भवतीत्यत आह । परं तु* निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति । नो खलु इत्यत्र तत्त्वसाक्षात्कारः सवासनविपर्य्यासज्ञानतत्कार्य्यदोषतत्कार्य्यप्रवृत्तीनां निवृत्त्यै प्रयतते कारणनिवृत्त्यैवाप्रयत्नसाध्यत्वात् कार्य्यनिवृत्तेः । न हि कफोद्भवज्वरप्रशमनाय कफनिवृत्तौ सत्यां प्रयत्नान्तरमातिष्ठते तत्र एव तस्मिन्हे । परं तु निःश्रेयसं न तावद्भवति यावदुपभोगादुपात्तकर्म्माशयप्रचयो न क्षीयते तस्मा-

(margin: ।१९ ; ५।१)

* परं तु का॰ पु॰ पाठः ।

तत्त्वज्ञानात्कारणाधानप्रयत्नान्तरस्तदुपभोगप्रयत्नश्चापेक्ष्यस्तथा च न तुल्य-
काल उत्पादः परापरयोर्निःश्रेयसयोः । तदिदमुक्तं क्रमेणेति । तदेवम- २५ । २
र्थगतं परिशोध्य सूत्रमवतारयति । क्रमेति । यद्यप्यपरस्मिन्नपि निःश्रेयसे
मिथ्याज्ञानदोषप्रवृत्तीनामपि समुच्छेदक्रमो ऽस्ति तथा ऽपि जन्मदुःखोच्छे-
दक्रमो नास्ति । पूर्वोपात्तकर्माशयप्रचयस्य तादवस्थ्यात् । तस्माज्जन्मदुः-
खोच्छेदक्रमपरमित्याकूतो मिथ्याज्ञानाद्युच्छेदक्रमः परस्यैव निःश्रेयसस्य
शास्त्रप्रयोजनस्य तत्प्रतिपादनमर्थः प्रयोजनं यस्य तत्तथोक्तम् । इदं
शास्त्रान्तरप्रयोजनं प्रधानप्रयोजनमपि वक्ष्यति । अत्र केचिद् योगविभागमि-
च्छन्ति । कारणोच्छेदात् कार्योच्छेदो ऽभिमतो न चासौ दुःखादीनां
मिथ्याज्ञानान्तानामदर्शिते कार्यकारणभावे सिध्यति तस्माद् दुःखजन्म-
प्रवृत्तिदोषमिथ्याज्ञानानामित्येको योगः । अथ किल समानदेशाभिमतरेतर-
योगो ऽवगम्यते स च योऽन्यथा कार्यकारणभावः । कार्येण कारणं युक्तं
कारणेन च कार्यमिति । अतः सिद्धे कारणभावे उत्तरोत्तरापाये तदनन्त-
राभावादपवर्ग इत्यनेन योगेन कारणोच्छेदक्रमेण कार्योच्छेदक्रमप्रतिपाद-
नेनापवर्गः प्रतिपाद्यते । अथ चेत्तरत्वं पाठापेक्षया कारणस्य तदनन्तरत्वं
च कार्यस्याव्यवहितत्वादिपाठापेक्षया मिथ्याज्ञाने कारणे तत्कार्या दोषाः ।
एवं शेषेष्वपि योज्यं तमेतं सूत्रविभागमनृष्यमाणो वार्त्तिककृदाह ' इदं सूत्रम् ।
एकमनेन भेदं व्यावर्तयति । न हि समुच्छेदक्रमप्रतिपादनेनापवर्गपरत-
यैकवाक्यत्वे संभवति वाक्यभेदो न्याय्यः । एकनिवृत्त्या अन्यनिवृत्त्यैव
कार्यकारणभावाद् आक्षिप्त इति नासौ सूत्रकारेण दर्शनीयो न
ह्यर्थाक्षिप्तं सूत्रकारा दर्शयन्ति तदिदं सूत्रपदप्रयोजनम् । तथा हि ।
स्वल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम् अस्तोभमनवद्यं च सूत्रं सूत्रविदो
विदुरिति । अस्तोभमनधिकम् अर्थलभ्यप्रदर्शने त्वधिकं भवेदिति ।
तत्सूचनात् सूत्रं स्यात् । तथा ह्याहुः । लघूनि सूचितार्थानि स्वल्पा-
क्षरपदानि च । सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिण इति । एतदे-
तरयोगेनापि कार्यकारणभावः सूचनीय एवं परमेकनिवृत्त्या ऽन्यनिवृत्त्यैव
सूच्यताम् एकवाक्यतानुरोधायेति परमतात्पर्यमाह । एतत्संबन्धेनैव । २५
शास्त्रस्य निःश्रेयसाधिगमलक्षणेन प्रयोजनेन यः संबन्धः पूर्वमाभिप्र-

वदन्ते । अन्ये ऽसद्विषयं ज्ञानम् । अन्ये त्वनिर्वचनीयज्ञानम् । अपरे त्वप-
१।४ ह्नवमेव । अन्यथाख्यातिरिति वृद्धाः । उत्तरम् । अतस्मिंस्तदिति प्र-
त्ययः । इदमत्राकूतम् । न तावत् स्वाकारं रजतादि बाह्यतया ऽऽलम्बन्ते
विभ्रमाः । तथा हि ज्ञानाकारत्वं रजतादेरनुभवाद्वाव्यवस्थाप्यते अनुमानाद्वा
अनुभवो ऽपि रजतप्रत्ययो वा बाधकप्रत्ययो वा स्यात् । न तावद्रजतप्र-
त्ययः । स हीदमनहंकारास्पदं रजतमादर्शयति न त्वान्तरमहमिति सदा
स्यात् । प्रतिपत्तुः प्रत्ययादव्यतिरेकात् । भ्रान्तं ज्ञानं स्वाकारमेव बाह्य-
तया ऽऽलम्बते तथा चानहंकारास्पदमस्य विषयो ज्ञानाकारो ऽपि ज्ञाना-
कारता पुनरस्य बाधकज्ञानप्रवेदनीयेति चेत् । हन्त चक्षुषी निमील्य वैना-
शिकपक्षपातं परित्यज्यालोचयतु भवान् किं पुरोवर्तिद्रव्याकारतामात्रं प्रति-
षेधति रजतस्याहो स्वित् ज्ञानाकारतामप्यस्योपदर्शयति बाधकप्रत्ययः ।
तत्र ज्ञानाकारतोपदर्शनं व्यापारं बाधकप्रत्ययस्य ब्रुवाणः श्लाघनीयप्रज्ञो देवा-
नांप्रियः । पुरोवर्तित्वनिषेधादर्थात् ज्ञानाकारतासिद्धिरिति चेत् । न त्वसत्त्वा-
त्तन्निषेधो धर्मिग्रीष्मादावुपलब्धस्य रजतस्य व्यवस्थापने हेतुः । आन्तरत्व-
त्वनुपलब्धचर कुतस्त्यम् । न चानुमानमत्र प्रभवतीति चतुर्थे निवेदयिष्यते ।

ननु तर्हि बाधकप्रत्ययानुरोधाद् असत्प्रकाशनशीला एव मिथ्या-
प्रत्ययाः । तथा हि बाधकं विज्ञानं नेदं रजतमिति रजतज्ञानगोचरस्या-
सत्त्वं गृह्णाति । न चासतो विषयभावो नोपपद्यते न हि विषयत्वं नाम
कारणत्वं येनासति न स्यात् किन्तु स्वकारणाधीनः सामर्थ्यातिशयः स
तादृशो ज्ञानस्य येन सन्तमिवासन्तमपि गोचरयति । न च विषयसामर्थ्य-
मपेक्ष्यते ज्ञानस्य सामर्थ्यमात्रादेव तद्भावसिद्धेः । अत एवासत्प्रकाश-
नसामर्थ्यमेव मिथ्याज्ञानानामविद्यात्वमनिर्वचनीयत्वं केचिदास्थिषत । इ-
दमालोचनीयं किमेतन्मिथ्याज्ञानमसत् सदात्मना गृह्णातीत्यसद्विषयमुपेयते
आहो स्वित् सदेव सदन्तरात्मना गृह्णाति सतश्च सदन्तरात्मना ऽसत्त्वा-
दसद्विषयमुच्यते । न तावत्पूर्वः कल्पः रजतात्मना चेदसदालम्ब्येत न
तर्हि शुक्तिका कस्मात् पुनरत्र शुक्तौ रजतार्थी प्रवर्तते न पुना रजता-
भावे कस्माच्चेदं पुरोवर्ति द्रव्यमङ्गुल्या निर्दिश्य तस्य रजतत्वं निषेधति
नेदं रजतमिति यदि तत्र न प्रसञ्जितं रजतत्वं पूर्वविज्ञानेन । अथ

शुक्तिरेव रजतात्मना ऽसतीति तदाकारतया तामालम्बमानं मिथ्याज्ञान-
मसदालम्बनमुच्यते तथानुत्तया वर्तामहे न खलु अन्यथाख्यातिवादिनो
ऽपि सदन्तरं सदन्तरात्मना सदभ्युपगच्छन्ति तथा सत्यन्यथेत्येव न
स्यात् । यथा ऽऽहुः अन्यथाख्यातिवादिनः । तस्माद्यदन्यथा प्रतिपद्येत
तन्निरालम्बनमसदालम्बनं च तदिति । न च रजतात्मना पुरोवर्तिनो
द्रव्यस्यानिर्वचनीयता मिथ्याज्ञानसमये सत्त्वेन बाधकसमये चासत्त्वेन
निर्वचनीयत्वात् । न चैवमभूतस्यासतः प्रथा नोपपद्यते । तस्य सदसद्भावानु-
पाख्येयत्वात् । यः पुनरद्वैतवादिनां प्रपञ्चो वैनाशिकानां वा सामान्या-
दिर्वा बहिः किं त्वनीक्षं तद्विषयं च ज्ञानं मिथ्याज्ञानमित्यपि न संभ-
वति । तस्य सर्वोपाख्यारहितस्य केन चित् सादृश्याभावात् तत्कारणक-
त्वाच्च भ्रान्तेः । कारणाभावे कार्याभावस्य सुलभत्वात् । तस्मात् प्रपञ्चश्च
सामान्यादि च वस्तुसती नासमीचीनावभासगोचरौ तद्भावश्चोपरिष्टाद्वर्ण-
यिष्यते । तस्मान्नानिर्वचनीयख्यातिरपि । स्यादेतत् । अन्यदन्यथा प्रका-
शत इति संविद्विरुद्धं न तावत् सद्रूपत्वमेवालम्बनत्वम् । सन्मात्रस्य
सर्वप्रत्ययसाधारण्येन सर्वे ऽर्थाः सर्वप्रत्ययविषया इति सर्वसर्वज्ञतापत्तेः ।
न च कारणत्वेनालम्बनत्वम् । रूपादिविज्ञानानां रूपादिवच्चक्षुराद्यपि
कारणमिति चक्षुराद्यालम्बनत्वप्रसङ्गात् । अतीतानागतविषयत्वं च विज्ञा-
नस्य न स्यात् अतीतानागतयोरसत्त्वेनाकारणत्वात् ॥ तस्मात् प्रतिभा-
समानमालम्बनम् । तथा च रजतप्रतिभासः शुक्तिकालम्बनमिति दुर्घ-
टम् । अपि च चक्षुरादीनां समीचीनज्ञानोपजननसामर्थ्यमिति कथमेभ्यो
मिथ्याज्ञानं भवितुमर्हति । न हि श्यामाकबीजं परिकर्मसहस्रेणापि कल-
माङ्कुराय कल्पते । दोषसहाया लोचनादयो मिथ्याप्रत्ययमादधतीति
चेत् । न दोषा हि कारणानां सामर्थ्यं निघ्नन्ति न पुनः कार्यान्तरजनन-
सामर्थ्यमादधति न खलु मृष्टकुटजबीजं न्यग्रोधधानायै कल्पते । किन्तु न
करोति कुटजबीजं कुटजधानाम् । अपि च स्वगोचरे व्यभिचारे विज्ञा-
नानां सर्वेषामनाश्वासप्रसङ्गः । तस्मात्सर्वमेव विज्ञानं समीचीनमास्थेयम् ।
तथा हि । रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे तत्रेदमिति पुरोवर्ति-
द्रव्यमात्रग्रहणं दोषवशात् तद्गतशुक्तिकात्वसामान्यविशेषस्याग्रहणात् तत्र-

न्मात्र च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति सा च गृहीतग्रहणस्वभावा ऽपि दोषात् गृहीततांशप्रमोषेण ग्रहणमात्रमवतिष्ठते । तथा च रजतस्मृतेः पुरोवर्तिमात्रग्रहणस्य च मिथः स्वरूपतश्च विषयतश्च भेदाग्रहणात् सन्निहितरजतविषयविज्ञानसारूप्येण इदं रजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामानाधिकरण्यव्यपदेशं च प्रवर्तयतः । क्वचित् पुनर्ग्रहणे एव मिथो ऽगृहीतभेदे । यथा पीतः शङ्ख इति । अत्र हि निर्गच्छन्नयनरश्मिवर्तिनः पित्तद्रव्यस्य काचस्येवातिस्वच्छस्य पीतत्वं च गृह्यते पित्तं तु न गृह्यते शङ्खो ऽपि दोषवशाद् गुणरहितः स्वरूपमात्रेण गृह्यते । तदनयोर्गुणगुणिनोरसंसर्गाग्रहात्सारूप्यात् पीतबिल्वविल्वप्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च भेदाग्रहप्रसञ्जिताभेदव्यवहारव्यपदेशाच्च नेदं रजतमिति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते तदुपपत्तौ च भ्रान्तित्वमपि लोकप्रसिद्धं सिद्धं भवति । तस्माद्यथार्थाः सर्वे ऽपि अमी, प्रत्ययत्वात् घटप्रत्ययवदिति प्राप्तम् एवं प्राप्ते ऽभिधीयते । अस्ति तावद्रजतार्थिनो रजतमिति ज्ञाने सति पुरोवर्तिद्रव्यप्रवृत्तिः सामानाधिकरण्यव्यपदेशश्चेति सर्वजनीनम् । तत् किं ग्रहणस्मरणयोस्तद्गोचरयोश्च भेदाग्रहाद्भवत्याहो स्विदभेदग्रहात् । न तावच्चेतनो ऽज्ञानात् प्रवर्तते अपि तु ज्ञानात् । पुरोवर्तिवस्तुग्रहणरजतज्ञानादगृहीतभेदं स्वरूपतो विषयतो वा रजतार्थिनं पुरोवर्तिद्रव्ये प्रवर्तयतीति चेत् । हन्त भोः किमेताभ्यां पुरोवर्तिवस्तुगोचरं ज्ञानं रजतगोचरं भवति आहो स्वित्तन्मात्रगोचरमेव । यदि रजतगोचरं पुरोवर्ति रजततया ऽगृह्णात् कथं नान्यथाख्यातिः । अथ तन्मात्रगोचरं को भेदाग्रहस्योपयोगः । न हि वृषभादर्शनं निश्चयेन विषाणार्थिनं प्रवर्तयति न हि तत्र विषाणज्ञानमस्ति अस्ति त्विह रजतविज्ञानमगृहीतभेदमिदमिति ज्ञानेनेति चेत् । न रजतविज्ञानं पुरोवर्तिद्रव्ये न वर्तते पुरोवर्तिज्ञानं च न रजतमिति तत् पुरोवर्तिनि प्रवर्तते न रजतार्थी यत्र रजतार्थी यत्र क्व चन प्रवर्तेत न नियमेन पुरोवर्तिद्रव्ये न हि तेन तत्र रजतत्वमवगतमिति । अथेदं रजतमिति द्वे ज्ञाने भेदाग्रहादिदं रजतमित्येकज्ञानसदृशे तद्रुचितं व्यवहारं प्रवर्तयतः । यथैव तद्रजतमिव शुक्तिरिति भेदावभासिविज्ञानव्यवहारमि

कस्मान्न प्रवर्त्तेत । यथैव हि भेदाग्रहादभेदज्ञानसादृश्यमेवमभेदाग्रहा-
द्भेदविज्ञानसादृश्यमपि सो ऽयमुभयतो भेदाभेदग्रहसादृश्यात् प्रवृत्तिनि-
वृत्तिभ्यां युगपदाकृष्यमाणः प्रतिपत्ता कष्टां दशामाश्रित इत्यख्यातिभिर-
तिव्याख्यया ।

स्यादेतत् । विपर्ययज्ञानोत्पादे ऽपि शुक्तिरजतयोर्भेदाग्रहे ऽस्य
व्यापार आस्थेयः । अन्यथा गृहीतभेदानामपि विपर्ययोत्पादप्रसङ्गात् ।
तथा च शक्यं तथापि वक्तुम् । यथा भेदाग्रहाद्विपर्ययज्ञानोत्पाद एवमभेदा-
ग्रहात् कस्मान्न समीचीनज्ञानोत्पाद इति तत्र यस्तव परिहारस्सो ऽस्माकं
व्यवहारव्यपदेशयोर्भविष्यति । यथा ऽऽहुः अख्यातिवादिनः । येषामपि
विपरीतख्यातिस्तेषामप्यज्ञानवासनानिबन्धनो भ्रम इति । मैवम् । ज्ञानहेतु-
भावमात्रात्तत्कार्यसम्बन्धानां चक्षुरादीनां दर्शनाच्चेतनव्यवहाराणां त्वबुद्धि-
पूर्वकाणामप्रतीतेः । बुद्धिपूर्वकत्वे तु विवेकाग्रह उपयुज्यते न व्यवहार-
व्यपदेशयोरिति युक्तमुत्पश्यामः । यद्यविवेकाग्रहो ऽपि तत्परिपन्थी विद्यते
इति कुतो ऽन्यतरनिबन्धनो व्यवहारः । तस्मात् समारोप एव भेदाग्रह
इति विद्वन्मतद्विवादाध्यासितं रजतादिविज्ञानं पुरोवर्तिवस्तुविषयं रजता-
र्थिनस्तत्र नियमेन प्रवर्त्तकत्वात् । यदादर्थिनं नियमेन यत्र प्रवर्त्तयति तद्वि-
ज्ञानं तद्विषयं यथोभयसिद्धं समीचीनरजतज्ञानं तथा चैतद् न तथा चैत-
त्तस्मात् तथा । यद्वोक्तमनवभासमाना शुक्तिका नालम्बनमिति । तत्र किं
शुक्तिकात्वस्य रजतमिति ज्ञानं प्रत्यनालम्बनत्वं साध्यते आहो स्विद् द्रव्य-
मात्रस्य सितभास्वरस्य पुरोवर्तिनः । तत्र पूर्वस्मिन् कल्पे सिद्धसाधनमुत्त-
रस्मिन्नवभासमानत्वमसिद्धम् । इदमिति पुरोवर्तिनो द्रव्यस्याङ्गुल्या निर्दे-
शात् । दृष्टं च दृष्टानामपि कारणानामौत्सर्गिककार्य्यप्रतिबन्धेन कार्य्यान्तरो-
त्पादकत्वम् । तद्यथा वेत्रबीजानां दावाग्निदग्धानां कदलीकाण्डजनकत्वं
भस्मकदुष्टस्य चौदर्य्यस्य तेजसो बहुतरान्नपानपाचकत्वम् । नेदं रजतमिति
च प्रत्ययबाधकप्रत्ययादपहृतविषयं प्रत्ययत्वेन विभ्रमाणां यथार्थत्वानु-
मानं नोदेतुमर्हति । यथा च प्रमाणाभासव्यभिचारे ऽपि प्रमाणे समाश्वासस्तथा
प्रमाणतो ऽर्थप्रतिपत्तावित्यत्रोपदर्शितम् । दिङ्मात्रमत्र दर्शितं प्रपञ्चस्तत्त्वसमी-
क्षायामस्माभिः कृत इत्युपरम्यते ।

तदेवमात्मनि मिथ्याज्ञानं व्याख्याय शरीरादिष्वेकादशसु मिथ्याज्ञानं
४ भाष्यएव दर्शितं तत्तु स्पष्टत्वान्नोपपादितमस्माभिरित्याशयवानाह । शेष-
मिति । तत्र शरीरादिषु मनःपर्य्यन्तेषु यथायोगं मिथ्याज्ञानं दुःखे सुखमि-
त्यादिना प्रतिपत्तव्यमित्यन्तेन भाष्येणोक्तम् । प्रवृत्त्यादिषु शृङ्गग्राहिकयो-
क्तम् । प्रवृत्तावित्यादिना रोचयेदित्यन्तेन भाष्येण । एवं मिथ्याज्ञानस्य
स्वरूपं दर्शयित्वा मिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखानां कार्य्यकारणभावो दोषा
दीनां स्वरूपं चोक्तम् । एतस्मादित्यादिना ताप इत्यन्तेन भाष्येण । सम्प्रति
मिथ्याज्ञानाद्युच्छेदादपवर्ग इति वक्ष्यति तच्चायुक्तं सत्यपि तदुच्छेदे संसार-
तादवस्थ्यात् । न ह्यन्योच्छेदे ऽन्यस्योच्छेदः । तथा च नापवर्ग इति यत्प्र
माणमर्थमुपपादयितुमुक्तं भाष्यकृता तदिमे मिथ्याज्ञानादय इति । तद्वा
र्त्तिककारो व्याचष्टे । तदिमे दुःखादय इति । भाष्यकारोक्तक्रमाद्विपरीतक्र-
माभिधानं वार्त्तिककृत एवं सूत्रकारोक्तक्रमाद्विपरीतक्रमाभिधानं भाष्यकृतो
दुःखादीनां मिथ्याज्ञानपूर्वकत्वेन मिथ्याज्ञानस्य दुःखादिपूर्वकत्वेनानादित्वं
दर्शयितुम् । पृच्छति । कः पुनरिति । यद्येतदेव संसारस्तर्हि सूत्रकारः प्रमे-
यसूत्रे कस्माद् दुःखादिभ्यः पृथक् प्रेत्यभावं संसारापरनामानमुपादत्ते ।
तस्मादेभ्यो ऽन्य एव संसार इति भावः । उत्तरम् । दुःखादीनामिति ।
नैषां स्वरूपमपि तु कार्य्यकारणभाव इत्यर्थः । क्रमव्यतिक्रमे तात्पर्य्यमाह ।
स चानादिरिति । अत्र हेतुमाह । पूर्वापरेति । दुःखजन्मप्रवृत्तिदोषाः
विषयः ते न तावन्मिथ्याज्ञानस्य कारणमेवमपि जन्मनि मिथ्याज्ञानस्यानु
त्पत्तेरविषयो ऽपि जन्म मिथ्याज्ञानस्य कारणम् । एवं विना प्रवृत्तिं जन्मा-
भावाज्जन्मद्वारेण प्रवृत्तेरपि मिथ्याज्ञानकारणत्वम् । प्रवृत्तिद्वारेण च दोषाणां ।
तथा मिथ्याज्ञानाद् दोषाः दोषेभ्यः प्रवृत्तिः प्रवृत्तेर्जन्म जन्मनो दुःखम् ।
यद्यपि प्रवृत्तिरेव साक्षाद् दुःखहेतुस्तथा ऽप्यनायतनस्य तस्यानुत्पत्तेरन्तरा
जन्म करोति । अत एव दुःखमिति । अनादित्वाच्च नान्योन्याश्रयत्वं चक्र-
कं वा बीजाङ्कुरसन्तानयोरिव सम्प्रति बीजापायइव तज्जन्याङ्कुरप्रवाहनिवृत्ति-
मिथ्याज्ञानापाये तज्जन्यप्रवृत्तिजन्मदुःखमिथ्याज्ञानादिप्रवाहनिवृत्तिः कारण
।२ निवृत्तौ कार्य्यनिवृत्तेरिति कथनपरं भाष्यमनुभाष्याक्षिपति । यदा तु तत्त्वज्ञा-
नादिति । अपायो ऽपि तत्त्वज्ञानान्मिथ्याज्ञानस्य स्वरूपतो वा विषयतो

वा फलतो वा स्यात् । न तावत् स्वरूपतः । तस्याशुतरविनाशिनः संस्का-
राद्वा ज्ञानान्तराद्वा अपायस्य तत्त्वज्ञानसाधारण्येन तस्यापि बाध्यत्वप्रसङ्गा-
त् । नापि विषयतः । न हि शुक्तिकाज्ञानं रजतज्ञानस्य रजतविषयतामपहर्तुमु-
त्सहते जातं हि तद्रजतं विषयीकृत्य । यथा ऽऽहुः । गृहीत्वा ऽर्थं गता-
श्चैताः कस्तानाच्छेत्तुमर्हतीति । नापि फलमपहरति । उपदर्शितो हि तेना-
र्थः प्रवर्तितश्च तत्र पुरुषः तदिदमुक्तम् । कथमपाय इति । उत्तरं समान- २६ । ९
विषय इति । यस्मिन्नेव हि पुरोवर्तिनि द्रव्ये पूर्वेण रजतत्वमारोपित-
मथेदानीं तद्विरुद्धशुक्तिकात्वं धर्ममुपनयति । तथा च पूर्वज्ञानस्य
मिथ्यात्वमदर्शयत् तज्जनितां प्रवृत्तिं विघटयत् फलमस्यापहरतीति भावः ।
न तु समानविषयतामात्रेण विरोधः मा भूदेकस्मिन्नात्मनि नित्यत्वविभु-
त्वज्ञानयोर्विरोध इत्यत आह । यस्मादिति । तत्त्वमिथ्यात्वकथनेन मिथो
विरुद्धधर्मप्रसञ्जनं सूचयति । नित्यत्वविभुत्वज्ञानयोस्तु समानविषययोर-
प्यविरुद्धधर्मोपस्थापकतया तत्त्वज्ञानत्वादित्यर्थः । कस्माद्विरोध इत्यत
आह । वस्तुन इति । परस्पराभावधर्मिणोरेकत्र समवायेनेह स्वाभाविकं
नानात्वं क्व चिदपीत्यद्वैतप्रसङ्ग इति भावः । उपसंहरति । तस्मादिति । क्रम
दर्शयति । कथं पुनरिति । प्रथममुत्पन्नं मिथ्याज्ञानमनुपजातविरोधि तेना-
पहृतविषयं पश्चात्तनं तत्त्वज्ञानमुदेतुमेव नोत्सहते प्रागेव तु मिथ्याज्ञानं
बाधितुमिति भावः । उत्तरं मिथ्याज्ञानस्येति । तत्र हि प्रथममनुपजातेना- ११ । १
नुपजातविरोधिना ज्ञानेनोत्तरं बाध्यते यत्र पूर्वोपमर्दमुत्तरमुपजायते । तत्
खलु पूर्वविरोधेन जायते । अजातं सत् कथं पूर्वं बाधेत यथा प्रत्यक्षादि
विरुद्धमनुमानम् । इह तु द्वे अपि ज्ञाने दोषापहतेन्द्रियार्थसन्निकर्षजन्मनी
परस्परानपेक्षे तत्र पूर्वमनुपजातविरोधित्वात् किं बाधतामनागतस्याप्राप्तत्वे-
न बाधितुमशक्यत्वात् स्वकारणबलादासाद्यमानजन्मनश्चोत्पत्तिविरोधस्याश-
क्यत्वात् । तदेवमुत्पन्नमुत्तरमुपजातविरोधितया पूर्वबाधात्मकं सन्नानुप-
मृद्य पूर्वमुत्पन्नं भवतीति पूर्वं बाधते । तत्तु न पूर्वेण नाप्यन्येन केन चि-
दिति भवत्यर्थसहायम् । अर्थासहायं च मिथ्याज्ञानं तदनेन बाध्यत्वा-
बाध्यत्वे मिथ्याज्ञानतत्त्वज्ञानयोरुपलक्ष्येते । तदिदमन्यैरप्युक्तम् । पूर्वात्पर-

बलीयस्त्वं तच नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेदिति । तथा चानुपजातविरोधित्वमेव बाध्यत्वे हेतुरुपजातविरोधित्वं च बाधकत्वइति । यदुपलक्षणार्थं ससहायत्वाभिधानं तज्जिज्ञासुः पृच्छति ।
। १५ **कस्मात्** । उत्तरम् । **तथात्वेनेति** । अनेनाबाध्यत्वं तत्त्वज्ञानस्योक्तमिति । न केवलमबाध्यत्वं दृढमूलत्वमपि तत्त्वज्ञानस्येत्याह । **प्रमाणान्तरानुग्रहाच्च** । चन्तरशब्दो विशेषवचनः । आत्मादितत्त्वज्ञानं हि फलं प्रमाणविशेषैरागमानुमानप्रत्यक्षैरनुगृह्यते तस्माद् दृढमूलत्वात्तदपि तत्त्वज्ञानं मिथ्याज्ञानं निवर्त्तयतीत्यर्थः । तदेव विभजते । **आगमेति** । एतदेव स्फोरयति । **यदा हीति** । आगमजेन हि ज्ञानेन प्रमेयं गृहीत्वा शास्त्रीयेण च न्यायविज्ञानेनानुमानापरनाम्ना व्यवस्थाप्य भावयतो यदात्मनः सन्निकर्षाद्योगजधर्म्मसहायादुत्पद्यते तत्त्वविषयसाक्षात्कारः प्रत्यक्षफलं तत्र त्रयाणामपि प्रमाणानां प्रतिसन्धानमस्तीति दृढमूलत्वात् तेन मिथ्याज्ञानं बाध्यते । विषयं विभावयतीति व्याचष्टे । **समाहित इति** । समाहितत्वेन चेतसो धारणां दर्शयति । **अनन्यमना इति** प्रत्याहारं **चिन्तयतीति** तत्त्वविषयत्वं द्विधाराविपद्यमानत्वम् । ध्यानस्य तत्त्वज्ञानस्य स्फुटतरावस्थावस्था ध्यानजनितभावना संस्कारो ध्यानभावना तस्याविवेको मिथ्याज्ञानवासनायाः । पूर्वे हि मिथ्याज्ञानवासना तत्त्वज्ञानवासना यावत्याभ्यासौ दयाभ्यावयवात् तुल्यबला ऽभवद्वयेयमेव बलीयसी तत्त्वज्ञानवासनासम्भिन्ना मिथ्याज्ञानवासनया सहानुवर्त्तते सम्प्रति तु तत्त्वज्ञानवासनाया अत्यन्तबलीयसी समूलकाषं कषित्वा मिथ्याज्ञानवासनाया भवति विविक्ता तत्त्वज्ञानवासना तस्यामित्यर्थः । नन्वनेन क्रमेण निवर्त्तताम् मिथ्याज्ञानं निवृत्तं तु साक्षात्कारसमये ऽपि कस्मात् पुनः स्ववासनावशान्न जायते । न खलु मिथ्याज्ञानवासना अनादिकालप्रवृत्ता आदिमता तत्त्वज्ञानेन तद्वासनया शक्या निवर्त्तयितुमि-
२७ । १ त्यत आह । **निवृत्ते चेति** । तावदेव पुंसां बुद्धयो ऽस्थिराः भ्राम्यन्ति स्वोचितसंस्कारवशान्न यावत्तत्त्वविवेचनया यावद्भूतमर्थं साक्षात् कुर्वन्ति । अथ साक्षात्कृते तत्र स्थिरपदा भवन्ति विरमन्ति च सवासनान्मिथ्याप्रत्ययात् । भूतार्थपक्षपातो हि बुद्धेः स्वभावः । यदाहुर्बाह्या अपि । निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः । न बाधो यत्नवत्त्वे ऽपि बुद्धेस्तत्पक्षपातत इति ।

तस्माद् मिथ्याज्ञानस्य न पुनरुत्पाद इति । उक्तमेवार्थं स्मृतिदार्ढ्याय पृच्छ-
ति । कः पुनरिति । उत्तरं स्मारयितुमुत्तरं सहेति । भवतु मिथ्याज्ञानस्य २७ ।
निवृत्तिः सवासनस्य ततो ऽपि किमित्यत आह । मिथ्याज्ञानेति । अथ
पृच्छति । ये तावदिति । उत्तरं तेषामपीति । वैराग्यस्वरूपं पृच्छति । किं
पुनरिति । रागाभावो वैराग्यं न च तस्मादेव रागादीनामभाव इति भावः ।
उत्तरम् । भोगानभिष्वङ्गलक्षणमित्युक्तम् । विषयदोषपरिभावनापरिपा-
कात् खलु विषयपरित्यागेच्छा भवति तया विरोधिगुणेन विषयतृष्णा तत्-
परिपन्थिनि निवृत्ते च तदधिकरणाश्चेर्ष्यादयो निवर्तन्ते । अशक्तिर्विषयपरि-
त्यागेच्छा यतितया च स्वयमुपनतेषु विषयेषु माध्यस्थ्यादर्शनम् । दोषाभावे किं
भवतीत्यत आह । दोषाभावे इति । पृच्छति का पुनरियमिति । यदि हि
जन्मनः प्रवृत्तिः कारणं स्यात् ततो जन्मनिवृत्त्यैव निवृत्तिरर्थ्येत । न पुन-
रसौ अधिका सती आमुष्मिकाय जन्मने कल्पते अतः किमर्थं निवर्त्यत
इति भावः । विदिताभिप्राय उत्तरमाह । धर्म्माधर्म्मौ । कस्मात् पुनरुपचार
इत्यत आह । जन्मसाधनत्वात्* । तत्त्विभजते । नरकेति । उप-
चारप्रयोजनं दर्शयित्वा निमित्तमाह । धर्म्माधर्म्मयोरित्यादि । वर्तमाना-
नागतयोरविशेषेण दोषापायान्निवृत्तिरुक्तेति भ्रान्त्या दर्शयति यौ तावदनाग-
ताविति । परिहरति । नानागतयोरिति । अनागताभिप्रायेणैतदित्यर्थः ।
यद्येवं वर्तमानयोः कुतः प्रलय इत्यत आह । वर्त्तमानयोरिति । अस्तु
प्रवृत्तिरभावस्ततः किमित्यत आह । प्रवृत्त्यभाव इति । उक्तं विवेकमिदानीं वि-
योजयति । अत्रापीति । वर्तमाननिवृत्तिहेतुं पृच्छति । कथमिति । उत्तरं संस्का-
रेति । मुक्तिस्तावदेवास्य चिरं यावन्न विमोक्ष्ये ऽथ संपत्स्ये इति । किं जन्मा-
भावे विद्यतीत्यत आह जन्माभाव इति । अथैव मृत्युमत्यतिपतिमाह ।
एतच्च तदाहुरिति । सदेहस्यैति योजना प्राणमध्य कालभेदाश्रयेद्र आयुः ।

स्यादेतत् । महाप्रलये ऽपि मिथ्याज्ञानादिना दुःखान्तेनास्ति
वियोग इति तथापि मुक्तिप्रसङ्ग इत्यत आह । सो ऽयं मिथ्याज्ञाना- २८
दिनेति । सर्वत इति । तृतीयार्थे तसिः सर्वेणेति । न च प्रलयावस्थायां
सर्वेण वियोगः कर्म्माविद्यावासनयोरविनाशात् । मुक्तौ तु तयोरपि

* जन्मसाधनत्वादिति मु० का० पु० पाठः ।

विनाशः । कर्म्मवासना सर्वकार्य्याण्युत्पादिका ऽपस्थापिका च तन्निवृत्तौ शरीरादिवत्तत्त्वज्ञानसंस्कारस्यापि प्रलय इत्यशेषविशेषगुणविमुक्तो मुक्त इत्युच्यतइति सिद्धम् । स्यादेतत् । तत्त्वज्ञानात् मिथ्याज्ञानाभाव इत्युक्तम् । किं पुनस्तत्त्वज्ञानमित्यत उक्तं भाष्यकृता । **तत्त्वज्ञानं त्विति ।**

८।६ तदनुभाष्य सर्वेषां ज्ञानानां भाष्योक्तानामनुगतमेकं स्वरूपमाह । **स्वरूपतस्त्विति ।** चोदयति **कस्मादिति ।** नो खल्वयं प्रेक्षावतां समाचारो यद् दुःखभिया सुखपरित्याग इति अपि तु सुखं दुःखाद्विभज्योपाददते दुःखं [illegible] वर्ज्जयन्ति । न हि मृगाः सन्तीति शालयो नोप्यन्ते भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्तइति । उत्तरम् । **विवेकहानस्येति ।** यद्यपि सुखदुःखे भिन्ने तथाप्यनित्यत्वकृतकत्ववत् परस्परानुषक्ते इति न खलु सुखस्य केवलस्योपादानं दुःखस्य वा केवलस्य परिवर्ज्जनं शक्यमित्यर्थः । कः पुनरयमनुषङ्गो यतो विवेकहानमशक्यमित्यत आह । **अनुषङ्गो ऽविनाभावः ।** तत्स्वरूपमाह । **यत्रैकं सुखं वा दुःखं वा तत्रेतरत् सुखं वा दुःखं वा ।** तदनेनानित्यत्वकृतकत्वयोरिव सुखदुःखयोरविनाभावो दर्शितो न चाविनाभावो विना सम्बन्धादिति तत्सिद्धये सम्बन्धविकल्पानाह । **समाननिमित्तता वा अनुषङ्गो ऽविनाभावः** वाशब्दश्च समुच्चयाय सम्बन्धान्तरापेक्षया । स च शरीराद्यपेक्षया समाननिमित्तता न तु धर्म्माधर्म्मापेक्षया । तयोरसाधारण्यादिति मन्तव्यम् । तयोरविनाभावसिद्ध्यर्थं सम्बन्धान्तरमाह । **समानाधारता वा ।** अपरं संबन्धान्तरमाह

२८।१० **समानोपलभ्यता वा ।** मनोगोचरत्वमुभयोस्ततश्च सिद्धो ऽविनाभावापरनामा ऽनुषङ्ग इति । **यत्रैकं तत्रेतरदिति वा ।** यत्र यस्मिन्निमित्ते सतीति वा यत्राधारइति वा । यत्रोपलब्धिसाधने सतीति व्याख्येयम् । इति सूत्रसमाप्तिं सूचयति ।

तदेवं प्रमाणादिपदार्थतत्त्वज्ञानस्य निःश्रेयससम्बन्ध उक्तः परीक्षितश्च । एतत् स्यात् । स्वपदेभ्यः प्रमाणादयः पदार्थास्तत्त्वतो ज्ञाता यथायथं मिथ्याज्ञाननिवृत्तिक्रमेणापवर्गं तदर्थोऽस्त्वन्ते कृतमुपरितनेन प्रबन्धेनेत्यत उक्तं भाष्यकृता **त्रिविधा चास्येति ।** न नामधेयमात्रात् प्रमाणादीनां तत्त्वज्ञानं भवत्यपि तु लक्षणपरीक्षाभ्यामित्यस्ति प्रबन्धस्यो-

तस्योपयोग इति भाष्यार्थः । तदेतद्भाष्यमनुभाष्य पृच्छति । **प्रवृत्तेरिति** । २८ ।
यदि पुरुषकल्पनाभावात् त्रैविध्यमथानन्त्यमेव कस्मान्न भवति । सर्वत्र तस्य सुलभत्वादिति भावः । उत्तरम् **अर्थस्य तथाभावात्** । अर्थस्य प्रयोजनस्य साक्षाच्छास्त्रकार्यस्य तत्त्वज्ञानलक्षणस्य । तथैव त्रिविधतयैव शास्त्रप्रवृत्त्या भावात् । तथा हि । लक्षणं नाम व्यतिरेकिहेतुवचनम् । तद्धि समानासमानजातीयेभ्यो विभिद्य लक्ष्यं व्यवस्थापयति न चास्य धर्मदर्शनमन्तरेण पक्षधर्मता सिद्ध्यतीति तदुपदर्शनाय नामधेयमात्रेण धर्मिणामुद्देशः । यद्यपि च प्रतिलक्षणमुद्दिष्टा एव धर्मिणस्तथाऽपि शास्त्राभिसम्बन्धपरादपि वाक्यात् समधिगम्यन्त इत्युद्देशोऽप्युक्तः । न चापरीक्षितो हेतुर्व्यतिरेकी चतूरूपो भवतीति परीक्षाऽप्यवश्यं कर्तव्या तस्मात्तत्त्वज्ञानस्यार्थस्य तथाभावात्त्रैविध्यमिति तदेव विभजते **नामी पदार्था** इति । **किं त्विति** । अर्थस्तत्त्वज्ञानं तथाभूतं येनार्थेन हेतुना शास्त्रस्य प्रवृत्तिस्त्रेधा भवति । उद्देशस्वरूपप्रतिपादनपरं भाष्यमनुभाष्याक्षिपति **नामधेयेनेति** । परिहरति **भावग्रहणसामर्थ्यादिति** । यद्यपि प्रमाणादिशब्दा अपि कारकशब्दा एव तथाऽप्युद्देशसमये तदर्थानां सदपि कारकत्वमविवक्षितम् अपि तु प्रातिपदिकार्थमात्रम् । घ्राणादिसूत्रे तु लक्षणपरे कारकत्वं विवक्षितम् । अन्यथा लक्षणत्वायोगादित्यदोषः । अथ यद्यपि सूत्रकारेण संशयप्रमाणप्रमेयेषु परीक्षा साक्षात्कृता न प्रयोजनादिषु तथाऽपि तत्करणादेव प्रयोजनादिपरीक्षाऽपि सूचिता सूत्रकारेणेति त्रिविधेत्युक्तम् । अत एव भाष्यकारः सर्वत्रैव परीक्षामावर्तयत् । स्यादेतत् । विभागपरमेतत् सूत्रमिति वक्ष्यति । न च विभागो न्यूनाधिकसंख्याव्यवच्छेदार्थं सक [illegible] चिदुपसंग्राहकमन्तरेण न च प्रमाणत्वादन्यत्तदुपसंग्राहकं न चेदमलक्षितमुपसंगृह्णाति न चैतत् सूत्रमस्य लक्षणपरं विभागपरत्वादिति शङ्कानिराकरणपरं भाष्यं **तत्रोद्दिष्टस्येति** । तस्यार्थः । यद्यपि विभागपरमेतत् सूत्रं तथाऽपि प्रमाणपदसमभिव्याहृतं सत् सामर्थ्यात् प्रमाणत्वमपि लक्षयतीति । तथा हि । प्रमीयतेऽनेनेत्यस्य वाक्यस्यार्थे प्रमाणपदप्रयोगः प्रमा च स्मृतेरन्याऽर्थाव्यभिचारी स्वतन्त्रः परिच्छेदः । तस्माद्विभागपरादपि सूत्रात् प्रतीयमानं प्रमाणसामान्यलक्षणमपे-

चित सगृहीतमिति प्रमाणत्वोपगृहीताना प्रत्यक्षादीना युक्तो विभागः । तथा च विभागपरत्वेन साक्षात् सामान्यलक्षणानभिधानाद्विभक्तस्य लक्षणमुच्यतइत्युक्तम् । तदिह विशेषलक्षणमिन्द्रियार्थेत्यादि तदेतद्भाष्य

६ । ३ व्याचष्टे । उद्दिष्टस्येति । लक्षणालक्षणमात्रविवक्षया लक्षितस्यालक्षितस्येत्युक्तम् । तत्स्थले सामान्यतः प्रमाणेषु प्रमेयेषु विशेषत इति गमयितव्यम् । अथ भाष्यमर्थोद्दिष्टस्य विभागवचनमिति । तस्यार्थः उच्यते ऽनेनेति वचन सूत्र विभागस्य । अर्थेति त्रिविधप्रवृत्तिव्युत्पादनानन्तर विभक्ताना प्रतिपादनम् । न च विवेकः स्वरूपत उपयुज्यतइत्यत आह । अर्थोद्दिष्टविभागद्वारेणेति । नाथ विभागमात्र विवक्षितमपि तु तद्द्वारेण न्यूनाधिकसंख्याव्यवच्छेदस्तत्त्वज्ञानाङ्गमित्यर्थः । अन्याख्याने हेतुमाह । सूत्रेति । चोदयति । उद्दिष्टविभागानर्थक्यम् । त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्यस्यानर्थक्यम् । अनर्थमर्थविपर्य्यय कारयति कीर्त्यतीत्यनर्थक तस्य भावस्तत्त्व कस्मात् । व्याघातात् । व्याघातमेव स्फोरयति त्रिविधा चास्य शास्त्रस्येति । परिहरति । नोद्दिष्टेति । परस्पर विभक्ताः नामधेयमात्रेणोद्दिश्यन्ते सत्युद्देशे ऽन्तर्भावात् । तेनायमर्थो भवति सामान्येनोद्दिष्टस्य विभागवचन विशेषेणोद्देश इति । विभागप्रयोजन पृच्छति । किं पुनरिति । उत्तरम् । नियमः । तद्विभजते । यदीति । पुनश्चोदयति । लक्षणत इति । प्रमाणलक्षणप्रवृत्तौ यद्वत्वार्थ्येन लक्षयति तत तथाधिगम्यते न न्यूनाधिकानि प्रमाणानीत्यर्थः । परिहरति । लक्षणस्येति । आक्षेप विभजते । स्यादेवेति । परिहार विभजते । न लक्षणस्येति । अन्यपरमपि वाक्य तदेवार्थेनभ्य स्वीकरोति यतेनापेक्षितम् । तदेव चापेक्षित येन विना तदर्थो नोपपद्यते न च प्रत्यक्षादीना समानासमानजातीयस्य व्यवच्छेदे पञ्चमाद्यभाव उपयुज्यते लक्षणकरणप्रवृत्तस्य हि चिदकरण ■ तदभावे प्रमाण सतो ऽप्यनुपयोगेनाकरणोपपत्तेः । तदेतदाह । अन्यासंभवस्येति । विभागोद्देशस्य पुनरनन्यपरत्वादन्याभावनिश्चयो भवतीत्युपसहरति । तस्मादिति । अक्षस्याक्षस्येति भाष्यमनु-

३० । ४ भाष्य तात्पर्य्यमाह । अयं च सूत्रविवक्षायामिति । अक्षमक्ष प्रति वर्त्तत इति विगृह्याव्ययीभावे कृते सर्वेन्द्रियार्थरोधो भवति । ननु यदीदृशो विग्रहः

कस्मात् पुनर्भाष्यकारेणाऽक्षस्याक्षस्येति विगृह्यत इत्यत आह। अन्यथा ३०
तु वस्तुनिर्देश इति। अर्थमात्रमनेन प्रतिपाद्यते न पुनः समास इत्यर्थः।
अथ कस्मात् समास एव तेन विग्रहेण न प्रतिपाद्यत इत्यत आह।
समासे हि अक्षस्येति षष्ठी न श्रूयेतेति। यदि श्रूयमाणस्य प्रत्यक्षपद-
स्याव्ययीभावः समासो ऽन्यथा पुनरस्य कः समास इति पृच्छति। कः
पुनरिति। उत्तरं प्रादिसमास इति। तथा हि। प्राप्तापन्नालम्पूर्वगतिसमा-
सेषु परवल्लिङ्गताप्रतिषेधादभिधेयलिङ्गोपादानात् प्रत्यक्षो ऽर्थः प्रत्यक्षा बुद्धिः
प्रत्यक्षं ज्ञानमित्यभिधेयलिङ्गता सिद्धा भवति। क्व चित् पाठः समासे हि
प्रत्यक्षस्येति षष्ठी न श्रूयत इति। सूत्रविवक्षया ऽव्ययीभाव इत्युक्तम्। तत्र
शङ्कते। कस्मात्पुनः सूत्रविवक्षयेत्युच्यते यावता सर्वत्रैव कस्मादव्ययीभावो
न भवतीति। तत्रेदमुपतिष्ठते। समासे हि अव्ययीभावसमासे हि सर्वत्र
प्रत्यक्षस्येति षष्ठी न श्रूयेतेति। व्युत्पत्तिनिमित्तमात्रं चेदं प्रत्यक्षशब्दस्य न
प्रवृत्तिनिमित्तम्। तस्मादिन्द्रियगतेर्गुणसामान्यादिभिर्व्यभिचारः प्रवृत्तिहेतु-
स्त्वर्थसाक्षात्कारिज्ञानजनकत्वम्। तन्निमित्तः खल्वयं प्रत्यक्षशब्दस्तत्र
तत्र लौकिकपरीक्षकैः प्रयुज्यते। मयूरशब्दो मयूरत्वसामान्यनिबन्धनः क्वासु
चिदेव पक्षिव्यक्तिषु वर्तमानो मह्यां रौतीत्यन्वाख्यायते। तदिदं प्रत्यक्ष-
बुद्धिद्वयमपि सत् प्रमाणतदाभाससङ्कीर्णमिति तद्विवेकाय लक्षणमुपयुज्यते।
यदि तुष्टेयपद तद्विवेचयेत् कृतं तर्हि लक्षणप्रपञ्चेन विग्रहवाक्यगता च
वृत्तिर्भाष्यकृता व्याख्याता। वृत्तिस्तु सन्निकर्षो ज्ञानं वा। वृत्तिरिति कि
व्यापारः। स तु व्यापार उच्यते यः कारकैः फले जनयितव्ये चरमभावी
धर्मभेदः फलोत्पादानुकूलोऽपेक्ष्यते यथा पटे जनयितव्ये तन्तुभिश्चरम-
भाविनः संयोगभेदाः स्वर्गे जनयितव्ये यागेनापूर्वमात्मधर्मः। तथेहापि
इन्द्रियादिना प्रमाणेन प्रमायां फले प्रवृत्तेन तदुत्पादनानुकूलः सन्निकर्षो
ज्ञानं वा चरमभावी धर्मभेदोऽपेक्ष्यत इति भवति व्यापारः स एव वृत्ति-
रित्याख्यायते। व्यवस्थां दर्शयति यदा सन्निकर्षो व्यापार इन्द्रियादेः भा.
प्रमाणस्य तदा ज्ञानमालोचनं वा सविकल्पकं वा साक्षात्कारिज्ञानं प्रमितिः
फलम्। उभयस्यापीन्द्रियव्यापारात् सन्निकर्षपराभिधानादुत्पत्तेः। न चा-
न्तरालिकेन निर्विकल्पकेनेन्द्रियव्यापारविच्छेद इति प्रत्यक्षव्याख्यानावसरे

निवेदयिष्यते। यदा ज्ञानमालोचनं वा विकल्पो वा व्यापार इन्द्रियादीनां तदा हानोपादानोपेक्षाबुद्धयः फलं तत्रोपादेयमिदं सलिलमिति बुद्धिरनागतोपादानविशिष्टं सलिलमालम्बमाना न साक्षात्कारवती सलिलमात्रसाक्षात्कारस्तु स्यात्। न च तन्मात्रमस्य फलमपि तूपादेयता सा च परोक्षा अनागतत्वात्। तस्मादुपादीयते ऽनेनेत्युपादानम् उपादानं चासौ बुद्धिश्चेत्युपादानबुद्धिः ततोयालोचन*मथ सोऽयं विकल्पो ऽथ च तज्जातीये दृष्टचरपिपासोपशमनहेतुभावस्य स्मृतिबीजसंस्कारोद्बोधः अथ तस्य स्मरणम् अथ लिङ्गपरामर्शः तज्जातीयं चेदमिति। तदिदं लिङ्गपरामर्शविज्ञानं साक्षात्कारवत्। लिङ्गे विनश्यदवस्थव्याप्तिस्मरणसहकारिदृश्यमानस्य सलिलस्य पिपासोपशमनहेतुतया अनुमानमुखेनोपादानबुद्धिरुच्यते। अनुमिमानः स्वरूपं तथाभावं तदुपादित्सुः समीहमानस्तदुपादत्ते। न च व्याप्तिस्मृतिविच्छिन्नमालोचनं वा विकल्पो वा न लिङ्गपरामर्शज्ञानहेतुरिति वाच्यम्। तदुद्बोधितसंस्कारद्वारेण व्याप्तिस्मरणे परामर्शे च तस्य तदानीमसतो ऽपि कारणत्वात्। न च खलु कृषिकर्म सस्याधिगमसमये समस्ति न च यागादिकं स्वर्गाद्युत्पत्तिसमये न च त्रिवृत्कषायपानं विरेकसमये। आन्तरालिककार्य्यपरंपरया तु तत्कार्य्यसाधनत्वं सर्वत्र समानम्। स्यादेतत् का पुनरियं पिपासोपशमनशक्तिस्तोयस्य या ऽनुमानगोचरः। न तावन्मीमांसकवदतीन्द्रिया शक्तिरस्माभिरभ्युपेयते। किं तु कारणानां स्वरूपं वा सहकारिसाकल्यं वा तत्र स्वरूपं हेतूनां प्रत्यक्षमेव सहकारिणां प्रत्यक्षाप्रत्यक्षाणां साकल्यं कार्य्यसमुत्पादव्यञ्जनीयं न तु तोयस्वरूपमात्रदर्शनात्साकल्यानुमानं तत्किमपरमवशिष्यते यदनुमानस्य गोचर इति। अत्रोच्यते न वयमतीन्द्रियं सामर्थ्यमातिष्ठामहे नापि सहकारिसाकल्यानुमानं किन्तु स्वरूपस्य कार्य्यसंबन्धिताम्। न चेयं स्वरूपमेव दहनस्येव नारिकेलद्वीपादागतस्यापि वह्निदर्शनमात्राद् दाहकत्वावगमप्रसङ्गात्। तस्मात् कार्य्योपहितं स्वरूपमनुमेयम्। इदमेव चास्य कार्य्योपधानं यत्कार्य्योत्पादात्पूर्वमवश्यं भावः आनन्तर्य्यनियमः। न च तज्जातीयस्य दृष्टचरस्य तथाभावदर्शने ऽपि दृश्यमानस्य तोयस्य तद् दृष्टं भवति येन तत्र स्मर्येत। न खलूज्जयिन्यामुपल-

* ततोपालोचनमिति २। ३ पु पाठः।

व्यस्य बोधस्य पाटलिपुत्रे स्मरन्त्यभ्रान्ताः । उपादानेन हानं व्याख्यातम् । न चोपेक्षा ऽनुपादानतया हानपक्षे ऽपि क्षिप्ता । अहानतयोपादानपक्षेऽपि निःक्षेपप्रस-
ङ्गात् । उपादानं प्रयत्नप्रसवहेतुतया नोपादानमिति चेत् किमिदं हानप्रयत्न-
मपि प्रसूते यतो हानं स्यात् । तस्माद् या नोभयप्रयत्नप्रसवहेतुः सोपेक्षाबुद्धि-
स्तृतीया लोकप्रसिद्धेति सिद्धम् । प्रत्यक्षपदव्युत्पत्तिं दर्शयित्वा ऽनुमाना-
दिपदेष्वपि व्युत्पत्तिं दर्शयति एवमनुमानादिष्वपि इति । तथेदमनुमा- ३० । ८
नव्युत्पत्तिपरं भाष्यं मितेन लिङ्गेन लिङ्गिनो ऽर्थस्य पश्चान्मानमनु-
मानमिति । मितिस्मृतेन तथा च लिङ्गदर्शनोद्बोधितसंस्कारजा स्मृतिर्वि-
भिन्ना तस्याः मितेरन्यत्वेन लोकसिद्धत्वात् । मितेनेत्यज्ञानसन्देहविपर्ययावि
लिङ्गविषया निरस्ता भवन्ति तथा ऽपि मितेनार्थस्य ज्ञानं शब्दे तथा
ऽप्यस्तीत्यत उक्तं लिङ्गेनेति । अपक्षधर्मता निवर्तयति लिङ्गिन इति ।
धर्मिणः प्रत्यक्षगोचरत्वात् कृतमनुमानेनेत्यत उक्तमर्थस्येति । अर्थ्यते ख्या-
प्यते इत्यर्थः न हि धर्मी स्वरूपेणार्थ्यते किं तु विवक्षितधर्मविशिष्ट
इत्यर्थः । पश्चादित्यनुशब्दस्य व्याख्या । तदेतद्भाष्यमनुभाष्य आक्षिपति मिते-
ति । कस्मादयुक्तम् इत्यत आह । फलाभावादिति । एतद्विभजते । एत-
स्मिन्निति । अनुमानज्ञानस्य फलस्थानीयमेवार्थो मितश्चेति नैव नाश्रयिष्यते
यथेतत् सिद्धं सत्प्रमाणं भवेदित्यर्थः । तत्र फलविशेषणमाक्षिप्यत इत्यध्या-
हृत्य समाधत्ते नैष दोष इति । अनध्याहारेणाप्यदोष इति समाधानान्तर-
माह । भवतु वेति । पूर्वोक्तदोषं स्मारयति । ननु चेति । परिहरति । न दोष
इति । अथ कस्माद्धानादिविषयं प्रमाणमुच्यते न स्वगोचरं प्रतीत्यत आह ।
सर्वं च प्रमाणमिति । यद्यपि वह्निविज्ञानस्यानुमानस्य सतो हेयत्वादिकं वि-
षयस्तथैव तस्य प्रामाण्यात् । अथ प्रमाणफलयोर्भिन्नविषयत्वेन विप्रतिपत्त्या प्र-
माणफलभावायोगात् । न हि परशुविषयेण परशुना खदिरे द्वैधीभावो भवति ।
तथा ऽपि फलान्तरानपेक्षमुत्पन्नमेव विज्ञाने यत्प्रकाशते स तस्य विषयः । तत्र
[illegible] न प्रमाणं फलान्तराजनकत्वात् । अपि [illegible] फलमेवेत्यर्थः । विषयान्तरं
प्रति तत्प्रमाणमित्याह । विषयान्तरमिति । दर्शयति यदीति । भाजना- ,, । १
धनश्चेत् प्रमाणशब्दः फलमस्यार्थो न तु फलं स्वविषये करणान्तज्ज्ञानस्य
तज्जनकेनैव कृतत्वात् । न च स्वविषयादन्यदस्य विषयान्तरं सम-

। १७ इति अतिप्रसङ्गादिति भावः । परिहरति । उक्तं फलमिति । यद्यपि यत्र फलं तो ऽस्योत्पत्तिको विषयस्तथा ऽपि यथानेन प्रमाणेन सता हानादिबुद्धयो जनयितव्याः सो ऽपि व्यापारेण विषय इति भावः । फलत्वमत्र हेतुमाह । ज्ञात इति । परोक्षार्थावगाहितया हेयादिबुद्धयः प्रत्यक्षफलं न भवन्ति भवन्ति त्वनुमानस्येति । नियमवादिना मतमुपन्यस्य दूषयति । के चित् त्विति । अनियमं रोचयमान आह । उभयं त्विति । अनुमानशब्दवत् फलेन निर्वचनीयत्वमुपमानशब्दस्येति मन्वान आक्षिपति । सामीप्येति । समाधत्ते नास्ति व्याघात इति । नेयमुपमानशब्दस्य फलेन निरुक्तिरपि तु प्रमाणेन निरुक्तिरिति न व्याघात इत्यर्थः । शब्दविषया प्रतिपत्तिः शाब्दं प्रमाणम् । यत् खलु चैत्र गा बधानेति वाक्यमिदमित्यनुसंधानात्मकं स्मार्तं ज्ञानमुपजायते तत्पदार्थस्मरणसहकारि विशिष्टार्थविषयं विज्ञानं प्रसूते तच्छाब्दं प्रमाणम् । प्रमाणमुक्त्वा फलमस्याह । फलं तदेव । यदा ह्येतत् प्रमाणं तदा वाक्यार्थविज्ञानं फलं यदा ऽनुमानवद् वाक्यार्थविज्ञानं प्रमाणं तदा हानोपादानादिबुद्धयः फलमित्यर्थः । अथ प्रत्यक्षादीनां क्रमोद्देशप्रयोजनं प्रत्येकदेशिमतमुपन्यस्यति । के चित्त्विति । प्रत्यक्षपरा हि प्रमाणान्तरजन्याः प्रमितय इति प्रत्यक्षस्य प्राधान्यम् । यद्यपि किं चिदनुमानमनुमानपूर्वकमपि तथा ऽपि प्रायेण प्रत्यक्षपूर्वकम् उपमानं तु प्रत्यक्षपूर्वकमपि शब्दपूर्वकमेवेत्यस्यानुमानादपकर्षः । स्मरणसहकारिता ऽनुमानसादृश्यमुपमानस्यास्तीति अनुमानानन्तरमुद्देशः । अल्पज्ञानाधीनं च बहुज्ञानमित्यल्पविषयप्रत्यक्षाद्युद्देशेभ्यः परो बहुविषयशब्दोद्देश इति । तदेतदेकदेशिमतमेकदेश्यन्तरमतेन दूषयति । तदायुक्तमित्यपर इति । अक्लिष्टो हि प्रथमं महाविषयमेव दुरवधारत्वान्न निरूपयति । अल्पविषयं तु क्लिष्टो ऽपि शक्तो निरूपयितुम् अतो महाविष-

३१ । १२ यस्य प्राथम्यमत्र हेतुर्न चरमत्वमित्यर्थः । अनन्तरमतं दूषयति । एतच्चेति । यतायतः क्रममात्रं भवेन्न तु तद्विशेषनियम इत्यर्थः । सम्प्रति विमर्शपूर्वं स्वाभिमतक्रमनियमहेतुमवधारयन्नेव पूर्वैकदेशिमतमपाकरोति तस्मादन्य इति । विमर्शनिमित्तां विप्रतिपत्तिमाह । प्रत्यक्षं पूर्वं प्राधान्यादित्येकः महाविषयत्वाच्चादौ शब्दोपदेश इत्यपरः । तत्र महाविषयत्वमनैकान्तिकं सन्नागमस्येव पूर्वोपदेशं गमयतीत्याह । उभयमिति । पृच्छति । कथमिति ।

उत्तरं प्रत्यक्षेणापीति। महाविषयत्वलक्षणसाधारणधर्मदर्शननिमित्तं सहे-
तुमाह । तत्रेति । अभिमतेन हेतुना क्रमविशेषनियममवतारयति ।
प्रत्यक्षस्येतीति । यद्यपि प्रमितेः प्रत्यक्षपरत्वेन प्रत्यक्षस्य प्राधान्यं तथा
ऽपि शास्त्रे व्युत्पाद्यत्वेनानुमानस्यापि तदस्तीति साधारणतया न हेतु-
रिति भावः । स्यादेतद् व्यवस्थितविषयं प्रत्यक्षं नानुमानविषये प्रवर्त्तते
न चानुमानमगृहीतसंबन्धमुदेति । न च संबन्धग्रहः संबन्धिग्रहणम-
न्तरेण न चानुमानविषये सामान्यरूपे संबन्धिनि प्रत्यक्षं प्रवर्त्तते । अनु-
मानान्तरेण ग्रहणे ऽनवस्था तस्मात् कारणाभावान्नानुमानमस्ति । एतेन
शब्दोपमाने अपि परास्ते तयोरपि संबन्धसंवेदनाधीनजन्मत्वात् । तस्मा-
न्नाप्रत्यक्षं प्रमाणमिति विभागवचनमनुपपन्नमिति यच्छङ्कामपनेतु विमर्शपू-
र्वकं विचारयति स्म भाष्यकारः किं पुनः प्रमाणानीति । तदेतद्भाष्य-
मनुभाष्य व्याख्याने हेतुमाह किं पुनरेतानीति। सा चेयं प्रमितिः प्रत्य-
क्षपरेति भाष्यं तदनुभाष्य हेतुमाह । सेयमिति । आकाङ्क्षाभावप्रतिपाद-
नाय प्रतीतिस्वरूपं क्रमं चाह । यथा ऽयमिति । आहित इत्यादितः
प्रत्ययो निश्चयो यस्य संसर्गोपधाने वह्नि प्रति स तथा संदिग्धे न हि
निश्चयाय प्रवर्त्तितव्यमेवानिश्चितस्तु विनिश्चयाय प्रमाणान्तरे प्रवर्त्तमान-
स्तदभ्यर्हिततरं मन्यते । धूमाङ्गत्वेनेति । अङ्गत्वं व्यापकत्वम् । व्याप्यं
पुनर्व्याप्तिक्रियायां कर्मत्वेन प्रधानम् । तदनेन धूमव्यापकत्वोपधानेन
धूमादनुमीयमानो वह्निः परोक्ष इति दर्शितम् । अनुपहितप्रकाशस्तु प्रत्यक्षे-
णाव्यवहितवह्निस्वरूपप्रकाशः स हि साक्षात्कार इति । तावदयं प्रमाता
साकाङ्क्षो यावदुपधानव्यवहितं स्वरूपमुपलभ्यते । उपधानानपेक्षस्तु प्रत्य-
क्षेणाव्यवहितं साक्षाद् वह्निं विषयीकृत्य निराकाङ्क्षो भवति । धूमाङ्गत्वेन
धूमविशेषणत्वेनेति केचित् । तत्तु* प्रकृतानुपयोगितया ऽयुक्तमिति । उप-
संहरति । अतः प्रधानमिति । सो ऽयं गुणप्रधानभावो भेदाश्रयो व्यव- ३२ ।।
स्थायां नास्ति । व्यवस्थितानां प्रत्येकमेकत्वात् । तस्माद् व्यवस्थाया गुण-
प्रधानभावो न चिन्त्यत इति । इति सूत्रसमाप्तौ ।

## इति न्यायत्रिसूत्रीतात्पर्य्यटीका समाप्ता ।

---

* यत्तु इति ग । ३ पु॰ पाठः ।

प्रत्यक्षादिप्रमाणविशेषलक्षणानामर्थाच्चिप्रसामान्यलक्षणविभागोद्देशहे-
२ । ८ तुत्वेन तदनन्तराभिधानमित्याह । **अथ विभक्तानामिति** । तत्र तेषु
मध्ये प्राथम्यात् प्रत्यक्षलक्षणम् । **इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि**
सूत्रम् । अस्य तात्पर्यमाह । **सूत्रार्थः** सूत्रप्रयोजनम् । **समानासमान-
जातीयविशेषकत्वम्** । समानजातीयमनुमानादि असमानजातीयम् प्रत्य-
क्षाभासप्रमेयादि तेभ्यो विशेषकत्वं विशेषस्तदस्य सूत्रस्य प्रयोजनम् ।
यः खलु कुतश्चिद् व्यामोहात् समानासमानजातीयव्यावृत्तं तद्रूपं न शक्नोति
ग्रहीतुं सोऽनेन लक्षणेन बोध्यते एवंलक्षणकं प्रत्यक्षमिति । तस्मात्सामा-
न्यतःसिद्धविविक्तप्रत्यक्षमात्रानुवादेन लक्षणविधानपरमिदं सूत्रम् । इत-
रस्य गततत्त्वगतस्तेनैव विविच्य प्रत्यक्षतत्त्वं गृह्णातीति समानासमानजातीय-
व्यवच्छेदः सूत्रार्थ उक्त इति । अत्र च यत इत्यध्याहृत्य यत्तदोर्नित्याभि-
सम्बन्धात् तत्प्रत्यक्षमिति प्रमाणवाचि प्रत्यक्षपदं योजनीयम् । अत्र च ज्ञान-
प्रामाण्यमतेऽपि यत्तद्विशेषणज्ञानप्रत्यक्षफलं लिङ्गपरामर्शो वा तदपीन्द्रि-
यार्थसन्निकर्षोत्पन्नत्वाद्युपेतत्वेन भवति प्रमाणविशेषणमिति व्याख्यातव्य
लक्षणस्येति । सूत्रपदार्थं पृच्छति । अथेति । उत्तरम् । इन्द्रियेति ।
१ । १५ सन्निकर्षग्रहणमस्य प्रकारभेदं परिचष्टे । सन्निकर्षः पुनरिति । पुनःशब्देन
संयोगसमवायपदोपादानाद् व्यवच्छिनत्ति । संयोगपदोपादाने हि न सम-
वायो लभ्यते समवायपदोपादाने वा न संयोगः । सन्निकर्षपदोपादाने त्व-
भिमतलाभः । अर्थग्रहणेनार्थ्यमानतया चेयत्यग्रहणयोग्यता दर्शिता न चा-
भावस्याकाशादीनामस्तीति सत्यपि संयोगादौ नासावर्थसन्निकर्ष इति तद्व्यु-
दासः । उत्पन्नग्रहणेन च सन्निकर्षस्योत्पादकत्वं सूचितं ततः सत्यप्यर्थस्व-
रूपयोग्यत्वे संयुक्तसंयोगादेरनुत्पादकस्य सन्निकर्षस्य व्युदासः । अन्यथा
कुड्यादिसंयुक्तेनेन्द्रियेण कुड्यादिव्यवहितस्य तत्संयुक्तस्य पटादेस्तत्समवे-
तस्य च रूपादेरपि ग्रहणप्रसङ्गः । न चैतावता त्रिविध एव सन्निकर्षः
संयोगः संयुक्तसमवायः समवायश्चेति साम्प्रतम् । स्ववचनव्याघातादनुभव-
व्याघाताच्च । ये हि गुणकर्माश्रयं सामान्यातिरिक्तं सादृश्यमर्थान्तरं रोचय-
न्ते तेषां कथं रूपादिभेदानामन्योन्यस्य सादृश्यं प्रत्यक्षं भवेद् न हि तदि-
न्द्रियेण संयुक्तम् । नापीन्द्रियसंयुक्तसमवेतम् । तस्माद्गुणः संयुक्तसमवेत-

समवायो ऽभ्युपगन्तव्यः इतरथा स्वसम्बन्धव्याघात इति । अनुभवव्याघा-
तश्च । अनुभूयन्ते हि रूपत्वगन्धत्वादयः सामान्यविशेषा अनुगतास्तासु
व्यक्तिषु परस्परव्यावृत्तिमतीषु एते नानुभूयेरन् असति सन्निकर्षान्तरे । यदि
तु वैयात्याद् ब्रूयान्नानुभूयन्त एवेति तदा प्रतिवक्तव्यः कुतस्त्यो ऽयमनन्तासु
रूपगन्धादिव्यक्तिषु रूपमिति वा गन्ध इति वा व्यपदेशभेदः । चाक्षुष-
त्वाद्युपाधिनिबन्धन इति चेत् नाननुरञ्जितोपाधेरुपहितप्रत्ययायोगात् । न
ह्यननुरञ्जितदण्डस्यैव दण्डीति व्यपदिशन्ति । न चेन्द्रियाण्यतीन्द्रिया-
णीन्द्रियदर्शनविषयभावमनुभवन्ति । तस्मादतीन्द्रियेण रूपत्वादिसामान्या-
नुभवो यन्निबन्धनाः कासु चिदेव व्यक्तिषु के चिदेव व्यपदेशभेदा इति
सिद्धं सन्निकर्षान्तरम् । विशेषणभावेन च संयुक्तविशेषणं समवेतविशेषणं
च संगृहीतम् । यस्येन्द्रियेण यादृशः सन्निकर्षः तादृशं तत्र दर्शयति ।
तत्र चक्षुरिति । शब्दस्याकाशगुणत्वं कर्णशष्कुल्यवच्छिन्नस्य नभोभागस्य ई२ । १
श्रोत्रत्वम् आद्यस्यैव शब्दस्य संयोगविभागयोनिजस्य सन्तानेन श्रोत्रे समु-
त्पादः समवाय इत्यादि द्वितीये निपुणतरमुपपादयिष्यते । अवयवावय-
विनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिजातिमन्तौ च मिथः सम्बद्धावनुभूयेते
नान्यथा तन्तुषु पट इति शुक्लः पट इति पटः स्पन्दत इति च पटो द्रव्यमिति
च बुद्धिव्यपदेशौ स्याताम् । शुक्लः पट इत्यादिसामानाधिकरण्यबलान्न हि
सम्बन्धज्ञानमिति चेत् किं पुनरिदं सामानाधिकरण्यम् । तादात्म्यमिति
चेत् न । द्वितीयबुद्धिव्यपदेशयोः पौनरुक्त्यात् । अपौनरुक्त्यं चाभिमन्यन्ते
प्रतिपत्तारः येनान्यतरदुपलभ्यान्यदनुभुञ्जन्ते । न चैकं वस्तु द्व्यात्मकमि-
ति युक्तं भेदाधिष्ठानस्य तन्नान्तरीयकस्य द्वित्वस्यैकात्मनि विरोधेनासम्भ-
वात् । तस्माद्भिन्ने एव वस्तुनी सम्बद्धे सामानाधिकरण्येन प्रतीयेते । अस-
म्बन्धे गौरश्व इतिवत्तदनुपपत्तेः । सम्बन्धे ऽपि कुण्डे दधीतिवद्वैयधिकर-
ण्यप्रसङ्ग इति चेत् न । शब्दवृत्तिभेदेन सम्बन्धाभेदे ऽपि सामानाधिक-
रण्यवैयधिकरण्यव्यवस्थापनात् । न हि जातु दधिशब्दः कुण्डे वर्तते
कुण्डशब्दो वा दधि । वर्तन्ते तु सुरभिमधुरशुक्लादिशब्दा अभिधेयं निमि-
त्तीकृत्य पटादिष्वेव पटादिशब्दा अपि जात्यादि निमित्तीकृत्य द्रव्ये प्रव-
र्तन्त इति सामानाधिकरण्यं तेन सामानाधिकरण्ये ऽपि प्रवृत्तिनिमित्तानां

नैकात्म्यं परस्परं नापि द्रव्येण किं तु तैस्तैरन्वितमेकं द्रव्यं प्रतीयते । शब्दानां तु सर्वैकस्मिन्प्रवृत्तेस्तद्व्याख्यानामेकात्मभ्रमः । अयुतसिद्धा तु कुण्डे दधीतिवन्न स्फुटतरो विवेकप्रकाशः । तदेवमस्ति सम्बद्धानुभवो न चासौ सम्बन्धानुभवं विनेति सम्बन्धो ऽनुभूयते स चायुतसिद्धादिसम्पत्त्या समवायो न चास्यान्यः समवायो ऽनवस्थानात् । न चेन्द्रियेणास्य संयोगो ऽद्रव्यत्वात् । न चासम्बद्धस्य ग्रहणम् इन्द्रियाणां प्राप्यकारित्वसमर्थनात् । तस्माद्विशेषणविशेष्यभावः परिशिष्यते । नन्वयं विशेषणविशेष्यभावो ऽन्यत्र सम्बन्धान्तरपूर्व्वको दृष्टः । तत्किमत्र सम्बन्धान्तरं कल्प्यतां तथा चानवस्थेत्युक्तं न चेन्द्रियासम्बद्धस्य ग्रहणं तस्माद्विना संबन्धान्तरं विशेषणविशेष्यभाव एषितव्य इति सिद्धम् । एवमभावे ऽपि यदिन्द्रियसंयुक्तं वा यदिन्द्रियसंबद्धं वा यथा भूतले घटो नास्तीति वा नास्त्यकारे ऽनुदात्तस्वर इति वा तस्य संयुक्तस्य वा विशेषणभावेन समवेतस्य विशेषणभावेन चेन्द्रियप्रत्यासत्त्या ग्रहणम् । न च भूतलादिरूपमेव घटाभावो नार्थान्तरमिति साम्प्रतम् । सत्यपि घटादौ भूतलस्य भावात् । न च कैवल्यं तस्य धर्म्मो घटभावविरोधी घटाभावादन्यः । न च दृश्ये घटादौ भूतलोपलम्भः कैवल्यमभावः व्यवहारहेतुरिति युक्तम् । एवं हि घटवद्भूतलग्रहो ऽपि कैवल्यमिति घटाभावव्यवहारं प्रवर्त्तयेत् । न ह्यदृश्यो घटस्तदानीं दृश्यमानः दृश्ये ऽनुपलभ्यमान इति तु विशेषणे किमपराद्धमुपलभ्याभावेन तदपाकरणायोपलम्भाभावो ऽभ्युपेयते । तस्मात्स्वविवादादपि तत्त्वमभ्युपेयम् । तच्च प्रत्यक्षमिन्द्रियव्यापारे सति तत्प्रत्ययात् । न च प्रतियोगिस्मरणव्यवहित इन्द्रियार्थसन्निकर्षो नालमभावधियमुपजनयितुमिति साम्प्रतमित्यग्रे दर्शयिष्यामः । सविकल्पकस्य प्रत्यक्षत्वसिद्धौ यथा शब्दस्मरणपूर्व्वगृहीतपिण्डानुसंधानादयो नेन्द्रियव्यापारं व्यवदधतीति । न च शब्दस्मरणादीनाम् अनुयोगिता भूतलविकल्पक प्रत्यङ्गत्वात् स्वाङ्गमव्यवधायकमिति न्यायाद् घटस्य तु प्रतियोगितेति साम्प्रतम् । कस्य पुनः प्रतियोगी घटः । तदभावस्येति चेद् भवतु घटाभावानुभवस्य तु घटस्मरणं हेतुरिति न प्रतियोगि किं तु अनुयोग्येव । ननु स्वरूपमात्रं दृष्टं वेश्मादौ स्मरन्नेव बहिर्निर्गतश्चैत्रो यदा

पृच्छ्यते केन चिद्यज्ञदत्तस्य तव गृहे तदा किमासीन्मैत्र इति स चैत्रः प्रतियोगिस्मरणविरहात्पूर्वमप्रतिपन्नमैत्राभावो ऽपि तत्प्रश्नजनितमैत्रस्मृतिः क्षणं ध्यात्वा तदभावमवगम्याह नैव तत्र नासीन्मैत्र इति तदियमसतीन्द्रियार्थसंनिकर्षे ऽभावबुद्धिर्भवन्ती प्रत्यक्षादतिरिक्तमभावाख्यं प्रमाणं व्यवस्थापयतीति । नैतत् । संयुक्तविशेषणलक्षणेन मनःसंनिकर्षेण स्मर्तव्यस्य स्मरणाभावं मैत्रस्य गृहीत्वा तेन लिङ्गेन तदभावस्य तदानीमनुमानात् । तथा हि । तद्गृहं तदा मैत्राभाववत् ज्ञानार्हस्य मैत्रस्याज्ञाने गृहस्य ज्ञायमानत्वात् । यद्यस्य ज्ञानार्हस्याज्ञाने ज्ञायते तत्तदभाववत् । यथा घटाभाववद्भूतलं तथा च गेहं तस्मात्तथा । न च यत्कदा चिदानुमानिकं तेनेन्द्रियगम्येन न भवितव्यम् । प्रमाणसंप्लवव्यवस्थापनात् । तत्सिद्धं विषयाभावादभावस्येन्द्रियप्रमेयत्वमिति । संयोगसमवायपदपरिहारेण संनिकर्षपदोपादानस्य प्रयोजनमाह सो ऽयं संनिकर्षशब्द इति । ३३ ।

तदनेन ग्रन्थेनेन्द्रियस्यार्थेन संनिकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षमिति भाष्यं व्याख्यातम् । संप्रति न तर्हीति चोद्यभाष्यं व्याचष्टे यदीन्द्रियार्थेति । प्रत्यक्षज्ञानकारणाभिधानप्रवृत्तस्तदेकदेशं वदन्नकुशलः सूत्रकारः स्यादित्यर्थः । कारणान्तराणि दर्शयति तथेति । विषयसंयोगि चक्षुरालोकस्य सत्त्वं रूपमात्मीयमिव हि रूपालोकचक्षुषी द्रव्यं दर्शयत इति स्थितिः । महत्त्वं वा ऽनेकद्रव्यवत्त्वं वा अनेकद्रव्या अवयवास्तद्वत्त्वमवयविनो महत एव न द्व्यणुकस्य तस्मादन्योन्यनिरपेक्षत्वं महत्त्वानेकद्रव्यवत्त्वयोरिति विकल्प एव न्याय्य इति । सत्यप्येवंलक्षणकत्वे चक्षुरवयविनस्तैजसस्य न चाक्षुषत्वमित्यत उक्तम् । उपलब्धिफलः संस्कार इति । धर्माधर्मनिमित्त उद्भवसमाख्यातः संस्कार उपलब्धिफलो न चास्ति चक्षुषि । तस्माददृष्टवशेनानुद्भूतरूपस्पर्शत्वादित्यर्थः । परिहरति न वक्तव्यानीति । प्रत्यक्षलक्षणप्रवृत्तो हि सूत्रकारस्तदेव ब्रूयात् यदस्यासाधारणं न तु यदपि साधारणमस्य कारणं न हि तत्तस्य लक्षणमतिव्याप्तेरित्यर्थः । तदनेन नेदमित्यादिभाष्यं व्याख्यातम् । असाधारणं कारणं चेत्प्रत्यक्षलक्षणायोपादेयं हन्तान्यदप्यस्यासाधारणमस्ति कारणमिति तदप्युपादेयमिति दर्शयति । इन्द्रियमनःसंयोगस्तर्हीति । तदनेन मनसस्तर्हि- ३४ ।

४ । ६ त्यस्य भाष्यस्यार्थ उक्तो वेदितव्यः । परिहरति न अनेनैव । इन्द्रियार्थसन्निकर्षेणेव । तस्येन्द्रियमनःसन्निकर्षस्योक्तत्वात् । एतदुक्तं भवति यदनेनैव कृत तस्मात् त्विन्द्रियमनःसन्निकर्षो न शक्नोति साधयितुम् । न च सुखज्ञाने मानसे ऽस्तीन्द्रियमनःसन्निकर्षे इन्द्रियार्थसन्निकर्षस्तु सर्व्वव्यापकः । वक्ष्यति हि मनस इन्द्रियत्वं सुखादेश्चार्थत्वं सिद्धमेवेति । सम्प्रति व्यापकत्वमभ्युपेत्य परीहारान्तरमाह इन्द्रियार्थेति । यद्यपीन्द्रियमनःसन्निकर्षे ऽपीन्द्रियमस्ति प्रत्यक्षज्ञानस्य विशेषकमिन्द्रियेण व्यपदेशाद् इन्द्रियज्ञानमिति तथा ऽपि मनसा व्यपदेशाभावान्मनसस्तदविशेषकत्वम् । इन्द्रियार्थसन्निकर्षे तूभयमपि विशेषकम् उभाभ्यां प्रत्यक्षज्ञानस्य व्यपदेशादित्ययमस्येन्द्रियमनःसन्निकर्षाद्विशेष इति । चोदयति यदा त्विति । सुगमः पूर्वपक्षं व्यावर्त्तयति । युक्तानस्य हि योगिनो यदात्ममनःसंयोगादात्मनि बुद्धयो भवन्ति ताः खल्वात्मना व्यपदिश्यन्ते आत्मबुद्धय इति । मनसा च व्यपदिश्यन्ते मनोबुद्धय इति । तस्मादुभाभ्यां व्यपदेशादुभयोर्विशेषकत्वमितीन्द्रियार्थसन्निकर्षवदात्ममनःसन्निकर्षो वक्तव्य इत्यर्थः । परिहरति यद्येवेति । चो ऽवधारणे । यदेवासाधारणं तद्व्यपदेशमाप्नोति कारणत्वेन तेन व्यपदिश्यत इत्यर्थः । परिहरति* एतदुक्तं भवति । यथा चक्षुषा इन्द्रियत्वेन ज्ञानं व्यपदिश्यते चाक्षुषमिति तथा मनसा ऽपीन्द्रियेण व्यपदिश्यते ज्ञानं मानसमिति । अथ यथा रूपेणार्थेन व्यपदिश्यते ज्ञानं रूपज्ञानमिति तथा आत्मना ऽप्यर्थेन व्यपदिश्यते आत्मज्ञानमिति । तत्र चासाधारणत्वमेव तयोः । यत्र त्विन्द्रियान्तरमेवासाधारणं लिङ्गादि वा तत्रात्मा नार्थो ऽपि तु प्रमातैव । तथा रूपादिज्ञाने ऽनुमानादिज्ञाने वा न तत्र ज्ञानं मानसमिति वा आत्मज्ञानमिति वा व्यपदेशः ॥ कस्य हेतोः । तयोः साधारणत्वात् । आत्ममनःसन्निकर्षस्त्विन्द्रियार्थसन्निकर्षेण संगृहीतो न त्विन्द्रियार्थसन्निकर्षस्येव तथा-

११ । १८ ऽप्यो ऽव्यापकत्वादिति । एकदेशिनः परीहारमुपन्यस्यति । इन्द्रियमनःसंयोगस्य वा ऽग्रहणं भेदे ऽभेदात् । यदा हि नगरयोषितः कुतूहलात् प्रविविक्तमनसो विकसितस्पन्दनयनोत्पलाः मोथमानागतावलोके योनिपतति सत्र-लयादनमतिविरोधितयत्नन गोपुरेव निविशमानमानोफयन्ति तदा यत्रा-

* परिहरतीति ख पु° नास्ति ।

सामेकेनैवेन्द्रियमनःसंयोगेन क्रमवद्भिरनेकेन्द्रियार्थसन्निकर्षसहकारिणा भिन्नक्रमयन्ति ह्यास्तिकाश्चोपादिप्रत्यक्षज्ञानानि जायन्ते । तदिदमाह यस्मादिति । ३४ । १
देशगतिः । यदीति । यदा हि मन्दं गच्छति गवि दूरतः संयुक्तसमवायेनेन्द्रियार्थसन्निकर्षेण शुक्लो गौरित्यज्ञासीद् अथ प्रत्यासीदन् गच्छतीत्यपि विजानाति तेनैव संयुक्तसमवायेन सन्निकर्षेण तेन प्रत्यक्षज्ञानस्य शुक्ल इति च गच्छतीति च भेदे ऽपीन्द्रियार्थसन्निकर्षो न भिद्यते । तस्मादिन्द्रियार्थसन्निकर्षे तुल्यत्वादिन्द्रियमनःसंयोगोऽपि तत्र वक्तव्य इत्यर्थः । परिहरति । न वक्तव्यः* ।
कुतः । उक्तोत्तरत्वादिति । तद्विभजते । उक्तेति । ननु भवत्युक्तमुत्तरं भेदे ऽभेदादित्यस्याक्षेपः समाधातव्य इत्यत आह अनभ्युपगमात् । यद्यदेचिमतमस्माभिर्नाभ्युपेयते तस्मान्न समाधेयमित्यर्थः । तत्किमिदानीं भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यते इति समानत्वान्नोक्त इति भाष्यमनुपपन्नमेव नेत्याह । इन्द्रियमनःसंयोगस्य चाग्रहणं समानत्वात् ।
पृच्छति केनेति । उत्तरमात्ममन इति । पुनः पृच्छति किं पुनः समानत्वम् ।
उत्तरं व्यपदेशाभाव इत्युक्तम् । तेन भाष्यस्यायमर्थः प्रत्यक्षज्ञानस्य रूपज्ञानस्य रूपज्ञानमिति वा चक्षुर्विज्ञानमिति वा व्यपदेशेन भिद्यमानस्यात्ममनःसंयोग इवायमिन्द्रियमनःसंयोगो न भिद्यते । स हि स भिद्यते यदि स्वसंबन्धिवाचकेन व्यपदेशेन स्वमन्यतो व्यावर्त्यते न विशेषणेन विशिष्टं विशेष्यं चासमन्यतो व्यावर्तयेत् । न त्वस्तीन्द्रियमनःसन्निकर्षाधाराभ्यामिन्द्रियमनोभ्यां प्रत्येकमस्य व्यपदेशो यथेन्द्रियार्थसन्निकर्षाधाराभ्यामिन्द्रियार्थाभ्यां व्यपदेशो रूपज्ञानमिति चक्षुर्ज्ञानमिति वा । तस्माद्व्यपदेशाभाव आत्ममनःसन्निकर्षेण साम्यमिन्द्रियमनःसन्निकर्षस्य तस्मात्समानत्वान्नोक्त इति । प्रकारान्तरं समानत्वे दर्शयति । अतीन्द्रियाधारता चेति । लक्षणं हि प्रसिद्धं भवति ३५ । ३
यथा धूमो वह्नेः । न चातीन्द्रियद्वयाधारसन्निकर्षस्तथा प्रसिद्धो यथेन्द्रियार्थसन्निकर्षो ऽर्थस्य संबन्धिनः एकस्य प्रसिद्धत्वाद् इन्द्रियमनसोस्तु द्वयोरतीन्द्रियत्वात् । आत्मा तु यद्यपि युञ्जानस्य शरीराद्यतिरिक्तः प्रत्यक्षः तथाप्यस्मदादीनां न तथेत्यतीन्द्रिय उक्तः तदनेनातीन्द्रियाधारत्वं स्वरूपेणोक्तम् । तदेवं विषयावृत्तित्वमनोवृत्तित्वाभ्यामतीन्द्रियाधारत्वं सामान्यमाह

* न वक्तव्यमिति मु. वा. पु. पाठः ।

५ । ५ विषयावृत्तित्वं चेति । उपसंहरति तस्मादिति । समानत्वादिति भा-
ष्योक्तो हेतुः चरितार्थत्वादिति स्वोक्तः । आक्षिपति । इन्द्रियार्थस-
न्निकर्षोत्पन्नमित्ययुक्तमिति । सान्तरग्रहणादिति हेतुं विभजते । विप्र-
कृष्टेति । ननु नार्थो विप्रकृष्टश्चक्षुषस्तत्र प्राप्तेरित्यत आह न च चक्षुष
इति । कस्मादित्यत आह भूतविशेषस्येति । बाह्यो भूतविशेष आलोक-
स्तस्य प्रसादः इन्द्रियाव्यवधायकत्वं कुड्यादिभ्यो विशेषः यः खलु काचा-
भ्रपटलादिषु स्वच्छेषु समस्ति । स्यादेतत् । अस्ति कृष्णसारलक्षणो भूत-
विशेषः प्रसन्नान्धस्यापि अमत्तस्यापि रूपोपलब्धिः स्यादित्यत आह त-
त्तृष्णापूर्वकेति । रूपोपभोगतृष्णा हि तत्साधनं कृष्णसारमपि विषयी-
करोति । एतदुक्तं भवति । भूतविशेषः कर्म्मापेक्षो रूपं च पश्यतश्चक्षु-
रित्युच्यते । कर्म्मवशात् तु प्रसन्नान्धस्य न रूपं पश्यतीति न चक्षुः । अस्तु
गोलकमेव चक्षुः किमेतावतापीत्यत आह न चेति । विच्छिन्नं गोलकमर्थो-
दनुभूयत इत्यर्थः । तदेव वस्तुनः सान्तरस्य ग्रहणमप्राप्यकारित्वे हेतुरु-
क्तम् । के चित् तु सान्तरम् इति ग्रहणविशेषणं हेतुं कुर्व्वन्ति तन्मतमुप-
न्यस्यति । अपरे त्विति । साध्यविपर्ययादस्य व्यतिरेकं दर्शयति । न हि
प्राप्यकारिष्विति । पक्षधर्म्मतामाह दृष्टं त्विति । यच्चोक्तमप्राप्यकारि-
त्वे साधनं पृथुतरग्रहणादिति तद्विभजते । पृथुतरेति । द्रव्ययो हि संयोगो
ऽल्पमेव संयोगिनमनुरुध्यते न महान्तम् । न जातु रथादिसंयोगा नभो
व्यश्नुवते मा भूत्तथैव रथादीनां तत्संयोगादीनां चोपलब्धिः तेन याव-
न्मात्रं शष्कुल्यादेर्गोलकेन व्याप्तं तावन्मात्रस्य ग्रहणप्रसङ्गः । हेत्वन्तरं चाह
दिगिति । अस्यापि व्यतिरेकमुखेन गमकत्वं दर्शयति । यदि प्राप्यका-
५६ । १ रीति । अपरमपि हेतुमाह सन्निकृष्टेति । यद्यपि गतिमतां प्रत्येकं
स्वाश्रयस्य देशान्तरविभागसंयोगोपजननं प्रति विरतायामविशेषः स्वाश्रय-
प्रत्यासत्तौ वा विशेषस्तथापि अपादानविभागाद् आ च प्रापणीयदेशप्राप्ते-
रन्तरालवर्त्ती यावान् गतिसन्तानः पूर्व्वापरीभूतो गतिरिह विवक्षितस्तस्य
चान्तरत्वं मन्दत्वं विलम्बः । नैरन्तर्यं पाटवं क्षिप्रता । तामिमां गतिम-
भिन्दत् नेत्रनाड्यौ कुर्व्वदपि सन्निकृष्टमाशु प्राप्नोति न विप्रकृष्टेन तुल्यकालं
किन्तु विप्रकृष्टं चिरेणेति । यथोक्तं दिङ्नागेन । सान्तरग्रहणं न स्यात् प्राप्तौ

स्थाने ऽधिकस्य च । बहिर्वर्तित्वादिन्द्रियस्योपपन्नं सान्तरग्रहणमिति चेद् अत
उक्तम् । अधिष्ठानाद्बहिर्नार्थं किं त्वधिष्ठानदेश एवेन्द्रियम् । कुतः तच्चिकि-
त्साद्युपयोगतः । सत्यपि च बहिर्भावेन शक्तिविषये वर्ते । यदि च स्यात्तदा
पश्येदप्युन्मील्य निमीलनात् । यदि च स्यादुन्मील्य निमीलितनयनो ऽपि
रूपं पश्येत् उन्मीलनादस्ति बहिरिन्द्रियमिति । तद्वार्तिककारः सान्तरग्रह-
णादिति हेतुं विकल्प्य दूषयति यत्तावदिति । सान्तरता खल्वप्राप्तिसा- ३६ ।
हचर्यादप्राप्तिं लक्षयति । हेत्वर्थस्य प्रतिज्ञार्थेनाक्षिप्तत्वादभेदेन । तदुक्तं प्र-
तिज्ञार्थान्न भिद्यत इति । हेतुप्रतिज्ञापदवाच्यत्वेन भेदमुपपाद्य अर्थस्याक्षेप-
कभावो द्रष्टव्यः । तस्य व्यवधायकत्वादिति । रूपवतो ऽप्रकाशस्वभा-
वस्य कुड्यादेरित्यर्थः । यत्तु प्रकाशस्वभावं तेजः तन्न गृह्यते किं तु तस्य
रूपमात्रं विस्फारितानेत्रेण दृश्यते । तदाश्रयं च द्रव्यं साधयिष्यते । न च
गुणो द्रव्यस्यान्तरम् । मा भूद्गन्धादिभिरन्तरं द्रव्यस्य मा न भूतां च
निरन्तरे द्रव्ये । स्वगुणाभ्यामन्तरितत्वात् । न चापातजन्मालोचनं वा
विकल्पो वा द्रव्यानुमाने प्रतीयते येन रूपद्वारानुमितं द्रव्यमिन्द्रियार्थयो-
र्द्रव्ययोरन्तरं स्यात् । अपि च रूपमात्रमगृह्यमाणो द्रव्ये स्वतन्त्रं गन्धा-
दिवद्गृह्यमाणं कथमन्तरा स्वाश्रयमनुमापयेत् । आकाशादीनामाश्रयाणाम-
ग्रहणात् । तस्माद्विच्छिन्नावयवतेजोऽवयविद्रव्याप्रत्यक्षत्वमारोपमात्रेण दूषणं
वक्तव्यमर्थ्यं त्वन्यथासिद्धत्वदूषणं पारमार्थिकं द्रष्टव्यम् । अथाभावो ऽन्तर-
शब्दवाच्य इति नास्माकं मूर्तद्रव्याभावादन्यदाकाशमस्तीति भावः ।
दूषयति । स स्थलस्थ्रवणविषयो न भवति । इन्द्रियं चार्थं चान्तरा
ऽभावो ग्राह्यस्तेन सहार्थस्य ग्रहणं सान्तरग्रहणं न चेन्द्रियार्थयोर्मध्ये
कस्य चित्संयुक्तस्य वा समवेतस्य वा ग्रहणमस्ति यतस्तो ऽयमभावो
गृह्यते इति भावः । स्यादेतन्मा भूदान्तरालिकं संयुक्तं समवेतं वा विशेष्यं
गृह्यमाणमेव तु रूपादि विशेष्यमिति ततस्तो ऽयमभावस्तद्विशेषणत्वेन
निरूपयिष्यते ततश्च सान्तरग्रहणमुपपत्स्यत इत्यत आह तेन सहोप- ,, । ४४
लब्धाविति । प्रतीयते हि त्वगादिभिरपीन्द्रियैः प्राप्यकारिभिरेवाश्रयाभाव-
विशेषणं शिशिरतरं वायो न चेन्द्रियाणामप्राप्यकारिता । तस्मादनैका-
न्तिकम् । अन्यथाभ्युपगमेनैतदुक्तम् । अन्यथाभावे तु विरुद्धमिति भावः । न

६ । १६ च तेजस द्रव्यमन्तरं येन सान्तरग्रहणं स्यादित्याह न चान्या गतिरिति ।
यथा चैतत्तथोपपादितमधस्तात् । ये [illegible] सान्तर इति ग्रहणमिति हेतुमाहु-
स्तान्प्रति दूषणमाह **यैरपीति** । अन्यथासिद्धत्वे हेतुमाह **शरीरेति** ।
शरीरावच्छिन्नाः खल्वात्मानः शरीरायतनाः शरीरमेवात्मानमभिमन्यमाना
अर्थो ननु भवन्ति । तत्र य एव शरीरासंबद्ध इत्यनुभूयते तमेव सान्तर
इति मन्यते । इन्द्रियसंबन्धो भवतु मा वा भूत् शरीरसंबन्धेन तस्य
स्पर्शादौ न सान्तरत्वाभिमान इत्यर्थः । हेत्वन्तरं दूषयति **यदपीति** ।
**संबन्धमात्रेणेति** । मात्रग्रहणं संबन्धचतुष्टयव्याप्त्यर्थं तद्यथेन्द्रियेणार्थस्य
संबन्ध इन्द्रियावयवैरर्थस्यार्थावयवैरिन्द्रियस्येन्द्रियावयवैरर्थावयवानां न
चेन्द्रियार्थौ विना पृथ्वृत्ता भवतीति पृथ्वृत्ता सूचिता । यथा वर्त्तिदेशे
पिण्डितमपि तेजः प्रसर्पत्प्रासादोदरं व्याप्नोति । तत्कस्य हेतोः । पृथ्व-
त्वादिति । स्वभावतः प्रसरदपि न स्वपरिमाणानुविधायिनं प्रत्ययमाधत्ते
किं तु विषयभेदानुविधायिनम् । विषयनिरूपणाधीननिरूपणा हि प्रत्यया
नेन्द्रियनिरूपणाधीननिरूपणाः । तदिदमुक्तं **विषयभेदानुविधायी
प्रत्यय इति** । अपरमपि हेतुं दूषयति । **यत्पुनरिति** । देहमध्ये चान्तरा-
वस्थितस्य पृथिव्यादेः संयुक्तसंयोगाल्पीयस्त्वं भूयस्त्वं चापेक्षमाणस्येति ।
खगानां चोर्ध्वमुपरि सञ्चरतां दूरान्तिकभावो बहुलतमालोकावयवभागानां
संयुक्तसंयोगाल्पत्वभूयस्त्वाभ्यामवगन्तव्यः । स च तादृगालोकावयवी
प्रत्यक्षोऽन्यथा [illegible] दृश्यमानेन तदनुमानं वाच्यमित्युक्तम् । न च खगा-
नामुपर्युपरि सञ्चरतां दूरान्तिकप्रत्ययः स्यान्न च पतति पतत्रिणीह प्राप्ते
नेहेति यदेतस्मादन्यथासिद्धेरेव सन्तानान्तरेण ग्रहणादित्येवमपि दूषणमिति
३७ । १० द्रष्टव्यम् । अपरमपि हेतुं दूषयति । **यत्पुनरिति** । युगपद्ग्रहणमसिद्धं
तदभिमानस्यान्यथासिद्धेः अचिन्त्यो हि तैजसो लाघवातिशयेन वेगातिश-
यो यद्दृष्टगिरिशिखरमारोहत्येव मार्त्तण्डमण्डले नयनोदरेऽप्यालोक इत्यभि-
मानो लौकिकानाम् । तादृशं चाक्षुषमपि तेज इति क्रमेणापि गच्छद्
युगपदेव तत्र प्राप्तमिति लक्ष्यते । न चैकस्मादेव कर्मणो युगपद्दूरा-
न्तिकसंयोगा भवन्तीति युक्तम् । तद्धि स्वकार्य्यं जनयितव्ये स्वाश्रयप्रत्या-
सत्तिमपेक्षते । अन्यथा मथुरास्थस्य देवदत्तस्य कर्म पाटलिपुत्रेण देवदत्त

योजयेत् । वेगाख्यसंस्कारवत्त्वमपि कर्म्म न सहसा परमन्तरालदेशेन च लङ्घ्येत च योजयति । तस्मान्मिथ्यैव यौगपद्याभिमान इति । चोदयति कथं पुनरिति । अस्ति हि शाखाचन्द्रमसोर्ग्रहणे यौगपद्याभिमानः न चायमसति बाधके ३७ । मिथ्येति वक्तुं शक्यः सोऽयमबाधितो बोधयत्यप्राप्यकारितां चक्षुष इत्यर्थः । परिहरति इदमिति । इन्द्रियं यद्यागत्याऽनागतमर्थं गृह्णीयात् किमस्य कुड्यकटाद्यावरणमपकुर्य्यात् । येन तदावृतं न गृह्णीयात् । गतौ तु स्वच्छतया प्रसादरहितेन तेनास्य प्रतिबद्धेति न प्राप्नोति विषयमप्राप्तं च न गृह्णातीति । प्रयोगस्तु चक्षुःश्रोत्रे प्राप्य स्वविषये कार्य्यं कुरुतः जनकत्वे सति तदप्राप्याजनकत्वात् । यज्जनकं सद् यदप्राप्तौ यन्न जनयति तत् तत्प्राप्यैव तज्जनयति यथा कुम्भजनको मृदामप्राप्याकुर्वन् कुम्भं तत्प्राप्यैव करोति तथा चैतत्तस्मात्तथेति । युक्त्यन्तरमाह । दूरान्तिकानुविधानमिति । दूरे नोपलभ्यते अन्तिके चोपलभ्यते अप्राप्तिविशेषेण दूरे ऽप्युपलम्भः स्यात्तदनुपलम्भे वा अन्तिके ऽपि न स्यात् । प्राप्तौ तु दूरं गच्छत् प्रक्षीणं सत् प्राप्तमर्थं न गृह्णाति अतिजवं तैजसमप्यभिभूतं न गृह्णाति । यथोल्काप्रकाशं मध्यन्दिने अनभिभूतं तु मार्त्तण्डमण्डलं गृह्णात्येवेति । चोदयति विपर्य्ययभावादिति । योग्यो हि तादृश इन्द्रियस्य स्वकारणादुपजातः परिणतो वा ऽर्थस्तस्य च ययोरप्राप्तयोरेव ग्रहणग्राह्यभावः व्यवहितविप्रकृष्टौ च न तौ तादृशौ तत्किमप्रतीयमानप्राप्तिकल्पनयेत्यर्थः । परिहरति तच्च नैवमिति । नित्यत्वे हि क्षणभङ्गपरिणामो भावानां तेन स्थेमभाजां भावानां स्वरूपयोग्यता वा महत्त्वादिर्विषयीभावः सहकारिसाकल्यं वा ज्ञानोपजननं प्रति परीक्ष्यते । तत्र स्वरूपयोग्यतामात्रं चेदास्थीयेत तदा यदेवाव्यवहितं सन्निहितं तद् जनयद्विज्ञानं विप्रकृष्टमपि व्यवहितमपि तदैवेति तथैव तेन ज्ञानं जनयितव्यम् । अस्ति हि तस्य तदा ऽपि स्वरूपयोग्यतेति सहकारिसाकल्यं तु प्राप्तिरेव तस्मान्न संबन्धमन्तरेण विषयीभाव इति सूक्तम् । संदिग्धः पृच्छति अथ प्राप्यकारित्व इति । अयमभिसंधिः । कुलालादौ प्राप्यकारित्वं दृष्टं यथा विप्रकृष्टो व्यवहितश्च न करोतीति अप्राप्यकारित्वं चायस्कान्तादौ ३८ । ५ दृष्टं यथा विप्रकृष्टो व्यवहितश्च लोहं मणिराकर्षति तस्मात्तत्र प्रमाणं वक्तव्यमिति उत्तरम् । इन्द्रियत्वमेव प्रमाणं तदेव पश्चादवयवोपपन्नमाह

८।६ प्राप्यकारीति । यदि च कश्चित् दृष्टान्तस्य साध्यविकलत्वमुद्भावयेत् त्वगादीनामप्राप्यकारित्वादिति तं प्रत्याह अथ न किं चिदिति । पृच्छति अथेति । योग्यतयैव हि कारणानि स्वकार्य्यं कुर्व्वन्ति प्राप्तिस्तु स्वरूपयोग्यताप्रयुक्तां व्याप्तिमुपजीवति न त्वस्याः स्वाभाविकं व्यापकत्वमिति भावः । उत्तरं सोऽपीति । सहकारिसाकल्यं तावन्न प्राप्तेरतिरिच्यत इत्युक्तम् । केवलं स्वरूपयोग्यता वक्तव्या । सा च व्यस्तानामप्यस्तीति यत्र तत्र व्यवस्थितेभ्योऽपि कार्य्योत्पादप्रसङ्गः । अयस्कान्तमणेरपि चक्षुष इव वृत्तिभेद एषितव्यः । अन्यथा व्यवधानविप्रकर्षयोरपि लोहाकर्षणप्रसङ्गात् । न च व्यवधानविप्रकर्षाभावसहितो लोहमाकर्षति व्यवधानविप्रकर्षयोस्तु तदभावाभावेन न भवतीति सांप्रतम् । प्राप्तेरेव तत्र तत्र कार्य्योत्पादं प्रति उपयोगस्यावेदितत्वात् । योग्यतामात्रस्य चोपाधेरपाकृतत्वात् । यथा च द्रव्यातिरिक्तस्तद्धर्म्मः प्राप्तिस्तथा निवेदयिष्यते । तस्मात्सर्व्वमवदातम् । उपसंहरति । तस्मादिति । यदपि कृष्णसारानुग्रहोपघाताभ्यां दर्शनादर्शनादिति तत्रोच्यते । तदधिष्ठानानुग्रहोपघाताभ्यां तस्यानुग्रहोपघातौ । यथा कूष्माण्डलतासेचनच्छेदनाभ्यां तत्फलस्यानुग्रहोपघातावत्र हि निर्गताऽप्यच्छिन्नमूला चक्षुःसंततिः कार्याय समर्था न च्छिन्नमूलेति सिद्धम् ।

पृच्छति अथ ज्ञानेति । प्रत्यक्षसमाख्यातलक्ष्यानुवादेन लक्षणे विधीयमाने व्यपदेश्यैतज् ज्ञानमिति लोके साक्षात्कारिज्ञानहेतोः प्रत्यक्षत्वादिति भावः । उत्तरं सुखादिव्युदासार्थम्* । तदेव हि लक्षणवाक्यमुच्यते यस्य लक्ष्यानपेक्षो ऽतिव्याप्त्यव्याप्तिव्युदासो लक्षणपदेभ्य एव प्रतीयते । लक्ष्यानुरोधेन तु लक्षणव्यवस्थापने ऽन्योन्याश्रयत्वमसिद्धेश्चेति भावः । सुखादीनां विज्ञानाभिन्नहेतुजत्वेन विज्ञानत्वादशक्यं व्यावर्त्तनमिति चेत् । न अभिन्नहेतुजत्वासिद्धेः । न खलु यैव चन्दनस्पर्शज्ञानस्योत्पत्तौ सामग्री सैव सुखस्यापीति अस्ति हि शीतार्त्तस्यापि चन्दनेन्द्रियसंयोगाच्छीतस्पर्शज्ञानमिति तद्वदेवास्य सुखमपि भवेत् । अथान्तरसामग्रीभेदेऽपीन्द्रियार्थमनस्कारजत्वात् ज्ञानजातीयत्वमिति चेत् । न । किं चित्कारणभेदेऽपि कार्य्यभेदस्यानाकस्मिकत्वोपपत्तेः । तदर्थत्वात् कारणभेदानुसरणस्य-

* व्यवच्छेदार्थमिति मु का पु पाठः ।

सत्य । न चोपादानाभेदादभेद इति युक्तम् । भिन्नानामपि ज्ञानानामेकस-
मनन्तरप्रत्ययोपादानत्वस्य भवद्भिरभ्युपगतत्वात् । अपि चोपादानाभेदश्च
कुतश्चित्कारणभेदात् कार्य्यभेदश्चेति को विरोधः । अत एवास्माकमभेदे
ऽप्युपादानस्य पिठरस्योष्णस्पर्शाख्यस्य च वह्निसंयोगस्य पूर्वरूपादिप्रध्वंसानां
कारणानां भेदाद् भिन्नजातीया जायन्ते गन्धरूपरसस्पर्शा इति सिद्धान्तः ।
तस्मादर्थप्रत्ययेभ्यो ज्ञानेभ्यस्तत्प्रत्ययतया भिन्नजातीयाः सुखादयो यथास्वम-
नुकूलवेदनीयत्वादिभिर्लक्षणैरन्योन्यमपि भेदवन्तस्तीव्रसंवेगितया प्रमित्सान-
पेक्षमानसप्रत्यक्षवेदनीया इति रमणीयम् । स्यादेतत् । असत्यपीन्द्रियार्थस-
न्निकर्षे ज्ञानमात्रादेव सुखदुःखयोः स्वप्नान्तिके दर्शनात् यत्रापीन्द्रियार्थसन्नि-
कर्षस्तत्रापि ज्ञानमस्तीति तदेव सुखदुःखयोः कारणं क्लृप्तसामर्थ्यादिन्द्रियार्थ-
सन्निकर्षस्य तु ज्ञानमात्रोपयोगादन्यथासिद्धौ भावाभावाविति । तदयुक्तम् ।
स्वप्नान्तिके सुखदुःखोत्पादस्यासिद्धेः तज्ज्ञानस्यार्थज्ञानस्येव मिथ्यात्वात् ।
यथा हि तत्र कामिनीस्मृतिविपर्यास एवमुपलब्धतज्जन्यसुखस्मरणविप-
र्यासः । सुखदुःखसमुत्पाद एव वा ऽपि धर्माधर्मोपयोगो न तु सुखदुःखो-
त्पादे । न चासतीन्द्रियार्थसन्निकर्षे ज्ञानमन्यन्मनोरथादि वा तादृशं सुखभेदं
विधत्ते यादृशो विषयोपभोगजन्मा सतीन्द्रियार्थसन्निकर्षे ज्ञानमात्रमेव तस्य
हेतुः ज्ञानहेतुस्तु सन्निकर्ष इत्युक्तमिति चेद् न । विषयासन्निधाने विषयस्मृ-
तिमतः तादृशस्य सुखभेदस्यानुत्पादादित्युक्तमेव । विषयसाक्षात्कारस्तदुत्पा-
दहेतुर्न विषयज्ञानमात्रमिति चेद् । हन्तेश्वरस्याप्यस्ति तत्रभवतो योगर्द्धिसम्प-
न्नानां च महाधियां समस्तवस्तुसाक्षात्कार इति तेषामपि सुखदुःखोत्पादप्र-
सङ्गः प्रसज्येत अशक्त्या प्रतिपक्षधारणायाम् । तस्मादिन्द्रियार्थसन्निकर्षो ऽपि
सुखदुःखोत्पादहेतुरेषितव्यः स च सत्यप्यर्थसाक्षात्कारे नास्ति सिद्धानामिति
न तेषां सुखदुःखोत्पादः । अपि च चरमभावि कारणं गृहीत्वा पूर्वभाविना-
मकारणत्वापादने तन्त्वादीनामपि पटादीन् प्रत्यकारणत्वप्रसङ्गः । संयोग-
भेदादेव तादृशपटोत्पत्तेः तन्त्वादीनां च संयोगभेदेनोपयोगात्तत्सहितस्य
तु तत्कारणत्वे सन्निकर्षस्याप्यालोचनसहितस्येति समानम् । यथा ऽऽहुः
पदार्थविदः । स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षधर्मा-
द्यपेक्षादात्ममनसोः संयोगात् यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते

तत्सुखमिति । तस्मात्सूक्तं सुखादिनिवृत्त्यर्थं ज्ञानग्रहणमिति । इह द्वयी प्रत्यक्षजातिरविकल्पिका सविकल्पिका चेति । तदोभयी इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणेन संगृहीता ऽपि स्वशब्देनोपात्ता । तत्र विप्रतिपत्तेस्तत्राविकल्पिकायाः पदमव्यपदेश्यमिति सविकल्पिकायाश्च व्यवसायात्मकमिति । तत्र व्यपदेशो विशेषणमुपलक्षणं वा । नामजात्यादि तत्कर्म्मं व्यपदेश्यम् विशेष्यमिति यावत् । तद्यथा डित्थो ऽयं गौरयं शुक्लो ऽयं कमण्डलुमानयं गच्छत्ययमिति सर्वं हि सविकल्पकं विशेषणविशेष्यभावेन वस्तुषु प्रवर्तते । अविद्यमानं व्यपदेश्यं यस्मिंस्तदव्यपदेश्यं जात्यादिस्वरूपावगाहि न तु जात्यादीनां मिथो विशेषणविशेष्यभावावगाहीति यावत् । तत्र नामरहितमविकल्पकं नास्तीति ये विप्रतिपद्यन्ते तन्मतमपाचिकीर्षुरुपन्यस्यति भाष्यकारः यावदर्थं वै नामधेयशब्दाः । सर्वे ऽर्थाः सर्वथा सर्वदा सर्वत्र नामधेयान्विताः । नास्ति सो ऽर्थो यः कदा चित् क्व चित् कथं चिद् नामधेयेन वियुज्यते । तदनेन नामधेयतादात्म्यमर्थानां प्रतिजानीते । अत्र हेतुमाह तैरर्थसंप्रत्यय इति । अर्था हि प्रतीयमाना नामधेयरूपेतास्तत्सामानाधिकरण्येनावगम्यन्ते गौरित्यर्थो ऽयं इत्यर्थ इति । न चोपायतया सामानाधिकरण्यं घटते न हि चक्षुरादिसामानाधिकरण्यं रूपाद्यनुभवति । नापि ज्ञायमानं रूपाद्युपेयसामानाधिकरण्यमनुभवति न हि भवति धूमो ऽयं वह्निरिति किं तु धूमो ऽयं धूमत्वाद्वह्निमानिति । अपि चाशब्दोपाये ऽनुमेयादौ न शब्दाभेदेनाधिगमो भवेदस्ति तु । तस्मात्तेन नामधेये सह समानाधिकरणस्यार्थस्य प्रत्ययो यत इति । तस्मान्नामधेयात्मानो ऽर्थाः । किं च गवादिषु पृषादिषु च शब्दापकर्षे ऽर्थप्रत्ययापकर्षात् तदुत्कर्षे त्वर्थप्रत्ययोत्कर्षात् प्रत्ययस्य च प्रत्येतव्योत्कर्षाधीनोत्कर्षत्वान्नामधेयोत्कर्षेणार्थोत्कर्षे । ऽर्थस्य तादात्म्यं कथयति तदिदं सम' प्रयोजनं संप्रत्यय इति समधिकः प्रत्यय इत्यर्थः । अस्त्वर्थसंप्रत्ययो नामधेयसामानाधिकरण्येन न त्वेतावता नामधेयात्मता सिध्यति अस्ति हि पुरोवर्तिसामानाधिकरण्येन रजतप्रत्ययो न चैतावता शुक्ती रजतात्मका भवतीत्यत आह अर्थसंप्रत्ययाच्च व्यवहारः । ततश्चाविसंवादात् प्रमाणं सन्नामधेयतादात्म्यं साधयत्यर्थानामित्यर्थः । तदेवं सामान्यतो ऽर्थानां नामधेयतादात्म्यं व्यापाद्य

प्रकृते योजयति । **तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नं विषयज्ञानं* रूपमिति वा रस इति वा** यत् रूपाद्यर्थसामानाधिकरण्येन भवति । अथतु किमेतावता ऽपीत्यत आह **रूपरसशब्दाश्च विषयनामधेयं** किमेतावता-ऽपीत्यत आह **तेन व्यपदिश्यते ज्ञानम्** । उक्तमपि व्यपदेशं सव्याख्यान-माह **रूपमिति जानीते रस इति जानीत** इति । तथा चार्थानां नाम-धेयात्मकत्वात्तद्गोचरमालोचनमपि नामधेयगोचरमित्यर्थवन्नामधेयेन व्यप-दिश्यमानं शाब्दं प्रसज्यत इति । न शब्दप्रमाणकतया शाब्दमपि तु शब्दे जाते शाब्दं शब्दस्यास्य विषयत्वेन जनको ऽर्थतादात्म्यात् । तथा च ना-विकल्पं शब्दरहितमस्तीति तात्पर्यार्थः । तथा चाहुः । न सो ऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते । बालमूकादीनामपि विज्ञानं शब्दानुव्यापदेशानादिशब्दभावनावशात् । यद-वोचत् । आद्यः करणविन्यासः प्राणस्योर्ध्वे समीरणम् । स्थानानामभिघा-तश्च न विना शब्दभावनामिति । तदस्य निराकरणं लक्षणगतेनालोचन-ज्ञानादेरर्थेनाव्यपदेश्यपदेन सूचितमिति । परीक्षापर्व्वणि वचनार्हमपि सुभाषितरुचितया तद्विलम्बमसहमानो भाष्यकारो लक्षणावसर एवाह । अत एवाह **अव्यपदेश्यमितीति** । तेन सूचिते ऽप्यर्थे अव्यपदेश्यपदं योजयति । **यदिदमनुपयुक्ते शब्दार्थसंबन्धे अर्थज्ञानं तन्न नामधेयेन† व्यपदिश्यते** । अयमभिसन्धिः । सामानाधिकरण्येन शब्दात्मकत्वं रूपादीनामभिधीयमानं शब्दब्रह्मात्मत्वं वोच्येत श्रूयमाणगोरित्यादिपदभेदात्मत्वं वा । न ताव-दाद्यः कल्पः । न खल्वस्मदादिप्रमातादर्शनपथातिवृत्तेन शब्दब्रह्मणा रूपादी-नामस्ति सामानाधिकरण्यप्रतीतिर्लौकिकानां श्रूयमाणशब्दसामानाधिकरण्ये-न तु तादात्म्यप्रसाधने ऽनुपयुक्तशब्दसम्बन्धस्य बालमूकादेः रूपादिज्ञानेषु नास्ति श्रूयमाणशब्दगन्धो ऽपि प्रागेव तु तत्सामानाधिकरण्यं न तु तेषा-मपि प्राग्भवीयशब्दभावनानुगमेन तत्सामानाधिकरण्यमिति सांप्रतम् । न खलु रूपाद्यात्मनः शब्दस्य रूपादिविशेषणेनार्थस्य संस्पर्शि । युगपद्वैशदा-वैशद्यरूपविरुद्धधर्म्मयोगेन भेदप्रसङ्गात् । वैशद्ये तु व्युत्पन्नवदव्युत्पन्नो ऽपि शब्दैर्व्यवहरेत् । न तु सम्बन्धग्रहणमपेक्षेत । न च तादात्म्यादन्य-

---

* अर्थज्ञानमिति भाष्ये पाठः । † नामधेयशब्देनेति भाष्ये पाठः ।

द्वाचकत्वं शब्दानां यत्र सम्बन्धव्यवहारापेक्षा भवेत् । न च तादात्म्ये ऽपि कल्पि-
तभेदानां वाच्यवाचकभावः । तथा सति न सामानाधिकरण्यं स्यात् । न
ह्यस्ति सम्भवो भेदकल्पना च सामानाधिकरण्यप्रथा चेति । तस्मादव्युत्पन्ना-
नामस्ति शब्दरहितं रूपादिषु निर्विकल्पकं प्रत्यक्षमिति । न केवलमव्युत्पन्नानां
व्युत्पन्नानामप्यस्तीत्याह । गृहीते ऽपि च शब्दार्थसंबन्ध इति । यद्वोक्तमेव
सामानाधिकरण्यनिरासाय सम्बन्धग्रहणस्वरूपमाह । अस्यार्थस्य सास्नादिम-
द्रूपस्याय गकाराद्यौकारो नामधेयमिति । वृत्तिकारो ज्ञानपरामर्षप्रधानः ।
तथा च यो डित्थो नानादेशकालावस्थासंसृष्टः पिण्डभेदः सो ऽयमिति सन्निहि-
तदेशकाल इत्यर्थः । न त्वयं पिण्डो डित्थशब्द इति प्रत्ययः । औत्सर्गिकं
हि शब्दानामर्थपरत्वं क्व चित्पुनरित्यादिभिः शब्देस्तद्व्यपोद्यते । यद्यपि सम्ब
न्धप्रतिपादनमभेदेन डित्थ इति तथापि शब्दो वाच्यपरो न स्वपरः । यथा
गौर्वाहीक इति लक्ष्यमाणगुणयोगपरः । न च तन्मात्रे वाहीकस्य गोत्वं सम
स्ति । तस्माद्भिन्नयोरेव शब्दार्थयोः सम्बन्धग्रहात्तन्मूलत्वाच्च शब्दव्यवहारस्य*
न शब्दपुरस्सरमपि ज्ञानं सामानाधिकरण्यमात्मनो ऽर्थस्यावगमयति । यत्तु
शब्दानुपाये ऽपि ज्ञाने शब्दः पूर्वं समवैति तद्गृहीतसंकेतस्य प्रथममिन्द्रियार्थ-
सन्निकर्षादालोचनेन शब्दसंसर्गरहितेनालोचिते ऽर्थमात्रे तस्यार्थस्य शब्दभेदेन
सम्बन्धाच्छब्दविषयः संस्कारः प्रबोध्यते स प्रबुद्धः शब्दस्मृतिं जनयति । तेन
व्युत्पन्नस्य निर्विकल्पकात् पराञ्चः प्रत्ययाः शब्दानुपाया अपि शब्दपुरस्सरा
जायन्ते । यथा ऽऽहुः । यत्स्वमासमरत्य सत्य [illegible] तद्व्यन्यहेतुकम् । पिण्ड एव हि
दृष्टः सन्संज्ञां स्मारयितुं क्षमः । तस्माद्व्युत्पन्नस्यापि नामधेयस्मरणाय पूर्वमे
षितव्यो विनेय नामधेयमर्थप्रत्ययः । तदिदमुक्तं गृहीते ऽपि च शब्दार्थसं-
बन्धे अस्यार्थस्यायं शब्दो नामधेयमिति । यदा तु सो ऽर्थो गृह्यते नाम
धेयरहितो नामधेयस्मरणात् पूर्वमविकल्पकेन तदा पूर्वस्मादव्युत्पन्नावस्था-
यामर्थज्ञानान्न विशिष्यतइति । यतो न विशिष्यते तस्मात्तदर्थज्ञानं तादृगेव
भवति । ननु परप्रतिपादनादिलक्षणव्यवहाराय स्वरूपेण ज्ञाने व्यपदेष्टव्ये
यदर्थव्यपदेशेन व्यपदिश्यते तदवगच्छामो अर्थव्यपदेश्याकारमिति । कथं
चार्थाकारं भवति यद्यर्थव्यपदेश्ययोर्नाभेदस्तस्मात्पुनरपि तादात्म्यं प्रसक्तमि

---

* शब्दाद्व्यवहारस्येति ३ पु पा ।

त्यत आह तस्य त्विति । अर्थाकारमेव तु ज्ञानमपदिश्यते अन्यथा ऽप्र-
ख्यात्यादित्यर्थः । प्रतीयमानं परेण । उपसंहरति । तस्मादिति । तदेवमर्थ-
ज्ञानकाले समाख्याशब्दो व्याप्रियते प्रतीयमानतया व्यवहारकाले परप्रत्या-
यनकाले तु व्याप्रियते कारणतया तदनेन गोपालाविपालादीनां संज्ञानिवेशनं
तासु तासु व्यक्तिषु व्यवहारोत्कर्षहेतुः नार्थोत्कर्षहेतुरित्यपि सूचितं भवति ।
तस्मादविकल्पप्रत्ययावरोधार्थेनाव्यपदेश्यपदेनास्यैवाविकल्पकस्य शब्दार्थ-
व्यवहाररहितता सूचितेत्याशयवानुपसंहरति । तस्मादिति । तदेतद्भाष्यं
वार्तिककारः तात्पर्यतो व्याचष्टे । तथेन्द्रियार्थानि विषयभेदानुविधायि ३८ । १९
ज्ञानमिति शब्दात्मतामपाकरोति । चाक्षुषं हि रूपज्ञानं रूपएव नियतं न
शब्दे प्रवर्तते । एवं श्रोत्रमपि शब्दएव नियतं न रूपादौ प्रवर्तते ।
यदि पुनरिदं शब्दात्मकं रूपादि भवेत् श्रोत्रजं ज्ञानं शब्दग्राहीति रूपा-
दावपि प्रवर्तेत । अप्रवर्तमानं वा विधुरयति रूपादीनां शब्दात्मताम् ।
अपि च श्रूयमाणशब्दात्मत्वे रूपादीनां तेषामपि श्रवणग्राह्यत्वमित्यन्धो
ऽपि रूपं गृह्णीयात् । अस्ति हि तस्य श्रोत्रं च शब्दज्ञानं च । एवं बधिरो
ऽपि शब्दं गृह्णीयात् । अस्ति हि तस्य लोचनं च रूपज्ञानं च । अशब्दो
ऽभाव इति च विवक्षितविपरीतापत्तिः शब्दाभावस्यार्थस्य शब्दत्वादश-
ब्दत्वे वा च यथार्थः शब्दाद्भिन्नः प्रसज्येत एवमभावो ऽप्यर्थे इति शब्दः
स्यात् । तथा नाभावः शब्दस्य सत्वात् तथा चार्थानुविधायि ज्ञानं
भवेत् । अस्ति च तस्मान्न शब्दात्मानो ऽर्था इति । तदुत्पत्तिकाल-
इति प्राधान्येन शब्दानुव्याधं व्यावर्तयति । एकदेशिव्याख्यानमाह अपरे
त्विति । इन्द्रियार्थसन्निकर्षेण हि लिङ्गेन यदिन्द्रियगतिज्ञानं तदपि प्रत्य-
क्षलक्षणोपेतमिति प्रत्यक्षं प्रसज्यत इति तन्निराकरणायाव्यपदेश्यपदम् ।
अपदेशो हेतुवचनं तदेव तदाभासेभ्यो विशिष्टं व्यपदेशः । तस्य कार्य्यं
हेतुप्रत्यायनद्वारा अनुमेयज्ञानं व्यपदेश्य न व्यपदेश्यमव्यपदेश्यमलिङ्गाद्भ-
वमित्यनुमानं व्यावर्तितमित्यर्थः । तदेकदेशिमतं दूषयति । तच्च नैवमिति ।
नन्विन्द्रियगतिज्ञानमपीन्द्रियार्थसन्निकर्षाल्लिङ्गादुत्पन्नमित्यत आह न ह्यनु- ३९ । २
मेयस्येति । नैतदिन्द्रियार्थसन्निकर्षादुत्पद्यते किं तु तज्ज्ञानात् । अत
एवातीते ऽपि धूमादौ लिङ्गे तत्स्मरणमात्रादेवानुमेयज्ञानं भवति । न च

सन्निकर्षपदस्य मुख्यत्वे सम्भवति चानलक्षणा युक्तेति भावः । उपसंहरति
९ । २ यत इति । इमं च वार्त्तिकग्रन्थमबुध्यमाना इन्द्रियगतिज्ञाननिवृत्त्यर्थ-
मिन्द्रियविषयेऽपि पदं सूत्रेऽध्याहरन्तीति ।

क्रमप्राप्तस्याव्यभिचारिपदस्य तात्पर्यं व्युत्पादयन् भाष्यस्यापि तात्प-
र्यमाह **ग्रीष्मे मरीचय** इतीति । यद्यपि सामान्यलक्षणेनैव व्यभिचा-
रिणो निरस्ताः प्रत्ययास्तदर्थं च विशेषलक्षणम् । अन्यथा ऽनुमानादिप-
देष्वप्यव्यभिचारिपदमुपादेयं स्यात् तथा ऽपि सिद्धे सत्यारम्भो नियमार्थः
द्वयी हि प्रमाणानां गतिः । किञ्चित्सत्तामात्रेण प्रमासाधनं यथा प्रत्यक्षम् ।
न हि चक्षुरादीनां ग्रहणं प्रमायामुपयुज्यते अपि तु सत्त्वेव । अनुमानादीनि
तु स्वज्ञानेन प्रमासाधनानि न ह्यगृहीतं लिङ्गं वा शब्दो वा ऽऽगमस-
हितं सादृश्यं वा यथाविषयमाधत्ते प्रमाम् । तत्रानुमानस्य प्रमोपजन-
नात् प्रागेवार्थाव्यभिचारग्रहणमपेक्ष्यते नान्यथा ततः प्रमा सिध्यतीति ।
शब्दादौ तु यद्यपि प्रमोपजननं प्रति नार्थाव्यभिचारग्रहापेक्षा तथा ऽऽपि
वाक्यमतिरोहितार्थमन्त्रमप्यर्पितस्य द्रागित्येव प्रतीयमानार्थस्यापि सृण्येव
जर्भरी तुर्फरीतू इत्येवमादेर्मन्त्रस्याप्रयोगकृततया सामान्यतो ऽर्थाव्यभिचारित्वं
ग्रहीतुम् । औत्सर्गिकं हि शब्दानामर्थपरत्वमत एव निगमनिरुक्तव्याकरणव-
ह्यामास्ततो ऽर्थमवधारयन्ति । तत्र यथा मुद्गस्तथा मुद्गपर्णीति आप्तवा-
क्यश्रवणादेव मुद्गसादृश्यज्ञानस्यानुपजनितफलस्यापि शक्यं तदर्थाव्यभिचा-
रित्वं निश्चेतुम् । प्रत्यक्षस्य तु प्रमाणस्यात्यन्तपरोक्षस्योपलम्भ एव प्रमो-
पजननात् प्राग् दुर्लभं प्रागेव तु तस्य अर्थाव्यभिचारित्वम् । यद्यपि च
स्वसंवेदनप्रामाण्यपक्षे ऽपि तत्संवेदनं मनसा सुलभं तथा ऽपि न तन्मात्र-
प्रमाणमपि त्वसाधारणेन्द्रियार्थसन्निकर्षसहायमिति तत्सहायस्य तस्य परो-
क्षत्वमेव तेन प्रत्यक्षस्य प्रमाणस्य फलाव्यभिचारेणैवाव्यभिचारज्ञानं न
स्वरूपत इत्यत प्रमाणान्तरेभ्यो व्यावृत्तमसाधारणं प्रत्यक्षस्य रूपमादर्शयि-
तुमव्यभिचारिपदोपादानम् । अथ वा प्रत्यक्षाव्यभिचारं तत्रानुमानाद्यव्य-
भिचारे कारणम् । न ह्यस्ति सम्भवो ऽव्यभिचरितप्रत्यक्षगृहीतपक्षधर्मताकं
तर्कसहायप्रत्यक्षगृहीताविनाभावं वा ऽनुमानं व्यभिचरतीति । यत्तु बाधि-
तविषयं सत्प्रतिपक्षितं चानुमानं तदपि यद्यपि प्रथमं व्याप्तिग्रहणदोषेण

न खण्डितं तथा ऽपि खण्डनोत्तरकाले सो ऽपि प्रतीयते । तथा च व्याप्तिग्राहि प्रत्यक्षं तथापि व्यभिचरतीति । एवमागमो ऽपि साक्षात् वा पारम्पर्येण प्रत्यक्षपूर्वकस्तद्व्यभिचारेणैव व्यभिचरति । आगमव्यभिचारेण चोपमानव्यभिचारो व्याख्यातः । तदेवं प्रत्यक्षाव्यभिचारेण प्रमाणानामव्यभिचारो ऽस्तीति प्रत्यक्षस्यैव विशेषणमव्यभिचारिपदं चकार नेतरेषां प्रमाणानां न ह्यस्ति सम्भवस्तन्मूलं प्रत्यक्षमव्यभिचारि तानि च व्यभिचारीणीति । को ऽयं विशेषः प्रमाणान्तरेभ्यः प्रत्यक्षस्य । यथा ऽऽह मीमांसावार्तिककारः । प्रत्यक्षाव्यभिचारेण स्वलक्षणबलेन च । प्रसिद्धाव्यभिचारित्वान्नानुमानं परीक्ष्यत इति । तस्मात्सुष्ठूक्तं ग्रीष्मे मरीचय इति भाष्यं तत्प्रतिषेधार्थमिदमुच्यते अव्यभिचारीति । पृच्छति किमिदमिति । उत्तरं यदतस्मिंस्तदिति । एतच्चोपपादितं द्वितीयसूत्रे । पुनः पृच्छति । किं पुनरत्रेति । एकदेशिमतेनोत्तरम् एके तावदिति तदेतद् दूषयति । तच्च नैवमिति । पृच्छति । कस्मात् । उत्तरम् । अर्थस्येति । तदेव स्फोरयति । यस्मादिति । अथ च न निर्विकल्पकं भ्रान्तं किं तु सविकल्पकमित्याह । तांस्तु मरीचीनिति । इन्द्रियेणालोच्य मरीचीन् उच्चावचमुच्चलतो निर्विकल्पकेन गृहीत्वा पश्चात्तदुपघातदोषाद्विपर्येति सविकल्पको ऽस्य प्रत्ययो भ्रान्तो जायते तस्माद्विज्ञानस्य व्यभिचारो नार्थस्येति । यथा ऽऽहुर्निरुक्तकाराः नैष स्थाणोरपराधो यदेनमन्धो न पश्यति पुरुषापराधः स भवति । अव्यभिचारिपदेनैव संशयज्ञानमपि परास्तम् । तत् खलु संशयज्ञानं विकल्प्यमानवस्तुगोचरं तद्रूपं वस्तु प्रापयति । अप्राप्यञ्चोपदर्शितं कथं संवादकमसंवादकं च कथमव्यभिचारि । तस्मादव्यभिचारिपदेनैव संशयज्ञाने निरस्ते सविकल्पकप्रत्यक्षावरोधार्थमुपादीयमानं व्यवसायात्मकपदं संशयव्यावृत्त्यर्थतया व्याख्यातमन्वाचयेनेति । तद्यथा । काष्ठान्याहर्तुमरण्यं गच्छ शाकमप्यानेष्यसीति शाकानयनमन्वाचीयते न तु तदेवास्य प्रेषितुर्विवक्षितं तथेहापीति । व्यवसायात्मकपदं साक्षात्सविकल्पकस्य साधकं तथा हि व्यवसायो विनिश्चयो विकल्प इत्यनर्थान्तरं स यदात्मा रूपं यस्य तत्सविकल्पकं प्रत्यक्षम् । तदेतदतिस्फुटत्वाद् शिष्यैर्गम्यत एवेति भाष्यवार्तिककाराभ्यामव्याख्यातम् । अस्माभिः त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः । यथामानं यथावस्तु व्याख्यातमिदमीदृशम् ॥ ३९ ।

स्यादेतत् । न व्यवसायात्मकं प्रत्यक्षं भवितुमर्हति । अभिलापसंस-र्गयोग्यप्रतिभासं हि तत् । न चेन्द्रियार्थाभ्यां लब्धजन्म विज्ञानमर्थावभास वाच्यमभिलापेन योजयितुम् । न ह्यर्थे शब्दाः सन्ति अर्थात्मानो वा तथा सत्य-व्युत्पन्नस्यापि व्युत्पन्नस्येव व्यवहारः स्यादित्युक्तम् । न चाभिलापो ऽर्थासंस्पर्शी संवेदनधर्म्मो ऽर्थेषु तन्नियोजनात् तस्मादर्थादुपजायमानं ज्ञानमर्थमेवादर्शये-न्नाभिलापम् । न हि रूपाज्जायमानं* प्रत्यक्षं रसमहितमेतदादर्शयति । तस्मा-दभिलापसंसर्गानर्हमेनमभिलापसंसर्गमादर्शयद्विकल्पविज्ञानं विकल्पवासनो-त्थापितमनियतार्थग्राहि मानसमात्मीयमुपेक्षणतया व्यापारं तिरस्कृत्यानुभव-प्रभवतया ऽनुभवव्यापारं दर्शनं पुरस्कृत्य वर्तमानमनुभवतया ऽभिमन्यन्ते प्रतिपत्तारः । असिद्धमेतद् यदर्थसामर्थ्यलब्धजन्म न तच्छब्दकल्पनानुगतं यथा निर्विकल्पकमर्थजन्मानश्च विवादाध्यासिता विकल्पा इति प्रसङ्गसाधन-विरुद्धव्याप्तोपलब्धिः । शब्दकल्पनानुगतत्वस्य हि प्रतिषेद्धव्यस्य विरुद्धं तदन-नुगतत्वं तेनार्थसामर्थ्यजत्वं व्याप्तं तस्योपलब्धिस्तदननुगतत्वमुपस्थापयन्ती तदनुगतत्वं निरुणद्धीति । अथैषां प्रत्ययानां प्रत्यक्षमभिलापानुगतत्वमशक्या-पह्नवम् । हन्त भोः नार्थसामर्थ्यजत्वमिति प्रसङ्गविपर्ययः । तथा हि यदभिला-पकल्पनानुगतं न तदर्थसामर्थ्यजं यथेश्वरप्रधानादिविकल्पविज्ञानं तथा चैते विवादाध्यासिता विकल्पा इति व्यापकविरुद्धोपलब्धिः । निषेध्यमर्थसामर्थ्य-जत्वं तदभिलापकल्पनाननुगतत्वेन व्याप्तं तद्विरुद्धं च तदनुगतत्वमिति । न च तद्विषयव्यतिरेकिता अर्थसामर्थ्येन हि तदुत्पद्यमानमर्थरूपमनुकुर्यात् न शब्द-रूपम् । न ह्यर्थे शब्दाः सन्ति तदात्मानो वेत्युक्तम् । अथ तद्रूपानुकारे तु विज्ञानस्य सर्वरूपानुकारेण सर्वसर्वज्ञतापत्तिरिति । संकेतवशाच्छब्दानामर्थसं-बन्धेनार्थोपलब्धौ तत्स्मरणात् तत्संसृष्टवेदनमिति चेत् । यत्र तर्हि कृतसं-केताः तदेव स्मारयेदेतान् तत्र च ते कृतसंकेता यदनुगतं सामान्यं न च तद्दृष्टं किं तु स्वलक्षणं दर्शनगोचरः तदेव हि परमार्थसत् विज्ञानस्य कार्यं न तु सामान्यं सर्वसामर्थ्यरहितं हि तद् अलीकत्वात् । तस्माद्यद् दृष्टं न तेन शब्दानां सम्बन्धो येन तु सम्बन्धो न तद्दृष्टम् । अपि च दृष्टस्य शब्दवाच्यत्वे दर्शनादिव वह्निरूपा इति वाक्यादपि प्रतीयेत । तथा च

* न्यायवार्त्तिक २ पृ पं ।

शब्दादपि तस्मिन्प्रतीते शीतापनोदनप्रसङ्गः । सामान्यविषयो लिङ्गशब्दो वस्तुभूतसामान्यवच्च स्वलक्षणं तादृशं च तद्दर्शनकारणमिति निर्विकल्पकेन प्रथमाक्षसन्निपातजन्मना जातिमद्वस्तुवेदनात्तथोपलब्धे च न संबन्धस्य शब्दस्य स्मरणं तथा च तच्छब्दाभिधेयजातिविशिष्टद्रव्यावगाहीन्द्रियार्थसन्निकर्षजन्मविकल्पप्रत्ययो गौरयमित्येवमाकारो जायतइति चेद् । यथा ऽऽहुर्निरुक्तकाराः निर्विकल्पकबोधेन द्व्यात्मकस्यापि वस्तुनो ग्रहणम् । तथा । ततः परं पुनर्वस्तु धर्मैर्जात्यादिभिर्यया । बुद्ध्या ऽवसीयते सापि प्रत्यक्षत्वेन संमतेति । तन्न । पिण्डविवेकेन जात्यादेरविकल्पकेनाग्रहणात् । न हि जातिजातिमन्तौ क्रियाक्रियावन्तौ गुणगुणिनौ तत्समवायो वा विवेकेन चकासति न च विवेकेनाप्रतिभासमानाः शक्या मिथो योजयितुं क्षीरोदकवत्तद्वेदिना । तस्मादेकमविभागं स्वलक्षणमनादिविकल्पवासनासमारोपितजात्यादिभेदं तथा तथा विकल्पयन्तीति युक्तमुत्पश्यामः । अपि च परमार्थसद्वस्तुद्वयवेदने ऽपि कुतो विशेषणविशेष्यभावः न ह्यतुल्यावेक्षविज्ञानविषयौ मिथो विशेषणविशेष्यभावमापद्येते । विशेषणं खलूपकारकम् उपकार्यं च विशेष्यं नान्यथा तयोस्तद्भावः । न चैकविज्ञानसमारूढयोर्व्याप्यव्यापकभावः कार्यकारणभावो वा संभवी समानकालयोस्तयोरुभयोरपि पौर्वापर्यानियमात् । अपि च वस्तुनिवेशे जात्यादीनामुपाधीनामेकस्य वस्तुनः सत्त्वं च द्रव्यत्वं च पार्थिवत्वं च वृक्षत्वं च शिंशपात्वं चोपाधय इति दूरादेकोपाधिविशिष्टग्रहे सर्वोपाधिविशिष्टग्रहप्रसङ्गः तथा ह्याधाराधेयभाव उपकारगर्भो भवति । पतनधर्मणो हि बदरस्य कुण्डमधरं प्रत्यासन्नमपतनधर्मकं बदरं विदधदाधारः तद्वदिहापि द्रव्येण जात्यादीनामुपकर्तव्यं न च शक्त्यन्तरैरुपकरोति शक्त्यन्तरोपकारे ऽपि शक्त्यन्तरकल्पनायामनवस्थाप्रसङ्गात् । तस्मात्स्वभाव एव स्वकारणाधीनजन्मा द्रव्यस्य स तादृशो येन बहूनामुपाधीनामुपकरोतीति वाच्यम् । तथा च तत्स्वोपकारसमर्थे तस्मिन् द्रव्ये गृह्यमाणे द्रव्यत्वादावपि स एवास्य स्वभाव इति तत्स्वभावावच्छिन्नाः ह्यविकल्पकेन परमार्थसद्द्रव्यावगाहिना सर्वएव द्रव्यत्वपार्थिवत्ववृक्षत्वशिंशपात्वादयो विषयीकृता इति विकल्पान्तराणामानर्थक्यम् । यदाह । यस्यापि नानोपाधेर्धीर्ग्राहिका ऽर्थस्य भेदिनः । नानोपाध्यु-

प्रकाराद्गृह्णन्त्यभिन्नात्मनो ग्रहे । सर्वात्मनोपकार्य्यस्य को भेदः स्यादनि-
श्चितः । एकोपकारके ग्राह्ये नोपकारास्ततो ऽपरे । दृष्टे तस्मिन्नदृष्टे
ऽपि तद्ग्रहे सकलग्रह इति । अस्माकं तु अनादिविकल्पवासनोपादाना
विकल्पा यच्च गृह्णन्ति यच्चाध्यवस्यन्ति तयोरुभयोरप्यन्यनिवृत्तिरूपतया
अवस्तुत्वान्न मनागपि परमार्थसद्वस्तु गाहन्ते पारंपर्येण तु वस्तुप्रतिबन्धा
त्तत्र प्रवर्त्तयन्तः प्रापयन्तश्च न विसंवादयन्ति लोकमतो वस्तुस्वभावाविनि
वेशाद्विकल्पानां न पौनरुक्त्यमस्ति । अपि चालोचिते वस्तुनीन्द्रियेण
तदनन्तरोत्पन्न शब्दस्मरणव्यवहितव्यापारमिन्द्रियमर्थस्य न सविकल्प-
कामपि धियमुपजनयितुमर्हति । यथाऽऽह । अर्थोपयोगे ऽपि पुनः स्मार्त्तं
शब्दानुयोजनम् । अक्षधीर्यद्यपेक्षेत सो ऽर्थो व्यवहितो भवेत् । न च
यदेवालोचनमजीजनदिन्द्रियं तदेव स्मरणसहकारि विकल्पप्रत्ययमाधत्ते न
च स्मृतिर्व्यवधायिका स्याद्गृहमव्यवधायकमिति न्यायात्। यतो यः प्रागजनको
बुद्धेरुपयोगाविशेषतः स पश्चादपीति । नो खल्वतीत भवति गोचरो ऽक्ष
स्येति न चागोचरे सहस्रेणाप्युपायैरेतत्प्रवर्त्तयितुमर्हतीति । न च स्मृतिर-
तीतविषया ऽननुभूतपूर्वं वर्त्तमानं गोचरयितुमर्हति । तद्गोचरत्वे चान्धा-
नामपि रूपसाक्षात्कारप्रसङ्गः । यथा ऽऽह । तेन स्यादर्थापाये ऽपि नेत्रधी
रिति । तदेवं नामजातिगुणकर्म्मकल्पना च प्रत्यक्षत्वेन परास्ता । द्रव्य-
कल्पना ऽपि दण्डीति विशेषणं विशेष्यं च सम्बन्धं लौकिकीं स्थितिम् ।
गृहीत्वा सङ्कलय्यैतत्तथा प्रत्येति नान्यथा । न चैतावन्तं व्यापारकलापं
विचारकनिर्वर्त्तनीयमिन्द्रियमात्रं सहते तस्य सन्निहितविषयबलेनोत्पत्तेर-
विचारकत्वाद् इति । गुणक्रियाश्रमा चैतन्न समवत्येव रूपविवेकसम्बन्धयो-
रप्रतिभासने घटनायोगात् चौरादयनद्धेदनेत्युक्तम् । तस्मान्न सविकल्पं
प्रत्यक्षमिति । अत्रोच्यते । यत्तावदुक्तमर्थसामर्थ्यजन्याभिलापसंसर्गायो-
ग्यप्रतिभासत्वयोर्विरोध इति तत्र ब्रूमः । स्याद्विरोधो यदि स्वलक्षणमे
वार्थो न त्वेतदस्ति । उपपादयिष्यते च परमार्थसज्जात्यादिमन्तमर्थं
स्वेनभावमभिलापसंसर्गयोग्यं तेन तज्जनितं ज्ञानमर्थसामर्थ्यजं चाभिलाप-
संसर्गयोग्यप्रतिभासं चेति न विरोधः । तथा च प्रपञ्चसाधनस्य सन्दिग्ध-
व्यतिरेकिता । न च द्रव्याद्यभिव जात्यादि भिन्नं कल्पयन्तो विकल्पा नार्थ-

सामर्थ्यजन्मान इति सांप्रतम् । द्रव्यादपि हि भेदः साधयिष्यते तेषाम् । यथा च भेदे ऽपि तेषां तद्वाचकानां सामानाधिकरण्यं तथोपपादयिष्यतेऽधस्तात् । न च भिन्नेन शब्देन डित्थो ऽयमित्यभेदकल्पनादर्थस्य विकल्पानामनर्थजत्वमिति युक्तम् । उक्तमेतद् अव्यपदेश्यपदव्याख्यानावसरे यथा न शब्दाभेदेनार्थस्यैन्द्रियग्राह्यता किं तु प्रथममालोचितो ऽर्थः सामान्यविशेषवान् सङ्केतसमयवर्तिनीमात्मनो ऽवस्थां स्मारयन् तत्कालभाविनं शब्दमपि स्मारयत्यवर्जनीयतया न त्विन्द्रियजविकल्पोत्पादं प्रत्युपयोगः कश्चिच्छब्दस्मरणस्य । अन्यथा बालमूकादीनां नेन्द्रियजः स्याद्विकल्पः शब्दस्मरणाभावात् । संकेतसमयवर्त्यवस्थास्मरणं तूपयुज्यते । वस्तुनस्तदानीन्तनेदानीन्तनावस्थाभेदवत एकस्येन्द्रियजेन विकल्पेनाकलनात् । शब्दस्तु संपातायातो न निवेशयत्यात्मानमिन्द्रियजे विकल्पे । यथा ऽऽह । देवदत्तादिशब्देन हृदयस्थेन यः स्मृतः । चक्षुषा ऽपि स एवायं पिण्डः संप्रति दृश्यते । अनेन हि पिण्डस्य पूर्वापरावस्थावर्तिनीमेकतामिन्द्रियजविकल्पगोचरत्वेन दर्शयति न तु शब्दनिवेशनमपि । तथा ऽऽह । संज्ञा हि स्मर्यमाणा ऽपि प्रत्यक्षत्वं न बाधते । संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा । नार्थेन्द्रियव्यापारं व्यवधत्त इत्यर्थः । न च प्रागवस्थास्मरणसापेक्षतया नेन्द्रियार्थसन्निकर्षः कारणं विकल्पस्येति सांप्रतम् । यतो न किं चिदेकमेकस्याः सामग्र्याः सर्वमेव इति भवन्तो ऽप्याहुः । अन्यथा ऽऽलोकमनस्कारसापेक्षमर्थेन्द्रियं निर्विकल्पकमपि न जनयेत् । यत्तु प्रथमं नाजीजनत् स्मरणसहकारिविरहात् । न हि नाजीजनत्कुशूलस्थं बीजमङ्कुरमिति न समवहितक्षित्यादिसहकारिग्राममप्यस्याजनकं भवति । न च जनकत्वाजनकत्वलक्षणौ विरुद्धधर्मसंसर्गौ भेदहेतुरित्युपपादयिष्यते क्षणभङ्गभङ्गे । स्यादेतत् । अतीतावस्था नेन्द्रियगोचरस्तस्य वर्तमानार्थे नियमात् । न च वर्तमानो ऽर्थः स्मरणगोचरः स्मरणस्यानुभवजनितसंस्कारोद्बोधजन्मनः पूर्वानुभवगोचरं प्रति नियमात्तस्माद्भिन्नविषयतया नेन्द्रियसहकारिता स्मरणस्य न हि रूपविषयाः सहस्रमपि नयनप्रदीपादयः शब्दविषयस्य श्रवणः सहकारितामापद्यन्त इति । तत्किं भवतां यत्र गन्धबुद्ध्यनन्तरं चाक्षुषरूपविज्ञानं तत्र गन्धज्ञानं न समनन्तरप्रत्ययः । तथापि

चक्षूरूपविषयं न गन्धविषयस्य ज्ञानस्य सहकारि भवितुमर्हतीति । भिन्न-
विषयत्वादेव । अथान्वयव्यतिरेकनिबन्धनः कार्य्यकारणभावो न समान-
विषयत्वमनुविधीयत इत्युच्येत तदस्माकमपि समानम् । नन्वतीतावस्था-
विशिष्टत्वमस्य नेन्द्रियसन्निकृष्टमिति कथं प्रत्यक्षम् । यत्किंचिदिन्द्रियसंबद्धं
तत् प्रत्यक्षं तथा सत्याकाशपरमाण्वादयो ऽपि तत्संयुक्ता इति ते ऽपि
प्रत्यक्षाः प्रसज्येरन् । तस्माद् यदेवेन्द्रियजस्य ज्ञानस्य गोचरस्तत्प्रत्यक्षं न
न्त्विन्द्रियसंबद्धम् । नन्वसंबन्धे इन्द्रियं कथं तत्र ज्ञानं जनयति । तद्वा
ज्ञानं कथं प्रत्यक्षं प्रत्यक्षं चेत् कथमिन्द्रियार्थसन्निकर्षोत्पन्नमिति लक्षणं
प्रत्यक्षं व्याप्नोति अस्यैव प्रत्यक्षस्य लक्षणेनाव्यापनात् । मा भूदयमस्य पूर्व-
कालवर्तितेन्द्रियगोचरः । तथा ऽपि स्मरणसहकारिणा संस्कारसहकारिणा
वेन्द्रियेण समुपजनितं ज्ञानं तेन तद्विषयीक्रियत एव । न च यत्स्मरणसह-
कारिणेन्द्रियार्थसन्निकर्षेणोपजनितं तदिन्द्रियार्थसन्निकर्षेणोत्पन्नं न भवति ।
तथा च नाव्यापकमस्य लक्षणम् । ननु पूर्वापरावस्थाविषयं परामर्शज्ञानं
कथमेकं विषयभेदात् पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्मसंसर्गाच्च । तथा हि
तदिति परोक्षमिदमिति साक्षात्कारः न च विरुद्धधर्मसंसर्गे ऽप्येकत्वम् ।
त्रैलोक्यस्यैक्यप्रसङ्गात् । विषयभेदश्च पूर्वदेशकालपरदेशकालसंबन्धयोरे-
कस्य विरोधाद् यथा ह्येकस्मिन् पद्मरागमणौ गृह्यमाणे तदभावो व्यव-
च्छिद्यते यदि पुनर्न व्यवच्छिद्येत तदा ऽभावो न परिच्छिद्येत तस्य
स्वाभावव्यवच्छेदरूपत्वात् । तदभावाविनाभाविनश्च ये पुष्परागादय इति
ते ऽपि सर्वे व्यवच्छिन्ना भवन्ति । यदि पुनर्न व्यवच्छिद्येरन् स एव पुष्प-
रागाद्यात्मेति तदविनाभावी पद्मरागाभाव इति स एव तदेव पद्मरागाभावः
पद्मरागश्च स्यादिति दुर्घटमापद्येत । एवं तस्यैव पूर्वदेशकालसम्बन्धे गृह्य-
माणे तदभावव्यवच्छेदक्रमेण परदेशकालसंबन्धो व्यवच्छिन्नः पूर्वदेशकाल-
संबन्धाभावाव्यभिचारी । तथा च न परदेशकालसंबन्धस्याभावः । तथा ऽपि
यद्यसौ तद्देशकालसंबन्धात्तदन्यस्याभावो भवेत् । तथा सति स एव भवेन्न भवे-
च्चेति दुर्घटमापद्येत । तस्मात्पूर्वदेशकालसंबन्धादन्यो ऽपरदेशकालसंबन्ध
इति सिद्धो विषयभेद इति । अत्रोच्यते । यदि पारोक्ष्यापारोक्ष्यधर्मभेदात्पूर्वा-
परावस्थासमसंधानं भिद्येत हन्त भोक्त्रादिष्वपि विकल्पो भिद्येत । सो ऽपि

हि परोक्षश्चापरोक्षश्च विकल्पो ऽविकल्पश्च अर्थे परोक्षो विकल्पश्च स्वात्मनि त्वविकल्पः अपरोक्षश्च । तस्माद्विषयभेदादविरोध इति को विरोधः । यो ऽपि कालदेशसंबन्धभेदेन विषयभेद उक्तः सो ऽप्ययुक्तः यतो युक्तं यत्पद्मरागस्वरूपग्रहे तदभावो व्यवच्छिद्यत इति स्वाभावव्यवच्छेदात्मकत्वेन भावानां तदव्यवच्छेदे स्वरूपाग्रहणप्रसङ्गात् । कस्मात्पुनः पुष्परागादयो व्यवच्छिद्यन्ते । पद्मरागाभावाविनाभावादिति चेत् । अथैतदभावाविनाभावित्वं कुतस्त्यं तयोः कदा चिदपि तादात्म्यं नानुपलभ्य तेन तच तदभावाविनाभावः तथा च पूर्वापरदेशकालसंबद्धतादात्म्येनानुभूयमान इन्द्रियजेन विकल्पेन पद्मरागो न भिन्नो भवितुमर्हति । तस्मात्पूर्वापरदेशकालौ तत्संबन्धौ वा कामं भिद्येयाताम् । परस्पराभावाविनाभावात् । तयोरेकदा ऽपि तादात्म्येनाप्रतिभासनात् । न तु तदालिङ्गितस्वभावः पद्मरागमणिस्तस्य ताभ्यामन्यत्वात् । न चान्यभेदो ऽन्यभेदमापादयति अतिप्रसङ्गात् । न चेन्द्रियार्थसन्निकर्षाभावे ऽपि पूर्वापरावस्थापरामर्शात्मनो विकल्पस्य भावादनिन्द्रियजत्वमिति साम्प्रतम् । तथा सत्यविकल्पकमपि कामातुरस्य कामिनीं भावयतस्तद्विषयमिन्द्रियार्थसन्निकर्षं विना ऽपि दृष्टमिति नीलाद्यनुभवात्मानो ऽप्यविकल्पका अनिन्द्रियजाः प्रसज्येरन् । यदि तु नीलाद्यनुभवानां कामिन्यनुभवात् कथं चिद्विशेषं ब्रूयात् तदा ऽस्माकमप्यनिन्द्रियजेभ्यो विकल्पेभ्य उत्प्रेक्षाव्यापारेभ्यो ऽतीन्द्रियजानां दर्शनव्यापाराणां भेदः । न च विकल्पगतो दर्शनव्यापारो ऽनुभूयमानः सति संभवे निर्विकल्पकोपाधिरिति युक्तम् । सर्वा एव हीन्द्रियजा वृत्तयो विकल्पिका अविकल्पिका वा धारावाहिन्यो ऽक्रमक्रमिकया परस्परानपेक्षा एकमर्थमवगाहमाना उदयन्ते व्ययन्ते च न त्वमूषामन्योन्यमनुगम्यानुगन्तृतामीक्षामहे कस्मादिन्द्रियार्थसन्निकर्षलब्धजन्मानो विकल्पा दर्शनव्यापारा नाना इति युक्तमुत्पश्यामः । न च शब्दप्रत्यक्षयोर्वस्तुगोचरत्वे सत्यपि प्रत्ययाभेदः कारणभेदेन परोक्षापरोक्षभेदोपपत्तेः । न च वह्निसंयोगजन्मा शीतापनोदो वह्निज्ञानाद्भवितुमर्हति । न चैकेनोपाधिना सत्त्वेन विशिष्टे तस्मिन् गृहीते उपाध्यन्तरविशिष्टतद्ग्रहप्रसङ्गः स्वभावो हि द्रव्यस्योपाधिभिर्विशिष्यते न तूपाधयो वा तैर्विशिष्टत्वं वा तस्य स्वभावः । न च यत्स्वभावसंबन्धि स

स्वभावः तथा सत्यसम्बन्धित्वमेव न हि तदेव तेन संबध्यते । अपि च रूपज्ञानं विषयबहुत्वधर्मं नानापरमाणुविषयं न परमाणुस्वभावः । तत्स्वभावत्वे वा तेषां सर्वान्यत्वविशेषात् सर्वैरेव ते परमाणवो विदिताः स्युः । न चावस्तु एव स्वज्ञानेन रूपपरमाणवो विषयास्तस्येति वाच्यम् । अवस्तुस्य विषयत्वे ऽतिप्रसङ्गात् । स्वभाव एवार्थज्ञानयोः सम्बन्धो यदर्थो विषयो ज्ञानं च विषयीति चेद् । हन्तोपाध्युपाधिमतोरपि स्वभाव एव सम्बन्धो ऽस्तु तथा ऽपि विज्ञानार्थयोर्न स्वरूपाभेदः । क्षणभङ्गपरिणामनिराकरणे तु स्वभावातिरिक्तं सम्बन्धमुपपादयिष्यामः । तस्मान्नैकोपाध्यन्वितग्रहे सकलोपाध्यन्वितप्रत्ययप्रसङ्गः । यच्चैकविज्ञानगोचरयोर्न विशेषणविशेष्यभाव इति तत्र ब्रूमः । भिन्नज्ञानगोचरत्वेऽपि नासौ संभवति । न हि विशेषणज्ञानं विशेष्याविषयं विशेष्यमवच्छेत्तुमर्हतीति । एवं विशेष्यज्ञानमपि विशेषणाविषयकं न स्वविषयमवच्छिन्द्यात् । तयोः परस्परवार्तानभिज्ञत्वात् । ताभ्यां वासना ततो मानसप्रत्ययो विशेषणविशेष्याकार उत्पद्यते न त्वस्ति वास्तवो विशेषणविशेष्यभाव इति चेद् । अस्तु तावद् वास्तवावास्तवचिन्ता करिष्यते हीयमुपरिष्टात् । अस्तु भवतामस्य मानसत्वे प्रयासः स परमिन्द्रियजत्वमेव भवतु तथा सति दर्शनव्यापारत्वमस्य साक्षात्समर्थितं भवति । इतरथा हि निर्विकल्पकोपधानं कल्प्येत । नन्वविचारकमिन्द्रियज्ञानं कथं विशेषणविशेष्यादि सकलं समाकलयेत् । हन्त भो किं मानसमपि ज्ञानमाकलयितुमर्हति । आकलयति मनसस्तत्कारणस्य सर्वविषयत्वादिति चेद् । यदि पूर्वोक्तं विज्ञानं मनः कथं तस्य सर्वविषयता अस्माकं तु मनः सर्वविषयमपि अचेतनतया न विचारकं तस्मादात्मैव सकलज्ञानतज्जनितवासनाधारः स्मर्ता च प्रतिसंधाता च । यदाह । आत्मन्येव स्थितं ज्ञानं स हि बोद्धा ऽवगम्यते । स्मरणं चास्य सामर्थ्यं संधानादौ च विद्यते । स खल्विन्द्रियार्थसन्निकर्षादालोच्य ज्ञानिमन्तं समुग्धमर्थमुद्बुद्धसंस्कारसमुपजातपूर्वविषयानुस्मृतिसहायः प्रागेव चक्षुषा विकल्पयति गौरयमिति । यथा ऽऽह । करणं चेन्द्रियं बुद्धेः कर्ता चात्मा स चेतनः । स च स्मृतिसमर्थत्वात् सर्वार्थान् कल्पयिष्यति । तेनैकविज्ञानवेद्यत्वे यद्यपि ग्राह्यग्राहकभाव उपकार्योपकारकभावो नास्ति तथा ऽपि तदर्थालोचनानुगतस्मरणयोर्विशेषणविशे-

प्यभावावगाहि विज्ञानं प्रत्युत्पादकत्वमेवोपकारकत्वमस्ति । अर्थो हि रूप-
रूपिभावेन स्थितावपि नाथातज्जन्मना ज्ञानेन तथा गृहीतोऽपि तु स्वरूप-
मात्रेण न हि यावदस्ति तावद्गृहीतव्यं तेन तदेकदेशग्रहणेऽपि नाप्रमाणता ।
सविकल्पकं तु तत्सामर्थ्योत्थजन्म जात्यादिरूपतया द्रव्यं च रूपितया कल्पयेत् ।
यच्चाज्ञायमानमपीन्द्रियार्थसन्निकर्षप्रभवतया प्रत्यक्षं भवत्येव । अक्रम-
स्यापि क्रमवत्सहकारिभेदसमवधानवशात्क्रमेण कार्यकरणमुपपादयिष्यते ।
तत्सिद्धमेतद्द्विधाऽऽस्थापिता विकल्पाः स्वगोचरे प्रत्यक्षाः अव्यभिचा-
रित्वे सतीन्द्रियार्थसन्निकर्षजत्वात् । यो ह्येवंभूतः सर्वः प्रत्यक्षो यथा
ऽऽलोचनं तथा चैतत्तस्मात्तथेति । तस्मात्सविकल्पकप्रत्यक्षावरोधार्थं व्यवसा-
यात्मकपदमिति सिद्धम् । तदस्य सविकल्पकप्रत्यक्षावरोधार्थस्यान्वाचीयमानो
व्यवच्छेदः तद्व्यवच्छेदप्रतिपादनार्थं भाष्यमनुभाष्यान्वाचीयमानमेव व्यव
सायात्मकपदस्यार्थमाह दूराच्चक्षुषेति । न चैतन्मन्तव्यमिति भाष्यं ३६ । १।
व्याचिख्यासुर्दूषयति । संशयस्येति । ननु सतीन्द्रियार्थसन्निकर्षे पुरोव
र्तिनि द्रव्ये धूम इति वा रेणुरिति वा ज्ञानमुत्पद्यमानं कथमनिन्द्रियज-
मित्यत आह न हीति । कस्मान्मानस इत्यत आह संशीतिरिति ।
अपूर्वो हि शीङ् भावप्रत्ययान्तो विशेषापेक्षो विमर्शे वर्तते न चैकाधिकरणे
स्मर्यमाणौ मिथो विरुद्धौ धर्मावारोपयन्नेतमवधारयति । तथा चाधिक-
रणमात्रमपेक्षमिन्द्रियव्यापारो मनसा तु स्मरणसहकारिणैव पुरुषः
संशेते । अत एव विस्फारिताक्षः सौदामिनीसंपातात्सकृदालोक्य कं विस्ता-
मान्यवन्तं धर्मिणं समन्धकारे संदिग्धे तस्मान्मानस एवैष संशयो न
त्विन्द्रियज इत्यर्थः । तदेतत् परिहरन् तथेत्यादि भाष्यं व्याचष्टे । तच्च
नैवम् । कस्मात्संशयस्येति । उभयं त्विति । तु शब्दो मनोमात्रनिमित्तत्वं
व्यवच्छिनत्ति । तदनेन चक्षुषा हीत्यादि भाष्यं व्याख्यातम् । पश्यन्
समानधर्माणं धर्मिणं नावधारयति । विशेषतः संदिग्धे तस्मिन्नित्यर्थः ।
इन्द्रियेणोपलब्धं सन्निकृष्टं सन्निकर्षपूर्वकत्वादुपलब्धे मनसोपलभते जानीते
चक्षुःसहायेनेत्यर्थः । अथ भाष्यं । यच्च तदिन्द्रियानवधारणपूर्वकं
मनसा ऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयो न पूर्व-
मिति । अनवधारणशब्दो ऽत्र संशयज्ञाने दर्शनात् सत्यपीन्द्रियार्थव्यापारे

स्वभावः तथा प्रत्यसंबन्धित्वमेव न हि तदेव तेन संबध्यते । अपि च
रूपज्ञानविषयरूपपरमाणुष्वेव नानापरमाणुविषयं न परमाणुस्वभावः । तत्स्व-
भावत्वे वा तेषां सर्वेषामविशेषात् सर्वैरेव ते परमाणवो विदिताः स्युः ।
न चासंबद्धा एव स्वज्ञानेन रूपपरमाणवो विषयास्तस्येति वाच्यम् । असंब-
द्धस्य विषयत्वे ऽतिप्रसङ्गात् । स्वभाव एवार्थज्ञानयोः संबन्धो यदर्थो विष-
यो ज्ञानं च विषयीति चेद् । हन्तोपाध्युपाधिमतोरपि स्वभाव एव संबन्धो
ऽस्तु तथा ऽपि विज्ञानार्थयोर्न स्वरूपाभेदः । क्षणभङ्गपरिणामनिराकरणे तु
स्वभावातिरिक्तं संबन्धमुपपादयिष्यामः । तस्मान्नैकोपाध्यन्वितग्रहे सकलोपा-
ध्यन्वितप्रत्ययप्रसङ्गः । यत्त्वेकविज्ञानगोचरयोर्न विशेषणविशेष्यभाव इति
तत्र ब्रूमः । भिन्नज्ञानगोचरत्वेऽपि नासौ संभवति । न हि विशेषणज्ञानं विशेष्या-
विषयं विशेष्यमवच्छेत्तुमर्हतीति । एवं विशेष्यज्ञानमपि विशेषणाविषयकं न
स्वविषयमवच्छिन्द्यात् । तयोः परस्परवार्त्तानभिज्ञत्वात् । ताभ्यां वासना
ततो मानसप्रत्ययो विशेषणविशेष्याकार उत्पद्यते न त्वस्ति वास्तवो विशे-
षणविशेष्यभाव इति चेद् । अस्तु तावद् वास्तवावास्तवचिन्ता करिष्यते
ह्ययमुपरिष्टात् । यत्तु भवतामस्य मानसत्वे प्रयासः स परमिन्द्रियजन्यएव
भवतु तथा सति दर्शनव्यापारत्वमस्य साक्षात्समर्थितं भवति । इतरथा
हि निर्विकल्पकोपधान कल्प्येत । ननु अविचारकमिन्द्रियज्ञानं कथं विशेषण-
विशेष्यादि सकलं समाकलयेत् । हन्त भोः किं मानसमपि ज्ञानमाकलयि-
तुमर्हति । आकलयति मनसस्तत्कारणस्य सर्वविषयत्वादिति चेद् । यदि
पूर्वेक विज्ञान मनः कथं तस्य सर्वविषयता अस्माकं तु मनः सर्वविष-
यमपि अचेतनतया न विचारकं तस्मादात्मैव सकलज्ञानसञ्जनितवासना-
धारः स्मर्ता च प्रतिसंधाता च । यदाह । आत्मन्येव स्थितं ज्ञानं न हि
बोद्धा ऽधगम्यते । स्मरणे चास्य सामर्थ्यं संधानादौ च विद्यते । स खल्वि-
न्द्रियार्थसन्निकर्षादालोच्य गामिमन्तं संमुग्धमर्थमुद्बुद्धसंस्कारसमुपजातपूर्व-
विषयानुस्मृतिसहायः प्रागेव चक्षुषा विकल्पयति गौरयमिति । यथा ऽऽह ।
करणं चेन्द्रियं बुद्धेः कर्ता चात्मा स चेतनः । स च स्मृतिसमर्थत्वात् सर्वा-
र्थान् कल्पयिष्यति । तेनैकविज्ञानवेद्यत्वे यद्यपि ज्ञाप्यज्ञापकभाव उपका-
र्योपकारकभावो नास्ति तथा ऽपि तदर्थालोचनानुगतस्मरणयोर्विशेषणविशे-

दुःखादय इति । तदिदमुक्तं दिङ्नागेन । न सुखादिप्रमेयं वा मनो वा ऽस्तीन्द्रियान्तरम् । न च तत्सम्भवति । घ्राणादिसूत्रेण विभागपरेण निषेधादिति भावः । समाविभाष्यमिन्द्रियस्य वै सत इति । तद्व्याचिख्यासुर्गूढाभिप्रायः पृच्छति । कश्चैवमिति । आक्षेप्तुरुत्तरमिन्द्रियार्थेति । समा- ४० । धाता आह । नैष दोष इति । आक्षेप्तुरनुशयबीजमुद्घाट्य दूषयति । यत्तु सूत्रमिति । नेदं विभागपरं घ्राणादिसूत्रमपि तु लक्षणपरं तत्र चेन्द्रियमपि मनो न लक्षितं वैधर्म्यादित्यर्थः । वैधर्म्यमाह वैधर्म्यमिति । तत्र प्रमाणयति सर्वविषयं त्विति । वैधर्म्यान्तरं दूषयति भौतिकेति । कार्यस्य हि विशेषो भौतिकत्वाभौतिकत्वे भूतकार्यं भौतिकं यद्भूतकार्यं न भवति तद्भौतिकं न भवति । भूतकार्यत्वप्रतिषेधश्च तदन्यकार्यत्वं गमयति । विशेषनिषेधस्य शेषाभ्यनुज्ञानहेतुत्वात् । इतरथा त्वकार्यमेवोच्येत न त्वभौतिकमिति । तस्मादकार्यस्य मनसो ऽभौतिकत्वं कार्यधर्मो विरुद्धमित्यर्थः । अपि च वैधर्म्यान्मनोवत् श्रोत्रमपि न वक्तव्यमित्याह श्रोत्रे चेति । यदुक्तं स्वार्थ इति । भूतानि हि घ्राणादीनि श्रोत्रान्तानि मनस्तु न भूतमिति वैधर्म्यमित्यर्थः । निराकरोति तच्च नेति । दर्शयिष्यति हि वार्त्तिककारो यथा स्वार्थिको न कश्चिदपि प्रत्यय इत्यर्थः । आक्षेपहेतुमनुभाषते यत्पुनरिति । दूषयति तन्नास्तीति । तदनेन सति चेन्द्रियार्थसन्निकर्षे इत्यादि भाष्यं व्याख्यातम् । यच्चापरं वैधर्म्यं घ्राणादिभ्यो मनस उक्तं भाष्यकारेण तत्सिंहावलोकितेन दूषयति । स्वगुणानामिति । घ्राणादीनि यथा स्वस्वगुणेन गन्धादिना बाह्यं गन्धादि बोधयन्ति नैवं स्वगुणेन शब्देन श्रोत्रं बाह्यं शब्दं बोधयति तन्मनोवत् श्रोत्रमपि घ्राणादिसूत्रे न पठितव्यमित्यर्थः । भाष्योक्तेषु मध्ये ऽभिमतं वैधर्म्यमुपसंहरति । तस्मादिति । भूतत्वाभूतत्वलक्षणं वैधर्म्यं न भौतिकत्वाभौतिकत्वग्रहणेन शक्यमित्यवधारणाभिप्रायः । ननु युगपज्ज्ञानानुत्पत्तेर्ज्ञानकारणं मनो ऽस्तीत्यवगम्यते न पुनरस्येन्द्रियत्वमपि तद्भावानवगमे च नेन्द्रियार्थसन्निकर्षजं सुखादिज्ञानं शक्यं वक्तुमित्यत आह तन्त्रान्तरेति । तन्त्र्यते व्युत्पाद्यते अनेन तत्त्वमिति तन्त्रं शास्त्रं तद- ४१ । नेन मनसश्चेत्यादि भाष्यं व्याख्यातं तद्दूषितं दिङ्नागेन अनिषेधादुपात्तं

संशयो नेन्द्रियज इति देशको ऽभिमन्यते । तदनयोः संशयज्ञानयोर्मध्ये यत्तदिन्द्रियानवधारणपूर्वकमिन्द्रियार्थसन्निकर्षपूर्वकं मनसा ऽनवधार्यं संशयज्ञानमित्यर्थः । न पूर्वं यदुपरतेन्द्रियव्यापारस्य संशयज्ञानं दृष्टान्त-
१८ तया हृदि स्थितं शङ्कितुरित्यर्थः । तदेतद्भाष्यं व्याचष्टे तत्र यदिन्द्रियार्थेति । इन्द्रियार्थसन्निकर्षश्चासावनवधारणं चेति कर्मधारयः तत्पूर्वकं मनसा ऽनवधारणं संशयज्ञानमित्यर्थः । ननु स्मरणव्यवहितव्यापारमस्य कारणं नेन्द्रियमित्यत आह तस्य हीति । उपपादितमेतदधस्ताद् यथा स्मरणं नेन्द्रियव्यापारं व्यवधत्त इति । पूर्वं त्विति । दृष्टान्ततया पूर्वत्वम् । स्यादेतत् । मन एवेन्द्रियानपेक्षं बाह्ये प्रवर्त्ततइत्यभ्युपेयमन्यथा घटमहं जानामीति ज्ञानमनिमित्तं स्यात् । न तावदिन्द्रियजमान्तरे ज्ञाने चक्षुरादीनामप्रवृत्तेः । नाप्यनुमानादिष्वन्तर्भवति लिङ्गाद्यभावात् । तस्मान्मानसमेवेदम् । यदि च घटादौ बाह्ये न मनः प्रवर्त्तेत कथं घटमिति भवेज्ज्ञानामीत्येव स्यात् । न चार्थनिरूपणमन्तरेण ज्ञानरूपनिरूपणं तस्माद्बाह्याभ्यन्तरविषयं मनस्तथा च सर्व एव संशयो मानस इत्याशङ्क्याह भाष्यकारः सर्वत्र प्रत्यक्षविषय इति । यद्यप्ययमीदृशो ऽनुव्यवसायो मानसस्तथा ऽप्यन्धबधिरादीनामभावात्पूर्वे व्यवसायोत्पत्तौ चक्षुराद्यपेक्षणीयम् । अन्यथा ऽन्धबधिराद्यभावप्रसङ्गः । तथा च संशयज्ञानोत्पादे ऽपीन्द्रियार्थसन्निकर्षो ऽपेक्षणीय इत्यर्थः । तदिदं तस्य हीत्यादिना वार्त्तिकेन व्याख्यातम् । अव्यापकत्वेन लक्षणाक्षेपपरं भाष्यमात्मादिष्वित्यादि तद् व्याचष्टे इन्द्रियार्थेति । देशयति कथं पुनरिति । परिहरति इन्द्रियेति । मा भूदिन्द्रियसूत्रे पाठः तद्धि बाह्येन्द्रियलक्षणमान्तरं च मन इत्यत आह पृथक् चेति । न च सुखादौ प्रमाणान्तरमस्ति तस्मात्पारिशेष्यात्सिद्धं प्रत्यक्षत्वमित्याह प्रत्यक्षाश्चेति । ननु नैते प्रमेयाः स्वसंवेदनसिद्धत्वात् तत्किमत्र प्रमेयार्थेन प्रमाणेनेत्यत आह न च तेषामिति । ननूक्तं स्वसंवेदनतया न प्रमाकर्मभावः एषामित्यत आह । न चान्या गतिरिति । संवेदनत्वेन हि तेषां स्वसंवेदनता न चैते संवेदनमित्युक्तमधस्तादिति
१ ८ भावः । आक्षेपमुपसंहरति । तस्मादिति । भाष्ये चात्मादिषु सुखादिष्विति नित्यानित्याभिप्रायं यथाक्रममात्मसुखादु चात्मादयो नित्या अनित्याश्च सुख-

कोटयः । ज्ञानमव्यपदेश्यमिति ध्रुवं कृत्वा ऽव्यभिचार्य्यादिपदसंबन्धेन द्वे कोटी । अव्यभिचार्य्यव्यपदेश्यपदयोस्तु व्यवसायात्मकपदसंबन्धे कोटिरेका । इन्द्रियार्थसन्निकर्षाव्यपदेश्यपदयोश्चाव्यभिचार्य्यादेकैकपदसंबन्धे कोटिद्वयम् । अव्यभिचारिव्यवसायात्मकपदयोस्तु ध्रुवयोरिन्द्रियार्थसन्निकर्षोत्पन्नपदेन ज्ञानपदेन च प्रत्येकं सबन्धे कोटिद्वयमिति त्रिपदपरिग्रहेण दश कोटयः । चतुष्पदपरिग्रहेण पञ्च । इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमिति ध्रुवं कृत्वा व्यभिचार्य्यादेकैकपदसबन्धे द्वे कोटी । अव्यपदेश्यपदं त्यक्त्वा परकोटिः । ज्ञानपदं त्यक्त्वा चापरा । इन्द्रियार्थसन्निकर्षोत्पन्नपदं त्यक्त्वा तु पञ्चमी । पृच्छति । कस्मात्पञ्चपदपरिग्रहेणैकविंशतमकोटिपरिग्रहेणेतराः कोटयो व्यव- ४२ । १ च्छिद्यन्ते न ह्यत्र तद्व्यवच्छेदवाचकः कश्चिदस्ति शब्द इत्यर्थः । उत्तरं विशेषेणेति । विशेषणाभिधानप्रस्तावे शेषनिषेधोपन्यासो दृष्टान्तलाभाय एकदेशाभ्युपगमपक्षविषयत्वकोटिषु पक्षविषयतमी कोटिरेकदेश इत्यर्थः । शेषविधानं चेति । चाशब्द एवार्थः । तदेवं प्रत्यक्षलक्षणं समर्थ्य चानुबन्धं तावत्प्रत्यक्षलक्षणं विकल्पयितुमुपन्यस्यति । अपरे पुनरिति । लक्षणं व्याचष्टे ततो ऽर्थादिति । यत्तदोर्नित्याभिसंबन्धाद् यस्यार्थस्य यद्विज्ञानं व्यपदिश्यते यदि तत एव तद्भवति नार्थान्तराद्व्यपदेश्यमानं शुक्तिज्ञानं न प्रत्यक्षं व्यपदेशासंबन्धिनो ऽर्थान्तरात् शुक्तिरूपाज्जायमानं रजतेन व्यपदिश्यमानं शुक्तिज्ञानं न प्रत्यक्षं व्यपदेशकानुत्पत्ते. व्यपदेशकरजतस्य तत्राभावात् । एतस्य प्रत्यक्षाभासस्य व्यावृत्तिः सुप्रसिद्धेति तामुपेक्ष्यानुमानव्यावृत्तिमाह एतेनेति । कुतः । न हि तत एव व्यपदेशकादेव वह्नेः तद्विज्ञानमनुमानं भवति । किं तु यत्र वह्निरस्ति तत्र ततश्च यत्र तु दृष्टमात्रस्य वह्नेरुपरमात्तुपरतो धूमस्तत्रान्यतश्च तद्भवति स्मर्यमाणाद्धूमादस्ति तद्व्यपदेशके वह्नौ सतो ऽर्थादित्यत्रार्थविशेषणं तत इति तत्संगतश्चैवकारो ऽयोगव्यवच्छेदे वर्तते यथा चैत्रो धनुर्द्धर एवेति । तेन यत्रैव तद्योगः तद्प्रत्यक्षमित्यर्थः । तदेतल्लक्षणं दूषयति । अत्रार्थपदग्रहणमनर्थकं न हि ज्ञानव्यपदेश आत्मना वा इन्द्रियेण वा संभवति । शङ्कते अवधारणार्थं इति । अयोगव्यवच्छेदेनैतदवधारणं विशेषणसङ्ग- ,, । २१ तश्चैवकारो ऽयोगं व्यवच्छिनत्ति । भवति चार्थपदे कस्येदं विशेषणमिति

चेदन्येन्द्रियस्तत्र वृथा । तद्दूषयितुमुपन्यस्यति । न शेषेति । तद्दूषयति ।
९ न तन्त्रयुक्तीति । सर्वस्य तन्त्रान्तरे लोके च सिद्धत्वादवक्तव्यताया
स्वमतमपि नास्ति । वचनलिङ्गं हि मतज्ञानं न चाननुमते निषेधमात्रं
शक्यं कर्तुमभावस्य भावनिरूपणाधीननिरूपणत्वादिति भावः । सिद्धम
र्थमुपसंहरति । तस्मादिति । प्रकृतमुपसंहरति । तदिति । तदेव लक्ष
णपदानि व्याख्याय विमृशति समस्तमिति । अभिमतमाह समस्त-
मित्याह भाष्यकारः । हेतुमाह यस्मादिति । इन्द्रियार्थसन्निकर्षो-
त्पन्नं ज्ञानमव्यभिचारीति हि प्रत्यक्षलक्षणमनवयवेन समानासमानजाती
यव्यावृत्तं शक्यमेव लक्षयितुम् । नो खल्वयमसाधक इति ज्ञानमिन्द्रि-
यजं शब्दजं समर्थति । तद्धि द्रव्यगोचरं वा भवेद् वाच्यत्वगोचरं वा
वाच्यत्वविशिष्टद्रव्यगोचरं वा । तत्र द्रव्यमैन्द्रियकमेव न शाब्दमित्यशक्यं
तज्ज्ञानं व्यवच्छेत्तुमनभिमतं च । वाच्यत्वगोचरं तु ज्ञानं शाब्दमेव
अन्यथा ह्यश्रुतशब्दोऽप्यारण्यकोऽयमेवैन्द्रियसन्निकर्षाद्द्रव्यशब्दवाच्य
इति गृह्णीयात् । वाच्यत्वविशिष्टद्रव्यज्ञानमपि शाब्दमेव वह्निविशिष्टधूम-
ज्ञानमिवानुमानिकमन्यथा तदप्यैन्द्रियकमिति न तन्निराकरणाय मानान्त
रमास्थेयम् । अथ न वाच्यत्वं नाम मीमांसकानामिव किं त्विन्द्रियमपि
तु संकेतमात्रमेव स्यादिष्टं प्रत्येतव्यमिति । तथाऽपि तन्न्याये शब्द एव ।
अथायमप्यैन्द्रियक एव तत्र गुरूपदिष्टा गाथा पठितव्या । शब्दजत्वेन
शाब्दं चेत् प्रत्यक्षं चाक्षजन्मतः । स्पष्टग्रहणरूपत्वाद्युक्तमैन्द्रियकं हि
तदिति । तस्मान्नोभयजं ज्ञानं यद्वारणायाव्यपदेश्यपदम् । कैश्चिदुक्तं व्यव
सायात्मकपदेन संशयज्ञानप्रत्यक्षस्य निराकरणमन्याय्यमिति संशयेत्युक्तम् ।
अन्वयं दर्शयित्वा व्यतिरेकमाह यदीति । उपसंहरति तस्मादिति ।
२।८ द्वेधास्थिताः कोटीर्गणयति । तत्रेति । द्विपदपरिग्रहेण दर्शयतीन्द्रियार्थसन्नि
कर्षोत्पन्नपदं ध्रुवं कृत्वा ज्ञानादेरेकैकपदसम्बन्धेन चतस्रः कोटयः ज्ञानं च
ध्रुवं कृत्वा अव्यपदेश्यादेरेकैकपदसम्बन्धेन तिस्रः । एवमव्यपदेश्यपदं ध्रुवं
कृत्वाऽव्यभिचार्यादेरेकैकपदसम्बन्धेन द्वे कोटी अव्यभिचारिपदं ध्रुवं कृत्वा
व्यवसायात्मकसम्बन्धेन कोटिरेका । त्रिपदपरिग्रहेणापि दर्शयति इन्द्रियार्थ-
सन्निकर्षोत्पन्नं ज्ञानमिति ध्रुवं कृत्वाऽव्यपदेश्यादेरेकैकपदसम्बन्धेन तिस्रः

तस्य व्यपदिश्यते न तत्तस्तद्भवतीत्यतस्मादपीत्युक्तम् । तस्मात्तत्र यत्र यद्भवति तत्प्रमितिः न त्वेवं मिथ्याज्ञानं तद्धि ततश्चातत्तश्च भवतीत्यर्थः । परिहरति । न ह्यतस्मादारोपितादृषातथाधतस्तन्मिथ्याज्ञानं भवति किं [illegible] ४३ । १ ततो भवति । यस्य सामान्यरूपस्य व्यपदिश्यतइदमिति तत एव । समारोपितं तु रजतमस्य विषयो दृश्यमानाकारतया तदिदमुक्तमतस्मिंस्तद्रूपतीति । एवं तत्पदमाधायशेषादृशमाह इत्याह ततोऽग्रहणमिति । तथा चातिव्याप्तिरित्याह तथा चेति । अभ्युपेत्य दूषणान्तरमाह यद्यप्येतदिति । यतो भवति ज्ञानं स ग्राह्यो ऽर्थः कारणं ग्राहकं च ज्ञानं कार्यं तयोरयुगपद्भावात् । वर्तमाना ज्ञानमतीते मिथ्येति न प्रत्ययं स्यात् । तत्समानकालयोस्तु कार्यकारणभावाभावात् । ततो ऽर्थादिति नास्तीति भावः । शङ्कते नाशोत्पादाविति । क्षणिकत्वाद्भावानां कारणस्य नाशः कार्यस्योत्पाद इत्येकः कालः तथा ऽपि कारणस्य ग्राह्यता भिन्नकालस्यापि स्वसदृशज्ञानजननमेव हि तस्य तज्ज्ञानं प्रति ग्राह्यत्वं नान्यत् । यथा ऽऽह भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षममिति । न चैतावता मिथ्यात्वमर्थाहितस्य नीलाकारस्य ज्ञानवर्तिनो वर्तमानत्वादिति भावः । निराकरोति तच्च नेति । पूर्वापरकालकलाविकलतया क्षणिकता न क्वचिदपि । विद्युज्ज्वालादेरप्याशुविनाशिनो द्विचाद्विक्षणावस्थानादित्यर्थः । पूर्वोक्तस्यानुपेतस्यदपस्य यदेत्याह विनष्टश्चेति । अनहंकारास्पदमधातादिरूपं विज्ञानाद्भिन्नं नीलाद्यनुभूयते न तु विज्ञानात्मकम् । तथा च यदि *विच्छेदसहो मिथ्या तथा सति ज्ञानमेतस्मिन् मिथ्येति कथं प्रत्ययम् ।* सम्यग्ज्ञानभेदस्य तथाभावात् । न चार्थाहिताकारवेदनमर्थवेदनम् । भ्रान्त्यप्रसङ्गात् । न च गोत्वमुख्यलक्षणा गिरां गतयो ज्ञानेषु शक्या नियोजयितुम् । भिन्नप्रस्थानत्वात् । तस्मान्निराकारं ज्ञानमर्थमात्मनो भिन्न गोचरयतीति वाच्यम् । स चेत्कारणं विनष्टस्य प्रत्यक्षतेति स्यात्तथा च वर्तमानाभमवर्तमानं गोचरयतीति मिथ्यात्वमप्रत्यक्षत्वं च स्यादिति भावः । यौगपद्ये [illegible] नास्त्युदाहरणं सर्वस्य क्षणिकत्वनिषेधादिति दूषयति । तुल्यमिति चेत् । निराकरोति । तच्चेति ।

विशेषणसंगतो नैवकारो ऽयोग व्यवच्छिन्द्यादिति भाव । निराकरोति ।
२ तत्रेति । तत इति सर्वनाम्न सन्निहितविशेष्यापेक्षत्वात् । अन्यथा ऽभिधा-
नापर्यवसानाद् यस्य तद्व्यपदिश्यतइति व्यपदेशसंबन्धी विशेष्य प्राप्यतइ
वेति सिद्धान्त्येव विशेषणत्वम् । अभ्युपेत्य त्ववधारणमात्रे ऽप्यस्ति दोष
इति मन्यमानेनान्यच्च इत्युदाहृतम् । अन्ययोगव्यवच्छेदे तदर्थं हि सदेवान्य-
द्व्यवच्छिद्यते यद्विरोधि न पुनरन्यमात्रं यथा ऽऽह्नु' नियमस्तद्विरोधान्न कल्पते
नाविरोधिन इति ।

स्यादेतत् । तत इत्युच्यमाने यतस्तत स्यात्तथा चानुमानाद्यपि
लिङ्गज्ञानादेस्तत उपजायतइति प्रत्यक्ष प्रसज्येतेति तन्निवृत्त्यर्थमर्थादिति
वक्तव्य न हि तदर्थाज्जायते अपि तु प्रत्यक्षमेवेत्यत आह एतेनेति ।
यस्य तद्व्यपदिश्यतइत्यपेक्ष्य तत शब्दसामर्थ्येनानुमानादिव्युदासो ऽपि
प्रत्युक्त । यच्च ततःशब्दस्य व्यावर्त्त्यान्तरमुक्त तदपि दूषयति । यत्पुनरे-
तदिति । यदि यस्य व्यपदिश्यते ज्ञान तत् प्रत्यक्ष ततो घट इत्यपि
ज्ञान प्रत्यक्ष प्रसज्येत । तदपि घटस्य व्यपदिश्यते न तु ततो घटाद्भवति
तस्य विचारासहतया परमार्थसत्त्वाभावेन संप्रति सतो विज्ञानं प्रति कारण
त्वाभावात् । तेन तन्निवारणार्थं तत इत्युक्त तदेतन्न बुध्यामहे कथमप
विध्रमिति । शङ्कते यदीति । रूपादिपरमाणव एव निरन्तरोत्पादा परमा-
र्थसन्तो भिन्ना स्वविज्ञानस्याविकल्पस्य जनका तेषा तु नामात्य स्वेन
रूपेण चक्षुष्मती निर्विकल्पकपृष्ठभाविनी घट इति विकल्पिका बुद्धिस्तानेव
रूपादीनेकोदकाहरणादिक्रियाकारिणो भेदिन इव दर्शयन्ती प्रवृत्तिरित्यु
च्यते । निराकरोति । न हि रूपादिभ्य इति । अनुशयबीजमुद्घाटयति ।
अथापीति । निराकरोति मनोमोदकेति । भवन्तु व्यतिरिक्ता' किमेता
१।१।४ वता ऽपीत्यत आह सर्वे चेति । यत्प्रवृत्तित्वेन भवतामभिमत ज्ञान
यच्चाविकल्पक तत्सर्वं विषयाद्भवतीति । तस्मात्ततोग्रहणं प्रवृत्तिनिवृत्त्य
र्थमनर्थकम् । मा भूत्प्रवृत्तिनिवृत्त्यर्थं मिथ्याज्ञाननिवृत्त्यर्थं भविष्यतीति दर्श-
यति । ननु च मिथ्याज्ञानमतस्मादपि भवति यथा पुरोवर्तिद्रव्यमिद
मिति व्यपदिश्यते रजतमिति च न तु शुक्तिरिति तेन यद्यपि सामान्यरू-
पेण तस्य व्यपदिश्यते ज्ञान ततश्च तद्भवति तथा ऽपि येन विशेषरूपेण

तस्य व्यपदिश्यते न तत्सद्भवतीत्यतस्मादपीत्युक्तम् । तस्मात्तत एव यद्भवति तत्प्रमिति न त्वेवं मिथ्याज्ञानं तद्धि ततश्चाततश्च भवतीत्यर्थः । परिहरति । न ह्यतस्मादारोपितादूपात्तथाभूतात्तन्मिथ्याज्ञानं भवति किं तु ४३ । १९ ततो भवति । यस्य सामान्यरूपस्य व्यपदिश्यत इदमिति तत एव । समारोपितं तु रजतमस्य विषयो दृश्यमानाकारतया तदिदमुक्तमतस्मिंस्तद्प्रतीतीति । अत्र लक्षणपदमाचार्योपात्तलक्षणाभाव इत्याह ततोऽग्रहणमिति । तथा चातिव्याप्तिरित्याह तथा चेति । अभ्युपेत्य दूषणान्तरमाह यद्यप्येतदिति । यतो भवति ज्ञानं स ग्राह्यो ऽर्थः कारणं ग्राहकं च ज्ञानं कार्यं तयोरयुगपद्भावात् । वर्तमाना ज्ञानप्रतीतिर्मिथ्येति न प्रत्यक्षं स्यात् । तत्समानकालयोस्तु कार्यकारणभावाभावात् । ततो ऽर्थादिति नास्तीति भावः । शङ्कते नाशोत्पादाविति । क्षणिकत्वाद्भावाना कारणस्य नाशं कार्यस्योत्पाद इत्येकः कालः तथा ऽपि कारणस्य ग्राह्यता भिन्नकालस्यापि स्वसदृशज्ञानजननमेव हि तस्य तज्ज्ञानं प्रति ग्राह्यत्वं नान्यत् । यथा ऽऽह भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः । हेतुत्वमेव तद्युक्तं ज्ञानाकारार्पणक्षममिति । न चैतावता मिथ्यात्वमर्थोपहितस्य नीलाकारस्य ज्ञानवर्तिनो वर्तमानत्वादिति भावः । निराकरोति तच्च नेति । पूर्वापरकालकलाविकलक्षणा क्षणिकता न विद्यते । विद्युज्ज्वालादेरप्याशुविनाशिनो द्विक्षणादिक्षणावस्थानादित्यर्थः । पूर्वोक्तस्यानुयोगस्यावसरं दर्शयन्नाह विनष्टश्चेति । अनहङ्कारास्पदमशाश्वतादिरूपं विज्ञानाद्भिन्नं नीलाद्यनुभूयते न तु विज्ञानात्मकम् । तथा यदि विच्छेदपक्षो मिथ्या तथा सति ज्ञानमेतस्मिन् मिथ्येति कथं प्रत्यक्षम् । सम्यग्ज्ञानभेदस्य तस्याभावात् । न चार्थोपहिताकारवेदनमर्थवेदनम् । मातृत्वप्रसङ्गात् । न च गौणमुख्यलक्षणा गिरां गतयो ज्ञानेषु शक्या नियोजयितुम् । भिन्नप्रस्थानत्वात् । तस्मान्निराकारं ज्ञानमर्थमात्मनो भिन्नं गोचरयतीति वाच्यम् । स चेत्कारणं विनष्टस्य प्रत्यक्षतेति स्यात्तथा च वर्तमानामवर्तमानं गोचरयतीति मिथ्यात्वमप्रत्यक्षत्वं च स्यादिति भाव. । यौगपद्ये ऽपि नास्त्युदाहरणं सर्वस्य सविकल्पकनिक्षेपादिति दर्शयति । तुल्यमिति चेत् । निराकरोति । सर्वेति ।

विशेषणसंगतो नैवकारो ऽयोगं व्यवच्छिन्द्यादिति भावः । निराकरोति ।
१ तत्रेति । तत इति सर्वनाम्नः सन्निहितविशेष्यापेक्षत्वात् । अन्यथा ऽभिधानापर्य्यवसानाद् यस्य तद्व्यपदिश्यतइति व्यपदेशसंबन्धी विशेष्यः प्राप्यत एवेति सिद्धत्येव विशेषणत्वम् । अभ्युपेत्य त्ववधारणमात्रे ऽप्यस्ति दोष इति मन्यमानेनाप्यत्र इत्युदाहृतम् । अन्ययोगव्यवच्छेदे तदर्थे हि तदेवान्यद्व्यवच्छिद्यते यद्विरोधि न पुनरन्यमात्रं यथा ऽऽहुः नियमस्तद्विरोधाच्च कल्प्यते नाविरोधिन इति ।

स्यादेतत् । तत इत्युच्यमाने यतस्ततः स्यात्तया चानुमानादपि लिङ्गज्ञानादेस्तत उपजायतइति प्रत्यक्षं प्रसज्येतेति तन्निवृत्त्यर्थमर्थादिति वक्तव्य न हि तदर्थाज्जायते अपि तु प्रत्यक्षमेवेत्यत आह एतेनेति । यस्य तद्व्यपदिश्यतइत्यपेक्ष्य ततःशब्दसामर्थ्येनानुमानादिष्वुदासो ऽपि प्रत्युक्तः । यच्च ततःशब्दस्य व्यावर्त्यान्तरमुक्तं तदपि दूषयति । यत्पुनरेतदिति । यदि यस्य व्यपदिश्यते ज्ञानं तत् प्रत्यक्षं ततो घट इत्यपि ज्ञानं प्रत्यक्ष प्रसज्येत । तदपि घटस्य व्यपदिश्यते न तु ततो घटाद्भवति तस्य विचारासहतया परमार्थसत्त्वाभावेन संवृतिः सतो विज्ञानं प्रति कारणत्वाभावात् । तेन तन्निवारणाय तत इत्युक्तं सदेतन्न बुध्यामहे कथमपविप्रमिति । आहुरे यदीति । रूपादिपरमाणव एव निरन्तरोत्पादाः परमार्थसन्तो भिन्ना स्वविज्ञानस्याविकल्पस्य जनकाः तेषां तु नानात्वं स्वेन रूपेण संवृण्वती निर्विकल्पकपृष्ठभाविनी घट इति विकल्पिका बुद्धिस्तानेव रूपादीनेकोदकाहरणादिक्रियाकारिणो भेदिन इव दर्शयन्ती संवृतिरित्युच्यते । निराकरोति । न हि रूपादिभ्य इति । अनुशयबीजमुद्घाटयति । यथार्थेति । निराकरोति मनोमोदकेति । भवन्तु व्यतिरिक्ताः क्रियेता-
१।४ वता ऽपीत्यत आह सर्वं चेति । यत्संवृतित्वेन भवतामभिमत ज्ञानं यद्वाविकल्पक तत्सर्वं विषयाद्भवतीति । तस्मात्ततोग्रहणं संवृतिनिवृत्त्यर्थमनर्थकम् । मा भूत्संवृतिनिवृत्त्यर्थे मिथ्याज्ञाननिवृत्त्यर्थं भविष्यतीति दर्शयति । ननु च मिथ्याज्ञानमतस्मादपि भवति यथा पुरोवर्तिद्रव्यमिदमिति व्यपदिश्यते रजतमिति च न तु शुक्तिरिति तेन यद्यपि सामान्यरूपेण तस्य व्यपदिश्यते ज्ञान ततश्च तद्भवति तथा ऽपि येन विशेषरूपेण

ग्राह्यं तु प्रत्यक्षमेवेति भावः । अन्यथा विकल्पस्य प्रत्यक्षत्वप्रसङ्गात् । तथा
च व्याघात इत्यर्थः । जैमिनीयप्रत्यक्षलक्षणं दूषयति । **सत्संप्रयोग** इति । ४५ । १०
यथाश्रुतस्यातिव्याप्तिं सच्छब्देनापि प्रयोगस्य समीचीनता प्रतिपाद्यते । सा
च मिथ्याप्रत्यये ऽपि तुल्या । व्यत्यये ऽपि बुद्ध्या बोध्यस्योपस्थापनात्
तद्धीति बोध्यं परामृशति । अस्ति च मिथ्याज्ञाने ऽपि बोध्येन सम्बन्ध
इन्द्रियाणां बोध्यं हि पुरोवर्ति द्रव्यम् । अथ यथा बोध्यं तादृशं नास्ति
सम्बन्ध इन्द्रियाणां रजतत्वस्य प्रकारस्यासन्निधानात् । इत्यव्यापकत्व
लक्षणदोषः । प्रत्यभिज्ञाया तत्ताप्रकारस्य इन्द्रियेणासम्बन्धात् । अपि च तामा
करे दर्शने अनुमानादिज्ञानमात्मनि प्रत्यक्षं न भवेन्न हि तत् सत्सम्प्रयोग-
जम् । तस्मादेतदपि परिभावनीयं सूरिभिरिति । सार्वगम्यस्यापि लक्षणा-
मयुक्तमित्याह **श्रोत्रादिवृत्तिरिति** । पञ्चानां खल्विन्द्रियाणामर्थाकारेण
परिणतानामालोचनमात्रं वृत्तिरिष्यते सा च संशयादिव्यापकत्वादलक्षणमिति ।
तस्माद्युक्तमिन्द्रियार्थसन्निकर्षोत्पन्नमित्येतदेव लक्षणमिति ॥

### प्रत्यक्षलक्षणं समाप्तम् ॥

प्रत्यक्षलक्षणानन्तरमनुमानलक्षणपरं सूत्रं पठति ॥

**अथ तत्पूर्वकं त्रिविधमनुमानमिति ।**

अथानुमानमिति विद्धृषत् प्रमाणविशेषरूपलक्ष्यानुवाद एव नाप्रत्यक्षं
प्रमाणमित्यप्रामाण्यमनुमानस्य सुहृदः प्रतिक्षिपति । दृष्टप्रामाण्याप्रामाण्य-
विधानव्यक्तिसाधर्म्येण हि कासां विज्ञप्तीनां प्रामाण्यमप्रामाण्यं वा विद-
धीत । दृष्टसाधर्म्यं चानुमानमेवेति कथं तेनैव तस्याप्रामाण्यम् । अपि
चानुमानमप्रमाणमिति वाक्यप्रयोगो ऽयं विप्रतिपन्नं संदिग्धं वा पुरुषं
प्रत्यर्थवान् न च परपुरुषवर्तिनो देहधर्मा अपि संदेहाज्ञानविपर्यासा
गौरत्वादिवत् प्रत्यक्षा वीक्ष्यन्ते न च तद्वचनात् प्रतीयन्ते वचनस्यापि प्रत्य-
क्षादन्यस्याप्रामाण्योपगमात् । पुरुषविशेषमनधिकृत्य तु वचनमनर्थकं प्रयु-
ञ्जानो नायं लौकिको न परीक्षक इत्युन्मत्तवदनवधेयवचनः स्यात् परि-
शिष्टं तु परीक्षापर्वणि निवेदयिष्यते । तस्मादकामेनापि प्रमाणमनुमानमुपेत-
व्यमिति । लक्ष्यं प्रमाणमिदमनुमानमनूद्य तत्पूर्वकमिति लक्षणं विधत्ते ।
अथेत्यानन्तर्ये यतः प्रत्यक्षमनुमानस्य हेतुरिदानीमनुमानं हेतुमद् व्युत्पाद्य- ४६ ।

१९ संप्रति दिग्नागस्य लक्षणमुपन्यस्यति । अपर इति । दूषयितुं कल्प-
। १ नास्वरूपं पृच्छति । अथ केयमिति । लक्षणवादिन उत्तरं नामेति । यदृच्छा-
शब्देषु हि नाम्ना विशिष्टोऽर्थ उच्यते डित्थेति । जातिशब्देषु जात्या गौरय-
मिति । गुणशब्देषु गुणेन शुक्ल इति । क्रियाशब्देषु क्रियया पाचक इति ।
द्रव्यशब्देषु द्रव्येण दण्डीति सेयं कल्पना यत्र ज्ञाने नास्त्यर्थतः
स्वरूपतो वा तत्कल्पनयाऽपोढं तत्प्रत्यक्षं तदिदमाह यत्र किल न नाम्ना
ऽभिधीयते अर्थतः स्वरूपतश्च न जात्यादिभिर्व्यपदिश्यते । अव्यभिचाराय
विषयकारणत्वमाह **विषयस्वरूपानुविधायीति** । प्रमाणत्वमाह **परिच्छेदकं**
व्यवस्थापकम् । ज्ञानतामस्य दर्शयति । **आत्मसंवेद्यं** स्वसंवेदनादेव तस्य
कल्पनाहितत्वमपि । यथा ऽऽह प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यतीति ।
तत्प्रत्यक्षमिति । तदेतल्लक्षणपदतत्समुदायव्यापारनिरूपणेन दूषयति ।
**स इदमिति** । अथ नेति । विकल्पयोनयो हि शब्दास्तद्गोचरमभिनिविशन्ते
यद्विकल्पा गृह्णन्ति यच्चाध्यवस्यन्ति तदुभयमप्यन्यव्यावृत्तिरूपमवस्तु तस्मान्नि-
र्विकल्पकं ज्ञानं तद्गोचरं वा परमार्थसद्गोचरयन्ति विकल्पाः शब्दाश्चेत्ययम-
भिसंधिः । अपि चास्य वाच्यत्वे भवदभ्युपगतप्रामाण्यागमविरोध इत्याह
अनित्यादीति । शङ्कते अर्थेति । स्वमसाधारणं रूपं व्यावृत्तमिति यावत् ।
निराकरोति । **सर्वे ऽर्था इति** । न हि यथा सम्यग्ज्ञानमधिकृत्य प्रत्यक्षा-
दिलक्षणं कृतं कीर्तिना तथा दिग्नागेन येनाधिकाराद् ज्ञाने व्यवतिष्ठेत कल्पना-
पोढमिति भावः । ननु यदि स्वरूपतो नाभिधीयते नाभिधेयं तर्हि वस्तु प्रस-
ज्येत । तथा चावास्तवः स्याच्च शाब्दो व्यवहार इत्यत आह **सर्वस्य चेति** ।
सामान्यविशेषतद्वद्भेदाद् वस्तुत्रयं तत्र तद्वद्वस्त्वधिकृत्योक्तं **द्वावाकाराविति** ।
सामान्येनेत्याकारेणाभिधीयते सामान्यान्वितमित्यर्थः । ब्राह्मण इति । मनु-
ष्यत्वजातिमानित्यर्थः । विशेषमाकारमभिप्रेत्य स्वरूपतो न व्यपदेश्यमित्युक्तं
न तु सर्वथेति भावः । प्रकृते योजयति एवमिति । आशङ्क्य पूर्वोक्तमति-
प्रसङ्गं स्मारयति । यदिदं चेति* । अथाश्वकर्णादिशब्दवदव्युत्पन्नः कल्प-
नापोढशब्दः प्रत्यक्षस्वरूपस्य वाचक इति शङ्कते । अर्थेति । निराक-
५। ६ रोति । एवमपीति । भवतु कल्पनापोढशब्दो ऽव्युत्पन्नो मा वा भूद्

* यदि चेतीति ह पा पु पाठः ।

यार्थसन्निकर्षवत् तृतीयं प्रत्यक्षमेषितव्यम् । लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षमि-
त्यत्र संबन्धपदेनानुमानाङ्गं संबन्धं विवक्षन् परोक्षान् संबन्धविकल्पाननुमाना-
ङ्गभूतान्प्रतिक्षिपति । प्रत्यक्षमिति च तस्य प्रमाणमाह । तथा हि के चिदवि- ४६ । १
नाभावं तादात्म्यतदुत्पत्तिनिबन्धनमनुमानाङ्गमाहुः । द्विविधो ह्यर्थः प्रत्य-
क्षश्च परोक्षश्च । तत्र यो बुद्धेः साक्षादात्मीयं रूपं निवेशयति स प्रत्यक्षः । स
हि स्वविषयाया बुद्धेः जनक इति तमन्तरेण बुद्धिरात्मानमनासादयन्ती तस्य
सत्तां निश्चाययतीति युक्तम् । परोक्षस्तु बुद्धौ साक्षात्स्वरूपोपधानसामर्थ्यरहितो
ऽयुक्तप्रतिपत्तिरेव । न चान्यदर्शने ऽन्यकल्पना युक्ता अतिप्रसङ्गात् । नान्त-
रीयकतया त्वन्यो ऽप्यन्यं गमयेत् । स हि प्रतिबद्धस्वभावो यथाविधः
सिद्धस्तथाविधसन्निधानं सूचयति स च प्रतिबन्धो न दर्शनमात्रादवसेयस्तथा
सति च श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यप्यनुमानं
स्यात् । दृष्टावपि हि स्तो दर्शनादर्शने । तस्मात्तादात्म्यतदुत्पत्तिनिबन्धन
एव प्रतिबन्धः । यदाह कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो ऽदर्शनान्न न दर्शनात् ॥ तथा च लिङ्गविकल्पं विना न
लिङ्गिविकल्पः । न लिङ्गविकल्पो लिङ्गानुभवं विना न लिङ्गानुभवो लिङ्गं
विना न च लिङ्गं विना लिङ्गिनमिति लिङ्गिस्वलक्षणाप्रतिभासेऽपि पारंपर्य्येण
तत्प्रतिबन्धात्तथापि संवादको ऽनुमानविकल्प इति । कार्य्यकारणभावश्चे-
दमस्मिन्सति भवति सत्स्वपि तदन्येष्वस्मिन्नसति न भवत्येषमाकारो
ऽन्वयव्यतिरेकाभ्यामतिरिच्यते । तौ च प्रत्यक्षपृष्ठभाविना विकल्पेनावसी-
येते । तथा हि सत्यग्नौ धूम इति प्रत्यक्षमेव विकल्पानुगतव्यापारमध्य-
वस्यति । असति चाग्नौ न धूम इत्यपि प्रत्यक्षमेव । न ह्यग्निधूमानुपल-
म्भावन्यावस्तस्तद्विविक्तयस्तूपलम्भात् । नाप्यनयोर्व्यतिरेको ऽन्यस्तद्विविक्ता-
द्वस्तुनः । एवं तादात्म्यमपि विपर्य्यये बाधकप्रमाणोपपत्त्या निश्चेतव्यम् ।
यथा सत्त्वस्य क्षणिकतया सह तादात्म्यं विपक्षे ऽक्षणिके क्रमाक्रमयोर्व्यापक-
योरनुपलम्भान्निश्चीयते तस्मात्तादात्म्यतदुत्पत्तिभ्यामेव प्रतिबन्धो नान्यत
इति । अत्रोच्यते । सत्यं यत्किं चित् क्व चिद् दृष्टं तस्य यत्र प्रतिबन्धः
तद्विदस्तस्य तद्गमकं तथेत्यनुजानीमः । स एव तु प्रतिबन्धो न तावत-
दुत्पत्त्या सम्भवति । का पुनरियं तदुत्पत्तिर्धूमस्य किं वन्ह्यनन्तरं भावः

इत्यर्थः । लक्षणसूत्रतात्पर्यमाह अनुमानेति । तदेव स्फुटयति अनेनेति । समानजातीयानि प्रमाणान्तराणि प्रत्यक्षादीनि असमानजातीयानि चानुमानाभासादीनि यथा क्षणिकत्वादिषु सत्त्वादीनि । स्यादेतदतिव्यापकमेतत्तत्पूर्वकत्वं तदिति हि प्रत्यक्षं परामृशत्यानन्तर्यात् । तथा च प्रत्यक्षपूर्वकत्वमनुमानस्येवागमस्मृतिसंशयविपर्यासानामप्यस्तीति तान्यप्यनुमानं प्रसज्येरन् । अनुमानादिपूर्वकं चानुमानं न प्रत्यक्षपूर्वकमिति नानुमानं स्यादनुमानलक्षणेनाव्या-
२ पनात् । तस्मादव्याप्त्यतिव्याप्तिभ्यामलक्षणमेतदित्यत आह तत्पूर्वकमिति । तत्पूर्वकमित्यावृत्त्या विग्रहद्वयप्रदर्शनम् । तत्र प्रथमे विग्रहे तानीत्यनन्तरं सूत्रमुल्लङ्घ्य विभागसूत्रगताः प्रत्यक्षादयः संबन्धनीया योग्यत्वात् । यथाऽऽहुः यस्य येनाभिसंबन्धो दूरस्थस्यापि तस्य स इति । तदनेन लक्षणस्याव्याप्तिः परिहृता । तदिदमाह यदा तानीति । नन्वेवं प्रत्यक्षपूर्वकमिति भाष्यविरोध इत्यत आह पारम्पर्येणेति । पारम्पर्येण हि प्रत्यक्षपूर्वकत्वमुक्तं भाष्यकृता तस्मान्न विरोध इति । अतिव्याप्तिनिरासाय द्वितीयं विग्रहं विवृणोति । यदाऽपीति । ते इति विग्रहे अनन्तरसूत्रगतमेव प्रत्यक्षपदं संबध्यते । तथा च द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्य तदिदं तत्पूर्वकं प्रत्यक्षं सत् स्वविषये प्रत्यक्षमप्यनुमेयार्थप्रत्ययं कुर्वदनुमानम् । तदिदं तदित्युच्यते । अत्रापि प्रत्यक्षग्रहणमुपलक्षणार्थम् । अनुमाने इत्यादावपि द्रष्टव्यम् । स्यादेतत् । संबन्धग्रहणसमये यदसद्वर्यगोचरं प्रत्यक्षं प्रथममथ तदर्थविषये द्वितीये प्रत्यक्षे सति या तत्पदविषया स्मृतिरुत्पद्यते साऽपि प्रत्यक्षद्वयपूर्वा । एवं लिङ्गलिङ्गिसंबन्धस्मृतिरपि प्रत्यक्षद्वयपूर्वेति तदवस्थैवातिव्याप्तिरित्याशय-
१८ वान्पृच्छति । कतरे द्वे* इति । उत्तरं लिङ्गेति । सर्वसंदेहेष्विदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति भावः । न च द्वितीयलिङ्गदर्शनेन व्याप्तिस्मरणसमये निश्चयद्वयस्थमप्यस्ति व्याप्तिसंस्कारोद्बोधसमयजन्मना स्वजनितेन संस्कारेणास्य व्याप्तिस्मरणसमये विनाशात् । निश्चयद्वयस्यस्य द्वितीयलिङ्गदर्शनस्य व्याप्तिस्मरणेन सह यौगपद्येऽपि तयोः परस्परवार्तानभिज्ञतया मिथो घटनायोगात् । न चात्मा ते घटयिष्यतीति युक्तम् । वृत्त्या खल्वयं घटयेद् न स्वरूपतः तस्मादुभाभ्यामुत्पन्नं परामर्शज्ञानमिन्द्रि-

* द्वे तु पा पु नास्ति ।

यार्थसन्निकर्षजं तृतीयं प्रत्यक्षमेषितव्यम् । लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षमि-
त्यत्र सम्बन्धपदेनानुमानाङ्गं संबन्धं विवक्षन् परोक्तान् संबन्धविकल्पाननुमाना-
नङ्गभूतान्प्रतिक्षिपति । प्रत्यक्षमिति च तस्य प्रमाणमाह । तथा हि केचिदवि- ४६ । १
नाभावं तादात्म्यतदुत्पत्तिनिबन्धनमनुमानाङ्गमाहुः । द्विविधो ह्यर्थः प्रत्य-
क्षश्च परोक्षश्च । तत्र यो बुद्धेः साक्षादात्मीयं रूपं निवेशयति स प्रत्यक्षः । स
हि स्वविषयाया बुद्धेः जनक इति तमन्तरेण बुद्धिरात्मानमनासादयन्ती तस्य
सता निश्चाययतीति युक्तम् । परोक्षस्तु बुद्धौ साक्षात्स्वरूपोपधानसामर्थ्यरहितो
ऽनुमप्रतिपत्तिरेव । न चान्यदर्शने ऽन्यकल्पना युक्ता अतिप्रसङ्गात् । नान्त-
रीयकतया त्वन्यो ऽप्यन्यं गमयेत् । स हि प्रतिबद्धस्वभावो यथाविधः
लिङ्गस्तथाविधसन्निधाने सूचयति । स च प्रतिबन्धो न दर्शनमात्रलक्षणीयस्तथा
सति च श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यप्यनुमानं
स्यात् । इहापि हि स्तो दर्शनादर्शने । तस्मात्तादात्म्यतदुत्पत्तिनिबन्धन
एव प्रतिबन्धः । यदाह कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमो ऽदर्शनान्न न दर्शनात् ॥ तथा च लिङ्गविकल्पं विना न
लिङ्गिविकल्पः । न लिङ्गविकल्पो लिङ्गानुभवं विना न लिङ्गानुभवो लिङ्गं
विना न च लिङ्गं विना लिङ्गिनमिति लिङ्गिस्वलक्षणप्रतिभास्यपि पारंपर्येण
तत्प्रतिबन्धात्तथापि यथादृष्टो ऽनुमानविकल्प इति । कार्य्यकारणभावश्चे-
दमस्मिन्सति भवति सत्स्वपि तदन्येष्वस्मिन्नभवति । भवत्येवमाकारो
नान्वयव्यतिरेकाभ्यामतिरिच्यते । तौ च प्रत्यक्षपृष्ठभाविना विकल्पेनावसी-
येते । तथा हि सत्यग्नौ धूम इति प्रत्यक्षमेव विकल्पानुगतव्यापारमध्य-
वस्यति । असति चाग्नौ न धूम इत्यपि प्रत्यक्षमेव । स ह्यग्निधूमानुपल-
म्भाद्यन्यावस्थाद्विविक्तवस्तूपलम्भात् । नाप्यनयोर्व्यतिरेको ऽन्यस्माद्विविक्ता-
द्वस्तुनः । एवं तादात्म्यमपि विपर्य्यये बाधकप्रमाणोपपत्त्या निश्चेतव्यम् ।
यथा सत्त्वस्य क्षणिकतया सह तादात्म्यं विपक्षे ऽक्षणिके क्रमाक्रमयोर्व्यापक-
योरनुपलम्भान्निश्चीयते तस्मात्तादात्म्यतदुत्पत्तिभ्यामेव प्रतिबन्धो नान्यत
इति । अत्रोच्यते । सत्यं यत्किंचित् क्वचिद् दृष्टं तस्य यत्र प्रतिबन्धः
तद्विदस्तस्य तद्गमकं तथेत्यनुजानीमः । स एव तु प्रतिबन्धो न तादात्म्यत-
दुत्पत्त्या सम्भवति । का पुनरियं तदुत्पत्तिर्धूमस्य किं वह्न्यनन्तरं भावः

इत्यर्थः । लक्षणसूत्रतात्पर्यमाह अनुमानेति । तदेव स्फुटयति अनेनेति । समानजातीयानि प्रमाणतया प्रत्यक्षादीनि असमानजातीयानि चानुमानाभासादीनि यथा क्षणिकत्वादिषु सत्त्वादीनि । स्यादेतदतिव्यापकमेतत्तत्पूर्वकत्वं सर्वेति हि प्रत्यक्षपरामृष्टत्यानन्तर्यात् । तथा च प्रत्यक्षपूर्वकत्वमनुमानस्येवागमस्मृतिसंशयविपर्ययाणामप्यस्तीति तान्यप्यनुमानं प्रसज्येरन् । अनुमानादिपूर्वकं चानुमानं न प्रत्यक्षपूर्वकमिति नानुमानं स्यादनुमानलक्षणेनाव्या-
२ पनात् । तस्मादव्याप्त्यतिव्याप्तिभ्यामलक्षणमेतदित्यत आह तत्पूर्वकमिति । तत्पूर्वकमित्यावृत्त्या विग्रहद्वयप्रदर्शनम् । तत्र प्रथमे विग्रहे तानीत्यनन्तरसूत्रमुल्लङ्घ्य विभागसूत्रगताः प्रत्यक्षादयः सम्बन्धनीया योग्यत्वात् । यथा ऽसु' यस्य येनाभिसम्बन्धो दूरस्थस्यापि तस्य स इति । तदनेन लक्षणस्याव्याप्ति' परिहृता । तदिदमाह यदा तानीति । नन्वेवं प्रत्यक्षपूर्वकमिति भाष्यविरोध इत्यत आह पारम्पर्येणेति । पारम्पर्येण हि प्रत्यक्षपूर्वकत्वमुक्तं भाष्यकृता तस्मान्न विरोध इति । अतिव्याप्तिनिरासाय द्वितीयं विग्रहं विवृणोति । यदा ऽपीति । ते इति विग्रहे अनन्तरसूत्रगतमेव प्रत्यक्षपदं सम्बध्यते । तथा च द्वे प्रत्यक्षे पूर्वं यस्य प्रत्यक्षस्य लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्य तदिदं तत्पूर्वकं प्रत्यक्षं तत्तु स्वविषये प्रत्यक्षमप्यनुमेयार्थप्रत्ययं कुर्वदनुमानम् । तदिदं तदित्युच्यते । अत्रापि प्रत्यक्षग्रहणमुपलक्षणार्थम् । अनुमाने इत्यत्रापि द्रष्टव्यम् । स्यादेतत् । सम्बन्धग्रहणसमये यदेतदर्थगोचरं प्रत्यक्षं प्रथममथ तदर्थविषये द्वितीये प्रत्यक्षे सति या तत्सम्बन्धविषया स्मृतिरुत्पद्यते सा ऽपि प्रत्यक्षद्वयपूर्वा । एवं लिङ्गाल्लिङ्गिसम्बन्धस्मृतिरपि प्रत्यक्षद्वयपूर्वेति तदवस्थो ऽतिव्याप्तिरित्याशय-
१८ वान्पृच्छति । कतरे द्वे* इति । उत्तरं लिङ्गेति । सर्वसंदेहोच्छेदमुपतिष्ठते । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति भावः । न च द्वितीयलिङ्गदर्शनेन व्याप्तिस्मरणसमये विनश्यदवस्थमप्यस्ति व्याप्तिसंस्कारोद्बोधसमयजन्मना स्मरणजनितेन संस्कारेणास्य व्याप्तिस्मरणसमये विनाशात् । विनश्यदवस्थस्य द्वितीयलिङ्गदर्शनस्य व्याप्तिस्मरणेन सह यौगपद्ये ऽपि तयोः परस्परवार्तानभिज्ञतया मिथो घटनायोगात् । न चात्मा [illegible] घटयिष्यतीति युक्तम् । वृत्त्या परस्परं घटयेद् न स्वरूपतः तस्मादुभाभ्यामुत्पन्नं परामर्शज्ञानमिन्द्रि-

* इदं पु या पु नास्ति ।

करणत्वात् । न चानुपलब्ध्यन्तराण्यपि तन्निषेधे प्रभवन्ति । तस्मादनन्तर-मेवेत्यवधारणाभावान्नैवं कार्यकारणभावावधारणं युक्तम् । न च यदन्य-सहितानन्तरमुपलब्धं तत्तदन्यरहितात्तस्माद्भवद्विजातीयं भवति उक्तं हि रासभसहिताद् वह्नेर्गृहीतो धूमस्तादृश एव तद्रहिताद्वह्नेरिति । तस्मादेवंविधा शङ्कापिशाची स्वनिवारकं तदुत्पत्तिनिश्चयमास्कन्दती न शक्या निवारयितुम् । अपि चास्तु तदुत्पत्तिनिश्चयः तथाऽपि कस्मात्कारण-मन्तरेण न कार्यं भवति । तथा च सत्यनपेक्षतया कादाचित्कत्वविहति-रिति चेद् यथा ऽऽह । नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां कादाचित्कत्वसम्भव इति । अस्तु तर्हि सम्बन्धः स्वाभावि-कतया अन्यानपेक्षो ऽव्यभिचारी गमकत्वाङ्गम् । स च यो वा स वा भवतु कृतं कार्यकारणभावावधारणोपायेन । यथा चैतत्तथा ऽग्रे वर्ण-यिष्यामः । अपि च कार्यात् कारणमनुमीयमानं ततः पूर्वमेवानुमीयेत न तु वर्तमानकालम् । न हि हेतवः कार्यकालाः कार्योत्पादात्प्रागपि तु तत्पूर्वकालाः । न हि नदीपूरभेदः स्वचलनसमयवर्ति वर्षं गमयत्यपि तु तत्पूर्वकालम् । तत्काले तु न तस्य कारणमत एव साधकबाधकप्रमाणा-भावेन तत्कालवर्तिनि वर्षे संदिहाना न तदर्थिनः प्रवर्तन्ते । एवं धूमा-दप्यग्निस्तत्पूर्वकाल एवानुमीयेत न तु वर्तमानकालः तथा च सति न तदर्थिनस्तत्र निःशङ्कं प्रवर्तेरन् । अपि च रसादन्यद्रूपं रससमानकालमनु-मिमते ऽनुमातारः न चानयोरस्ति कार्यकारणभावः तादात्म्यं वा । यद्युच्येत तत् पूर्वेभ्यो रूपरसगन्धस्पर्शक्षणेभ्यो रसक्षणो जायते । स स्वका-रणं पूर्वरूपक्षणमनुमापयन् यादृशा तेन जनितस्तादृशमेवानुमापयति स चानुमापकरसक्षणसमानकालरूपक्षणान्तरजनक एव स्वकारणमिति तादृ-शमेव गमयति तथा च कार्यसमानकालरूपानुमानसिद्धिः । एतेन धूमानु-मानं व्याख्यातम् । यथा ऽऽह एकसामग्र्यधीनस्य रूपादेरसतो गतिः । हेतुधर्मानुमानेन धूमेन्धनविकारवदिति । अत्रोच्यते । यो ऽयं गमकर-ससमानकालो रूपक्षणः स [illegible] तज्जनकस्य रूपक्षणस्य स्वभाव उत तत्स्वभावादुद्रिक्तो ऽस्वभावभूतः । न तावत्स्वभाव एकस्मिन्नभिन्ने जन्य-जनकभावानुपपत्तेः । तस्य भेदापन्नत्वात् । तदस्वभावभूतः कथं तद-

स तादृशो ऽस्ति रासभस्यापि तत्प्रतिबद्धो ऽपि धूम स्यात् । अथ तदनन्तरमेव भाव न च रासभानन्तर भवन्नपि तदनन्तरमेव भवति तस्मिन्सत्यप्यसत्यग्नौ तदभावात् । असत्यपि तस्मिन्सत्यार्द्रेन्धनवति वह्नौ तद्भावात् । अथ यद्यपि धूमस्य वह्निभावानुविधान तत्रोपलब्ध तथा ऽपि देशान्तरादिषु तद्भावो ऽस्य कुतस्त्य । तथा हि भूयो भूयो रासभे दृष्टे धूमो दृष्टस्तदभावे चादृष्टो न स तत्कार्य्य । तज्जातीयस्यैव धूमस्य रासभ विना सति वह्नौ भावादेव सत्यप्यग्नौ पिशाचेन जनितो धूम क्व चिद्वेश्मादौ तज्जातीय एव रासभवह्न्यभावे ऽपि पिशाचादेव भविष्यतीत्यवश्य शङ्कया भाव्य नियामकमपश्यताम् । न च सति भावमात्र नियामक तस्य रासभादिष्वविशेषात् । तदनन्तरमेवेति चावधारणस्य च शङ्कायामभावात् । अवधारणेन तु शङ्कापनयने परस्पराश्रयप्रसङ्गात् । स्यादेतत् । यो यो धूमो दृष्ट स सर्वस्तावदार्द्रेन्धनसहितवह्न्यनन्तरमेव न पिशाचानन्तर स च कादाचित्कतया निमित्तमपेक्षमाणो यदनन्तरमेव गम्यते तदेवाप्रतीतव्यभिचार निमित्त करोति न तु प्रतीतव्यभिचार रासभादि । नापि सर्वथा ऽनुपलब्धपूर्वपिशाचादि यदि न तन्निमित्त कस्माद्विना ऽपि वह्नि क्व चिद्धूमो नोपलभ्यते । अथासौ सर्वथा वह्निसहित तथा सत्यार्द्रेन्धनवत् कथ वह्निरपि न कारण कारण चेत् कथ तमन्तरेण धूमभावशङ्का । अकारणस्य हि कार्य्यस्य नित्य सत्त्वमसत्त्व वा स्यादनपेक्षत्वान्न कादाचित्कत्वम् । नाप्यनेक कारणमकारणत्वप्रसङ्गादेव । वह्न्यनन्तरमेव भाव इति हि धूमस्य वह्निकार्य्यत्वम् । स चेद्वह्नेरप्यनन्तर नेवकारार्थ स्यादिति न वह्नि कार्य्यम् । एवमन्यस्यापि न कार्य्य न ह्यन्यानन्तरमेव भवति वह्नेरप्यनन्तर भावात् ततश्चाहेतुको धूम स्यात् । तथा च कादाचित्कत्वव्याहतिः । सत्यम् । तत्कार्य्यत्वसिद्धौ स्यादेव तदेव तु तदनन्तरमेव भाव इत्येवरूप नास्ति । यद्यपि विना वह्नि नोपलब्धो धूमो यद्यपि च पिशाचानन्तर नोपलभ्यते तेषामनुपलब्धे तथा ऽपि पिशाचकार्य्य एव धूमस्तत्र तत्र वह्नि कुतश्चित्स्वहेतोरुपनिपतितो रासभ इव न धूमस्य जनकस्तेन तदभावे ऽपि तज्जातीय एव कारणभेदजन्मा कदा चित्कादाचित्को धूम स्यादित्यनिवृत्तिरेव शङ्काया । न च दृष्टसम्भवे नादृष्ट कल्पयितु युक्तमिति वाच्य भवद्भिर्वक्तुम् । अनुपलब्धिलक्षणप्राप्तस्याशक्यनिरा-

तादात्म्यं सिद्धमिति । तदयुक्तम् । यथा हि सामानाधिकरण्यं न भावानामभेदसाधकं जात्यादिशब्दा हि जात्यादीन् निमित्तीकृत्य द्रव्ये वर्तन्ते । तच्चाधिकरणमेकमिति सामानाधिकरण्यमश्नुवते । न पुनर्जात्यादीन्यपि मिथो मिश्रयन्ति । शब्दसमानविषयाणां विकल्पानामप्ययमेव गतिः । तस्माद्यत्र गम्यगमकभावो न तत्र तादात्म्यं यत्र तादात्म्यं न तत्र गम्यगमकभाव इति सिद्धम् । यत्तु विदितशिंशपाव्यवहारमविदितवृक्षव्यवहारमुग्धायां शिंशपायां वृक्षशब्दः प्रयुक्तः तस्माद्वृक्षत्वमेव वृक्षशब्दप्रवृत्तिनिमित्तमिति मन्यमानं मूढं प्रति शिंशपात्वेन वृक्षव्यवहारमात्रं साध्यते वामनायामपि शिंशपायां वृक्ष इति व्यवहर्तव्यं शिंशपामात्रानुबन्धित्वाद्वृक्षत्वस्येति । तथापि चेद्व्यवहारः साध्यः शिंशपाया भिन्न इति न तादात्म्यम् । व्यवहारयोग्यता चेत् सा शिंशपाया अभिन्नेति न गम्यगमकभावः । व्यावृत्तिभेदे चोक्तम् । तस्मात्तादात्म्यतदुत्पत्तिभ्यां प्रतिबन्ध इति मनोरथमात्रम् । यत्तु वैशेषिकैः चतुष्प्रकारः संबन्ध उच्यते अस्येदं कार्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकमिति । अत्रापि संबन्धिपदेनैव सर्वेषां संग्रहाच्छेषाभिधानं व्यर्थम् । न च संबन्धिपदोपात्तस्यातिप्रसक्तिः शेषपदैर्निवार्यते । तथा सति शेषपदान्येव सन्तु कृतं संबन्धिपदेन शेषस्य एव संबन्धिभेदानामधिगतेः । न चैवं चातुर्विध्यं संबन्धस्यानुमानाङ्गस्य । तद्विप्यते । तथा च संबन्धिपदस्य सर्वमात्रावरोधे* ऽतिव्याप्तिः । अपि च भूतं यदेवंभूतस्य वाय्वभ्रसंयोगस्य कथं विरोधि तद्धि तदनुकूलमेव । एवमभूतमपि वर्षं भूतस्य वाय्वभ्रसंयोगस्याप्रतिकूलम् । एवं भूतो नकुलयो न भूतस्य सर्पपराभवस्य विरोधी नाप्यभूतो ऽसावभूतस्य विरोधी येषां पुनर्विरोधः तेषामन्यतमदन्यतमस्य न लिङ्गमपि तु प्रतिक्षेपकमेव । एतेनैव मात्रानिमित्तसंयोगिविरोधिसहचारिभिः । स्वस्वामिवध्यघातकादेः सांख्यानां सप्तधात्वमित्यपि पराकृतं वेदितव्यम् । तस्माद्यो वा स वा ऽस्तु संबन्धः केवलं यस्यासौ स्वाभाविको नियतः स एव गमको गम्यश्चेतरः संबन्धीति युज्यते । तथा हि धूमादीनां वह्न्यादिसंबन्धः स्वाभाविकः । न तु वह्न्यादीनां धूमादिभिः । ते हि विना ऽपि धूमादिभिरुपलभ्यन्ते । यदा त्वार्द्रेन्धनादिसंबन्धमनुभवन्ति तदा धूमादिभिः सह संबध्यन्ते । तस्माद्वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः

* संबन्धमात्रावरोध इति च पु पाठः ।

नुमानविरोधी । तदवच्छेदकत्वादिति चेत् । ननु नैतावता ऽप्यस्य कारणभाव इति कथं कार्य्यं हेतोर्गम्येत । विशिष्टेन कारणस्वभावेनास्वभावो ऽप्यसावाक्षिप्यते विशेषणतयेति चेत् । नन्वाक्षिप्यते व्याप्यत इत्यनर्थान्तरं सा किं कारणानुमितिः प्रागप्यनुमितिसमये पश्चाद्वा । न तावत् प्राग् न हि सतामाश्रय कारणं तद्गमयत्यतिप्रसङ्गात् । किं तु स्वज्ञानेन । न च कार्य्यस्य गमकमकारणत्वादित्युक्तम् । अत एवानुमितिसमये ऽप्यगमकं स्वज्ञानेन गमकत्वादुभयोश्च ज्ञानयोः सह भवतोः सव्येतरविषाणवत् कार्य्यकारणभावाभावात् । तथा च रसात्कार्य्यात्तत्कारणं रूपमनुमाताय ततश्चानुमिताद्रूपात् कारणात्तत्कार्य्यं रससमानकालं रूपमनुमातव्यं तथा च कारणात् कार्य्यानुमानं तादात्म्यतदुत्पत्तिभ्यामभूदिति नाभ्यामेव प्रतिबन्धसिद्धिः । लौकिकाना चैतद्रसाद्रूपानुमानं न चैते विविक्तवस्तुस्वभावानामन्योन्यभेदमध्यवस्यन्ति । न चानध्यवस्यन्तः प्रकृतिरूपोत्पादनसामर्थ्यं रसहेतु रूपमनुमातुमुत्सहन्ते । न च स्वलक्षणानुरोधेन तद्व्यवस्थान्यथाकरणं युक्तं परीक्षकाणामतिपतितलोकमर्यादानां तेषां तत्त्वानुपपत्तेः । यथा ऽऽहुः सिद्धानुगममार्गं च कर्तुं युक्तं परीक्षकैः । न सर्वलोकसिद्धस्य लक्षणेन निवर्तनमिति । अपि चाद्यतनस्य सवितुरुदयस्य श्वस्तनेन सवितुरुदयेन चन्द्रोदयस्य च समानकालस्य समुद्रवृद्ध्या मध्यनक्षत्रदृष्ट्या चतुर्मासान्तरोदयस्य च कार्य्यकारणभावस्तादात्म्यं वा । अथ च दृष्टो गम्यगमकभावः । अपि च तादात्म्ये कथं गम्यगमकभावः न हि तदेव कर्म्म कर्तृ चेति युक्तम् । तस्य भेदाश्रयत्वात् । यद्यपि च वृक्षत्वशिंशपात्वे परमार्थतो न भिन्ने तथा ऽपि भेदान्तरप्रतिक्षेपाप्रतिक्षेपाभ्यां कल्पितभेदयोर्गम्यगमकभाव इति चेद् न । वास्तवमेव वृक्षत्वशिंशपात्वयोर्भेदमुपपादयिष्यामः । अपि च काल्पनिकमपि रूपं विचार्य्यमाणं न यथा भिन्नमेवमभिन्नमपि न भवति । वस्तुनो ऽपि तुच्छत्वप्रसङ्गात् । काल्पनिकस्यावास्तवत्वेन तत्त्वानुपपत्तेः । तस्मात्कल्पनारूढयोर्न वस्तु तादात्म्यम् । नापि परस्परं तथा सति द्रव्यपार्थिववृक्षशिंशपादिविकल्पानां शब्दानां च पर्य्यायत्वप्रसङ्गात् । स्यादेतत् । कल्पना भेदविरहिता भेदमुल्लिखन्त्यपि परम्परमेषामभेदमवगाहते । सामानाधिकरण्याकारत्वाद् अभेदानुल्लेखे तदनुपपत्तेः । तथा च

तादात्म्यं सिद्धमिति। तदयुक्तम्। यथा हि सामानाधिकरण्यं न भावानामभेदसाधकं जात्यादिशब्दा हि जात्यादीन् निमित्तीकृत्य द्रव्ये वर्तन्ते। तन्नाधिकरणमेकमिति सामानाधिकरण्यमश्नुवते। न पुनर्जात्यादीन्यपि मिथो मिश्रयन्ति। शब्दसमानविषयाणां विकल्पानामप्ययमेव गतिः। तस्माद्यत्र गम्यगमकभावो न तत्र तादात्म्यं यत्र तादात्म्यं न तत्र गम्यगमकभाव इति सिद्धम्। यत्तु विदितशिंशपाव्यवहारमविदितवृक्षव्यवहारमुग्धायां शिंशपायां वृक्षशब्दः प्रयुक्तः तस्माद्वृक्षत्वमेव वृक्षशब्दप्रवृत्तिनिमित्तमिति मन्यमानं मूढं प्रति शिंशपात्वेन वृक्षव्यवहारमात्रं साध्यते वामनाग्रामपि शिंशपायां वृक्ष इति व्यवहर्तव्यं शिंशपामात्रानुबन्धित्वाद्वृक्षत्वस्येति। तत्रापि चेद्व्यवहारः साध्यः शिंशपाया भिन्न इति न तादात्म्यम्। व्यवहारयोग्यता चेत् सा शिंशपाया अभिन्नेति न गम्यगमकभावः। व्यावृत्तिभेदे चोक्तम्। तस्मात्तादात्म्यतदुत्पत्तिभ्यां प्रतिबन्ध इति मनोरथमात्रम्। यत्तु वैशेषिकैः चतुष्प्रकारः संबन्ध उच्यते अस्येदं कार्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिकमिति। अत्रापि संबन्धिपदेनैव सर्वोपसंग्रहाच्छेषाभिधानं व्यर्थम्। न च संबन्धिपदोपात्तस्यातिप्रसक्तिः शेषपदैर्निवार्यते। तथा सति शेषपदान्येव सन्तु कृतं संबन्धिपदेन तेभ्य एव संबन्धिभेदानामधिगतेः। न चैव चातुर्विध्यं संबन्धस्यानुमानाङ्गस्य। तद्वक्ष्यते। तथा च संबन्धिपदस्य सर्वभावावरोधे* ऽतिव्याप्तिः। अपि च भूतं वर्षमभूतस्य वाय्वभ्रसंयोगस्य कथं विरोधि तद्धि तदनुकूलमेव। एवमभूतमपि वर्षं भूतस्य वाय्वभ्रसंयोगस्याप्रतिकूलम्। एवं भूतो नकुलवयो न भूतस्य सर्पवायस्य विरोधी नाप्यभूतो ऽभावभूतस्य विरोधी येषां पुनर्विरोधः तेषामन्यतमदन्यतमस्य न लिङ्गमपि तु प्रतिक्षेपकमेव। एतेनैव मात्रानिमित्तसंयोगिविरोधिसहचारिभिः। स्वस्वामिवध्यघातकाद्यैः सांख्यानां सप्तधानुमित्यपि पराकृतं वेदितव्यम्। तस्मात् [illegible] वा ऽस्तु संबन्धः केवलं यस्यासौ स्वाभाविको नियतः स एव गमको गम्यश्चेतरः संबन्धीति युज्यते। तथा हि धूमादीनां वह्न्यादिसंबन्धः स्वाभाविकः। न तु वह्न्यादीनां धूमादिभिः। ते हि विना ऽपि धूमादिभिरुपलभ्यन्ते। यदा त्वार्द्रेन्धनादिसम्बन्धमनुभवन्ति तदा धूमादिभिः सह संबध्यन्ते। तस्माद्वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः

* संबन्धमात्रावरोधकृतेति २ पु० पाठः।

संबन्धो न स्वाभाविकः ततो न नियतः । स्वाभाविकस्तु धूमादीनां वह्न्यादिसम्बन्ध उपाधेरनुपलभ्यमानत्वात् । क्वचिद्व्यभिचारस्यादर्शनादनुपलभ्यमानस्यापि कल्पनानुपपत्तेः । अतो नियतः सम्बन्धो ऽनुमानाङ्गम् । न चादृश्यमानो ऽपि दर्शनानर्हतया साधकबाधकप्रमाणाभावेन सन्दिह्यमान उपाधिः स्वाभाविकत्वं प्रतिबध्नातीति साम्प्रतम् । अवश्यं शङ्कया भवितव्यं नियामकाभावादिति दत्तावकाशा खल्वियं प्रमाणमर्य्यादातिक्रमेण शङ्कापिशाची लब्धप्रसरा न क्वचिन्नास्तीति नायं क्वचित्प्रवर्त्तेत । सर्वत्रैव कस्यचित् किञ्चिदनर्थस्य शङ्कास्पदत्वात् । अनर्थशङ्कायाश्च प्रेक्षावतां निवृत्त्यङ्गत्वात् । अन्यत्र स्निग्धान्नपानोपयोगेष्वपि मरणादिदर्शनात् । तस्मात्प्रामाणिकलोकयात्रामनुपालयता यथादर्शनं शङ्कनीयम् । न त्वदृष्टपूर्वमपि विशेषस्मृत्यपेक्षो हि संशयो नास्मृतेर्भवति न च स्मृतिरननुभूतचरे भवितुमर्हति । तस्मादुपाधिं प्रयत्नेनान्विष्यन्तो ऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्वं सम्बन्धस्य निश्चिनुमः । स्यादेतदन्येनान्यस्य सहचारेण चेत्स्वाभाविकः संबन्धो भवेत् सर्वे सर्वेण स्वभावतः संबध्येत । तथा च सर्वं सर्वस्माद्गम्येत । अथान्यस्य चेद् अन्यत् कार्य्यं कस्मात्सर्वं सर्वस्य न भवति । अन्यत्वाविशेषात् । ततश्च स एवातिप्रसङ्गः । अत्रोच्यते न भावस्वभावाः पर्य्यनुयोज्याः तस्मादन्यत्वाविशेषे ऽपि किञ्चिदेव कारणं कार्य्यं च किञ्चिदिति । नन्वेवं स्वभावानामनुयोगो भिन्नानामकार्य्यकारणभूतानामपि स्वभावप्रतिबन्धे तुल्य एव । तस्माद् यत्किञ्चिदेतत् । कः पुनः प्रमाणेन स्वाभाविकः सम्बन्धो गृह्यते । प्रत्यक्षं सम्बन्धिषु प्रत्यक्षेण । यदाह
८ लिङ्गलिङ्गिसंबन्धदर्शनमाद्यमिति । यदा तावत्प्रथमं वह्निधूमयोः सहार्द्रेन्धनयोः सम्बन्धं पश्यति तदा द्वयोरपि किं स्वाभाविकः सम्बन्धः औपाधिको वा अथ धूमस्यौपाधिको वह्नेः स्वाभाविकः वह्नेस्त्वौपाधिको धूमस्य स्वाभाविक इति न शक्यं निर्द्धारयितुम् । तत्र वह्नेरनार्द्रेन्धनस्य विना धूमसंयोगोल्कादौ दर्शनाद् आर्द्रेन्धनोपाधिरस्य धूमेन सम्बन्धो न तु स्वाभाविक इति निश्चीयते । धूमविशेषस्य तु विना वह्निमनुपलम्भात् उपाधिभेदस्य चादृश्यमानस्य कल्पनायां प्रमाणाभावाद् विशेषस्मृत्यपेक्षस्य च संशयस्यानुपलब्धपूर्वे अनुत्पादाद् उत्पादे वाऽतिप्रसङ्गात् प्रेक्ष-

अप्रवृत्त्युच्छेदात् स्वाभाविकः संबन्धो ऽवधार्यते । तदिदमवधारणं न मानसम् अनपेक्षस्य मनसो बाह्यप्रवृत्तावन्धबधिराद्यभावप्रसङ्गात् । भूयोदर्शनसापेक्षस्य च प्रवृत्तौ प्रमाणान्तरापातात् । न हि मनो निमित्तमित्येव मानसं प्रत्यक्षं भवति । तथा सति न किंचिदमानसं प्रत्यक्षमात्रस्य मनोनिमित्तत्वात् । असाधारणकारणापेक्षया च तत्प्रमाणव्यपदेशे त्वयापि भूयोदर्शनमसाधारणमिति प्रमाणान्तरं प्राप्तम् । तस्मादभिज्ञानमिवेदन्त्वग्रहभूयोदर्शनजनितसंस्कारसहितमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविकसंबन्धग्राहीति युक्तमुत्पश्यामः । एवं मानान्तरविदितेष्वन्येषु मानान्तराण्येव यथास्वं भूयोदर्शनसहायानि स्वाभाविकसंबन्धग्रहणे प्रमाणान्युन्नेतव्यानि स्वभावतश्च प्रतिबद्धा हेतवः स्वसाध्येन यदि साध्यमन्तरेण भवेयुः स्वभावादेव प्रच्यवेरन्निति तर्कसहायैरनिरस्तसाध्यव्यतिरेकवृत्तिसंदेहा यत्र दृष्टास्तत्र स्वसाध्यमुपस्थापयन्त्येव । न च श्यामादिषु मैत्रतनयादीनां स्वाभाविकप्रतिबन्धसंभवः अन्नपानपरिणतिभेदस्योपाधेः श्यामतायां मैत्रतनयत्वं प्रति विद्यमानत्वेन मैत्रतनयत्वस्यागमकत्वात् । एतेन पक्वान्यस्य वृक्षस्याम्रफलानि फलानि एकवृक्षप्रभवत्वात् पतितफलवदित्यादयो ऽप्युपाधिकसंबन्धा व्याख्याताः । तस्मात्सर्वमवदातम् ।

ʼमन्वभिमतमन्यसमनीताभ्यां प्रत्यक्षाभ्यां कथमनुगृह्यत इत्यत आह स्मृत्या चेति । यो हेत्वर्थो यद्यपि स्वरूपतो लिङ्गदर्शने भवति तथा ३६ । ऽपि तज्जनिता स्मृतिरनुगृह्णाति यस्मात्तत्ताभ्यामनुगृह्यते । अनुग्रहश्च करणमेव । संबन्धस्मृतिसहकारिणैव स्वसाध्याविनाभूतलिङ्गविज्ञानं यद्रूपमन्यो तत्परामर्श इत्याख्यायते तथाभूतलिङ्गोचर एव चतुर्थो वाक्यावयव उपनय इत्याख्यायते । अथ पृच्छति कः पुनरिति । अनुमानशब्दस्यार्थो न तावदनुमितिः । न खलु लिङ्गपरामर्शो ऽनुमितिः । प्रत्यक्षफलत्वात् । तस्मादनुमीयते ऽनेनेति करणार्थो वक्तव्यः । न च लिङ्गविषया क्रिया च लिङ्गविषयेति विषये वैयधिकरण्यात् क्रियाकारणभाव इति भावः । उत्तरम् । अनुमीयत इति । तेनैवाभिप्रायेण पृच्छति । किं पुनरिति । उत्तरम् । अग्निरिति । पृष्टा स्वाभिप्रायमुद्घाटयति कथं पुनरन्यविषयमिति । एकदेशिन उत्तरम् । नानियमादिति । पूर्वोक्तेनैव प्रश्नितः पक्षः ,,

न तदवयवोद्देशेन तस्माद्वृक्षविषयः परशुर्न तदवयवविषयः । द्वैधीभाव
१० स्त्ववयवेषु न वृक्षे तस्य ततो विनाशादिति भावः । क्व चित्पुनर्वैषिय-
यमिति । योऽवयवापेक्षो वह्निसंयोगः करणं तण्डुलेषु रूपादिपरावृत्तिरूपः
पाकः, तेष्वेव तण्डुलेन पिठरं लक्षयति । न केवलं समानविषयत्वानियमं कर्तृ-
करणं भिन्नमित्यपि नियमो नास्तीत्यनियमाभिधानप्रसङ्गेनाह क्व चित्पुनरि-
ति । स्थितिः स्वावयवेषु समवायो वा प्रदेशविशेषे संयोगो वा । एवमनियमं
दृष्टान्ते दर्शयित्वा दार्ष्टान्तिके योजयति एवमन्यविषयस्येति । धूमविषयस्य प्रमा-
णस्याग्निविषया क्रिया प्रमितिः । यदा ऽग्निविषयमेव ज्ञानं प्रमाणं तदाह क्व चि-
त्पुनरिति । आलिङ्गनं । किं पुनरिति । अत्र हेतुमाह प्रमितत्वात् ।
ततः प्रमीयते ऽग्नित्वेनेति । अनियमवादिनं एकदेशिनो मतं नियमवादी
दूषयति । तन्नेति । हेतुमाह प्रमाणफलयोरिति । यद्यन्यविषयं करण-
मन्यविषया क्रिया भवेत् ततश्छेदने खदिरं प्राप्ते पलाशादयपि छिदा
स्यादित्यतिप्रसङ्गः स्यात् । यद्यपि वृक्षोद्देशेन कर्त्रा परशुः प्रयुक्तस्तथा
ऽप्ययं वृक्षमिव तदवयवानपि प्राप्त इति तद्विषयो भवति तेन तदवयवद्वै-
धीभावमुखेन वृक्षविषयामपि द्वैधीभावक्रियां जनयतीति न वैयधिकरण्यं कर-
णफलयोः । एवं यद्यपि लिङ्गविषयं प्रत्यक्षफलतया लिङ्गज्ञानं तदनुमद्वस्य
तस्य मानसप्रत्यक्षगोचरत्वात् । लिङ्गनिरूपणमन्तरेण तदनिरूपणात् । न
तु लिङ्गज्ञानं लिङ्गिनं विना न निरूप्यते तस्मात्प्रतिपत्त्यनुबन्धितया विषयो
न लिङ्गज्ञानस्य लिङ्गी किं तु लिङ्गमेव तथा ऽपि लिङ्गिविषयप्रतिपत्तिजन-
कत्वाल्लिङ्गज्ञानं भवति लिङ्गिविषयम् । न चातिप्रसङ्गः । स्वाभाविकसंबन्ध-
वत्त्वाल्लिङ्गस्य लिङ्गिनि तस्माद् द्विविधो विषयभावः प्रतिपत्त्यनुबन्धितया
प्रतिपाद्यतया च तत्र पूर्वः फलस्य उत्तरस्तु प्रमाणस्येति तद्विवेकः । तस्मा-
त्सूक्तं प्रमाणफलयोर्विषयभेदानभ्युपगमादिति । स्थितौ [illegible] भेदो
दर्शयिष्यते कर्त्तुः करणस्येति । तदेव तानि ते इति विषयद्वयं परस्परा
१।१।४ पेक्षमुपपाद्य तानि तदिति विषयद्वयं परस्परापेक्षमुपपादयति यदा पुनरिति।
लिङ्गलिङ्गिसंबन्धदर्शनं च यदनन्तरलिङ्गदर्शनं च तत्स्मृतिश्चेति त्रिपदः ।
अथापि सर्वसंदेहेष्विदमुपपत्तिष्टमे व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहा-
दलक्षणमिति भावः । ननु यदि प्रमाणफलयोरेकविषयत्वं तर्हि पारमर्षप्रमाणवि-

षयीकृत यथार्थौ विषयीकर्तव्यो नान्यः स च प्रत्यक्षप्रमाणविषय एवेति कृत-
मनुमानेनेत्याशयवानपृच्छति । किं पुनरिति । तेनैवविशिष्टेन लिङ्गपरामर्शेनेत्यर्थः । ४७ ।
उत्तर शेषो ऽर्थः । प्रत्यक्षप्रमिताल्लिङ्गादन्यो लिङ्गी तद्विषयत्व च लिङ्गपराम-
र्शस्योक्तमिति । पृच्छति अनुमानमित्यत्र किं कारकम् । अनुमीयते ऽनेनेति
करणकारकमेव युक्त तस्यैव लिङ्गदर्शनद्वयस्मृतिपूर्वकत्वाद् न त्वनुमितिरनु-
मान प्रमाणव्यापारत्वेनानभिमतत्वात् करणकारकादन्यत्वाद् अतत्पूर्वक*-
त्वाच्चेति भाव. । उत्तर भावः करणं वा । नतूक्तं न भावः कारकमित्यत
आह यदेति । न द्रव्यादीनामेव करणत्वम् अपि तु व्यापारस्यापि । अन्यथा
कर्मनामधेयेषूद्भिदादिशब्देषु न करणविभक्ति. श्रूयेत । उद्भिदा यजेत दर्शपौर्ण-
मासाभ्यां यजेतेत्यादि । सेभयति तस्यापि लिङ्गस्य फलभावनाया निमित्तत्वम् ।
यत्र वह्निप्रमाया लिङ्गायाः सेभयति ज्ञानादिबुद्धिनिमित्तभावः । एतस्मिंश्च
कल्पे तत्पूर्वकमित्यत्र यदा ज्ञानादिसन्ध्यावधारणसमये प्रथम ज्ञान वह्नि-
त्वस्य लिङ्गस्य दर्शनम् अथानुमानिकं द्वितीयम् अथ सम्बन्धस्य स्मृतिरिति
त्रयमेकीकृत्य परामृश्य तत्पूर्वको हि तथा चायमनुमीयमानो वह्निरिति लिङ्ग-
परामर्श । तस्माद् दाहपाककारित्वादुपादेयो वह्निरिति ज्ञानमनुमानस्य फलं
ततश्च तत्पूर्वकत्वमपि सिद्धं भवतीति भावः । करणकारकपक्षे फलमाह ।
यदा करणमिति । अथ विमृशति । लिङ्गेति । तत्पूर्वकत्वानुमितिनिमि
त्तत्वसमानधर्मदर्शनात्संशय. । अत्राचार्यदेशीयमतमाह । एके तावदिति ।
उत्तरपीतरेषु स्मृतेरभावादनुमितेरनुत्पादेन स्मृतिरेवानुमानम् इतरे तद-
नुग्राहका इत्यर्थः । मतान्तरमाह अपर इति । सत्स्वपीतरेषु लिङ्गपरा-
मर्श विना ऽनुमितेरनुत्पादाल्लिङ्गपरामर्श एवानुमानमितरैरनुगृहीत इत्यर्थः ।
स्वमतमाह वयं त्विति । अन्वयव्यतिरेकाभ्यामयमस्यो गुणप्रधानभावो
विवेक्तु तयो. सर्वेषां तुल्यत्वादिति भावः । तत्किमिदानीं नास्ति गुण-
प्रधानभाव इत्यत आह प्रधानेति । नान्वयव्यतिरेकानवभयतो न न्याय-
त्वाभिमित भावः । पृच्छति कः पुनरत्रेति । उत्तरमाह नन्तर्येति । नेदा
न्ति तिरोहित किं चित् । अतिव्याप्तिं चोदयति । यदीति । ननु भवतु प्रत्य ४८ । ३
क्षपूर्वक. सम्भारो ऽनुमानं तेनापि येषो ऽनुमानमसत्यत आह

* अतत्पूर्वकत्वादिति २ पु० पा० ।

५ स्मृतिहेतुर्नानुमितिहेतुरित्यर्थः । परिहरति नैष दोष इति । विशिष्टज्ञानं विज्ञानं विशेषश्च स्मृतेरन्यत्वं न हीन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं स्मृतिः । तस्याः संस्कारमात्रप्रभवतया ऽन्यस्मादनुत्पत्ते । तेन च ज्ञानेन स्वकारणं विशेषितम् । प्रत्यक्षसूत्रे यत इत्यध्याहारात् । तस्मादिहापि स्वकारणविशेषकं स्मृतेरन्यद्विज्ञानमधिकृतम् । न च संस्कारः प्रत्यक्षपूर्वो ऽपि तादृशज्ञानकारणमिति न तस्य प्रसङ्ग इत्यर्थः । निर्णये ऽनुपजनितफले प्रसङ्गं निवारयति । निर्णय इति । विभागसूत्रात्रिप्रमाणसामान्यलक्षणपूर्वकं विशेषप्रमाणलक्षणं तदपेक्षं प्रवर्त्तमानं नानुपजनितफले ऽप्रमाणे निर्णयमात्रे प्रवर्त्तितुमर्हति जनितफलस्तु निर्णयः प्रमाणमेवेति भावः । स्वविषयपरिच्छेदकत्वात् फलं परिच्छेद एव परिच्छेदकः स्वार्थिकः प्रत्ययः । त्रिविधमिति सूत्रावयवमर्थगौरवाद्वार्त्तिककार उद्धृत्य व्याचष्टे त्रिविधमितीति । अन्वयव्यतिरेकिणं लक्षयति । तत्रेति[*] । विवक्षितोपपत्तिः पक्षधर्मता । तज्जातीयोपपत्तिरन्वयः विपक्षावृत्तिर्व्यतिरेकः । अन्वयिमात्राद्व्यतिरेकिमात्राच्च व्यावृत्तो अन्वयव्यतिरेकी दर्शनीय इति हेतुवचनसाधारणे अबाधितविषयत्वासत्प्रतिपक्षत्वे सती अपि रूपे न दर्शिते । विवक्षितप्रत्ययमन्तरेण चान्वयव्यतिरेकयोस्तज्जातीयातज्जातीयवृत्त्यवृत्त्योरशक्यप्रतीतित्वाद्विवक्षितोपादानं तत्प्रसङ्गेन च तद्धर्मता हेतुवचनमाना ऽपि दर्शिता । तस्योदाहरणमाह यथेति । प्रत्ययवत्त्वादिति हेतुरात्मनि नित्ये ऽस्तीत्यत उक्तं कार्यकरणेति । तथा ऽपि सामान्यविशेषे घटत्वादौ व्यभिचार इत्यत उक्तं सामान्यविशेषवत इति । तथा ऽपि परमाणुभिर्बाह्यप्रत्यक्षयोगिना व्यभिचार इत्यत उक्तम् अस्मदादीति । तथा चाय नित्येभ्य आकाशादिभ्यो घटादिषु चानित्येष्वन्वित इति भवत्यन्वयव्यतिरेकी । अन्व-

१० यिन लक्षयत्यन्वयीति । विपक्षहीन इति । विपक्षाभावेन ततो व्यतिरेकाभाव दर्शयति । सद्भ्यामभावो निरूप्यते नैकेन सतेत्युक्तं तेन हेतोर्व्यतो विपक्षान्निवृत्तिः स यत्र नास्तीति कुतो नियर्त्ततां । पक्षादन्यस्य सर्वस्यैव सपक्षत्वात् । न निवर्त्तत इति चेदस्तु हेतोस्तत्र वृत्तिरवृत्तिनिषेधरूपत्वाद्वृत्तेरिति चेत् । अस्याभावाधिकरणत्वमपि न भवति निरुपाख्यस्य तस्य भावाधिकरणत्वाद्गेति सुभाषितम् । न खलु मुमुर्षोस्तोयाभ्यवहारे ऽसमर्थस्य शष्कुलीभक्षण

* इदं ३ पु नास्ति ।

शङ्कते चेतनः । तत्किमिदानीं भावाभावौ न परस्पराभावात्मानौ यदेकनिषेधे-नान्यविधिः स्यात् । सत्यं यत्रैकतरः स्वरूपेण निषिध्यते व्यतिरेको निषिध्यते विधीयते वा तत्र तदितरविधिनिषेधोऽवश्यं भवेत् । न त्विह परमार्थतः कस्य चिन्निषेधः । न चात्र निरुपाख्यो हेतोर्व्यतिरेको निषिध्यते न निरुपाख्यो निषेधाधिकरणमिति । न च यत्र स्ववचनविरुद्धं न चेतनत्वतो निरुपाख्ये हेतोर्व्यतिरेकं व्यासेधामो नाप्यन्वयं विदध्मः नो खलु आयं सकलप्रतिपत्त्य-भाजनं किं चिदप्युपयुज्यते । उपयोगे वा निरुपाख्यो न भवेत् । कस्तर्हि न निरुपाख्यहेतोर्व्यतिरेक इत्यस्य वचनस्यार्थः । अथ निरुपाख्ये हेतोर्व्यतिरेक इत्यस्य भवद्व्यापितस्य कोऽर्थः अहृदयवाचामहृदया एव प्रतिवाचो भवन्ति । यथानुरूपो बलिरिति हि लौकिकानामाभाणकः । न चास्यमानादृष्टपूर्वाणां कल्प-नाकालगोचरत्वमिति चोपपादितमन्वयव्याप्तिनिरूपणावसरे । कल्पितगोचर-त्वात् व्यतिरेकोऽपि काल्पनिक इति नानुमानाङ्गं भवति । स्वाभाविकरूपसम्पन्नं हि प्रमाणं तत्त्वज्ञानरूपफलाय कल्पते न कल्पितरूपसम्पदा तस्याः सर्वत्र सुल-भत्वादिति । तत्त्वविषयत्वं चानुमानस्योपपादयिष्यते । तस्मादनुपाख्ये विपक्षे हेतोर्व्यतिरेकनिवृत्तौ वा व्यतिरेके वा सहृदयानां मूकतैवोचिता । न चैतावता हेतोरगमकत्वं न हि व्यतिरेकोऽस्तीत्येव गमको भवति मा भूदसाधारण-स्यापि गमकत्वं किं तु स्वसाध्येन सह स्वाभाविकसंबन्धशालितया स चान्वयव्यतिरेकाभ्यामिवान्वयमात्रेणाप्युपाधिरहितेन शक्यः ज्ञातुमिति कृतं व्यतिरेकेण । विपक्षसंभवे तु तथापि धृतिशङ्कानिराकरणाय व्यतिरेकग्रहण-मुपासनीयमिति सर्वमवदातम् ।

उदाहरणमाह यथेति । स्वमते त्वभिधेयो विषयः प्रमेयत्वात् सामा- ४८ । १२
न्यवत् । परमाण्वाकाशादयः कस्य चित्प्रत्यक्षाः प्रमेयत्वाद् घटवदित्या-दयो द्रष्टव्याः । विश्वस्यैव सदसद्भेदभिन्नस्य यथास्वं पक्षसपक्षयोरन्तर्भावेन विपक्षाभावादिति व्यतिरेकिणं लक्षयति । व्यतिरेकीति । तमिमं व्यतिरे-किणं हेत्ववयवलक्षणव्याख्यानावसरे वार्तिककृद्दर्शयिष्यतीति नेहोपपादितः । तदेवं त्रिविधमित्यवच्छिद्य व्युत्पाद्य सम्प्रति पूर्ववदित्यादिना सकलवाक्य-तया व्याचष्टे अथ वा त्रिविधमिति । तिसृष्वपि विधासु साध्यवचनस्य पूर्वमुपपादनात् पूर्वं साध्यं तदस्यास्त्यधिकरणतया तत्पूर्ववत् । तदा

ऽप्यनित्याः परमाणवो गन्धवत्त्वाद् घटवदित्यपि हेतुः स्यादस्ति साध्यं तस्यापि पार्थिवानामप्यणूनामनित्यत्वेन सिषाधयिषितत्वादित्यत आह ७ व्याप्त्येति । अस्ति गन्धवत्त्वस्य साध्य[illegible] तु व्याप्त्या पृथिवीमात्रवृत्तितया चतुर्षु परमाणुषु तदभावात् । साध्यस्योपयुक्तत्वात् ततो ऽन्यस्तज्जातीय स्थेव. साध्यसामान्येन समान इति यावत् । तदिदमाह साध्यतज्जातीय इति । पदानि विभज्यार्थमाह पूर्ववच्चामेति । सामान्यतो ऽदृष्टमिति नञमन्तर्भाव्य व्याचष्टे । सामान्यतश्चेति । तथा च बाधितविषय प्रकरणसम चानुमान स्यादित्यत आह चशब्दादिति । वार्त्तिकस्थचशब्देनासत्प्रतिपक्षत्वमपि सूचितम् । तेन सूत्रस्थेनाबाधितत्वमसत्प्रतिपक्षत्वमपि रूपद्वय समुच्चितमित्युक्त भवति । नन्वेव त्रिविधो ऽपि हेतु. पञ्चलक्षण. स्यादित्यत आह । एवमिति । एतदुक्त भवति अबाधितविषयमसत्प्रतिपक्ष पूर्ववदिति धुर्व कृत्वा शेषवदित्येका विधा सामान्यतोदृष्टमिति द्वितीया शेषवत्सामान्यतोदृष्टमिति तृतीया तदेव त्रिविधमनुमानम् । तत्र चतुर्लक्षण द्वयम् । एक पञ्चलक्षणमिति । तदेव स्वमतेन सूत्र व्याख्याय भाष्यकृन्मतेन व्याचष्टे । अथ वेति । आचेष्टु स्वरूपतो व्याचष्टे तत्रेति । पूर्व कारण कार्यात्तद् यस्यास्ति विषयतया परामर्शज्ञानस्यानुमानस्य तत्पूर्ववदित्यर्थः । विकल्प्याविपति यदि तावदिति । सर्वेषानुमानप्रसङ्गादिति भाव । अतिप्रसङ्गभिया कल्पान्तरमाशिङ्कते । अथ पुनरिति । दूषयति एतदपीति । दूषणान्तर समुच्चिनोति । कारणदर्शनाच्चेति । नासिद्धाश्रयो हेतुर्गमक इति भाव. । परिहरति । नेति । द्वयमपि नाभ्युपेयतइत्यर्थः । किं तर्ह्यभ्युपेयत इत्यत आह कार्ये त्विति । एन प्रकारमन्यथाप्यतिदिशति एवमिति । पृच्छति कथमिति । उत्तरं द्वयोरिति । पूर्वशब्देन कारणाभिधायिना प्रतिसम्बन्धितया कार्यमप्युपस्थितमतो द्वयोरप्युपस्थितयो. कार[illegible]योगादनुमानमात्रेनेति योजना ।

१५ उदाहरणमाह । उदाह[illegible] । यद[illegible]मात्र व्यभिचरति कार्योत्पादे तदा ऽपि यादृश न व्य[illegible]मि[illegible]भवितव्यम् । अन्यथा धूममात्रमपि वह्निमता[illegible]भवेत् । रसाद्रूपानुमाने तु येना[illegible]पि चान्यतानुपपेतत[illegible] । यदा

खल्वयमन्त्यस यदोद्बुद्धसंस्कारो व्याप्तिस्मृतिमान् अविचलेष्वितरेषु तन्तुषु अन्त्य-
न्तानुत्पन्नायां क्रियायामिन्द्रियसन्निकर्षात् प्रथममेव परामृशति तथा चेयमिति
तदैव क्रियातो विभाग इत्येकः कालः अथ यदा विभागात् पूर्वसंयोगनाश-
स्तदा परामर्शादवश्यभाविपटविनाशेयं क्रियेत्यनुमानोत्पाद इत्येकः कालः ।
अथान्त्यस्य तन्तोः तन्तुसंयोगो ऽथ पटोत्पादो ऽतस्तत्र रूपाद्युत्पादः अथ
प्रत्यक्षदर्शनमित्यनुमानोत्पादस्य परस्ताच्चतुर्थे क्षणे प्रत्यक्षम् । यदि तु क्रियोत्पा-
दानन्तरमालोचनमिष्यते तथा ऽपि तृतीये क्षणे प्रत्यक्षस्योत्पादान्नानवसरमनु-
मानम् । अपि च बधिरो मुरजमुखमभिहत्य स्वकारणाभिघातादेव स्वकारणात्
तत्कार्ये शब्दं निःशङ्कमनुमिमीते । एवमन्यान्यपि कारणात्कार्यानुमानान्यूह-
नीयानि । शेषवदुदाहरणमाह तथा इति । चोदयति कथं पुनरिति । परिहरति ४९ । १९
नेति । अनुमीयते ऽनेनेत्यनुमानं नदीपूरः न तु वृष्टिरनुमीयमाना पूरविशेषान्ना-
तीता यस्या ऽनुमातुस् अनुमानसमये तदत्ययस्यावश्यनिश्चयत्वात् । नापि च
वर्तमाना तदत्ययस्यापि तदानीं संभवात् । एवं भविष्यन्त्यपि साधकबाधक-
प्रमाणाभावेन सन्दिग्धैव । तस्मात्त्रैकाल्याशक्यनिश्चयत्वादनुपपन्नमनुमानमि-
त्यत आह भविष्यतीति । कारणस्य कार्यात् पूर्वकालता यस्या निश्चेतुं
कार्येण लिङ्गेन तु नातीतत्वादिति सन्देहः शक्तिमावहति । यः कश्चिदिति
योग्याभिप्राय स च कार्यस्य पुरस्तात्ततो निश्चयव्याप्त इत्यर्थः । सामान्यतो-
दृष्टोदाहरणं भाष्यकारीयं दुरवबोधं शेषवदुदाहरणान्तर्गतं च । यद्यपि कार्येण
सवितुर्देशान्तरप्राप्त्या तत्कारणस्य व्रज्याया अनुमानात् । न चैतावता ऽनुमा-
नस्य त्रैविध्यं भवति उदाहरणमात्रस्यानन्त्येनानन्त्यप्रसङ्गात् । तस्माद्भाष्य-
कारव्याख्यानमरोचयमानो वार्तिककारो ऽन्यथा व्याख्यायोदाहरणान्तरमाह
सामान्यतोदृष्टं नामेति । साध्यधर्माविनाभाविना विशेषणेन साध्यधर्मेण ५० । ४
विशिष्यमाणो धर्मी गम्यते गमकत्वेन हेतुविशिष्टो हि धर्मी गमकः जिज्ञासि-
तधर्मविशिष्टश्च गम्यः । यथा ऽऽहुः । स एव चेतनयात्मा ऽथ गम्यो गमक
इष्यते । प्रसिद्धेनैकदेशेन गम्यः सिद्धेन बोधक इति । अविनाभावित्व
स्वभावप्रतिबद्धत्व सर्वेषामेव हेतूनां सामान्यतो ऽथ धर्मधर्मिणोरभेदविवक्षया
हेतुरेव सामान्यमुक्तः । सामान्येनाविनाभाविना हेतुना लक्षितं दृष्टं धर्मि-
रूपमनुमानं सामान्यतोदृष्टमनुमानम् । तृतीयायास्तसिः । तदेतत्पूर्ववच्छेष-

ऽप्यनित्याः परमाणवो गन्धवत्त्वाद् घटवदित्यपि हेतुः स्यादस्ति साध्यं तस्यापि पार्थिवानामप्यणूनामनित्यत्वेन सिषाधयिषितत्वादित्यत आह
५ व्याप्त्येति । अस्ति गन्धवत्त्वस्य साध्यं न तु व्याप्त्या पृथिवीमात्रवृत्तितया चतुर्षु परमाणुषु तदभावात् । साध्यस्योपयुक्तत्वात् ततो ऽन्यस्तज्जातीयः शेषः साध्यसामान्येन समान इति यावत् । तदिदमाह साध्यतज्जातीय इति । पदानि विभज्यार्थमाह पूर्ववन्नामेति । सामान्यतो ऽदृष्टमिति नञमन्तर्भाव्य व्याचष्टे । सामान्यतश्चेति । तथा च बाधितविषयं प्रकरणसमं चानुमानं स्यादित्यत आह चशब्दादिति । वार्त्तिककृत्चशब्देनासत्प्रतिपक्षत्वमपि सूचितम् । तेन सूत्रस्थेनाबाधितत्वमसत्प्रतिपक्षत्वमपि रूपद्वयं समुच्चितमि-त्युक्तं भवति । नन्वेवं त्रिविधो ऽपि हेतुः पञ्चलक्षणः स्यादित्यत आह । एवमिति । एतदुक्तं भवति अबाधितविषयमसत्प्रतिपक्षं पूर्ववदिति ध्रुवं कृत्वा शेषवदित्येका विधा सामान्यतोदृष्टमिति द्वितीया शेषवत्सामा-न्यतोदृष्टमिति तृतीया तदेवं त्रिविधमनुमानम् । तत्र चतुर्लक्षणं द्वयम् । एकं पञ्चलक्षणमिति । तदेवं स्वमतेन सूत्रं व्याख्याय भाष्यकृन्मतेन व्याच-ष्टे । अथ वेति । आद्यं स्वरूपतो व्याचष्टे तत्रेति । पूर्वं कारणं कार्यात्तद् यस्यास्ति विषयतया परामर्शज्ञानस्यानुमानस्य तत्पूर्ववदित्यर्थः । विकल्प्य वि-घटते यदि तावदिति । सर्वत्रानुमानप्रवृत्तेरिति भावः । अतिप्रसक्तिभिया कल्पान्तरमातिष्ठते । अथ पुनरिति । दूषयति एतदपीति । दूषणान्तरं समुच्चिनोति । कारणदर्शनाद्वेति । नाविद्धाश्रयो हेतुर्गमक इति भावः । परिहरति । नेति । द्वयमपि नाभ्युपेयत इत्यर्थः । किं तर्ह्यभ्युपेयत इत्यत आह कार्ये त्विति । यत्र प्रकारमन्यथाप्यतिदिशति एवमिति । पृच्छति कथमिति । उत्तरं द्वयोरिति । पूर्वशब्देन कारणाभिधायिना प्रतिसम्बन्धितया कार्यमप्युपक्षिप्तमतो द्वयोरप्युपक्षिप्तयोः कारणस्योपयोगादनुमानमात्रेणेति योजना ।
१६ उदाहरणमाह । उदाहरणमिति । यद्यपि कारणमात्रं व्यभिचरति कार्योत्पादं तदा ऽपि यादृशं न व्यभिचरति तत्र निपुणेन प्रतिपत्त्रा भवितव्यम् । अन्यथा धूममात्रमपि वह्निमतो व्यभिचरतीति न धूमविशेषो गमको भवेत् । रसाद्रूपानु-माने तु येनाग्निकानामापादितं कारणात् कार्यानुमानमस्माभिः । अपि चान्य-तन्तुसंयोगानन्तरं पटो जायते तथापि तत्र कारणात्कार्यानुमानम् । यदा

खल्वयमन्यत एवोद्बुद्धसंस्कारो व्याप्तिस्मृतिमान् अविकलेष्वितरेषु तन्तुषु अन्त्य-
न्तानुत्पन्नायां क्रियायामिन्द्रियसन्निकर्षात् प्रथममेव परामृशति तथा चेयमिति
तदैव क्रियातो विभाग इत्येकः कालः अथ यदा विभागात् पूर्वसंयोगनाश-
स्तदा परामर्शादवश्यंभाविपटविशिष्टेयं क्रियेत्यनुमानोत्पाद इत्येकः कालः ।
अथान्त्यस्य तन्तोः तन्तुसंयोगो ऽथ पटोत्पादो ऽतस्तत्र रूपाद्युत्पादः अथ
प्रत्यक्षदर्शनमित्यनुमानोत्पादस्य परस्माच्चतुर्थे क्षणे प्रत्यक्षम् । यदि तु क्रियोत्पा-
दानन्तरमालोचनमिष्यते तथा ऽपि तृतीये क्षणे प्रत्यक्षस्योत्पादात्प्रागनन्तरमनु-
मानम् । अपि च बधिरो मुरजमुखमभिहत्य स्वकारणाभिघातादेव स्वकारणात्
तत्कार्ये शब्द निःशङ्कमनुमिमीते । एवमन्यान्यपि कारणात्कार्यानुमानान्यूह-
नीयानि । शेषवदुदाहरणमाह नद्या इति । चोदयति कथं पुनरिति । परिहरति ४९ । १९
नेति । अनुमीयते ऽनेनेत्यनुमानं नदीपूरः न तु वृष्टिरनुमीयमाना पूरविशेषान्ना-
तीता शक्या ऽनुमातुम् अनुमानसमये तदत्ययस्याशक्यनिश्चयत्वात् । नापि च
वर्तमाना तदत्ययस्यापि तदानीं सम्भवात् । एवं भविष्यन्त्यपि साधकबाधक-
प्रमाणाभावेन सन्दिग्धैव । तस्मात्त्रैकाल्याशक्यनिश्चयत्वादनुपपन्नमनुमानमि-
त्यत आह भविष्यतीति । कारणस्य कार्यात् पूर्वकालता शक्या निश्चेतुं
कार्येण लिङ्गेन तु नातीतत्वादिति सन्देहः खलिमावहति । यः करिष्यदिति
योग्याभिप्राय स च कार्यस्य पुरस्तान्नतो निश्चयश्चाय इत्यर्थः । सामान्यतो-
दृष्टोदाहरणं भाष्यकारीयं दुरवबोधं शेषवदुदाहरणान्तर्गतं च । अथापि कार्येण
सवितुर्देशान्तरप्राप्त्या तत्कारणस्य व्रज्याया अनुमानात् । न चैतावता ऽनुमा-
नस्य त्रैविध्यं भवति उदाहरणमात्रस्यानन्त्येनानन्त्यप्रसङ्गात् । तस्माद्भाष्य-
कारव्याख्यानमरोचयमानो वार्त्तिककारो ऽन्यथा व्याख्यायोदाहरणान्तरमाह
सामान्यतोदृष्टं नामेति । साध्यधर्माविनाभाविना विशेषणेन साध्यधर्मैव ५० । ४
विशिष्यमाणो धर्मी गम्यते गमकत्वेन हेतुविशिष्टो हि धर्मा गमकः जिज्ञासि-
तधर्मविशिष्टश्च गम्यः । यथा ऽऽहुः । स एव चोभयात्मा ऽयं गम्यो गमक
इष्यते । असिद्धेनैकदेशेन गम्यः सिद्धेन बोधक इति । अविनाभावित्वं
स्वभावप्रतिबद्धत्व सर्वेषामेव हेतूना सामान्यतो ऽत्र धर्मधर्मिणोरभेदविवक्षया
हेतुरेव सामान्यमुक्तः । सामान्येनाविनाभाविना हेतुना लक्षितः दृष्टः धर्मि-
रूपमनुमानं सामान्यतोदृष्टमनुमानम् । तृतीयायास्तसिः । तदेतत्पूर्ववच्छेष-

धतोरपि प्रापकं तत्पदसन्निधानात् गोबलीवर्द्दन्यायेन ते पृथिव्यान्यथ
४ निदिश्यते । तदिदमुक्तमकार्यकारणभूतेनेति । उदाहरणमाह यथा चला-
कयेति । भाष्यकारीयमुदाहरणमुपन्यस्याचिपति । अपरे पुनरिति । नदीति
गतिमानिति प्राप्नुवन्ति । उपलब्धिलक्षणप्राप्तत्वादिति । कर्म्मणो हि
महत्त्वरूपविशेषैकार्थसमवाय उपलब्धिलक्षणप्राप्तिः प्रत्यक्षोपलब्धियोग्यता ।
समाधत्ते नैवमिति* । देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे सति चयवृद्धिम-
त्प्रत्ययाविषयत्वे च सति प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्प-
न्नपादविहारस्य परिवृत्त्य तत्प्रत्ययविषयत्वात् मनुष्यादिवत् । तत्प्रत्ययवि-
षयत्वादित्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचारः । सो ऽपि हि
प्रत्यभिज्ञाविषयो भवति तथैव स्थितस्तन्निवृत्त्यर्थं परिवृत्त्येत्युक्तम् । तथा
ऽपि गुणादिभिर्व्यभिचारः । तन्निवृत्त्यर्थं द्रव्यत्वे सतीत्युक्तम् । तथा ऽपि
प्रदीपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं चयवृद्धिप्रत्ययाविषयत्वे सतीति विशेषणम् ।
तथा ऽपि पृष्ठतो ऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यत्वे
सतीति विशेषणम् । उपलभ्यता चोपलब्धिकर्म्मता । सा चेहातीता विवक्षिता
ऽन्यथा पूर्वापरजलधिवेलावगाहिना तुहिनशैलेन व्यभिचारः । यद्यप्ययमपि
परावृत्य तत्प्रत्ययवतो ऽतिपतितोपलब्धिकर्म्मभावस्तथा ऽपि सदा नरा-
न्तरस्योपलभ्य मार्त्तण्डमण्डलं त्वस्ताचलचूडावलम्बि न प्राच्या कस्य चिदुप-
लम्भगोचर इति वैषम्य तथा ऽपि यदि दृष्टेव† पुरोऽवस्थितस्य पश्चिमाभिमुखस्य
ग्रामादस्य स्वयमुपनिपत्य पृष्ठतो भवति तदोक्तलक्षणस्य हेतोरस्ति व्यभि-
चारः तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येति विशेषणम् । तदभिमुखदेशसंबन्धा-
दिति ल्यब्लोपे पञ्चमी । स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स
तथोक्तः । समुद्दिश्य स्वन्यस्य पद्भ्यां सञ्चरमाणः ग्रामान्तरस्य पृष्ठतो भवतीति
भावः । देशान्तरप्राप्तौ साधनान्तरमाह देशान्तरेति । सत्यविनाश इति
च द्रष्टव्यम् । ये त्विमामनुमानपरंपरामसृष्यमाणा दिशः प्रत्यक्षतामिच्छन्ति
विशिष्टं चानुमानेन बोधयन्ति तन्मतमुपन्यस्य दूषयति तत्र नेति ।
अरूपमात्मसुखादवि प्रत्यक्षमिति गन्धमानेन ग्राहककरणेत्युक्तम् । पृच्छति
।१२ कथं तर्हीति । उत्तरं दिग्देशानि । अन्यथासिद्धतया अङ्गुल्या निर्दिश्यमाना दिक्प्र

* नैवमिति मु का पु पाठः ।

† दृष्ट्वेति २ पु पा ।

त्यक्तत्वेन न स्वाभाविकः सम्बन्ध इत्यर्थः । स्यादेतत् । आत्यन्तिकाया दिवि दिग्देशसंबन्धिव्यक्तेरदेव कुत इत्यत आह आदित्येनेति । तद्विभजते ५१ । १४ प्राचीत्ययमिति । तत्पुनरिदं प्रत्यक्षमाचेद्यावद्धा चास्तमयाद्देशाद्देशान्तरं संचरणं मार्तण्डमण्डलस्यानाकलितद्रव्यत्वे सतीत्यादिदण्डकानुमानानामिन्द्रियव्यापारानन्तरमुपजायमानत्वात् तथा मा भूदत्राकाशादिगोचरः प्रत्यक्षास्तथा ऽपि परितो निष्पतदविरलविततमयूखजालमध्यवर्तिनो हेलिमण्डलस्य तएव मयूखभागभेदाः देशान्तरवर्तिन तेषां प्रत्यक्षाणां प्रत्यक्षेण वर्तितृमण्डलेन संयोगविभागाः प्रत्यक्षा भविष्यन्तीति युक्तम् । इद त्वतिस्फुटतया नाभिधाय विप्रत्युत्पादनायाऽपूर्वं मार्गान्तरं दर्शितमिति मन्तव्यम् । तदेवं रूपेण स्पर्शानुमानं शिंशपात्वेन वृक्षत्वानुमानमित्यादि सामान्यतोदृष्टेन संगृहीतं वेदितव्यम् । एवमनेन व्याख्यान्तरमाह अथ वा त्रिविधमिति । तद्विभजते । प्रसिद्धमिति । पक्षैकदेशे सदपि लिङ्गं पक्षव्यापकं तु प्रकर्षेण सिद्धमित्यर्थः । यद्यप्यविनाभावः पञ्चसु चतुर्षु वा रूपेषु लिङ्गस्य समाप्यत इत्यविनाभावेनैव सर्वाणि लिङ्गरूपाणि संगृह्यन्ते तथापीह प्रसिद्धसच्छब्दाभ्यां द्वयोः संग्रहे गोबलीवर्दन्यायेन तत्परित्यज्य विपक्षव्यतिरेकासत्प्रतिपक्षत्वाबाधितविषयत्वानि संगृह्णाति । यद्यपि यथासंभवं चतुर्णां पञ्चानां वा रूपाणां लिङ्गसंबन्धः । तदनेन प्रबन्धेनानुमानवादिना स्वरूपसंख्याफलविप्रतिपत्तयो निराकृताः । अत्र तत्पूर्वकमिति स्वरूपविप्रतिपत्तिरनुमानमिति समाख्यानिर्वचनसामर्थ्यात्फलविप्रतिपत्तिः । त्रिविधमिति न्यूनाधिकसंख्याव्यवच्छेदेन संख्याविप्रतिपत्तिर्निराकृता । वाक्यान्तर्गतविकल्पभेदानामानन्त्यादनुमानस्याव्यवस्थितत्वमिति यदि कश्चिद्दूषणमन्येत तन्निराकरणाय त्रैविध्यमनुमानस्योक्तमिति त्रिविधपदस्य तात्पर्यान्तरमाह । अथ वेति । ,, । १।
त्रिविधत्वेन यतो नियतमतः शक्यलक्षणमित्यर्थः । अनित्यः शब्दः कृतकत्वादिति सपक्षे सदेव । अनित्यः शब्दो ऽस्मदादिप्रयत्नानन्तरीयकत्वादिति सपक्षे सदसत् । तदिदमन्वयव्यतिरेकि द्विविधम् । एवमन्वय्यपि द्विधा तत्र सपक्षे सदेव यथा परमाण्वादयः कस्य चित्प्रत्यक्षाः प्रमेयत्वाद् घटवदिति । तथा सपक्षे सदसद्यथा सर्वे साध्यो सत्त्वाद् घटादिवदिति । कालभेदः त्रैकाल्यम् । प्रतिपन्नो ऽप्रतिपन्नः सन्दिग्धो विपर्यस्तश्चेति पुरुषभेदः ।

पूर्वे सिद्धवत्पूर्ववदित्यनूद्य तस्योदाहरणमुक्तम् संप्रति प्रश्नपूर्वकं तदर्था-
४ भासनिराकरणेन तात्त्विकमस्यार्थमाह । पूर्ववदित्युक्तमिति । भाष्यव्या-
ख्यानइत्यर्थः । पूर्ववदित्यस्य व्याख्यानं शेषवदित्यत्रापि योजयति सामान्य-
तो दृष्टं च । ध्यानमतिदिशति एवं शेषवदादिष्विति । अथ वा पूर्वव-
दिति भाष्यम् । तस्यार्थः पूर्वेण तुल्यं वर्त्ततइति पूर्ववत् । क्रियातुल्यतायां
च वतिरिति क्रियातुल्यता दर्शिता । अत्रेति । पूर्वमन्यतरदर्शनेन सह
यथान्यतरदर्शनं दृष्टान्तधर्मिणि यथा पूर्वप्रत्यक्षभूतयोरिति प्रमाणमात्रोपल-
क्षणम् । एवं साध्यधर्म्मिणि अन्यतरधर्म्मदर्शनेन साधनधर्म्मदर्शनेनान्यतरस्य
साध्यधर्म्मस्यानुमानमनुमितिदर्शनमिति भवति क्रियातुल्यता । तदेतद्भाष्य-
मनुभाष्य व्याचष्टे । अथ चेति । अत्र दिग्नागेन धूमादग्निरूपधर्मान्तरानुमा-
नम् अग्निदेशयोः संबन्धानुमानं च दूषयित्वा ऽग्निविशिष्टदेशानुमानं समर्थि-
तम् । तथा चाह । के चिद्धर्मान्तरं मेयं लिङ्गस्याव्यभिचारतः । संबन्धं के चि-
दिच्छन्ति सिद्धत्वाद्धर्म्मधर्मिणोः । लिङ्गं धर्मे प्रसिद्धं चेत्किमन्यत्तेन मीयते ।
अथ धर्मिणि तस्यैव किमर्थे नानुमेयता । संबन्धे ऽपि द्वयं नास्ति षष्ठी
श्रूयेत तद्वति । अवाच्यो ऽनुगृहीतत्वान्न चासौ लिङ्गसंगतः । न हि संबन्ध-
धर्म्मतया लिङ्गं प्रमीयते अपि तु देशसंगतमित्यर्थः । लिङ्गस्याव्यभिचा-
रस्तु धर्म्मेणान्यत्र दृश्यते । तत्र प्रसिद्धं तद्युक्तं धर्म्मिणं गमयिष्यतीति ।
तत्र दिग्नागदूषितान् कल्पान् अन्यांश्च विकल्पान् दिग्नागसमर्थितं च
कल्पमुपन्यस्य दूषयति । अन्ये पुनरिति । धर्मधर्मिभावानुपपत्तेरिति ।
धर्मेण हि धर्मी प्रतिपत्तव्यो नान्यथा ऽतिप्रसक्तेरिति भावः । देशस्य च
स्वरूपेणेत्यर्थः । शङ्कते अथापीदमिति । निराकरोति तच नैवमिति ।
यः कश्चिद्वा देशो ऽग्निमान् साध्यो धूमवान्वा देशभेदः तत्र पूर्वस्मिन्क-
ल्पे निराकरणमाह । अतद्धर्मत्वादिति । यः कश्चिदग्निमत्तया देशः
साध्यते न तस्यायमयं धूमो धर्म्म इत्यर्थः । न चैतत्साध्यं सिद्धत्वादि-
त्याह न चाग्नेरिति । द्वितीयं कल्पमाशङ्कते अथमिति । निराकरोति
२१ न तस्येति । शङ्कां विभजते देशेति । निराकरणं विभजते । न ह्ययमिति ।
न खल्वर्थवादी दिग्नागो धूमाधारं देशविशेषं पश्यति । न ह्यस्य मते पर्वतो
नाम कश्चिदवयवी यदाधारो धूम उपलभ्येत किं तु परमाणवः परमसू-

च्चा अतीन्द्रियाः सर्वतः एव धूमो ऽपि तादृश एव । यथा वक्ष्यति सर्वो-
पसंहारवद्व्याप्तिसिद्धेरिति । येषामपि देशभेदो ऽवयवी दर्शनार्हः तेषामपि
वियद्वर्तिनीं धूमलेखामभ्रंलिहामुपलभ्यानुपलब्धदेशानां नानुमानसंभव इति
भावः । शङ्कते **अविनाभावेनेति** । तदेव विभजते ऽव्यापीति । निराक- ५३ । २
रोति तन्नेति । विकल्पयति **अग्निधूमयोरिति** । कार्यकारणभावमालम्बते ।
अस्त्विति । दूषयति । तन्नेति । धूमेन हि वह्निरस्तीत्यनुमीयते न च कार्यं
सता निमित्तकारणसत्तया व्याप्तं । न हि यदा यत्र वा पटस्तदा तत्र वा कुविन्दः
नाप्यसमवायिकारणसत्तया न हि यदा यदा संयोगस्तदा कर्म तस्मात्समवा-
यिकारणाविनाभावः कार्यस्य वक्तव्यः तथेह दूषणमतद्वृत्तित्वादिति । एका-
र्थसमवायमविनाभावं दूषयति **नैकेति** । एकार्थे समवाय इति हि द्वेधा । एक-
स्यार्थस्य समवाय एकत्रार्थे समवाय इति तत्र प्रथमं कल्पं दूषयति ताभ्या-
मिति । यदि हि वह्निधूमाभ्यामेको ऽर्थः कश्चिदारभ्येत ततो ऽसौ तयोः
समवेयात् न त्वेतदस्तीत्यर्थः । द्वितीयं कल्पं दूषयति न च ताविति ।
तत्किमसंबद्धावेव वह्निधूमौ तथा च प्रतीतिविरोध इत्यत आह संबन्धमा-
त्रमिति । संयोग इत्यर्थः । तदेव लक्ष्यव्याप्येतामित्यत आह । तदपीति ।
पृच्छति । कथमिति । उत्तरम् । यदि तावदिति । कुरुते प्रयोगम् । अस्ति
संबन्धो ऽग्निधूमयोर्धूमादिति । दूषयति तत्राप्रतीतत्वात् । तदनेनानैका-
न्तिकत्वं दर्शयति । संबन्धान्तरमाशङ्कते रूपस्पर्शवदिति । न हि बौद्धसि-
द्धान्ते द्रव्यं नाम किंचिदस्ति यत्र रूपस्पर्शौ समवेतौ किं त्वेकसामग्र्यधीनतया
नियतसाहचर्यौ तथा वह्निधूमावपि भविष्यत इत्यर्थः । दूषयति **नोभयोरिति** ।
उभयसाहचर्यनिराकरणेन यत्र धूमस्तत्राग्निरित्यपि पराकृतं तस्यापि साहच-
र्यविशेषत्वादित्याह यत्र धूम इति । गत्यन्तराभावादुपसंहरति न चेति ।
शङ्कते लोक इति । निराकरोति **नास्तीति** । यत्र तावत्पर्वतनितम्बव- । १७
र्तिनी धूमलेखा सततमुद्गच्छन्ती दृश्यते तत्रासौ देश एव तद्विशिष्टो ऽनु-
मीयते इति लोकप्रसिद्धमेवेति किमत्र वक्तव्यम् । यत्र तु भूयिष्ठतया तस्य
धूमस्य दूरत्वेन देशो न लक्ष्यते धूमः परं त्वभ्रंलिहो निम्नविषमभ्रमण्डलम-
वलोक्यते तत्र देशानुमानप्रयासालसतया दृश्यमानो धूमविशेष एवाग्निम-
त्तया साध्यते धूमत्वैकार्थसमवायिभिः तद्गते वक्रत्वोर्ध्वगमनादिभिः इत्याह

१८ धूमविशेषेणेति । विशिष्यते ऽनेनेति विशेषः संतत्यूर्ध्वगमनादिः तेन धूमभावाद्वह्न्यव्यभिचारिणो वह्न्यविनाभावी धूमो विशिष्यत इत्यर्थः । शेषवदतिरोहितार्थम् । शेषवन्नाम परिशेषः द्रव्यत्वकर्मत्वयोः शब्दे निराकार्यत्वेनोपयुक्तत्वात्ताभ्यामन्यद्गुणत्वं शेषः स यस्यानुमानस्य प्रतिपाद्यतया तच्छेषवत् तत्र न द्रव्यं शब्दः एकद्रव्यत्वात् । द्विविधमेव हि द्रव्यमद्रव्यमनेकद्रव्यं च । अद्रव्यं परमाण्वादि अनेकद्रव्यं च घटादि । शब्दस्त्वेकद्रव्यं तस्मान्न द्रव्यं रूपादिवत् । न कर्म शब्दान्तरहेतुत्वादिति । तदेतद्भाष्यमाक्षिपति । न कर्मेति । परिहरति नेति । अन्यमस्यार्थं दर्शयति समानजातीयारम्भकत्वादिति । यत्समानजातीयारम्भकं न तत्कर्म यथा रूपादय इति । कार्यत्वात्तावच्छब्दः समवायिकारणवान् । तच्च पृथिव्यादिनिषेधान्नभो ऽप्यसमवायिकारणम् । न चैव नभोऽव्यापकः सर्वत्रोपलम्भप्रसङ्गात् । तस्माद्व्यापकः कर्णशष्कुल्यवच्छिन्नं च नभः श्रोत्रं ताल्वादिसंयोगोपधानेन च नभःप्रदेशे शब्दः समवेतः प्राप्यकारि च श्रोत्रं न च वक्तृवक्त्रावच्छिन्नं नभःप्रदेशं प्राप्नोति न चाद्रव्यं शब्दो गत्वा श्रोत्रेण संबध्यते । तस्माद्वीचीतरङ्गरीत्या स्वदेशानन्तरदेशे शब्दान्तरारम्भपरंपरया श्रोत्रदेशोत्पन्नं शब्दं गृह्णातीति सिद्धं सजातीयारम्भकत्वादिति । इदं तु परिशेषस्योदाहरणं नादरणीयम् । व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । अत्र पुनरन्वयव्यतिरेकी द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद्विपक्षे सामान्यादावभावात् । तस्मादात्मतत्त्वसाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यम् । तदनन्तरमेव वक्ष्यतीति । सामान्यतोदृष्टं नामेत्यादिभाष्यमनुभाष्याक्षिपति । सामान्यत इति । कथं तर्ह्यनुमानमत्र प्रवर्तत इति । नित्यपरोक्षेण सह कस्य चिल्लिङ्गस्य संबन्धादर्शनादित्यर्थः । व्याहतं चेति । स खल्वत्यन्तादृष्टः स्वरूपतो वा साध्येत दृष्टधर्मिविशेषणतया वा । तत्र पूर्वस्मिन्कल्पे नानुपलभ्यत इति व्याघातः इतरस्मिन्संदिग्ध इति । विशेषणस्वरूपेणापि हि संशयो नात्यन्तानुपलब्धधर्मवत्तायां क्व चिदुपितुमर्हतीति । न खलु गगनारविन्दमपि के चिद् द्रव्ये संदिहत इति भावः ।

१ । १२ समाधत्ते न विशेषणभूतस्येति । न तावत्स्वरूपेणानुमीयते येन नानुपलभ्येत व्याघातेन किं तु दृष्टस्य धर्मिणो विशेषणतया न चैवं सर्वानुमा-

नाविशेषः । साध्यधर्मिण्यस्मदादिभिः कदाचिदपि प्रत्यक्षेणानुपलम्भात् । तज्जातीयेन तु दृष्टान्तधर्मिण्युद्दिष्टेन प्रत्यक्षतो वा मानान्तराद्वा साधनधर्मस्य स्वाभाविकप्रतिबन्धग्रहसंभवादित्यर्थः । उदाहरणमाह । यथेच्छादि- ५४ । १३
भिरात्मा । तदेव विभजते । इच्छादयः खलु धर्मिणो भवन्ति मानसप्रत्यक्षदृष्टाः तेषामात्मा विशेषणं कुतः गुणभूतोऽवच्छेदकतया यतस्तस्मादात्मविशिष्टा इच्छादयः साध्या इत्युक्तं भवति । साधनधर्मं तद्धर्मिणं दर्शयति । इच्छादीनां गुणत्वमिति । ननूक्तमनुपलब्धचरेण साध्यधर्मेण न सदेव विषयत्वमनुपलब्धचरत्वात्मेति कथं तद्विशिष्टा इच्छादयो न्यायविषया इति शङ्कामुररीकृत्य प्रयोगं सूचयति । परतन्त्रा इति । मा तत्र सेत्स्यीदात्मा पारतन्त्र्यमात्रं तु सिद्धमित्यर्थः । तेन सामान्यतोदृष्टस्य पारतन्त्र्यमात्रविषयता न च पारतन्त्र्यमिच्छादीनामनुमेयात्मवादिनां कदाचिदप्यस्मदादिप्रत्यक्षगोचरः परस्य सदात्मनस्य नित्यपरोक्षत्वादिति । तदेवं सामान्यतोदृष्टमुदाहृत्य परिशेषोदाहरणं पारमार्थिकं प्रश्नपूर्वकमादर्शयति । पारतन्त्र्येति । इच्छादीनां हि बाधकैरपनीते द्रव्याद्यकगुणत्वे गुणत्वमेव व्यतिरेकी हेतुरात्मपारतन्त्र्ये प्रमाणम् । यद्यपि चाय स्वरूपेणात्मा न प्रसिद्धस्तथा ऽपि द्रव्याष्टकव्यतिरेकाच्छिन्नश्चेदुरविप्रकर्षेण परामृष्टः यत्नोऽसि विशेष्टुं धर्मिणि च न्यायप्रवृत्त्यङ्गं संशयमापादयितुमिति निरवद्यम् । अथ भाष्ये
विभागवचनादेव त्रिविधमिति सिद्धमिति । तस्यार्थस्त्रिविधमिति विभागवचनादेव त्रिविधे पूर्ववदादौ सिद्धे किमर्थं पूर्ववदाद्युपादानं सूत्रेणेति । तत्र समाधानं त्रिविधवचनं त्रिविधस्य पूर्ववदादेर्वचनमुक्तः । महतास्त्रिविधस्य महाविषयस्यातीतानागतवर्तमानविषयस्य च लघीयसा सूत्रेण सत्यर्थेकमित्येतावतेवोपदेशो परं वाक्यलाघवं मन्यमानस्यान्यस्मिन्वाक्यलाघवे ऽनादरः सूत्रकारस्येति शिष्यान् व्युत्पिपादयिषोः । अत्र निदर्शनम् । तथा चायमस्य समाधानं इत्थंभूतेन वाक्यविकल्पेन वैचित्र्येण प्रवृत्त इति योजना । एवं तावल्लक्षणभेदादनुमानं भिन्नं प्रत्यक्षाद्दर्शितं भाष्यकारस्तु विषयभेदादपि भेदमाह सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम् । यो विषयभेद स्तद्विवृणोति । सदिति वर्तमानम् । असदित्यतीतानागते । प्रत्यक्षं हि लौकिकं वर्तमानविषयमेव । अनुमानं तु त्रैकाल्यविषयं यद्यपि प्रत्यक्ष-

मप्यतीतानागतयोः संप्रति निषेध्ययोर्निषेधे वर्तमानमसद्विषयं तथा ऽपि न निषेध्ययोः प्रवर्तत इत्येतावतैव सद्विषयमुक्तम्। अनुमानं तु तयोरपि प्रवर्तत-इत्येतावता असद्विषयमुक्तम्। तदेतदाक्षिपति सद्विषयं चेति। न ह्यनुपलब्धसामान्य इति सामान्यत उपलब्धौ विशेषतश्चानिर्णीतौ धर्मो न्यायप्रवृत्तावधिक्रियते न त्वनुपलब्धसामान्य इत्यर्थः। न चासतः स्वतन्त्रस्य सामान्यदर्शनमस्तीति। द्वितीयं कल्पमाशङ्कते अथेति। एतद्दूषयितुं धर्मवैविध्यमाह धर्मा इति। तद्विभजते। तत्रेति। पृच्छति कथं पुनरिति। यदि हि स्वतन्त्रः समवायो न तर्हि कस्य चिद्विशेषणं तथा च न विशेषणतया गृह्येतेति भावः। उत्तरं समवायान्तराभावात्। न विशेषणत्वं स्वातन्त्र्येण निराकुर्मः किं तु वृत्तिमस्येत्यर्थः। कस्मात्पुनरस्य न समवायान्तरमभ्युपेयत इत्यत आह अथेति। पृच्छति किमदमिति। अनवस्थाप्रसङ्गो हि नाम तर्को नैव प्रमाणमन्तरेण निर्णयाय पर्याप्त इत्यर्थः। उत्तरं न संदेहः किं त्वस्त्येव न्यायः। तमाह पञ्चेति। अयं पञ्चपदार्थवृत्तिशब्दो बहुव्रीहिणा परमाणौ वर्तते षष्ठीसमासेन च समवाये। न च कथं चिच्छब्दाभेदमात्रमनुमानाङ्गं मा भूद्गोशब्दसाम्येन वागादीनामपि विषाणित्वमित्यपरितोषाद्व्याख्यानान्तरमाह अनाश्रितः समवाय इति। इहबुद्धिनिमित्तत्वं कारणत्वम्। व्योम्नानैकान्तो मा भूदित्यत उक्तं व्यापकत्वे सतीति। सत्युपलब्धिकारणान्तरसद्भावे सर्वोपलभ्यता व्यापकत्वम्। तच्चेहप्रत्ययकारणत्वमात्मनि च समवाये चाविलक्षणमिति। न्यायेतिकर्तव्यतां तर्के पृच्छति। यदि पुनरिति। उत्तरं कार्यमिति। उक्तमनवस्थाप्रसङ्गमवतारयितुमनाधारत्वप्रसङ्ग उक्तः। स्यादेतत्। भवतु वृत्तेः प्रागनाश्रितं कार्यं पश्चात्समवेष्यति तुरीवेमादिभ्य इव तन्तुभ्य उत्पन्नः पटः पश्चात्तुर्येत्यत आह समवायश्चेति। अनवस्थाप्रसङ्गः पूर्वोक्त इत्यर्थः। शङ्कते प्राप्तिरित्यादिना। प्रमाणवत्त्वात् प्राप्तसमवायस्य वृत्तिर्न शक्या अनवस्थाभिया परित्यक्तुमित्यर्थः। विमर्शपूर्वकं शङ्कां निराकरोति किमिति। उभयोर्हि प्राप्तिमत्त्वस्य निवृत्त्या स्वाभाविकः संबन्धः कार्यत्वस्योपाधेः सततयोगकस्य विद्यमानत्वादित्यर्थः। अथ प्राप्तिधर्मो ऽपि कस्मान्न भवतीत्यत आह

९२ यदि पुनरियमिति। मन्त्रियमनवस्था कस्माद्बीजाङ्कुरादिष्विवेष्टापि नाभ्यु-

धेयत इत्यत आह न चैतामनवस्थामिति । अनादिप्रमेयमनादित्वा- ५६ । १
च्छक्या प्रतिपादयितुमनवस्था प्रमाणेन न त्विदंप्रथमेष्वादिमत्त्वेन तस्याश-
क्यनिश्चयत्वात् । तदिदमुक्तं प्रमाणाभावादिति । शास्त्रविरोधश्च
समवायान्तराभ्युपगम इत्याह समवायश्चेति । तत्त्वमेकत्वं समवायस्य
भावेन सत्तया व्याख्यातमिति शास्त्रमाह तदनेकत्वमुपपादयता बाध्येते-
त्यर्थः । चोदयति संबन्धिनिवृत्ताविति । तथा च विनश्यति विनष्टे
च तस्मिन् यो दृश्यते स ततो ऽन्य उत्पन्न इति सिद्धं समवायस्य
नानात्वमिति । परिहरति न नास्तीति । व्यक्तिरुपलब्धिः । कस्मा-
दकृतकत्वात् । अकृतकत्वमेव कुत इत्यत आह अकृतक इति । कार्ये
स्योपादानेनाकृतकसंबन्धघटाधारत्वादिति व्यतिरेकी हेतुः । व्यतिरेका-
व्यभिचारमाह यद्यपीति । उत्पद्यमानः खल्वयं समवायः सह कार्येण
न कार्यस्य न हि सहोत्पन्नौ कृतस्थौ मिथः संबध्येते यत्कार्यसमवायस्तयोः
सो ऽपि नास्ति तदनन्यत्वो न कार्यमुपादानाधारकं करिष्यति कार्यहेतुत्वाभा-
दित्यर्थः । निराकरोति तथा ऽपीति । भिन्नो हि कारणेभ्यः कार्यं भावरूप
जायते । कार्यकारणसमवायस्य च कार्यकारणे समवायिकारणे वक्तव्ये का-
र्यात्प्राक्कालस्य च समवायस्य न कार्यं कारणम् । न च निमित्तकारणमात्रा-
दस्य जन्मेति साम्प्रतं भावोत्पादस्य सर्वत्र कारणत्रयपूर्वकत्वनियमात् । तस्मा-
त्समवायस्य समवाय्यसमवायिकारणाभावान्न कार्यात्प्रागुत्पाद इति सूक्तम् ।
तथा ऽपि कस्येति वाच्यमिति शङ्कते । अथेति । दूषयति कार्येति । न च
पटतुरीययोगवत्समवायस्य पश्चात्कार्यकारणसमवाय इति युक्तम् । संयोग-
जस्य संयोगस्य कारणत्रयसमवायस्य तु समवायान्तरमन्तरेण कारणत्रययो-
गाद् अन्यथा ऽनवस्थाप्रसङ्गादिति भावः । उपसंहरति । तस्मादिति । ततश्च
न ज्ञायते किमभिप्रेत्यासद्विषयमित्युक्तमित्याक्षेप इति । समाधत्ते तत्र प्रति- ,, । १८
षिध्यमानेति । अतीतानागते सति प्रतिषिध्यमाने तद्विषयमनुमानमसद्विष-
यमुक्तम् । तन्निषेधस्तु भवतु प्रत्यक्षगोचरस्तथा ऽपि सिद्धो विषयभेद इत्यर्थः ।
अत्र चैष धर्मविधिक्रमः । द्वेधा तावद् विधीयमानः प्रतिषिध्यमानश्च विधी-
यमानश्च द्वेधा परतन्त्रः स्वतन्त्रश्चेति । स्वतन्त्रस्य धर्मत्वं विशेषणत्वमा-
विवक्षया द्रष्टव्यम् । ननु विधीयमानो ऽप्यसन् प्रत्यक्षस्य क्व विषयो व्याप्ति-

समाये कुलाले जायमानो घटः विस्फारिताक्षो हि सदा घटो भवतीति प्रत्येति । न चासौ सदा सन् सतो भवन प्रत्यकर्तृत्वात् गगनवदिति शङ्कते भवतीति । निराकरोति । न जायमानेति । जायमानस्यार्थस्य विधिवि- षयस्य सतया ऽसतया वा ऽनभ्युपगमात् । निषेधविषयतया तु तस्यास- त्त्वमभ्युपेयत एव । कस्तर्हि भवतिशब्दस्यार्थ इत्यत आह । भवतीति । घटो जायत इति तु लौकिकः प्रयोगो घटशब्द घटार्थेषु तदवयवेषूपचर्य्य नेया च सिद्धतया कर्तृत्वादुपपादनीय इति । उपसंहरति एवं तावदिति । स्वपक्षं समाधाय परेषामनुमानलक्षणं दूषयितुमुपन्यस्यति । अपरे त्विति । तस्यार्थमाह अस्यार्थ इति । दूषयति अत्रेति । यथासम्भवं समास विकल्प्य दूषयति । नान्तरीयकार्थ इति चेति । सत्त्व विधिविषयत्वान- गम्यत्व न तु सामान्य सत्त्वादिभिरनित्यत्वनान्तरीयककृतकत्वधर्मैरनित्य- त्वानुमानं स्यात् । न च शब्दे तेषामाकाशादिषु नित्येषु व्यभिचारादित्यर्थः । तथा ऽप्यसमर्थः समास इति । पूर्वमर्थातिरेकमात्रं दूषणमुक्तं सम्प्रति त्वर्थातिरेकेण हेतुना विशेषणसमासानुपपत्तिरित्यपौनरुक्त्यम् । विशेषणं विशे- ष्येण बहुलमित्यत्र विशेषणपदोपादानमात्रेण विशेष्यपदोपादानमात्रेण वान्य- तरस्यार्थात्प्राप्तेरुभयपदोपादानस्यैतत्प्रयोजनं यथोभयोः प्रत्येकं व्यभिचारः समुदाये त्वव्यभिचारस्तत्र समासो यथा स्यादिति स चात्र नास्तीति समासानुपपत्तिरित्यर्थः । सामर्थ्ये प्रयोजनाभिसम्बन्धः । चोदयति एक- १३ पदेति । परिहरति यत्रापीति । प्रधाने व्यक्तिविशेष्यत्वाद् भङ्क्त जाति- विशेषणत्वात् । पृथिवीत्युक्ते भवति संशयः किं पृथिवीत्वं सामान्यमस्य विवक्षितं यथा पशुना यजेतेति किं वा तद्विशेष्यं द्रव्यं यथा यह समा- र्ष्टीति भवेदमुपतिष्ठते द्रव्यमिति । तद्धि पृथिवीत्वात् सामान्यविशेषात् पृथिवीं व्यवच्छिनत्ति यत्र द्रव्यमित्युक्ते द्रव्यत्वसामान्यं व्यक्तिर्धर्मि विमर्शं पृथिव्यात्मनोपतिष्ठते । न द्रव्यत्वसामान्यं किं तु पृथिवी । न च द्रव्य- त्वपृथिवीत्वयोः सामानाधिकरण्यमस्ति न हि भवति पृथिवीत्वं द्रव्यत्व- मिति तस्मात्सामानाधिकरण्यसम्भवात् प्रधानैकव्यक्तिनाम । इह त्वर्थो ना- न्तरीयकत्वं व्यभिचरति नान्तरीयकत्वं नार्थे न ह्यस्ति सम्भवो नान्तरीय- कत्वं स्यान्न चार्थं इति । नान्तरीयकशब्दवाच्यस्यानभिधेयत्वासम्भवात् ।

वस्तुवचने ऽप्यर्थशब्दस्य लक्ष्यासम्भवाद् अविषयं लक्षणं न हि दिङ्नागमते किञ्चिदस्ति वस्तु यन्नान्तरीयकं सद्धेतुर्भवति । यथा ऽऽह सर्वोऽयमनुमानानुमेयभावो बुद्ध्यारूढेन धर्मधर्मिभावेन न बहिः सदसत्त्वमपेक्षत इति । अव्यापकं च न हि वस्त्वेव नान्तरीयकमसतो ऽपि नान्तरीयकत्वादिति भावः । दूषणान्तरमाह तद्विद इति चेति । नान्तरीयकदर्शनमित्युच्यमाने ५३ । १ शब्दसामर्थ्यादेव लभ्यते नान्तरीयकत्वविशिष्टार्थदर्शनं सति सम्भवे शब्दार्थपरित्यागाभावात् । अतस्तद्विधलिङ्गदर्शनसिद्धेः किमपरमवशिष्यते यदवबोधाय तद्विद इत्युपादीयत इत्यर्थः । एतदेव व्यतिरेकमुखेन निरूपयति । न हीति । एतल्लक्षणदूषणं लक्षणान्तरेष्वतिदिशति । एतेनेति । पृच्छति क इति । न ह्यस्मिन् लक्षणे तद्विद इत्यस्ति येन तदतिरिच्यते इति भावः । उत्तरम् । यथेति । तेषामुदाहरणं दूषयति । उदाहरणमिति । तदनेन दिङ्नागस्य लक्षणं दूषयित्वा ऽन्येषां लक्षणं दूषितं भवति दिङ्नागस्य स्वकीयलक्षणापवादार्थं वाक्यमनुमेयेन तत्तुल्य इत्याद्युपन्यस्य दूषयति । अपरे त्विति । अनन्तरलक्षणाकारमपेक्ष्यापर इत्युक्तम् । दूषयति अनुमेयइति । न हि यो ऽनुमेये सद्भावस्य स शक्यः सन्निति वक्तुमित्यर्थः । समाधत्ते । नामसद्भ इति । यदीत्र स्यात्तो त्रिपक्षे द्वेधा च विपक्षावृत्तिरिति हेतुरेव स्यान्न सव्यभिचार इत्यर्थः । पुनश्चोदयति । न कर्त्तव्य इति । कुतः अवधारणानिवृत्तेः । अनुमेये सद्भाव एवेत्यवधारणेनानुमेये सद्भावस्य नियतत्वात् कुतः पक्षैकदेशवृत्तेः प्रसङ्ग इति भावः । तन्निराकर्त्तुं यथासम्भवं विकल्पयति । अनुमेयइति । तत्र पूर्वकल्पस्य तात्पर्यं विकल्पयति । किं पुनरनेनेति । अयमर्थो ऽत्यन्तायोगो निराक्रियते यथा नीलं सरोजं भवत्येव नात्यन्तं न भवतीति । न तु नीलमेव सरोजं नान्यन्नीलमिति नापि सरोजमेव नीलं नान्यदिति । अथ संभव इति । सम्भवपरो न व्यतिरेकपर इत्यर्थः । तद्विकल्पद्वयं दूषयति उभयथा ऽपीति । दूषणान्तरं चाह न चैकदेशवृत्तिरिति । न ५८ । इत्यन्तायोगव्यवच्छेदेनायोगो व्यवच्छिन्नो भवति नापि सम्भवमात्रविधानेनाभावो व्यवच्छिन्नो भवति । तस्मादयोगव्यवच्छेदादेकदेशवृत्तिरनुमानाभावो न व्यवच्छिन्न इत्यर्थः । स्यादेतद्विशेष्यसङ्गतो ऽयमेवकारो ऽनु-

मेव एव संभवति यथा पार्थ एव धनुर्धर इति । न चायमन्ययोगव्यव-
च्छेदो विनेयकारं लभ्यते । तस्मान्न व्यर्थमवधारणमित्यत आह । उत्तर-
पदबाधा च । न ह्यस्ति सम्भवो ऽनुमेय एवास्ति न तुल्ये चेति । तस्मा-
त्तत्तुल्य इत्यस्य बाधा । चकारो नैकदेशवृत्तिर्निराकृत इति दूषणं समुच्चि-
नोति । अनुमेय एव सद्भावपक्षं यथासम्भवं दूषयित्वा अनुमेये सद्भाव एवेति
द्वितीय पक्ष दूषयितुमुपन्यस्यति अथोत्तरमिति । तस्य प्रयोजनं दर्शयति ।
तस्य व्याप्तिरर्थः । सद्भाव एवेति किल विशेषणसङ्गतमवधारणमयोगं
व्यवच्छिन्दत् व्याप्तिं दर्शयति तथा च व्याप्तिरस्यार्थ इत्यर्थः । दूषयति ।
तथाऽप्यनुमेयमवधारितं संभवस्य व्याप्त्या न धर्म्मः सद्भाव' ।
हेतुमाह यत एवकरणं ततो ऽन्यत्रावधारणमिति । मा वधारि
सद्भावो ऽवधार्य्यतां चानुमेय क्रियेतावता ऽपीत्यत आह संभवव्याप्त्या
चेति । अनुमेय यन्न्यवधारित सद्धेतुसम्भव परित्यज्य नान्यत्र वर्तते तत
स्तत्रानुमेय हेतुसम्भवव्याप्त्या ऽवधारित भवति हेतुसम्भवस्त्वनवधारितः सर्व-
चैव तत्तुल्ये च विपक्षे च प्रसृतः स च कश्चित्तत्तुल्यविपक्षौ व्याप्नोति कश्चि-
त्तदेकदेशवृत्तिः तदस्य हेतुसम्भवस्य विपक्षे ऽपि प्रसक्तस्य प्रतिषेधाय
युक्तमवति नास्तीति । तत्तुल्ये तु प्रसक्तमप्रतिषिद्धमनुमतमेवेति तत्तुल्ये
सद्भाव इति व्यर्थमित्यर्थः । स्यादेतत्तुल्ये हेतुसद्भावसिद्धावपि तत्तुल्ये
व्याप्त्या हेतोः सद्भावो भवत्वित्येतदर्थं तत्तुल्ये सद्भाव इति वचनमित्यत
आह । तत्तुल्ये चेति । यदि पुनर्व्याप्तिर्विवक्ष्यत कृतकत्वे साध्ये प्रयत्नान-
न्तरीयकत्व न हेतुः स्यात् न ह्ययं सपक्षव्यापक इति भावः । दूषयति ।
अथ तत्तुल्य इति । दूषयितु विकल्पयति किं पुनरत्रेति । पूर्वस्य विरो-
धाद्वचनम् उत्तरस्य पौनरुक्त्यादिति । पूर्वपदेन सह विरोधे निदर्शनमाह
न हि भवतीति । अनुमेयसद्भाव इत्यनेनानुमेयव्यक्तो हेतोर्लब्धायां
तत्तुल्यएव सद्भाव इति समुच्चीयमानावधारणं विपक्षमात्रवृत्तिं व्यवच्छि-
नत्ति न अनुमेयात् । नरं च नारायणमेव चादौ स्वतः मुनौ द्वौ
जनयां बभूवेति यथेति चेदत आह तथेहापीति । समुच्चीयमानावधारणे
हि तत्तुल्येन यथा ऽन्ययोगव्यवच्छेदेनोपकारः सम्बध्यते तथा अनुमेयेनापि
सम्बध्येत तथा चानुमेयैकदेशवृत्तिरपि हेतुः स्यात् । न खलु नर च नारा-

यथामेवेति निपातो नारायणेन सहान्ययोगव्यवच्छेदेन संबध्यते । नैव चायोगव्यवच्छेदेनेति भावः । अवधारणस्यायोगव्यवच्छेदेन संबन्धमिच्छता ऽनुमेये यथा अयोगव्यवच्छेदस्तथा तत्तुल्ये अयोगव्यवच्छेदेन संबन्ध उच्येतेति मन्यते अथ तत्तुल्य इति । निराकरोति तत्तुल्ये इति । एतदेव ५६ । ३ स्फोरयति इति तं* । तत्र दर्शनेन च यस्यानुमेये सद्भाव एवेत्यनूद्य तस्य तत्तुल्य एव सत्त्वमिति विधातुं वक्तव्यम् । न ह्यनूद्यमानं वक्तव्यं विधेयं तथा सति तद्विशेषणाय प्रवृत्तान्तरस्थाने सति वाक्यभेदप्रसङ्गात् । यथा यस्यो-भयं हविरार्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । तत्र हि यद्यपि स्वरूपेणार्तिरशक्यप्रतिपत्तित्वेन हविषा विशेषणं युज्यते तथापि न शक्यं हविरुभयत्वेन विशेष्टुं विना वाक्यभेदादिति वाक्यभेदभिया प्रतीयमानमप्युभय-त्वमविवक्षितमेवमत्राप्यनुमेयसत्त्वमविवक्षितम् । अथ तद्विवक्षयैव वाक्यभेदमुपेत्य पश्चाद्वाक्यैकवाक्यतया ऽभिमतार्थसिद्धिराश्रीयते । न च विरोधाद्वाक्ययो-रेकवाक्यताविरहः । तत्तुल्य एवेत्यन्ययोगव्यवच्छेदस्य विपक्षमात्रविषयत्वे-नाप्युपपत्तौ विरोधासिद्धेः । तस्मादन्यापोहार्थत्वेन पदानां विरोधो वक्तव्यः । तथा हि अनुमेये सद्भाव इत्यत्रानुमेय एव नाननुमेये सद्भाव एव नासद्भाव इति पदार्थः । तथा च तत्तुल्यविपक्षयोर्हेतोरभावो दर्शितः । एवं तत्तुल्य-सद्भाव इत्यत्रापि तत्तुल्य एव नातत्तुल्ये सद्भाव एव नासद्भाव इति पदार्थः । तथा चानुमेये ऽसद्भाव इत्युक्तं भवति । न चानुमेयतत्तुल्यपदार्थयोः परस्प-रपरिहारवतोः समुच्चयसम्भवः । द्वयोरपि नियतमात्रव्यावृत्तिपरत्वात् पर-स्परसमुच्चयसद्भाव इति चेत् । नाश्वो ऽगौरित्यनयोरपि हस्त्यादिनिवृत्तिमा-त्रपरत्वेनाभिन्नार्थयोः सामानाधिकरण्यप्रसङ्गात् । तस्माद्विरोधात् समुच्चीय-मानावधारणं न युक्तमिति । न च समुच्चीयमानावधारणं दिङ्नागो मेने यदे-षमूचे वैशेषिकलक्षणदूषणावसरे यदि रूपमेव चाक्षुषं ततो न द्रव्यं चाक्षुषं स्यात् तथा च महदनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति द्रव्यचाक्षुषत्वा-भिधानं व्याहन्येतेति । अत्र हि पूर्वेण द्रव्यरहितरूपमेव चाक्षुषं न गन्ध-रसादीति वक्तव्यं समुच्चीयमानावधारणम् । तस्मात् समुच्चीयमानावधारणा-भिधानं कीर्तेः स्वाभिप्रायेण तन्नायुक्तमिति† कृतं विस्तरेण । अपास्तं नास्ति-

---

* इदं मुद्रितवार्त्तिकपुस्तके नास्ति ।                    † तन्नानायुक्तमिति इ पु० पा० ।

५ तेति दूषयति असतीति। कस्माद् यदसत् तत्तुच्छं स्वयमेव नास्ति तत्र सदिति शक्यं व्यवहर्त्तुमसदिति वा भवतु तथापि कस्मात्तस्मिन् हेतोः न व्यावृत्तिर्भवतीत्यत आह न ह्यसदिति। यथा चैतत्तथा ऽन्वये हेतूपादानावसरे ऽस्माभिरुक्तम्। स्वरूपेण दूषयित्वा तदन्तर्गतमवधारणं दूषयिष्यन्ननूद्य विकल्पयति किमवधार्यत इति। प्रथमं कल्पं दूषयति। यदि तावदिति। तत्तुल्य एव सद्भाव इत्यनेन गम्यते इत्यर्थः। द्वितीयं कल्पं दूषयति। अथ पुनरिति। गौरयं विषाणित्वादित्ययं हेतुर्विपक्ष एव नास्ति। पक्षसपक्षव्यापकत्वात्। न तु नास्त्येव विपक्षैकदेशे महिषादौ वृत्तेः। अतो विपक्ष एव नास्ति इत्ययमपि हेतुः स्यात्। तदेवमवयवार्थं दूषयित्वा समुदायार्थं दूषयितुमुपन्यस्यति। यदप्येकविपदपर्युदासेनेति। तत्रैकपदपर्युदासेन त्रयः पक्षाः द्विपदपर्युदासे ऽपि त्रय इति षट्कम्। तत्पर्युदासेन द्विकपरिग्रहः। यथा ऽनुमेये सद्भाव इत्युच्यमाने विपक्षवृत्तेरपक्षधर्मस्य च हेतुत्वं स्यात्। यथा नित्यः शब्दः चाक्षुषत्वात् सामान्यवदिति। नास्तितासतीत्युच्यमाने यो पक्षधर्मस्तुल्ये नास्ति स हेतुः स्यात् तथापि नित्यः शब्दो ऽस्पर्शत्वात्। अनुमेये तत्तुल्ये चेत्युच्यमाने अनित्यः शब्दः प्रमेयत्वादिति विपक्षवृत्तिर्हेतुः स्यात्। अनुमेयेऽस्ति च नास्तीत्युच्यमाने नित्यः शब्दो जातिमत्त्वे सति बाह्यैकेन्द्रियग्राह्यत्वाद् इत्ययं तत्तुल्यहीनो[*] ऽपि हेतुः स्यात् तत्तुल्ये ऽस्ति असति च नास्तीत्येतावत्युच्यमाने ऽनित्याः परमाणवः कृतकत्वादित्यपक्षधर्मो हेतुः स्यात् तदेतत्सर्वं मा भूदिति समुदायोपादानप्रयोजनम्। तदेतद्दूषयति एतदपीति। सपक्षव्याप्यव्यापिभ्यां द्विरूपयुक्तस्यान्वयिनो द्वित्वम्। संप्रति साङ्ख्यीयमनुमानलक्षणं दूषयति। एतेनेति। संबन्धो ऽविनाभावः साधनस्य साध्येन तस्मात् प्रत्ययाद् दृष्टतत्प्रमाणावधारितात्। तथा ऽपि यथाविनाभूते विरुद्धे भवत एकस्मिन् धर्मिणि विरुद्धाव्यभिचारिणी तयोरपि हेतुत्वं प्रसज्येतेत्यत उक्तम् एकस्मादिति। शेषस्यानुमेयस्य सिद्धिः। अनुपपन्नं चानयोः साध्येनोक्तमेतेन न प्रयुक्तमिति। अनुपपत्तिं पृच्छति। कथमिति।

। १८ यथार्थमवमनुपपत्तिमाह न हीति। यदि प्रत्ययशब्दो ज्ञानवचनः ज्ञानं चेदन्येन विशिष्यते तदेतद्दूषणम्। अथ संबन्धविशेषणमेकस्मादिति प्रत्य-

* तत्तुल्यहीनदोष इति ग पु॰ पा॰।

सम्बन्धस्तु ज्ञेये न तु ज्ञाने तदेतदुपन्यस्य दूषयति अथापि संबन्धादि- ५९ । २०
ति । शङ्कते । अथेति । संबन्धस्य प्रत्यक्षतोक्ता पूर्वं न त्वनुमितिकाल-
इत्यर्थः । दूषयति । तथाप्युपलब्धसंबन्धस्य पूर्वमनुमानकाले चानु-
पलब्धलिङ्गस्यानुमानं प्रसज्येतेति* । स्यादेतत् । संबध्यत इति व्युत्प-
त्त्या संबन्धो लिङ्गं तेनाविनाभूताद्धेतोः प्रत्यक्षादनुमेयसिद्धिरिति । तथा च
गृहीताविनाभावाल्लिङ्गात्त्वन्यस्मिन् प्रत्यक्षादित्युपपन्नमित्यत आह न चान्या ग-
तिरिति । कस्यापि व्याख्याने प्रकरणादिति व्यर्थम् । तथा हि अन्वयव्यतिरे-
काभ्यामेभिरविनाभाव उच्यते सर्वोपसंहारवतो वा तत्र प्रथमे कल्पे मा भूद्वि-
रहाव्यभिचारी बाधितविषयस्तु हेतुः स्यात् । द्वितीये तु कल्पे न सर्वोप-
संहारो हेतुर्हि सहाव्यभिचारी भवतीत्येकस्मादित्यतिरिच्यते । तस्मात्सूक्तं
न चान्या गतिरस्तीति । अव्यापकत्वं लक्षणस्याप्याह । रूपेण चेति ।
न तावदनयोस्तादात्म्यं भिन्नेन्द्रियग्राह्यत्वाद्भिन्नबुद्धिबोध्यत्वाच्च । न चानयोस्तदा-
त्मनोरनयोः संबन्धः कश्चिदुपलभ्यते । न च प्रतिबन्धपरिणामवादे कुण्डब-
दरादीनामपि कश्चिदस्ति संबन्ध इत्यपि द्रष्टव्यम् । शङ्कते अथेति । निराक-
रोति सोऽपीति । न हि सांख्यानां बौद्धानां वा राद्धान्ते अस्ति संबन्धः सम-
वायो नाम नापि तदाश्रयो द्रव्यमतः स्वदर्शनव्याघात इत्यर्थः । यद्यु-
च्येत प्राधानिकत्वाद्रूपादीनां प्रधानमेकमाश्रयः तथा च यत्र रूपं तत्र स्पर्श
इत्यत आह । यत्र रूपमिति । कुतः न कचिदिति । न हि प्रधानमा-
धारः कार्याणामपि तु प्रधानात्मकत्वमेवाभिप्रेयते । तथा च यत्र तत्रेत्यनु-
पपत्तिः । न च तादात्म्यमित्युक्तम् । न च भेदाभेदावेकत्र संभवतो विरो-
धादिति भावः । शङ्कते परस्परेति । यथा द्वारपिण्डिकाङ्गानि भिन्नान्यपीतरा-
धारव्यवस्थितान्यपि परस्पराश्रयतया न पतन्ति एवं रूपस्पर्शावपि पर-
स्पराश्रयावित्यर्थः । निराकरोति । परस्पराधारभावेऽप्यन्यथा पिण्डिका-
ङ्गादौ नासौ रूपस्पर्शयोः कुतः । न रूपं स्पर्शे न च स्पर्शो रूपइति । ६० ।
परस्परमयोगतिरव्यमुक्त्वान्यथा पिण्डिकाङ्गानि न पतनव्यवस्थितानि परस्परा-
धारत्वेनापदिश्यन्ते । रूपस्पर्शादीनां तु स्थितिर्न परस्परहेतुका अपि तु
भोगापवर्गलक्षणपुरुषार्थहेतुकेति भावः । एतेन साङ्ख्यानां सप्तविधः

* तथाप्यनुपलब्धलिङ्गस्यानुमानं प्रसज्येतेति मु० पा० पु० पा०।

सम्बन्धः प्रत्युक्तः। शेषं सुबोधम्। त्रिभागसूत्रे ऽनुमानानन्तरमुपमानस्योद्देशाद्यथोद्देशं च लक्षणादनुमानलक्षणानन्तरमुपमानलक्षणमाह। अथोपमानमिति भाष्यम्। सूत्रं पठति।

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्॥** अत्रापि यत इत्यध्याहार्यम्। सिद्धिः साधनम्। तदेतद्भाष्यकारेण व्याख्यातम्। प्रज्ञातेन प्रसिद्धेन गवा साधर्म्यात् सामान्याद्गवयस्य। साधर्म्यं च सामान्यमभिदधता न सामान्यातिरिक्तं सादृश्यं नामार्थान्तरमस्तीत्युक्तं भवतीति। साधर्म्यं चापि सिद्धं न साध्यसाधनायालमिति साधर्म्ये प्रसिद्धिरपि द्रष्टव्या। सा च यथा गौस्तथा गवय इत्यागमात्। तदिदमुक्तं यथा गौरिति। साध्यसाधनपदव्याख्यानं प्रज्ञापनीयस्य गवयशब्दवाच्यतया प्रत्यक्षदृश्यमानगोसादृश्यस्य गवयत्वसामान्यविशेषवतः पिण्डस्य प्रज्ञापनमुपमानम्। पिण्डस्य हि गवयशब्दवाच्यतां पुरुषोऽतिदेशवाक्यस्मरणसहकारिणः प्रत्यक्षाद्गवयगताद्गोसादृश्यात् प्रजानन् तेन प्रज्ञाप्यत इति प्रमाणव्यापारः प्रज्ञापनमुक्तमिति। अथ वार्तिककारः प्रथमं तावत् सूत्रतात्पर्यमाह। **सूत्रार्थः पूर्ववत्।** समानासमानजातीयव्यवच्छेद इत्यर्थः। साध्यसाधनमित्युच्यमाने प्रत्यक्षादिसाधने मुषलादिसाधने घटे प्रसङ्गः। अत उक्तं प्रसिद्धसाधर्म्यादिति। यद्यपि प्रसिद्धसाधर्म्यमुपमानमित्युच्यमाने प्रमाणविशेषाभिधाय्युपमानपदसामानाधिकरण्यात् कारकत्वलाभस्तथापि तदाभासनिराकरणाय साध्यसाधनपदोपादानम्। तेनोपमानाभासमपाकृतं भवति। अवयवार्थं विभजते। **प्रसिद्धेति।** वार्तिककारेण बहुव्रीहिद्वयसमासो दर्शितः। न तु तृतीयासमासो भाष्यकारीयो निरस्तः। भाष्यकारेण हि श्रुतितया गवयप्रतिपत्तिः फलं साध्यसाधनपदवाच्यमुक्ता व्याप्तिप्रयोज्यव्यापारत्वात्। प्रयोजकव्यापारस्य प्रज्ञापनस्य परत्वान्निष्कृष्याभिधानं कृतम्। **समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इति।** एत-
१२ देव साध्यसाधनपदार्थतया वार्तिककारो व्याचष्टे। **समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः** फलम्। साध्यपदेन समाख्यासंबन्ध उच्यते तस्य साधनं सिद्धिः प्रतिपत्तिरिति। ननु प्रतिपद्यतामयं गोसादृश्ययुक्तं गवयं समाख्यासम्बन्धप्रतिपत्तिस्तु कुतस्त्या न हि यो यत्सदृशं यं प्रतिपद्यते

स तस्य समाख्यामप्यवगच्छतीत्याशयवान् पृच्छति । किमुक्तं भवति । ६० । १३ ब्दःआगमेति । आगमानुभवाहितात्संस्कारात् स्मृतिः । एतदुक्तं भवति । न केवलं सादृश्यज्ञानं समाख्यासम्बन्धप्रतिपत्तिहेतुरपि त्वागमार्थस्मृत्यपेक्षमिति । नन्वसत्यागमानुभवे कुतः स्मृतिरित्यत आह यदा ह्यनेनेति । प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिरुभयी श्रुतिमयी प्रत्यक्षमयी च । श्रुतिमयी यथा गौरेवं गवय इति प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टो ऽयमीदृशः पिण्ड इति । तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासम्बन्धप्रतिपत्तिहेतुः । यद्यपि यथा गौरेवं गवय इत्येतदस्मादपि गोसदृशस्य गवयशब्दः समाख्येति शक्यमवगन्तुम् । न खलु प्रत्यक्षएव संज्ञाकर्म समानजातीयव्यवच्छेदे हि तद्भवति । तच्च यदि मानान्तरेणापि तथा ऽवगम्येत संज्ञाकर्म* निवारयेत् । गोसादृश्येन चोपलक्षितः पिण्डो य इति सर्वनाम्ना परामृष्टः स चायं घटादिभ्यो ऽसमानजातीयेभ्यो महिषादिभ्यश्च समानजातीयेभ्यो व्यवच्छिन्नो ऽवगन्तुं गवयस्तथापि यावदयमसौ गवय इति साक्षात्प्रतीते संज्ञिनि संज्ञा न निवेश्यते तावदयं परिप्लुतमतिः प्रमाता कं चित् खलु द्रक्ष्यामि सादृश्यं पिण्डं यत्र गवयसंज्ञा प्रतिपत्स्यत इति प्रमोत्सुक एवोदीक्षते । न चासौ वाक्यमात्रसहायो ऽप्रत्यक्षीकृतगोसदृशगवयपिण्डमसौ गवयाख्य इति प्रतिपत्तुमर्हति । न च वाक्यं विना प्रत्यक्षमात्रात् तस्मादागमप्रत्यक्षाभ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम् । ननु यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक्करभमतिदीर्घवक्रग्रीवं लम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमपशदं पशूनामिति तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ करभ इत्यवैति तत्कतमदेतेषु प्रमाणं न तावदुपमानं साधर्म्याभावात् । नापि पञ्चमं प्रमाणमुपगम्यते । यद्युच्येत निन्दापरं वाक्यं करभस्य तादृशत्वे न प्रमाणं न ह्यन्यपराच्छब्दादन्यस्यावगम इति । अथ तर्हि तादृशे पर्यवस्यति वाक्यं तत्र का गतिः । अथ तथापि तादृक् करभ आगमावगतः प्रत्यक्षेण प्रत्यभिज्ञायते करभशब्दवाच्यता च तस्य तत्पूर्वं तादृक्करभपरत्वे ऽप्यागमस्य प्रयोगाभावादव-

---

* कस्य संज्ञाकर्मेति य पु पा ।

गतानुमानात् । यो हि यत्र प्रयुज्यते शब्दो ऽसति वृत्त्यन्तरे स तस्य वाचको यथा गोशब्दो गोत्वे प्रयुक्तश्चायं तादृशि तस्मात्तस्य वाचक इति । यदिदं प्रागेव प्रयोगानुमितवाचकत्वमस्य प्रत्यक्षसमये केवलं स्मर्यतइति । समानमेतदुपमानवादिनोऽपि । तत्रापि वाक्यादवगतसाधर्म्यवान्पिण्डः प्रत्यक्षेण प्रत्यभिज्ञायते प्रयोगानुमितं च गवयशब्दवाच्यत्वं स्मर्यते इति न फलान्तरमर्थयिष्यते यत्रोपमानं प्रमाणान्तरमिति । अत्रोच्यते । न तावदाकाशादिशब्दवदेष गवयशब्दः साक्षात्पिण्डस्य वाचकः किं [illegible] गवयत्वं निमित्तीकृत्य पिण्डे वर्ततइति परमार्थः । न च यथा गोरेवं गवय इति वाक्याद्गवयत्वमवगतं न ह्यनवगतसंबन्धं गवयपदमवधारयति । तदवगमात्संबन्धवेदने परस्पराश्रयप्रसङ्गः । न च गोसादृश्येनोपलक्ष्यते । न ह्यन्यनुपलब्धवतो गवयत्वेन गोसादृश्यं संबद्धं दृष्टं न चादृष्टसंबन्धमुपलक्षकम् । न हि पुरुषेणादृष्टसंबन्धो दण्डः पुरुषमुपलक्षयितुमर्हति । तस्मात्सम्बन्धिनो गवयत्वस्य सर्वथा ऽनुपलब्धेः कुतो वाक्याद्वानुमानाद्वा वाच्यवाचकसम्बन्धावगमः । कुतस्तराञ्च सम्बन्धस्मृतिः गवयत्वसामान्यविशेषवति च पिण्डे प्रत्यक्षे युक्तः, सम्बन्धावगमः सम्बन्धिनो गवयत्वस्य प्रत्यक्षत्वात् । तथापि किं गवयत्वजातिमान् पिण्डो वाच्यः न चादृष्टगोसादृश्यवानिति* कुतो विनिगमनेति चेद् वाक्यार्थस्मरणसहकारिगवयत्वजातिमतः पिण्डस्य गोसादृश्यदर्शनमेव तर्कसहायं गवयत्वाभिधाने प्रमाणं तर्कश्च गोसादृश्यविशिष्टपिण्डाभिधाने कल्पनागौरवप्रसङ्गः । तथा हि सादृश्यविशिष्टपिण्डाभिधानेनाप्रतीतं सादृश्यं पिण्डं विशिनष्टीति तत्प्रतिपत्तव्यम् । न च शब्दादन्यतस्तदवगम इति शब्दस्य तत्र वाचकत्वं कल्पनीयम् । [illegible] चाविशिष्टं सादृश्यं पिण्डविशेषणं गवयपदमवगमयितुमर्हति यस्य कस्य चिद् येन केन चित् सादृश्यादिति तदपि तथा विशेषणीयम् । न चान्यतो गोत्वस्यापि प्रतीतिरिति तदपि गवयपदेनाभिधातव्यमिति कल्पनागौरवम् । गवयत्वजातिमत्पिण्डाभिधाने [illegible] लाघवमिति तदनुजानाति । साधर्म्यपदं च धर्ममात्रोपलक्षणमिति करणसाधनोपपन्निष्पद्यमानकर्मेति नाव्याप्तिः । नापि पञ्चमप्रमाणाभ्युप-

* गोसादृश्यवानिति क पु पा ।

गमः । अत एव बहून्युदाहरणान्युक्त्वाह स्म भगवान् भाष्यकारः । एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति । तस्मात्सर्वं चतुरस्रम् । तदीदृशमुपमानफलमविद्वान् सादृश्यज्ञानं सादृश्यविशिष्टज्ञानं वोपमानफलमिति भ्रान्तो भदन्तो दिङ्नाग आक्षिपति । प्रत्यक्षेणेति । पृच्छति कथमिति । उत्तरं यदा खल्विति । उपलब्धा चेतत् । उभौ प्रत्य- ६० । १ क्षेण पश्यतीति । यद्यपि गवयमेव प्रत्यक्षेण पश्यति स्मरति च गां तथापि गोसादृश्यं गवयस्य प्रत्यक्षमेव । गोत्वमप्रत्यक्षमप्रत्यक्षत्वाद्गोरिति चेत् । हन्त भोः किमभिमतं सादृश्यमायुष्मतां यदप्रत्यक्षतया गवि न प्रत्यक्षम् । सामान्यबाहुल्यं जात्यन्तरवर्ति जात्यन्तरस्य सामान्यान्येव भूयांसि गुणावयवकर्मणाम् । भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यत इति चेत् । तत्किमिदानीं कर्मत्वादि सामान्यं गोगवयगतकर्मादिभेदेन भिन्नमित्यपि वक्तुमध्यवसितोऽसि । तस्माद्यथा कालाक्ष्यां गवि गोत्वमीक्षितवतः स्वस्तिमत्यां प्रत्यभिज्ञायमानं तद्विज्ञानाद्भवति तथेहापीति न फलातिरेकः । तस्मान्न सादृश्यप्रतीतिफलमुपमानं प्रत्यक्षादागमाद्वा व्यतिरिच्यत इति सूक्तम् । भदन्ताश्रितमुद्घाटयति । गवयेनेति । गवयगतं सादृश्यविशिष्टमित्यर्थः । अर्थान्तरमुक्तं स्मारयति । गवयेनेति । उपदेश इति । तस्मादिति । प्रयोगस्तु ,, । २ प्रत्यक्षादिभ्यः प्रमाणान्तरमुपमानं तज्जन्यप्रमाविलक्षणप्रमाजनकत्वात् । यदि न तेभ्यो विलक्षणमभविष्यद् न तद्विलक्षणां प्रमामकरिष्यत् । यथा तान्येव न चैतत्तथा । तस्मात्तथेति । अथ शब्द इति भाष्यम् । उपमानानन्तरं शब्दोद्दिष्टस्योपमानलक्षणानन्तरं शब्दस्य लक्षणमित्यर्थः । लक्षणसूत्रं पठति ।

आप्तोपदेशः शब्दः ॥ ७* ॥ शब्द इति लक्ष्यपदम् । आप्तोपदेश इति लक्षणम् । उपदिश्यतेऽनेनेत्युपदेशो वाक्यज्ञानं तदर्थज्ञानं वाभिधीयते तत्र वाक्यज्ञानप्रामाण्यपक्षे तदर्थज्ञानं फलम् । पदार्थस्मृत्यादयस्त्ववान्तरिका इतिकर्तव्यता तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम् । यद्यपि विधिरुपदेशः प्रवर्तनमित्यनर्थान्तरम् । यद्यपि चायं नियोज्यप्रयोजने प्रवृत्तिनिवृत्ती विधिनिषेधाभ्यामभिधीयेते । ते हि नियोज्यप्रयोजने

* न्यायसूत्र १—७ सू० पा ।

प्रवृत्तिनिवृत्ती विधत्तः तथापि भूतार्थपरोपनिषदादिशब्दव्यापकत्वात् पर-प्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम् । यद्यपि सदेव सोम्येदमग्र आसीदित्यादि वचनं क्व चिन्न प्रवर्त्तयति कुतश्चिद्वा न निवर्त्तयति पुरुषं तथापि पुरुषश्रेयोऽभिधत्तद्व्युपदेश इत्युच्यते । तथाप्यतिव्याप्तिश्चैत्यवन्दनादिवाक्यानामप्येवंलक्षणत्वादत उक्तमाप्तेति । आप्तानामृष्यार्य्यम्लेच्छानामुपदेशः शब्दो न त्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति । तदेवाह वार्त्तिककारः ।

। ८ न शब्दमात्रमिति सूत्रार्थः । सूत्रस्याप्तलक्षणपरं भाष्यम् । आप्तः खलु साक्षात्कृतधर्मा । सुदृढेन प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था हिताहितप्राप्तिपरिहारार्था येन स तथोक्तः । तथापि तत्त्वं विद्वान् कारुणिकतया* विपरीतोपदेशो निवारितः । चिख्यापयिषेत्यकृपाव्याप्त† कारिते निराकृते इति । प्रयुक्त उत्पादितप्रयत्न इत्यलसत्वम् । तथापि स्थानकरणपाटवाभावेन वर्णनिष्पादनासामर्थ्येनाप्तः प्रवक्ष्येतेत्यत आह उपदेष्टा । स्थानकरणपाटववानित्यर्थः । आप्त इति प्रकृतिप्रत्ययसमुदायात् प्रकृतिं निष्कृष्य तदर्थमाह । साक्षात्करणमिति । अनेन चोक्तस्वरूपसंपदुपलक्षिता । प्रत्ययार्थमाह । तयेति । आप्तलक्षणस्य व्यापकत्वमाह ऋषीति । दर्शनादृषिः साक्षात्कृतवेदान्यधृतिप्रमेयमात्रः । आराद्यातः पातकेभ्य इत्यार्यो मध्यलोकः म्लेच्छाः प्रसिद्धाः । म्लेच्छा अपि हि प्रतिविषयमवस्थिताः धान्यानामपहृतसर्वस्वा मार्गस्थाने हेतुदर्शनशून्या भवन्त्याप्ता इति । तदनेनाप्त दोषत्रयं विदुषामिति परेषामाप्तलक्षणमव्यापकमुक्तं भवति । तदेतद्भाष्यमात्रेणानुमापते । आप्तः स्वर्ग इति । स्वर्गोऽस्ति स्वर्गोऽति । आक्षेपो भाष्यमाक्षिप्य सूत्रं समाधत्ते आप्तः आप्तो युक्त इति यावत् । अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेवताविषयः स्वतःप्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः लौकिकस्यार्यम्लेच्छानां प्रमाणान्तरमूलो युक्तः मानान्तराभावे तु नाप्तोऽयुक्त इत्यर्थः ।

। ११ समाधत्ते न ब्रूम इति । पौरुषेयत्वं वेदानां द्वितीयाध्याय उपपादयिष्यते । तस्मात्पुरुषस्येवाप्तोपदेश इति साधु व्याख्यानं भाष्यकारीयमिति भावः ।

* अनवगततया वा अनुपदिशन् मत्सरितया वा विपरीतमुपदिशन् आप्तः स्यादित्यत आह । यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त' । यथादृष्टस्येति मत्सरितया । [illegible] पु· [illegible] ।

† °चैकप्रसकोति पु· पा ।

पृच्छति कः पुनरिति । अस्ति स्वर्गादीनामप्रत्यक्षत्वे न्यायः योगिप्रत्यक्षं ६१ । १२
न स्वर्गादिविषयः प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति भावः । उत्तरम् । **ब्रूमो
न्यायम्** । तमाह **सामान्यविशेषवत्त्वात् कस्य चित् प्रत्यक्षा** इति ।
अत्र यावति पक्षे यो हेतुः सिद्धस्तस्य तन्मात्रं पक्षीकार्यम् । योगजे च
प्रत्यक्षे सिद्धे तत्साधकादेव प्रमाणात्तस्य स्वर्गादिविषयत्वमपि सिद्धमिति
धर्मिग्राहकप्रमाणविरुद्धं मीमांसकानामनुमानं नोदेतुमप्युत्सहते प्रागेव
तद्बाधितुम् असिद्धे तु योगजे प्रत्यक्षआश्रयासिद्धो हेतुराभासः अस्माकं तु
सम्प्रदायः संहितश्च न्याय इति भावः । अनित्यत्वं हेतुमाक्षिपति ।
असिद्धमिति । परिहरति नेति । **नित्ये चापूर्व** इति । अत्र त्रयः कल्पाः
किमेकमपूर्वं सर्वपुरुषसाधारणमाहो असाधारणं यदा त्वसाधारणं तदापि
किं प्रतिपुरुषमेकैकमसाधारणमाहो प्रतिपुरुषमनेकमिति । तत्र प्रथमं कल्पं
दूषयति । **यदि साधारणे**ति । न हि कदा चिदप्ययमपूर्वं पश्यति
लौकिकः पुरुषो योगिनस्त्वनभिव्यक्तमपि पश्यन्तीति भावः । द्वितीयं कल्पं
दूषयति । **एतेन प्रतिपुरुषमि**ति । तस्यार्थं आधिक्यमपचयोपचय इति- ६२ ।
यावत् । यद्बाले व्यञ्जकेति । एकमपि व्यञ्जकभेदादुत्कर्षनिकर्षवद्दृष्टं यथा
भवति दर्पणे महन्मुखं तदेव कनीनिकायामणीय इति* । न दृष्ट इति ब्रूम इति ।
पद्धिना पृच्छति । किं पुनस्तत् । यदि न दृष्टं तथापि भेदेन तद्दृष्टं दृष्टिर्नास्ति
किम्पुनस्तत्र द्वैतेन भेददर्शनमिव भासते । समाधाता स्वाभिप्रायमाह ।
**मिथ्या प्रत्यय** इति । न भेददर्शनमपजानीमहे किन्तु पारमार्थिकं भेदं न च
कल्पितो ऽपूर्वभेदः पारमार्थिकाय कार्यायालमिति भावः । उत्कर्षापकर्ष-
शून्यं कर्मैव इति शेषः । तृतीयं कल्पमाक्षिपते । प्रतिपुरुषमनेकमिति ।
दूषयति अनियुक्त इति । अथान्तरकालमिति । अश्वमेधक्रियया साध-
दपूर्वं स्वकालस्थाभिव्यक्तं फलदानाभिमुखीकृतम् अभिव्यञ्जकसमानकाल-
त्वादभिव्यक्तेः प्रदीपादिषु दर्शनात् । तथापि फलं तावन्न दत्ते यावत् क्रिया
न निवर्तते निवृत्तायां तु फलं दत्त इत्यर्थः । दूषयति असतीति । तत्खलु ६३
पूर्वं यदपि फलं नाकार्योत्तरसमाविन्याः क्रियायास्तज्जन्याया अभिव्यक्तेरनु-

---

* भाष्यं । यदसमाधाताभिप्रायेण निराकरोति । न दृष्टमिति । प्रष्टा स्वाभिप्रायमुद्घाट-
यति । ननु दृष्टमिति । स्वाभिप्रायेण निराकरोति । अयं ग्रन्थः च पु० नास्ति ।

प्रवृत्तिनिवृत्ती विधत्तः तथापि भूतार्थपरोपनिषदादिशब्दव्यापकत्वात् पर-
प्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम् । यद्यपि सदेव सौम्ये-
दमग्र आसीदित्यादि वचनं क्वचिन्न प्रवर्तयति कुतश्चिद्वा न निवर्तयति
पुरुषं तथापि पुरुषश्रेयोऽभिधत्तइत्युपदेश इत्युच्यते । तथाप्यतिव्याप्तिश्चै-
त्यवन्दनादिवाक्यानामप्येतल्लक्षणत्वादत उक्तमाप्तेति । आप्तानामृष्यार्य-
म्लेच्छानामुपदेशः शब्दो न त्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां
प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति । तदेवाह वार्तिककारः ।
। ६ न शब्दमात्रमिति सूत्रार्थः । सूत्रस्याप्तलक्षणपरं भाष्यम् । आप्तः खलु
साक्षात्कृतधर्मा । सुदृढेन प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था
हिताहितप्राप्तिपरिहारार्था येन स तथोक्तः । तथापि तत्त्वं विद्वानकारुणिकतया*
विपरीतोपदेशो निरस्तः । चिख्यापयिषेत्यनुपाभ्यास†कारिते निराकृते
इति । प्रयुक्त उत्पादितप्रयत्न इत्यलसत्वम् । तथापि स्थानकरणपाटवाभावेन
वर्णनिष्पादनासामर्थ्येनाप्तः प्रसज्येतेत्यत आह उपदेष्टा । स्थानकरणपाटव-
वानित्यर्थः । आप्त इति प्रकृतिप्रत्ययसमुदायात् प्रकृतिं निष्कृष्य तदर्थमाह ।
साक्षात्करणमिति । अनेन चोक्तस्वरूपसंपदुपवर्णिता । प्रत्ययार्थमाह ।
तयेति । आप्तलक्षणस्य व्यापकत्वमाह ऋषीति । दर्शनादृषिः साक्षात्कृत-
त्रैकाल्यवृत्तिप्रमेयमात्रः । आराद्यातः पातकेभ्य इत्यार्यो मध्यलोकः म्लेच्छाः
प्रसिद्धाः । म्लेच्छा अपि हि प्रतिविषयमवस्थिताः पान्थानामपहृतसर्वस्वा मार्ग-
स्थाने हेतुदर्शनशून्या भवन्त्याप्ता इति । तदनेनाप्तदोषत्रय विद्वानिति परेषा-
माप्तलक्षणमव्यापकमुक्तं भवति । तदेतद्भाष्यमाक्षेप्तुमनुभाषते । आप्तः
खल्विति । आक्षिपति स्वर्गेति । आक्षेप्ता भाष्यमाक्षिप्य सूत्रं समाधत्ते
आप्तः आप्तो युक्त इति यावत् । अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेव-
ताविषयः स्वतःप्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः लौकिकर्ष्यार्य-
म्लेच्छानां प्रमाणान्तरमूलो युक्तः मानान्तराभावे तु नाप्तो ऽयुक्त इत्यर्थः ।
। ११ समाधत्ते न ब्रूम इति । पौरुषेयत्वं वेदानां द्वितीयाध्याय उपपादयिष्यते ।
तस्मात्पुरुषस्यैवाप्तोपदेश इति साधु व्याख्यानं भाष्यकारीयमिति भावः ।

---

* अलसतया वा नुपदिशन् मत्सरितया वा विपरीतमुपदिशन् नाप्तः स्यादित्यत आह । यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्तः । यथादृष्टस्येति मत्सरितया । चूर्णं ग्रन्थ २ पु० अधिक ।

† ०कृपालवेति पु० पा ।

पृच्छति कः पुनरिति । अस्ति स्वर्गादीनामप्रत्यक्षत्वे न्यायः योगिप्रत्यक्षं ६१ । १२
न स्वर्गादिविषयः प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति भावः । उत्तरम् । **ब्रूमो**
**न्यायम्** । तमाह **सामान्यविशेषवत्त्वात् कस्य चित् प्रत्यक्षा इति** ।
अत्र यावति पक्षे यो हेतुः सिद्धस्तस्य तन्मात्रं पक्षीकार्यम् । योगजे च
प्रत्यक्षे सिद्धे तत्साधकादेव प्रमाणात्तस्य स्वर्गादिविषयत्वमपि सिद्धमिति
धर्मिग्राहकप्रमाणविरुद्धं मीमांसकानामनुमानं नोत्थातुमप्युत्सहते प्रागेव
तद्बाधितम् असिद्धे तु योगजे प्रत्यक्षत्वाश्रयासिद्धो हेत्वाभासः अस्माकं तु
सामग्र्यो संहयस्य न्याय इति भावः । अनित्यत्वं हेतुमाक्षिपति ।
**असिद्धमिति** । परिहरति **नेति** । **नित्ये वापूर्व इति** । अत्र त्रयः कल्पाः
किमेकमपूर्वं सर्वपुरुषसाधारणमाहो असाधारणं यद्वा स्वसाधारणं तदापि
प्रतिपुरुषमेकैकमसाधारणमाहो प्रतिपुरुषमनेकमिति । तत्र प्रथमं कल्पं
दूषयति । **यदि साधारणेति** । न हि कदा चिदप्ययमपूर्वं पश्यति
लौकिकः पुरुषो योगिनस्त्वनभिव्यक्तमपि पश्यन्तीति भावः । द्वितीयं कल्पं
दूषयति । **एतेन प्रतिपुरुषमिति** । तत्कार्य आधिक्यमपचयोपचय इति- ६२ ।
यावत् । यद्वते व्यञ्जकेति । एकमपि व्यञ्जकभेदादुत्कर्षापकर्षवद्दृष्टं यथा
महति दर्पणे महन्मुखं तदेव कनीनिकायामणीयति* । **न दृष्ट इति ब्रूम इति** ।
शङ्कितां पृच्छति । **किं पुनस्तत्** । यदि न दृष्टं तद्यदि भेदेन तद्दृष्टं दृष्टिर्नास्ति
किन्तु तस्याद्वैतेन भेददर्शनमिव भासते । समाधाता स्वाभिप्रायमाह ।
**मिथ्या प्रत्यय इति** । न भेददर्शनमपजानीमहे किन्तु पारमार्थिकं भेदं न च
कल्पितेऽपूर्वभेदः पारमार्थिकाय कार्यायालमिति भावः । उत्कर्षापकर्षेत-
र्ष्य कर्मेव इति शेषः । तृतीयं कल्पमाक्षिपते । **प्रतिपुरुषमनेकमिति** ।
दूषयति **अनियता इति** । **अथोत्तरकालमिति** । अश्वमेधक्रियया साध-
दपूर्वं स्वकालमेवाभिव्यक्तं फलदानाभिमुखीकृतम् अभिव्यञ्जकसमानकाल-
त्वादभिव्यक्तेः प्रदीपादिषु दर्शनात् । तथापि फलं तावन्न दत्ते यावत् क्रिया
न निवर्तते निवृत्तायां तु फले ददातीत्यर्थः । दूषयति **असतीति** । तत्पत्तु ६३
पूर्वं यदपि फले नाकार्यान्तरमपायिन्याः क्रियायास्तज्जन्याया अभिव्यक्तेरनु-

* भावः । तदप्रमाणाभिप्रायेण निराकरोति । न शोभयति । बाहुल्य स्वाभिप्रायमुद्घाट-
यति । ननु चेति । स्वाभिप्रायेण निराकरोति । अत्रै ग्रन्थः ३ पु॰ अधिकः ।

स्यादनुत्पन्नाया तु क्रियायामभिव्यक्तौ वा कस्मान्न करोति । न हि क्रियावि-
नाशस्य क्व चिदुपयोगः । तस्मादकामेनापि त्वया सत्या एव क्रियाया व्यञ्ज-
कत्वमनुग्राहकत्वं चाङ्गीकर्तव्यं तच्चैतदुभयमपि विरुद्धमित्यर्थः । अपि च
सा सती चेत्क्रियामभिव्यनक्ति तथा सत्यसत्याः सर्वत्र सुलभत्वान्न क्व
चिदपूर्वे नाभिव्यक्तिरिति **क्रियाविलोपः** प्रयत्नविलोप इत्यर्थः । अत्र शब्द-
प्रमाणान्तरमसहमानो दिङ्नागस्तत्रापि विकल्पयति । **आप्तोपदेश**
**इति** । अन्यस्मादन्यस्य निश्चयो न तावदसम्बन्धादतिप्रसङ्गात् । न च
शब्दो ऽर्थात्मना ऽप्यर्थकार्यं विनाप्यर्थं पुरुषविवक्षामात्रादेव तदुत्पादात् ।
तस्मान्न तावच्छब्दादर्थनिश्चयः विवक्षाकार्यतया तु विवक्षां गमयेत् । सा
चार्थाभिप्रायपूर्वा अभिप्रायस्य कश्चिन्मनोमात्रयोनिरपरस्तु प्रमाणमूलः तत्र
यः प्रमाणनिश्चितमर्थं विवक्षति यथाविषयमुच्चारयति स आप्तः तस्य
वचनात् कार्यात्कारणं विवक्षानुमीयते तस्याश्च आप्तसमर्थज्ञानं ततश्चार्थ-
ज्ञानस्यार्थकार्यत्वादिति प्रमाणगतिः । तथाप्तोपदेश इत्यत्रोपदेष्टृक्रियया उप-
देष्टार उपस्थापितास्ते च प्रायेण विसंवादका दृष्टा इत्याप्तग्रहणेन तेषामविसं-
वादित्वं ततश्चोपदेशादर्थनिश्चयो भवत्विति एतदर्थं यदुच्यते इत्याह ।
**यथाप्तानामिति** । उपदेष्टृणामित्यर्थः । इमं कल्पं दूषयति **तदनुमानात्** ।
अविसंवादित्वमुपदेष्टुरानुमानिकं तादृशस्य वचनमर्थनिश्चये अनुमानमेव ।
तथा हि । यदविसंवादवत्त्वीय वचनं तत्सर्वमर्थवद् यथा बुद्धस्य क्षणिकनै-
रात्म्यादिविषय उपदेशः तथा चायं विवादाध्यासित उपदेश इति । यथोक्तं
भदन्तेन आप्तवाक्याविसंवादसामान्यादनुमानतेति । द्वितीयं कल्पमाशङ्कते ।
**अर्थार्थस्य तथाभावः** । अत्र हि उपदिश्यत इत्युपदेशो ऽर्थ उच्यत इति
आप्तोपदेशो यस्मात्स तथोक्तः । एतदुक्तं भवति । यस्माच्छब्दादर्थग-
म्यार्थे प्रवर्तमानः प्राप्नोति तमेवार्थं स आप्तोपदेशः शब्दः प्रमाणम् । एव
शब्देन यो ऽर्थो दर्शितस्तस्याप्ता तथाता दर्शिता तदिदमुक्तमर्थस्य
**तथाभाव** इति । दूषयति **सो ऽपीति** । तदेव स्फुटयति **यदा हीति** ।
आप्ता हि तथात्वं विनिश्चिन्वन् अर्थस्य नाप्रतिपन्नतया निश्चेतुमर्हति प्रति-
पत्तिश्च प्रायेण प्रत्यक्षेणेति प्रत्यक्षत इत्युक्तम् । तमिममाक्षेपमपाकरोति ।
। १८ तत्रेति । नाप्रत्यक्षसहायः शब्दोऽर्थं बोधयतीति सूत्रार्थः । नापि शब्दार्थप्राप्ता

६३ । १८

शब्दार्थगम्यमिति । कस्तर्हीत्यत आह । अपि त्विति । इन्द्रियस-म्बद्धासम्बद्धेष्विति । दृष्टादृष्टेष्वित्यर्थः । यथोक्त स द्विविधो दृष्टादृष्टार्थ इति । एतदुक्तं भवति । आप्तत्वहेतुकमविसंवादित्वमनेन सूत्रेणागमार्थतया प्रतिपाद्यते नाप्यर्थतथात्वमागमार्थतया प्रतिपाद्यते नाप्यागमः प्रत्यक्षानुमानाभ्यां न भिद्यते । किन्तु उपदेशः शब्द इत्युक्तम् । उपदेश इति च भावेऽपदं उपदिश्यते ज्ञाप्यते प्रयोजनयाथार्थो ऽनेनेति । तथापि धार्मिकायुपदेशो ऽपि शब्दः स्यादित्यत उक्तम् आप्तेति । नोपदेशशब्दादेवागमस्य याथार्थ्यप्रतिपत्तिः फलमुक्तं तदिदमुक्तं वा शब्दोपलम्भेन पदार्थस्मरणाद्यनन्तरव्यापाराच्छब्दाद्विषये प्रत्येमीत्यनेनोल्लेखेन प्रतिपत्तिरागमार्थः फलमिति । आगमस्य चागमस्यार्थे प्रत्यायित्वा स्वस्यात्यभिचारित्वं न च यतः प्रामाण्यमवगम्यते ततः प्रमेयमपि । तथा च सति प्रामाण्यज्ञानहेतोरनुमानादेव प्रत्यक्षादिप्रमेयावगतेरिति प्रत्यक्षादीनामप्रामाण्यप्रसङ्गः । तस्मिंश्चाऽसति कस्यानुमानमपि प्रामाण्यमवधारयेत् । न चाप्रत्यक्षं कार्यं स्वरूपेणानुमानद्वारेणार्थं ऽप्यनुमानमेव स्वार्थस्य प्रत्यायकमिति साम्प्रतम् । यदि हि सार्थे प्रत्यायेच्छानमात्मनुमापयेत् । तथा च सार्थविशेषसिद्धिः । न च ज्ञानस्यार्थादन्यो ऽस्ति कश्चिद्विशेषः तस्मादनुमानविशेषणाय सूत्रे शब्दादेव केवलाद्वाक्यार्थज्ञानमेवेति ज्ञातम् । तदनु

यस्यामुत्र प्रतीयते सोऽदृष्टार्थ इति। अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति। न दृष्टोऽर्थो यस्यागमस्य स तथा यथमितरोऽपीति। तदेव
। १ भाष्यमतेन व्याख्याय स्वमतेन व्याचष्टे वक्तृभेदेनेति। दृष्टोऽर्थो येन स दृष्टार्थः प्रवक्ता यथमदृष्टो ऽनुमितोऽर्थो येन स तथा ऋषयो ऽस्मदादयश्च। अनुमितार्था अस्मदादय एवेति। एवमपि शब्दद्वैविध्यं साधने मा भूदपक्षधर्मतेति प्रवक्तृपदेन पूरयति दृष्टादृष्टार्थप्रवक्तृकत्वादिति। अदृष्टार्थः प्रवक्ता यस्यागमस्य स तथोक्तः। अस्यार्थे सविग्रहं करोति। प्रत्यक्षम् इति। शेषं सुबोधम्। न सामान्यतोदृष्टानां वाक्यानां प्रामाण्यम्। स इति विप्रकृष्टो नास्तिकः परामृष्यत इति भाष्ययोजनिका। परिशिष्टं परीक्षापर्वणि निवेदयिष्यते॥

## इति प्रमाणटीका।

इह प्रमेये हेयोपादेयभावेनावस्थिते मुमुक्षुणा प्रतिपित्सिते तच्च परीक्षितस्य प्रमाणविशेषाधीनप्रतिपत्ति लक्षणं चास्य प्रमाणविशेषः। न चानान्तरप्रमाणसामान्यप्रत्यक्षादिलक्षणमन्तरेणात्मादिप्रमाणावतारः कर्तुं शक्यः। तस्य प्रत्यक्षादिसामान्यविशेषत्वादतः प्रत्यक्षादिलक्षणानन्तरं तदवतारः। अपरीक्षितं च न तत्त्वनिर्णयाय पर्य्याप्तमिति परीक्षा विधास्यते। तत्परिकरश्च संशयादय इति युक्तं तेषां पश्चाल्लक्षणम्। तदिह प्रमेयलक्षणाय तद्विभागोद्देशसूत्रमवतारयितुं भाष्यकारः पृच्छति स्म। किं पुनरनेन प्रमाणेनेति। जात्यभिप्रायमेकवचनं प्रकृते प्रमेये यथायथं प्रमाणानामुपयोगात् तदेतद्भाष्यमनूद्य वार्त्तिककार आक्षिपति। किं पुनरिति। प्रमेयनान्तरीयकत्वं प्रमाणानां सामर्थ्यम्। समाधत्ते नेति। प्रत्यक्षादिलक्षणसामर्थ्यात् प्रमेयमात्रं सिद्धं विशिष्टं तु प्रमेयमद्यापि न सिध्यतीति तदर्थे प्रश्नः। स च विशेषो यथावदिति न दर्शित इति अयमेव च सूत्रार्थ इति। येषां तत्त्वज्ञानात्*त्वज्ञानाभ्यामपवर्गसंसारौ भवतस्तान्येतान्येव न न्यूना नाधिका इत्यर्थः। *प्रथमसूत्रव्याख्यानमतिदिशति*।
। १२ अत्रापीति। इत्कमर्थमनाकलय्याक्षिपति। उभयेति। दिगादीनामिति।

* ज्ञानाज्ञानाभ्यामिति १ गुणाभ्यामिति २ पु पा ।
‡ तत्र तात्कस्य इव १ त इव २ पु॰ पा॰ ।

दर्शेषु दिक्कालपरिमाणूनामनभिधानात् । वृक्षस्तिष्ठतीति । इतिशब्द आद्यर्थे ६५ । २ तेन वृक्षं पश्यति वृक्षेण चन्द्रमसं पश्यतीत्यादयो वेदितव्याः । समाधत्ते । न सूत्रार्थापरिज्ञानादिति । न प्रमेयपदं प्रमेयमात्रे वर्तते किं [illegible] यत-स्तो ज्ञायमानमपवर्गसाधनं तस्मिन् तच्चात्मादावेव नान्यत्रेति युक्तो ऽन्ययोगव्यवच्छेद इत्यर्थः । अयोगव्यवच्छेदे ऽपि न दोष इत्याह । प्रमेयमेवेति । नन्वस्मिन्पक्षे न कदाचिदपि प्रमाणस्य स्यादित्यस्ति दोष इत्यत आह । किमुक्तं भवतीति । नास्य पुरुषमात्रं प्रति प्रमेयत्वं विधी-यते अपि तु मोक्षमाणशिष्यं प्रति विधीयते । अनूद्यत इति । प्रमाणान्तर-सूत्रत्वेन सिद्धान्तदार्ढ्यं दर्शयति । उपसंहरति । तस्मादिति । कौशलमा-त्मनः ख्यापयितुमभ्युपेत्य समाधानान्तरमाह । उपेत्येति । प्रवृत्तिसं-स्कारकत्वमस्ति दिक्कालयोः प्राङ्मुखो ऽन्नानि भुञ्जीत प्राचीनप्रवणे वैश्वदेवेन यजेत पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेतेति श्रवणात् । कौशलमात्रमिदं न तु समाधानमित्याह । न पुनरिदमिति । विहितविधानादिति । प्रमाणविधानसामर्थ्येन विहितमित्यर्थः । न केवलं प्रमाणविधानाद्विहितमपि स्याद्भाष्यकारप्रमेयपदादपि लब्धमित्याह । भाष्येण चेति । अस्मिन्नर्थे सूत्रकारस्यानुमतिमाह । एवं चार्थमिति । भाष्यम् सर्वस्य सुखदुःखसाधनस्य द्रष्टा सर्वस्य सुखदुःखस्य भोक्ता यतः सुख-दुःखसाधनं सर्वं सर्वे च सुखदुःखं जानाति अतः सर्वज्ञः । न चाप्राप्ता-न्येतानि जानातीत्यत आह सर्वानुभावी । अनुभवः प्राप्तिः तदेतद्वैरा-ग्यान्यायापेक्षमेवमुत्तरत्रापि बोद्धव्यम् । आत्मन्ययं विशेषो यद्दर्शनेन केषाञ्चित् हेयः केषाञ्चन चोपादेयः शरीरादीनि [illegible] हेयान्येव अपवर्ग उपादेय एवेति । अविद्यमानं पूर्वं शरीरं यस्य तदपूर्वं शरीरं तन्निषेधति नास्येदमिति । प्रमेयत्वमविष्टुत आत्मनः अविद्यमानमुत्तरं शरीरं यस्य तदनुत्तरं तदपि निषेद्धुं चेत्यनुकर्षणात् । ननु यथा पूर्वेषां शरीराणामनादित्वेऽप्युत्-त्तरेषामप्यनन्तता तथा च मोक्षमाणानां प्रवृत्तयः तदर्थानि शास्त्राणि चानर्थकानि प्रसज्येरन्नित्यत आह । उत्तरेषामिति । प्रमेयानन्त्यप्रमादि-त्यर्थः । ननु सुखे ऽप्यदृष्टवशो दुःखमपीष्टेभ्यः किं पुनः प्रयासेन तथा चानुभवविरोध इत्यत आह । नेदमिति । तदेतद्वाक्यं वार्तिककार आचे-

पक्षमाधानाभ्यां व्याचष्टे । सुखं पुनरिति । न चान्यत आत्मादिपदार्थ-
पर्यन्त्ये । अस्मादेवात्मादिभ्यो भेदेन प्रत्यात्ममुपलभ्यमानत्वादेव निर्वे-
३ दानइत्यस्य व्याख्यानम् अनभिरतिसंज्ञेति । उपेक्षाबुद्धिः । निर्वेदणस्य
वैराग्यमित्यस्य व्याख्यानं तां चोपासीनस्य तयैव विरोधिगुणेन तृष्णा
विच्छिद्यते सुखानभिधानेन दुःखपक्षनिक्षेपं सूचयति । तथा च सुखे* ऽस्य
वैराग्यं भवतीति तात्पर्य्यार्थः । अपवर्गस्यात्मार्थत्वेन प्रमेयेष्वात्मनः प्राधान्या
त्प्रथममात्मलक्षणमूर्षाविच्छेत्याह तदर्थनाराये भाष्यं तत्रात्मेति । अहमिति
ज्ञानं गौराद्याकारं शरीरालम्बनं न शक्यं घटादिज्ञानवद् द्रागात्मनि प्रमा
णयितुमित्यभिप्रायः परदेहवन्योन्माभिप्रायं वा । तदत्र वार्त्तिककारः सूत्रता-
त्पर्यमाह । समानेति । समानजातीयं शरीरादि असमानजातीयं प्रमाण-
प्रमेयादि । अस्येवास्मिन् प्रयोजने प्रयोजनान्तरमन्वाचिनोति । आगमस्येति ।
ततश्चाप्तोक्त्यानुमानसिद्धमपि प्रामाण्यं शब्दस्यानेन तदर्थबाधकेनानुमा-
नेन दृढतरं भवतीत्यर्थः । प्रयोजनान्तरं चान्वाचिनोति । प्रमाणसंप्लव-
स्येति । द्वावपि चकारौ चार्थे ऽन्वाचये द्रष्टव्यौ । तदनेन वार्त्तिकेनानुमानाद्य
प्रतिपत्तव्य इति भाष्यं व्याख्यातम् । इच्छादय आत्मलिङ्गमित्येतत्परं भाष्यं
यज्जातीयस्येति । यज्जातीयस्येति व्याप्तिस्मृतिकथनं तज्जातीयं पश्यतीति
पक्षधर्मोपनयः । तस्मादयं सुखहेतुरित्यनुमायादातुमिच्छति सेयमिच्छेदृशी
व्याप्तिग्रहणतत्स्मरणपक्षधर्मताग्रहणानुमानेच्छादीनामेककर्तृकत्वं सूचयति ।
भेदे प्रतिसन्धानाभावेन तदनुपपत्तेः । तदिदमुक्तमेकस्येति । यश्चासौ द्रष्टा
ऽनुभविता च स्मर्त्ता चानुमाता वेदिता च स आत्मा न च शरीरमेव
भवितुमर्हति तस्य बाल्यकौमारयौवनवार्द्धकभेदेनान्यत्वात् । नेन्द्रियम् इन्द्रि-
यान्तरगृहीत इन्द्रियान्तरेणार्थप्रतिसन्धानाप्रसङ्गात् । यमहमद्राक्षं तं स्पृशा-
मीति । नापि मनस्तस्य करणत्वेनैवानुमानात् । वक्ष्यति चैतत्सर्वं ज्ञातु
र्ज्ञानसाधनोपपत्तेरित्यत्र सूत्रे ।

स्यादेतत् । असत्यप्यात्मनि ज्ञातरि सत्यपि च बुद्ध्यादीनां भेदे
तत्सन्तानाभेदेन प्रतिसन्धानव्यवस्थोपपत्स्यत इत्यत आह । नियतविपर्य

* सुखस्य त २ पु पा ।
† अर्थतत्त्वधारणीति २ पु पा ।

इति। नियतविषयाणि बुद्धिभेदस्य प्रतिसन्धानमपाकरोति। आश्रयग्रहणेन च सन्तानसन्तानिस्थितिरित्यपाकरोति तदभ्युपगमे वा स एवात्मेति सिद्धं नः समीहितम्। तदेतद्भाष्यमनुमोद्य वार्त्तिककारस्तात्पर्यमस्याह। यत्राती- ६६ । १६ यस्येति। तत्र विचारमारभते। तत्रेति। पूर्वपक्षमाह। कथमित्यादीति। परिहरति। स्मृत्येति। नन्वेकविषयाणां स्मृत्यादीनां नानाकर्तृकत्वे को विरोध इत्यत आह। न हीति। नानाविषयत्वउदाहरणमाह। न हि रूपे इति। नानानिमित्तत्वउदाहरणमाह। नापि भवतीति। यदास्मान्निमि- त्ताल्लिङ्गात् स्पर्शमहमस्प्राक्षं ततस्मान्निमित्तात् रूपं पश्यामीति। नानाकर्तृकत्वउदाहरणमाह। न हि भवति देवदत्त इति। तदेतत्किल प्रतिसन्धानं कर्तृभेदाद्देवदत्तयज्ञदत्तादिव्यतिरेकवत्त्वेनैककर्तृत्वं साधयतीत्युक्तं तदेतदनुपपन्नं भिन्नकर्तृकाद्व्यतिरेकस्योपाधिवशेन स्वाभाविकप्रतिसन्धान- वैकल्यात्। अस्ति हि देवदत्तयज्ञदत्तविज्ञानानां भिन्नकर्तृकत्वमकार्यकारणभा- वश्च तत्र भिन्नकार्यकारणभावात् प्रतिसन्धानस्य व्यतिरेक उत भिन्नकर्तृकत्वा- दिति संदिग्धव्यतिरेकत्वादसाधनाङ्गं प्रतिसन्धानमित्याशयवान् चोदयति कार्य- कारणभावादिति। तदिदमुक्तम्। तदिदं प्रतिसंधानमन्यथा भवदिति। गूढाभिप्रायः परिहरति नानात्वस्येति। चोदक आह अकार्येति। गूढाभि- प्राय एव परिहारमाह। तदयुक्तमिति। अनैकान्तिकत्वं संदिग्धव्यतिरे- कता। चोदक आह। तुल्यं भवतो ऽपीति। सिद्धान्ती गूढाभिप्राय एवाह। अभ्युपगमादिति। चोदक आह। नासाधनादिति। असिद्धा- र्थता। अन्यथासिद्धार्थता हेतो हेतुवचनस्येत्यर्थः। सम्प्रति समाधानाभिप्राय- माविष्करोति। न हेत्वर्थापरिज्ञानात्। तदेतद्विभजते। न भवतेति। कः पुनरसौ हेत्वर्थ इत्यत आह। विशेषितं चैतत्प्रतिसंधानं तत्कथयति स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वं प्रतिसन्धाय तज्जातीयं सुखहे- तुचन्दनवनितादि सुखहेतु प्रतीत्य स्मरामि तज्जातीयमिमं प्रत्येमीति प्रति- संधानम्। तदनेन शालिबीजाङ्कुरस्य परंपरया शालिबीजान्तरजननवत्प्र- तिसंधानात् कार्यकारणभावनिबन्धनाद्व्यवच्छिनत्ति। नन्वियं पूर्वापरप्रत्ययसंततिः स्थिरापि कार्यकारणभावादेवोपपत्स्यते कृतमेकेन कर्त्रेत्यत आह सा च स्मृतिर्भिन्नपक्षे ऽनुपपन्ना। पृच्छति कस्मात्। उत्तरमन्येन। निवि- ६८

१५ **तेनानुभूतस्य अन्येन निमित्तेनास्मरणात्** । न हि भवति येनैव चक्षुषा घटमद्राक्षं तेनैव त्वगिन्द्रियेण तं स्पृशामीति । निमित्तभेदे प्रतिसन्धानाभावमुक्त्वा विषयभेदेऽप्याह । न ह्यन्येन स्वभावेन घटत्वादिना ऽनुभूतस्यान्येन वृक्षत्वादिना स्मरणं न हि भवति यमहं घटमद्राक्षं सोऽयं वृक्ष इति । कर्तृभेदे प्रतिसन्धानाभावमाह । न ह्यन्येन देवदत्तेनानुभूतमन्यो यज्ञदत्तः **स्मरति** । न हि भवति योऽहं देवदत्तोऽद्राक्षं सोऽहं यज्ञदत्तः स्मरामीति । न चैवं सत्यपि भेदे कार्य्यकारणभावात्प्रतिसन्धानं भवितुमर्हति । यत्र स्फुटतरः कार्य्यकारणभावः तन्तुपटयोर्घटकपालयोर्वा दृश्यते तत्र प्रतिसन्धानं भवति ये तन्तवः स एव पट इति यो वा घटः स एव कपालखण्ड इति वा । वस्तुतः कार्य्यकारणभूतानामगृहीतभेदानां प्रतिसन्धानहेतुभावः सभागेषु क्षणेषु तथा दर्शनादिति चेन्न । आमलकफलस्यैकस्यापनये तत्रैव स्थाने आमलकान्तरस्थापने भवति प्रतिसन्धानं न च तयोरामलकयोरस्ति कार्य्यकारणभावः । पूर्वापरप्रत्यययोः स्मृत्या सहैकविषयत्वं कर्त्तरि कार्य्यकारणभावनिबन्धनं न कर्मणीति चेत् । हन्त नैरात्म्यसाक्षात्कारसात्मीभावेऽप्यस्ति विज्ञानानां कार्य्यकारणभाव इति तन्निबन्धनं प्रतिसन्धानं पूर्ववदेव प्रसज्येत । सैव चात्मदृष्टिर्दोषाणां निदानं परममिति व्यर्थो नैरात्म्यसाक्षात्कारसात्मीभावप्रयासः । अथासदपि प्रतिसन्धानं कार्य्यवशादाह, तथागतो नट इव रामत्वमात्मनः यदि तत्कार्य्यकारणभावनिबन्धनं कथमसत्कार्य्ये कथमाहार्य्यम् । अथ कार्यकारणभावोऽप्यवस्तुसन् कल्पनामात्रनिबन्धनं तर्हि तादृशं शालिबीजस्योत्पादं वास्तवं न नियन्तुमर्हति । न जातु कल्पितवह्निभावो माणवको दहनपाकयोरुपयुज्यते । न च प्रत्ययानां भेदाग्रहात् प्रतिसन्धानमिति साम्प्रतम् । प्रवृत्तिविज्ञानानां रूपादिविषयाणां भेदेन पृथग्जनैरपि प्रतीयमानत्वात् । आलयविज्ञानस्य च प्रवृत्तिविज्ञानातिरिक्तस्यानुपलब्धेः । अहमिति च सत्त्वदृष्टेः क्षणिकत्वनिराकृतावसति बाधके स्थिरवस्तुविषयत्वात् । तस्मात् स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वलक्षणस्य प्रतिसन्धानस्यानेककर्तृकत्वाद् व्यतिरेको निरुपाधिरेककर्तृकत्वं साधयति स चैकः कर्त्ता शरीरेन्द्रियबुद्धिभ्यो भिन्न आत्मेति सिद्धम् । तदनेनाशयेनोक्तम्

१६ **अस्ति च स्मृतिरुपपन्ना । तस्मादस्मिन्पक्षे स्मृतिः सम्भवति** ।

तेन प्रतिसन्धानं न्याय्यमिति । स च कर्त्रैकत्वपक्ष इति भावः । भाष्य- ६८ ।
यमविद्वान् पुनः परः प्रत्यवतिष्ठते । भवानिति । पर एकैकपक्षेनाह ।
कथमिति । कथं न सम्भवतीत्यर्थः । स्यादेतत् । योगिचित्तमपि सर्वस्य
चेतस आलम्बनप्रत्यय इति तस्यापि योगिचित्तेन प्रतिसन्धानं स्यादित्यत आह ।
यत्कार्येति । एतदुक्तं भवति । उपादानोपादेयभावेनावस्थितः चित्तप्रवाहः
सन्तानः न च योगिचित्तमुपादानं सर्वस्य चेतसः आलम्बनप्रत्ययो हि
तदिति । कायग्रहणं च एकसन्तानोपलक्षणपरं तेन जन्मान्तरे ऽपि स्मृतिरुप-
पन्नेति । तमिममस्मदभिप्रायानभिज्ञं परमन्यथापि बोधयितुं विमशाम इति
सिद्धान्त्यन्यथा स्मृत्यनुपपत्तिमाह । **नास्थिरत्वात् बुद्धीनाम्** । न ह्यजा-
तानन्वयध्वस्तयोरस्ति कश्चिद् विशेष इति पूर्वोत्पन्नो ऽनुभवः का च न
वासनामाधाय प्रध्वंसते यया कालान्तरे स्मृतिराधीयत इत्यभ्युपगन्तव्यम् । न
चास्थिरा बुद्धिः शक्या धारयितुम् तस्मात् स्थिरो ऽभ्युपेय इत्यर्थः । युक्त्य-
न्तरमाह । **असंबन्धाच्चेति** । न च बुद्धीनामसमानकालानामस्ति सम्बन्ध
इत्यर्थः । पुनः परः प्रत्यवतिष्ठते । धरणीति । नास्माकं ध्वजकरणस्तम्भादिना-
मस्ति सद्भावनिति यद्यवस्थितं वस्तु तेन धारयमाणं दृष्टमिति भावः । ननु तथा
ऽप्यसमानकालतया संबन्धरहितमशक्यं धारयितुमिति महदाक्याभ्यधिकरण-
ख्यातेनाधाकरोति । **अथापीति** । पूर्वचित्तं प्रवृत्तिविज्ञानं यतत् षड्विधं चक्षुरू-
पादिज्ञानान्यविकल्पकानि षष्ठं च विकल्पविज्ञानं तेन सह आलः समानकालः
चेतमाधिवोदशादानविज्ञानमित्युच्यते । अहङ्कारास्पदं स्मृतिशक्तिः [illegible]
स्मृत्यनुष्ठानादिति तेन कथं विच्छेदविषयया शक्तिविषमित्युच्यते ।
सिद्धान्त्याह । अन्योन्यक्षमिति । उपपादयिष्यते हि भावानां सर्वेषामनित्य-
भिन्ना स्थिरता क्षणभङ्गनिराकरणेन तथा च स्थिरस्य संस्कृत्य च धन्वा-
देशगमनादिना धारणत्व दृष्टमिति नास्थिरे ऽवबुद्धे च मतिमुपसंगोप्यर्थः ।

स्यादेतत् । अस्थिरयोरपि ज्ञानयोः समानकालतया ऽस्ति सम्बन्ध
इति कस्मादन्यगर्भचित्तावस्थितमन्यगर्भविज्ञं स्मृतिं नावलम्बयात आह ।
पक्षासाविति । पक्षमात्रापेक्षो ऽविरुद्धः । ननु वर्तमाने चेतसि मा
भावीदुपकारम् अनागते तु करिष्यतीत्यत आह । नापीति । इदानि ।
कथमिति । यदा वर्तमानं तावदिति । प्रवृत्तमनुपपद्यते तदा तदादीति ।

इतो ऽप्यसत्यात्मनि विज्ञानमात्रात्कार्य्यकारणभावात्स्मृतिर्नोत्पद्यत इत्याह इतरथेति । कस्माद्भावस्य भवितृपेक्षत्वात् । भाव उत्पत्तिमान् धर्म्मः भविता धर्म्मी पाको विक्लित्तिः संयोगभेदः स च तण्डुलावयवसमवेतो ऽप्यवयवावयविनोरभेदोपचारात्तण्डुलानामित्युक्तम् । गतिः परिस्पन्दो देवदत्ते कर्त्तरीति सिद्धान्ती क्षणिकतावादिनमुत्थाप्याक्षणिकत्वाभिप्रायेण दूषयति । अनाधारेयेति । पूर्व्वपक्षी क्षणिकत्वाभिप्रायेणाह । कार्य्येति । सिद्धान्तवाद्यक्षणिकत्वाभिप्रायेण परिहरति । तच्च नेति । समानकालयोराधाराधेयभावो दृष्टो यथा कुण्डबदरयोः । स्थिरमेव हि कुण्डं स्थिरस्यैव बदरस्य गुरुत्वेन पततो गुरुत्वं प्रतिबद्धमधःपतनं निरास्यदाधारो भवति । यद्युच्येत न स्मृतिर्भावः किं तु भवित्री उत्पत्तिरस्या भावः न तु भवितुर्भावान्तरापेक्षा युक्ता ऽनवस्थापातादिति शङ्कते अथापीदमिति । निराकरोति । तच्च नेति । विरोधादिति विवृणोति । यदीति । कस्माद्व्याहतमित्यत आह । स्वरूपं चेति । चो हेत्वर्थे स्वरूपमुपनिह्नूयमानं स्वतन्त्रं बाधते यतस्तस्माद्विरोध इत्यर्थः । अनभ्युपगमादिति विवृणोति न हि भवन्त इति । विरोधादिति स्फोरयति । व्यतिरिक्तां चेति । तन्त्रं शास्त्रम् । शङ्कते अथेति । तथा च न विरोधो नाप्यनभ्युपगम इत्यर्थः । निराकरोति किं केति । अभिधानस्वरूपमाह । उत्पत्तिरिति । अपि चोत्पत्तेर्भावत्वे ऽपि न स्मृतिर्न भावः भावस्तस्य कार्य्यमात्रानुबन्धित्वात् स्मृतेश्च कार्य्यत्वात् । न चानवस्था नित्ये व्यवस्थानात् तथा स्मृतेर्भावस्य भविता ऽऽत्मैव नित्यः परिशिष्यत इत्यावयवानाह । यदा चोत्पत्तिरिति । प्रकृतमुपसंहरति । तस्मादिति । तत् सिद्धमेतत् स्मृतिः पूर्व्वापरप्रत्ययाभ्यामेककर्तृका समाभ्यां सहैकविषयत्वेन प्रतिसंधीयमानत्वात् । या पुनर्नाभ्यामेककर्तृका सा न तथा प्रतिसंधीयते यथा देवदत्तस्य स्मृतिर्यज्ञदत्तप्रत्ययाभ्यां न चेयं न तथा तस्मात्तथेति । तदेव व्यतिरेकिसमर्थनं कृत्वा ऽन्वयव्यतिरेकिणमर्थं प्रमाणयति अथ चेति । अनेकावयवमनेकनिमित्तप्रतिषेधगद्वानिरासार्थं येन प्रागनुभूता रूपादयस्तेनैव गन्ध उपलभ्यत इति यत्तु मयेति स्मृत्या मम प्रतिसंधाने तस्माद्रूपरसगन्धाभ्यामेनाभिन्नार्थे ये कृतसंकेतास्तेषां समीक्ष परैर्नेककौभूतनापेक्षो न लौकिकः पारमार्थिकः । परमाणुसमुदाया-

१९ देकत्वं तस्य दर्शितमिति तथाह । प्रक्षेपस्य एकत्वात् । न भूः परमा-

धूमसमूहो ऽपि स्वयवि द्रव्यमेकं तद्गतं च रोचितमपि क्रियैवैव । भवतु वा
परमाणुसमूह एव भूयोपस्थाया ऽपि समूहस्य समूहिभ्यो ऽनन्यत्वात् परमाणव
एव तेषां च प्रत्येकमेकता अनेकभरतसमस्तनिपुणप्रतिपत्तृसाधारणता च । अस्ति
च तेषामपि स्वगोचरा विकल्पोत्पादनपरंपरया मयेतिप्रतिसंधानहेतुभाव इति
धर्मिकल्पितैकत्वं तस्य कल्पितमिति । तदेव प्रतिसंधानद्वारेणेच्छादीनामात्म-
लिङ्गत्वमुक्त्वा सम्प्रति गुणतया लिङ्गत्वं वार्त्तिककृदाह अथ वेति । गुणत्वेने- १० । १
च्छादीनां पारतन्त्र्यं रूपादिवत्साधनीयं तच्चानित्यत्वेनैव सामान्यविशेषस-
मवायेभ्यो व्यावर्त्तकेन सिद्धं न ह्यनित्यो भावो द्रव्यात्स्वतन्त्रो भवति ।
तस्माद्गुणत्वसाधकादेव हेतोः पारतन्त्र्यसिद्धेः कृतं गुणत्वेन पारतन्त्र्यसा-
धकेनेति हृदि निधाय वार्त्तिककारस्तदपि पूर्वमुक्तमिति सिद्धेन पारत-
न्त्र्येण गुणत्वमपि साधयति । न चैतदनित्यस्य पारतन्त्र्यं द्रव्येण सिद्धमिति
द्रव्यकर्मणोरप्यनित्ययोः पारतन्त्र्यात् । तस्मादनित्यत्वसिद्धेन द्रव्यपारत-
न्त्र्येण द्रव्यकर्मभ्यां विशेषयति न द्रव्यं कर्म्म चेच्छादयः । व्यापकद्रव्यस-
मवायात् शब्दवदित्यादि यद्यप्यनित्यत्वेन द्रव्यसमवायमात्रं सिद्धमिति तथा
ऽपि द्रव्यान्तरसमवायित्वेऽवयवैस्तदवयवकल्पनायां प्रमाणाभावेन सद् द्रव्य-
मनवयवं तावत्सिद्धम् । अनवयवद्रव्यं द्वेधा व्यापकमणु च । न तावदणु तत्र
तत्रेच्छादीनामुपलब्धेः । क्व चिदन्यतरकर्म्मणा क्व चित्स्वभावतस्तत्संयोगोप-
पत्तेः तद्गतिकल्पनायां प्रमाणाभावात् सिद्धमस्य व्यापकत्वं तदेतदादिपद-
व्याख्यानम् । तदनया युक्त्या नित्यत्वं परममहत्त्वं चाऽऽत्मनो दर्शि-
तमिति । यत्तु सामान्यतोदृष्टमनुमानं सूत्रकृता पूर्वं वर्णितमित्याह सा-
मान्यत इति । यत्पूर्वं हृदि निहितमिच्छादीनां पारतन्त्र्यं साध्ये ऽनित्यत्वादे-
र्गुणानुमानं तदुद्घाटयति । कार्यत्वमपि हेतुं समुच्चिनोति एतेनेति । नन्वस्तु
द्रव्यपारतन्त्र्यं तथा ऽपि शरीरपारतन्त्र्यमस्तु कृतमनुपलभ्यमानेनात्मनेत्यत
आह । अपायादिति । सत्येव पुरुषबाह्यग्राह्याश्च न पृथिव्यादिगुणाः तदु-
त्पत्तौ कारणत्वेन कल्पनाच्च नाकर्तुर्मनसः तस्मादष्टद्रव्यातिरिक्तं द्रव्यान्तरं
तदेच्छादयः [illegible] गमयन्ति सिद्धमित्याह तत्प्रतिषेधादिति । आत्मानं लक्ष- ११
यित्वा ऽऽत्मनो दुःखनिदानानामिन्द्रियादीनां सर्वेषां प्राधान्यात्पर्यवसितं शरी-
रमादित्य तल्लक्षणमस्यामिति तदेवास्य दुःखमूलत्वादित्यनन्तरं शरीरं

लक्षयितुं सूत्रं चेष्टेत्यादि। तदवतारयति भाष्यं तस्येति। तस्येत्यात्मानं परा-
मृशति। भोगः सुखदुःखसंवित् तदधिष्ठानं शरीरं तदनेन सर्वस्यास्यानर्थप्र-
भारस्य परमं निदानं शरीरमतस्तदेवेन्द्रियादिभ्यः पूर्वं लक्षणीयमित्युक्तम्।
अत्र चेष्टाश्रयत्वेनेन्द्रियाश्रयत्वेनार्थाश्रयत्वेन च प्रत्येकं समानजातीयेभ्य आ-
त्मेन्द्रियादिभ्योऽसमानजातीयेभ्यः प्रमाणप्रमेयादिभ्यः शरीरं व्यवच्छिद्यते।
कथं चेष्टाश्रय इति भाष्यं तस्यार्थं व्याचष्टे का पुनरिति। चेष्टा व्यापारः स
चातिव्यापकतया अव्यापकतया च न लक्षणं वृक्षादिषु भावात् अभावाच्च
पाषाणमध्यवर्तिमण्डूकादिशरीरेष्विति भावः। उत्तरभाष्यम् ईप्सितमि-
त्यादि। तद्व्याचष्टे। हिताहितेति। प्रयुक्तस्योत्पादितप्रयत्नस्य न व्यापारमात्रं
चेष्टा ऽभिमता ऽपि तु विशिष्टो व्यापारः स च न वृक्षादिष्वस्तीति नातिव्या-
पकता। यद्यपि च दारुयन्त्रादिष्वीदृशो व्यापारो ऽस्ति तथापि मूर्तान्तराप्रयोगे
सतीति विशेषणान्न व्यभिचारः तेषां शरीरे मूर्तेन प्रयोगात्। शरीरस्य मूर्ता-
न्तराप्रयुक्तस्य ईदृग्व्यापाराश्रयत्वे पाषाणमध्यवर्तिनश्च मण्डूकदेहस्य तद्व्या-
पारायोगे ऽपि तद्योग्यत्वात् पाटिते पाषाणे तादृशस्य तद्व्यापारस्य दर्शनादिति
भावः। कथमिन्द्रियाश्रय इति भाष्यं व्याचष्टे कथमिति। संयोगितया
त्विन्द्रियाश्रयत्वे घटादीनामपि शरीरत्वप्रसङ्गस्तेषामपीन्द्रियसंयोगित्वादिति
भावः। यस्येत्यादिपरिहारभाष्यं व्याचष्टे शरीरेति। एतेनेति। तदवृत्तित्वे-
नानुपपत्त्या ऽर्थानामप्यन्यादृशो भाष्यार्थो व्याख्येय । यद्यपि गन्धादयो विषया
न स्वरूपेण शरीरमाश्रयन्ते तथा ऽपि एतेषां सुखाद्युपलम्भहेतुत्वं कार्यं प्रयो-
जनं तदर्थमाश्रयन्त इत्यर्थः। तदनेन यस्मिन्नित्यादिरपि व्याख्यातम्। चोद-
यति कथं पुनरिति। परिहरति सामान्येति। विशेषेण बुभुक्षितत्वादिना
प्रकरणापन्नं नियन्त्रितं सामर्थ्यं प्रकरणादीत्यादिपद*संगृहीतमपरमपि साम-
र्थ्यापन्नार्थमाह। सामर्थ्यं चेति। अपरमप्याह। प्रमाणेति। अत्र प्रथमे पक्षे
चेष्टाशब्दो व्यापारविशेषे स्पन्दादिरूपमुख्यार्थः तदेतल्लोकस्तावदित्यादिना
तथा चायं चेष्टाशब्द इत्यन्तेन दर्शितम्। प्रमाणासंभवो चेति। द्वितीयं
१६ पक्षं विवृणोति। सामान्यवाच्यपीति। अनभ्युपगमे प्रमाणाभावो ऽनुप-
पत्तिः सा तु न क्रियमाणे इत्यनेन दर्शिता। अत्र चेष्टापदव्याख्यानेन घटा

* वार्त्तिकपुस्तके २। ३ पु० पाठः।

विचार्य्यमाणानि च सूत्राणीत्यर्थः । समानजातीयं घ्राणादि रसनादि प्रतिनियतविषयत्वात् असमानजातीयं तु मनआदि सर्वविषयमिति । जिघ्रतीत्यादि-भाष्यनिराकरणीयशङ्कामाह उद्देशेनेति । प्रमाणाद्युद्देशेन साम्यादित्यर्थः । लक्षणं हि विधेयं लक्ष्यं चोद्दिश्य चानूद्य चोद्दिश्यते ऽनूद्यते च विधीयतइति न चैकस्य युगपज्ज्ञानाद्याने सम्भवतः नापि लक्ष्यलक्षणत्वे इति भावः । परिहरति नेदं तथा यथोद्दिष्ट इत्यर्थः । कस्मात्करणभावात् स्वविषयग्रहणलक्षणत्वं यतो घ्राणादीनाम् । एतदुक्तं भवति । इन्द्रियाणामतीन्द्रियत्वात्सर्वदा स्वस्वविषयोपलब्धिकरणत्वेनैवानुमातव्यानि तस्मात्स्वस्वविषयोपलब्धिसाधनत्वमेव समानासमानजातीयव्यवच्छेदकतया लक्षणं तदेकार्थसमवायि घ्राणत्वादि लक्ष्यम् । अथ च घ्राणादिशब्दाः पङ्कजादिपदवदवयवार्थं निमित्तीकृत्य क्वचित्कश्चित्सामान्यविशेषे वर्त्तन्ते अवयवार्थस्य प्रतीयमानस्याबति बाधके परित्यागायोगात् । अश्वकर्णादौ वृक्षविशेषवाचके वाजिकर्णायोगेन बाधकेनावयवार्थपरित्यागात् । अवयवार्थयोगे ऽपि गन्धाद्युपलब्धिसाधने सन्निकर्षादौ घ्राणादिशब्दाप्रयोगात् । अवयवार्थान्वित घ्राणत्वादीन घ्राणादिशब्दप्रवृत्तिनिमित्त तथा च घ्राणादिपदमेव घ्राणत्वादिपरं लक्ष्यनिर्द्देश । तच्चेन्द्रियाणीत्यनेन सूचित तदेव त्ववयवार्थपरं लक्षणनिर्द्देशो घ्राणेति । न च सन्निकर्षेण गन्धोपलब्धिसाधनेन च व्यभिचारः इन्द्रियसामान्यलक्षणयुक्तस्य गन्धोपलब्धिसाधनत्व न सन्निकर्षस्यास्ति तदनेन जिघ्रतीत्यादि स्वविषयग्रहणलक्षणानि इत्यन्तं भाष्यं व्याख्यातम् निर्वचनग्रहणेन पदप्रवृत्तिनिमित्तमात्रमुच्यते तेन त्वक्पदमपि सगृहीतं भवति । तस्यापि त्वक्स्थाने इन्द्रिये स्पर्शोपलब्धिसाधने स्रोपचार इति । भूतेभ्य इति सूत्रावयवतात्पर्यपरं भाष्यं भूतेभ्य इति नानाप्रकृतीनामित्यादि तद्वार्त्तिककारो व्याचष्टे भूतेभ्य इति । पृथिव्यादीति । पृच्छति कः पुनरिति । उत्तरं भूतगुणविशेषग्रहणसाधनत्वं घ्राणेनैव पृथिव्या यो गुणविशेषो गन्धः स गृह्यते न रसनादिना । एव रसनेनैवापां यो माधुर्यं गुणविशेषः स गृह्यते एव चक्षुषैव शुक्लभास्वरं रूपं तैजस इति एवं त्वचैवानुष्णाशीतस्पर्शो ऽपाकजो वायोः एवं श्रवणेनैव शब्दो नभस इति नियम. । अथ च प्रयोग गन्धोपलब्धि करणसाध्या क्रियात्वात् छिदिक्रियावदिति । एवं सा तदन्यक्रियाकरणातिरिक्तकरण-

निष्पाद्या तदन्वयव्यतिरेकानु*विधाने सति कार्य्यत्वाद्या क्रिया यत्कारणान्व-
यव्यतिरेकाननुविधाने सति कार्य्या वा सर्वा सत्क्रियाकरणातिरिक्तकरणनि-
ष्पाद्या यथा घटादिक्रिया घटादिक्रियाकरण†दण्डाद्यतिरिक्तकरणनिष्पाद्या तथा
चेयं तस्मात्तथा । तच्च करणं चक्षुराद्यतिरिक्तं घ्राणं तद् द्रव्यं संयोगाधार-
त्वात्‡ तच्च पार्थिवं द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्
पार्थिवान्तरवत् । एवं रसनादिष्वपि योज्यम् । तदिदमुक्तं यज्जातीयमिन्द्रियं १३ । १
पार्थिवं पाथसीयं वा भवति तस्य पृथिव्याः पाथसो यो गुणविशेषो गन्धो
वा मधुरः स्त वा रसभेदस्तेन पृथिवी चाप्याद्यादिभ्य आपो वा पृथिव्यादिभ्यो
व्यवच्छिद्यन्ते स्वरसभूतव्यवच्छेदहेतुः स तेनैवेन्द्रियेण गृह्यते नान्ये-
नेति । न चैवं रसना अपामिव पृथिव्या अपि रसभेदं गृह्णातीति पार्थिवी
भवति सत्यपि तथा गन्धोऽप्युपलभ्येत । येन तेनैवेन्द्रियेणेति नियमो
गुणविशेषमवधारयति न त्विन्द्रियमिति । एवं च कर्णशष्कुलीसंयोगोपाधिना
भोगस्य नभसः कथं विद्रेदं विवक्षिता भूतेभ्य इति पञ्चम्यर्थो व्याख्यातः ।
अनेन एकस्मादहङ्कारिकाणीन्द्रियाणि इति यदाहुः साङ्ख्यास्तन्निराकृतम् ।
निराकरणहेतुमाह ऐकात्म्य इति । किमु पदं साङ्ख्यानां किल राद्धान्ते कार-
णात्मकं कार्यं तच्च कारणमिन्द्रियाणामहङ्कार एक इत्यैकात्म्यमेककारणकत्वं
तथा चैकात्म्यमेकत्वे घ्राणादीनामित्यनियमः स्यादिति । तदेतद्विभजते
यदि पुनरिति । गृह्णते एकेनेति । विभजते । अयेति । एकः कारणं यस्य
ऽनियोगः एकं चेन्द्रियमित्यर्थः । निराकरोति न ब्रूम इति । यद्यप्येकप्र-
निमित्तं साधारणं तथाऽपि गन्धाद्युपलब्धौ पूर्वगन्धादिव्यंसनानां भेदादुपपन्न-
कार्य्यनानात्वमिति । तदिदमुक्तं ये पूर्वं रूपादयः तेषां स्वगतो विशेषः
प्रकर्ष इत्यर्थः । अथ रूपत्वादिसामान्यमेव कस्मात् न स्वगतो विशेष इत्यत
आह । रूपे च रूपे चेति । रूपत्वादिसामान्यानां साद्गुण्येन प्रकाशनसाद्वि-
भेदः प्रथ्यमाना तु स्वेतरभूतस्य निःशेषत्वे नोपपद्यत इति भावः । पुनः
गृह्णते एकं कर्म्मेति । निराकरोति नेति । समवायिकारणं स्वगतमनुपपन्नमिति ॥

* कर्तृप । १ । अनुविधाने सति कार्य—इ नास्ति ।

† करणातिरिक्तकरणनिष्पाद्यत्वात् १ पु० पा० ।

‡ संयोगाधारत्वात् १ पु० पा० ।

८ या ऽपेक्षत इति भावः । शङ्कते यदि तर्हीति । लक्षणहानिस्तया च लक्ष्यहानिरित्यर्थः । निराकरोति । चरमभाविनिमित्तान्तरं भावरूपमित्यर्थः । संयोगाभावं तूत्तरसंयोगजननायापेक्षत एव । उपसंहरति । तस्मादिति । इन्द्रियप्रकृतित्वं तु भूतलक्षणे वेदितव्यम् ।

क्रमप्राप्तमर्थलक्षणमवतारयति भाष्यकारः इमे त्विति । तुशब्देनार्थमात्राद्व्यवच्छिनत्ति । येषामिन्द्रियविषयत्वेन भाव्यमानानां निःश्रेयससाधकत्वं मिथ्याज्ञानविषयीकृतानान्तु संसारनिमित्तता त इमे इत्यर्थः ।

गन्ध-र्थाः (सू. १४)॥ अथ चोद्देशक्रमस्मारिता अर्था लक्ष्यतया प्रतिपन्नाः तेषां च लक्षणं तदर्था इति । तदित्यनन्तरलक्षितानीन्द्रियाणि परामृशति । तेषामिन्द्रियाणामर्था इन्द्रियैरर्थमाणत्वमर्थानां लक्षणम् । एतावतैव लक्षणे पर्यवसिते सुहृद्भावेन विभागाभिधानं* पृथिव्यादिगुणा इति । पृथिव्यादिस्थानि च गुणाश्च धर्माः संख्याकर्मादयः । विभागे ऽप्येतावता ऽवगते गन्धाद्यभिधानं सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम् । पृथिव्यादीनामिति भाष्यं न षष्ठीसमासज्ञापनार्थमपि त्वर्थाभिधानमात्रम् । यथाविनियोगमिति । यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्रिद्व्येकनियमेन विनियुक्ताः शब्दश्चाकाश एवेत्यर्थः । तदर्था इति लक्षणपदं व्याचष्टे इन्द्रियाणामिति । येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिताः येन चेह गन्धादयस्तदनतिक्रमेणेत्यर्थः । अथ वार्त्तिककारः पृथिव्यादिगुणा इत्यत्रानेकसमासप्रतिभासनात्संशय्य कृत्वा द्वन्द्वसमासमवधारयति । पृथिव्यादिगुणा इति । षष्ठीसमासेनाभिन्नार्थत्वात्तत्पुरुषसमासो न दर्शितः । ननु षष्ठेऽकाम इतिप्रद्वेष्यधिकरणे ऽपि बहुव्रीहिर्भविष्यति पृथिव्यादीनां गुणा येभ्यो गन्धादिभ्यस्ते तथा । तथा हि परमाणुगता गन्धादयो ऽवयविनि गन्धाद्यारभन्ते नभोगतश्च शब्दो नभसि समानजातीयं शब्दमित्यत

१२० आह । न चान्यथेति । व्यापकत्वशङ्क चिह्नाधिकरणानां बहुव्रीहिर्व्यापककृत च न सर्वेण न च गन्धादीनां पृथिव्यादिगुणहेतुत्वप्रतिपादने कश्चिदर्थोपयुज्यत इति भावः । अन्यसमासः कर्मधारयादिः । द्वन्द्वमवधा-

* पुनर्विभागाभिधानमिति १ पाठः ।

रित्यमाशिपति न ब्रम इति । समाधत्ते नोभयस्यापीति । पृथिव्यादि· ७५ ।
ग्रहणेनेति । यद्यादिशब्देन वाय्वादयो गृह्येरन् तदर्था इति लक्षणमव्यापकं
स्यात् तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः । गुणग्रहणेन सर्व इति
आभिन्नानाभिन्नाभिप्रायं गुणशब्दस्य धर्मवचनत्वात् । विशेषस्तु रेखोपरे-
खादिः न त्वन्त्यः तस्यातीन्द्रियत्वात् । एतेषां च यथायोग मिथ्याज्ञानस-
म्यग्ज्ञानविषयाणां रागवैराग्यहेतुत्वमूहनीयम् । चोदयति । गन्धेति । परि-
हरति । न कर्तव्यं लघुसूत्रं गन्धादीनां पृथगभिधानं कर्तव्यमित्यर्थः ।
नियममाह इन्द्रियाणीति । तदेतेष्वनियतेषु मध्ये पृथिव्यप्तेजांसि चक्षुरिन्द्रिय-
ग्राह्याणि चैकैक गुणाश्च संख्यादिविशेषान्ता द्वीन्द्रियग्राह्या इत्यर्थः ।
तथा सर्वेन्द्रियग्राह्या इत्यर्थः । अथ बौद्धमुत्थापयति । दर्शनस्पर्शनाभ्या-
मिति । तस्य पर्यनुयोगमाह । स इति । स्वसंवेदनेन मानसेन वा रूपाद्या-
लम्बनप्रत्ययो रूपादिविशिष्टो यथा ऽनुभूयते एवं रूपाद्यतिरिक्तघटादिवि-
शिष्टो ऽनुभूयत इत्यर्थः । अत्र पर आह । रूपादिभ्यस्तथा सन्निवि-
ष्टेभ्य इति । तथेत्याकारं निर्दिशति । सन्निवेशो व्यवस्थानं रूपादिपरमाणव
एव तेन तेनाकारेणोत्पन्ना एकयोदकाहरणक्रियया व्यवच्छिन्ना घटादय इत्यु-
च्यन्ते अगुरुजलादिकया तु रूपादिव्यपदेशः । यथाह घट इत्यपि च रूपा-
दय एवैकार्थक्रियाकारिणस्तथा व्यपदिश्यन्त इति । निराकरोति । नाकारा-
र्थेति । तथार्थस्य यथापदार्थेन नित्याभिसंबन्धात् यथा घटस्तथा सन्निविष्टा
रूपादय इत्यर्थो गम्यते तेन घटाकारेण घटसादृश्येनेत्ययमर्थः तथा च दूष-
णमिति । दूषणान्तरमाह रूपादिमात्रे चेति । न तावद्रूपादिरेक एको घटः
यथान्तरे तत्प्रयोगाभावप्रसङ्गात् तस्माद्रूपादिमात्रमभिधित्सितं* तथा सत्येकद्व-
यमित्यर्थः । गृह्यते संस्थानभेदादिति । यथासंख्याता रूपादयो ऽर्था अनुभू-
यन्ते तथा सन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः । निराकरोति । नैतदिति ।
अन्यत्वे तदेवावयवीति संज्ञाभेदमात्रम् । अनन्यत्वे व्यर्थाभिधानं गृह्यते ।
घटादिप्रत्ययया इति । यथानेकविचारमाहत्याद् अवन्न एव घटादयो
ऽनादिविकल्पवासनाजनितविकल्पप्रत्ययप्रतिभासमानाः । शब्दशब्देन विक-
ल्पमुपलक्षयति शब्दवासनाप्रभवादिति । निराकरोति । तदयुक्तमिति । ७७

* संविधावितमेदमिति पुस्तकान्तरे पाठः ।

८ धाऽपेक्षत इति भावः । शङ्कते यदि तर्हीति । लक्षणहानिस्तया च लक्ष्यहा-
निरित्यर्थः । निराकरोति । चरमभाविनिमित्तान्तरं भावरूपमित्यर्थः ।
संयोगाभाव उत्तरसंयोगजननायापेक्षत एव । उपसंहरति । तस्मादिति । इन्द्रि-
यप्रकृतित्वं तु भूतलक्षणे वेदितव्यम् ।

क्रमप्राप्तमर्थलक्षणमवतारयति भाष्यकारः इमे त्विति । तुशब्देना-
र्थमात्राद्व्यवच्छिनत्ति । येषामिन्द्रियविषयत्वेन भाव्यमानानां निःश्रेयससाध-
कत्वं मिथ्याज्ञानविषयीकृतानान्तु संसारनिमित्तता त इमे इत्यर्थः ।

गन्ध-र्थाः (सू. १४)॥ अथ चोद्देशक्रमसमाश्रिता अर्था लक्ष्यतया प्रति-
पन्नाः तेषां च लक्षणं तदर्था इति । तदित्यनन्तरलक्षितानीन्द्रियाणि परा-
मृशति । तेषामिन्द्रियाणामर्था इन्द्रियैरर्थ्यमाणत्वमर्थानां लक्षणम् । एतावतैव
लक्षणे पर्याप्तेऽपि सुहृद्भावेन विभागाभिधानं* पृथिव्यादिगुणा इति । पृथि-
व्यादीनामपि च गुणाश्च धर्माः संख्याकर्मादयः । विभागे ऽर्थेनावगते ऽवगते
गन्धाद्यभिधानं सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम् । पृथिव्यादीनामिति
भाष्यं न षष्ठीसमासज्ञापनार्थमपि त्वर्थाभिधानमात्रम् । यथाविनियोगमिति ।
यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्रिद्व्येकनियमेन
विनियुक्ताः शब्दश्चाकाश इत्यर्थः । तदर्था इति लक्षणपदं व्याचष्टे
इन्द्रियाणामिति । येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिताः येन चेह
गन्धादयस्तदनतिक्रमेणेत्यर्थः । अथ वार्त्तिककारः पृथिव्यादिगुणा इत्यत्रा-
नेकसमासप्रतिभासनात्संशयं कृत्वा द्वन्द्वसमासमवधारयति । पृथिव्यादि-
गुणा इति । षष्ठीसमासेनाभिन्नार्थत्वात्सप्तमीसमासो न दर्शितः । ननु
कष्टेनापि इतिच्छेदप्यधिकरणे ऽपि बहुव्रीहिर्भविष्यति पृथिव्यादीनां गुणा
येभ्यो गन्धादिभ्यस्ते तथा । तथा हि परमाणुगता गन्धादयो ऽवयविनि
गन्धाद्यारभन्ते नभोगतश्च शब्दो नभसि समानजातीयं शब्दमित्यत
१२० आह । न चान्यथेति । ज्ञापकस्याशक्तेः चिह्नायिकरणानां बहुव्रीहिर्दर्शितापक-
कृत च न सर्वत्र न च गन्धादीनां पृथिव्यादिगुणहेतुत्वप्रतिपादनं क्व चिद्वि-
वक्षितायोपयुज्यत इति भावः । अन्यसमासः कर्म्मधारयादिः । द्वन्द्वसमवधा-

* पृथिव्यादिगुणाभिधानमिति १ पाठः ।

रिममाश्रियति न द्वन्द्व इति । समाधत्ते नोभयस्यापीति । पृथिव्यादि- ९५ । ७
ग्रहणेनेति । प्रत्यादिशब्देन वाय्वादयो गृह्येरन् तदर्था इति लक्षणमव्यापकं
स्यात् तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः । गुणग्रहणेन सर्व इति
चाविलानामित्याभिप्रायं गुणशब्दस्य धर्मवचनत्वात् । विशेषस्तु रेखोपरे-
खादिः न त्वन्त्यः तस्यातीन्द्रियत्वात् । एतेषां च यथायोगं मिथ्याज्ञानस-
म्यग्ज्ञानविषयाणां रागद्वेषाद्यहेतुत्वमूहनीयम् । चोदयति । गन्धेति । परि-
हरति । न कर्तव्यं लघुसूत्रं गन्धादीनां पृथगभिधानं कर्तव्यमित्यर्थः ।
नियममाह इन्द्रियाणीति । सर्वेष्वर्थेषु मध्ये पृथिव्यादीन्येव इन्द्रिय-
ग्राह्याणि शेषस्य गुणराशेः संख्यादिविशेषान्तो द्वीन्द्रियग्राह्य इत्यर्थः ।
तथा सर्वेन्द्रियग्राह्य इत्यर्थः । अथ बौद्धमुत्थापयति । दर्शनस्पर्शनाभ्या-
मिति । तस्य पर्यनुयोगमाह । स इति । स्वसंवेदनेन मानसेन वा रूपाद्या-
लम्बनप्रत्ययो रूपादिविशिष्टो यथा ऽनुभूयते एवं रूपाद्यतिरिक्तघटादिवि-
शिष्टो ऽनुभूयतइत्यर्थः । अथ पर आह । रूपादिभ्यस्तथा सन्निवि-
ष्टेभ्य इति । तयोराकारं निर्दिशति । सन्निवेशो व्यवस्थानं रूपादिपरमाणव
[illegible] तेन तेनाकारेणोत्पन्ना एकयोदकाहरणक्रियया व्यवच्छिन्ना घटादय इत्यु-
च्यन्ते अनुरञ्जनादिकया तु रूपादिव्यपदेशः । यथाह घट इत्यपि च रूपा-
दय एकार्थक्रियाकारिणस्तथा व्यपदिश्यन्तइति । निराकरोति । नाकारा-
र्थेति । तदर्थस्य यथापदार्थेन नित्याभिसंबन्धात् यथा घटस्तथा सन्निविष्टा
रूपादय इत्यर्थो गम्यते तेन घटाकारेण घटसादृश्येनेत्ययमर्थः तथा च रूप-
णमिति । दूषणान्तरमाह रूपादिमात्रे चेति । न तावद्रूपादिषु एको घटः
प्रत्यन्तरे तत्प्रयोगाभावप्रसङ्गात् तस्माद्रूपादिमात्रमभिप्रेतं* तथा सत्येतद्दू-
षणमित्यर्थः । शङ्कते संस्थानभेदादिति । यथासंस्थाना रूपादयो ऽर्था अनुभू-
यन्ते तथा सन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः । निराकरोति । नैतदिति ।
अन्यत्वे तदेवावयवीति संज्ञाभेदमात्रम् । अनन्यत्वे व्यर्थाभिधानं गृह्यते ।
घटादिप्रत्यया इति । एतानेकविषयासहत्वाद् असन्त एव घटादयो
ऽनादिविकल्पवासनाजनितविकल्पप्रत्ययप्रतिभासमानाः । शब्दशब्देन विक-
ल्पमुपलक्षयति शब्दवासनावशादिति । निराकरोति । तदयुक्तमिति । ९७

* सविवक्षितभेदमिति पुस्तकद्वये पाठः ।

बीजं मिथ्याप्रत्ययस्य सम्यक्प्रत्ययविषयो ऽर्थः । तस्य क्व चिदभ्युपगमे ऽभिमतार्थहानमित्यर्थः । यस्तु भिन्नक्रमत्वादनया ब्रूते आदिमान् मिथ्याप्रत्ययः सम्यग्ज्ञाने निमित्तीकरोति अयं पुनरनादिः पूर्वपूर्वमिथ्याप्रत्ययजन्मा मिथ्याप्रत्ययप्रवाहः कुतस्तस्य सम्यग्ज्ञानेनेति तं प्रत्याह । मिथ्याप्रत्ययाश्चैवमिति । रूपादिव्यतिरेके अवयविन इत्यर्थः । परस्त्वव्यतिरेके प्रमाणमाह । न नास्तीति । न हि मांसतोयातिरिक्तः कश्चिद्यूषो नाम नापि तृणराजतरुव्यतिरिक्ता पङ्क्तिर्नाम । दूषयति । नायं हेतुरिति । ये घटादिभावमापन्ना भवतां दर्शने इति कामे ऽष्टद्रव्यको ऽणुरशब्दः रूपधातुररूपधातुः कामधातुरिति त्रैधातुकं जगत् तत्र कामधातुस्वरूपमुक्तं कामे कामधातौ अष्टद्रव्यको ऽणुः रूपरसगन्धस्पर्शा इति चत्वारि द्रव्याणि पृथिव्यप्तेजोवायुरिति चत्वारि द्रव्यशब्दो वस्तुवचनः तेषामष्टद्रव्यको ऽणुरित्यागमः । सो ऽयं रूपाद्यतिरिक्तपृथिव्याद्यनभ्युपगमे बाध्येत । अथ वैयात्यादुच्यते पृथिव्यादीनामिति ततश्च सांवृतत्वेनाष्टसंख्यासिद्धेर्नागमविरोध इति भावः । उत्तरं तथा ऽपीति । मा भूवन् वस्तुत उभये ऽपि सांवृता भविष्यन्तीत्यत आह संहन्यमानस्येति । यो हि यतन्त्रः स तदभावमभ्युपगम्यागस्याभ्युपगमः न खलु संयुज्यमानानामभावे संयोगः शक्याभ्युपगम इत्यर्थः । न च संवृतिः सा हि पररूपं स्वरूपेण संवृणोति संहन्यमानाभावे च न संघातो न संहन्यमाना इति किमनया स्वरूपेणाव्रियेतेति भावः । तदेवं तदग्रहे तद्बुद्ध्यभावादित्यस्य व्याघातदोषं दर्शयित्वा स्वसामर्थ्यालोचनेन विवक्षितलिङ्गाभिधायिना किं त्वसंबद्धार्थता हेतुवचनस्येत्याह । तदग्रहे इति । अयं किलाचाभिमतम् । पृथिव्यादयो रूपादिभ्यो ऽभिन्ना रूपाद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति । तत्र तदेतदग्रहे तद्बुद्ध्यभावादित्यनेन न शक्यं वक्तुं तदग्रह इत्यत्र तच्छब्दः प्रधानपरामर्शी पृथिव्यादयश्च धर्मितया प्रधानमिति तस्य परामृश्याः । तथा च पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति स्यात् । तथा च प्रतिज्ञातस्तेषां रूपाद्यभेदो न सिध्येदित्यसंबद्धम् । अथ रूपादयः परामृश्यन्ते तथा ऽपि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति स्यात् तथा ऽपि न प्रतिज्ञातार्थसिद्धिरित्यसंबद्धार्थमित्यर्थः । अयं शब्दानामपि प्रतिज्ञाप्रयोगे तुल्यः प्रसङ्ग इत्याह एवं रूपादिमात्रमिति । प्रति-

षादोषमाह । सर्वत्र चेति । नानात्वैकार्थसमवायनियताया बहुत्वसंख्याया ७८ । १३
अभेदैकार्थनियतैकत्वसंख्यया सामानाधिकरण्यविरोध इत्यर्थः । तदेतदनैका-
न्तिकमपि चोदयति नन्विति । निराकरोति । तन्नानभ्युपगमादिति ।
समानं धर्मसाधनं यमाः पञ्च नियमाः पञ्च ब्रह्मचारिगृहस्थवानप्रस्थयती-
नामविशेषेण दशधर्मसाधनं तेषां धर्मसाधनत्वमेकं चातुराश्रम्यमिति
प्रकृतिगतविभक्तीराह । भाष्यगतप्रकृतिगता तु विभक्तिः प्रकृत्यर्थसमवेतामेव
बहुत्वसंख्यामाह समानार्थानामपि प्रकृतीनां रूपभेदेन तत्परस्य प्रत्ययस्य
सामर्थ्यभेदात् । यथा ऽप्तोयशब्दयोस्तुल्यार्थत्वे ऽपि तोयशब्दात्परा विभ-
क्तिस्तोयानीति तोयसमवेतामेव बहुत्वसंख्यामाह । आप इति न तोयग-
ताम् अपि तु तत्स्थबहुगतां तत्संबद्धाश्च तदवयवास्तद्गतबहुत्वादयो वा
बहव इत्येतस्यामपि पाथःकणिकायां बहुवचनोपपत्तिरापः इति । न च
वैदिकमेवैतत् छन्दसो ऽपि लोकस्य नित्यत्वेनैवमिति सांप्रतम् । लोको हि दृष्ट-
व्यवहारमात्रकोविदो न विवेचयति परीक्षकास्तु तदनुसारिणो विवेचयन्त्येव ।
अन्यथा हि प्रत्ययादिलक्षणप्रणयनवैयर्थ्यप्रसङ्गः । एतेन दाराः षण्णगरीत्या-
दयो व्याख्याताः । षाड्गुण्यमपि षण्णां गुणानामेकं राज्ञः प्रयोजनसाधकत्वं
वैशेषिकमित्यपि विशेषाणां समानासमानजातीयव्यवच्छेदकत्वमेकमुपल-
इति गमयितव्यम् । हेतुदोषमाह । असिद्धो ऽपीति । स्फटिकस्य धवलं रूपं
तच्च नीलद्रव्योपरागादभिभूतं न प्रतीयते स्फटिकश्च प्रतीयते न च नीलस्य
स्फटिकवर्णस्योत्पत्तिरिति तृतीये निवेदयिष्यते तस्मादसिद्धो हेतुरित्यर्थः । दृ-
ष्टान्तश्च साध्यविकल इत्याह । यो ऽप्ययमिति । उत्पन्नपाकजानां तिले
ष्वपि वा पिष्टमांसपिण्डावयवानां द्रव्यान्तरेण तोयेन संयुक्तानां पाकजो-
त्पत्तौ सत्यां न चासौ सहसेत्युक्तं कालविशेषानुग्रहे सतीति । स च ७९ ।
संयोगभेद एव तोयमांसयोर्न त्ववयवी विजातीययोरनारम्भकत्वात् । नापि
यूषजातीयं तोयसंयोगि द्रव्यं क्षीरजातीयमिश्रमिति युक्तम् । तोयविरहे का-
ठिन्ये ऽपि क्षीरशुद्धिव्यपदेशयोस्तादवस्थ्यात् । इह तु काठिन्येन यूषशुद्धि-
व्यपदेशावपीति संबन्धभेद एव तोयमांसयोर्गुण इति न्याय्यम् । स चानुपप-
त्तिद्धः संयोगिव्यतिरिक्तः । एवं बहुत्वसंख्या संयोग्यतिरिक्ता ऽनुमानसिद्धे-
ति । एवं तत्र तत्र व्याख्येयम् । अनाद्यन्तेऽप्यनारब्धावयविष्विति दृष्ट-

व्यम् । न च परकीयसाधनदोषोद्भावनमात्रात्स्वपक्षसिद्धिरिति सिद्धान्तिनं साधनं
३ पृच्छति । अथ रूपादिभ्यो ऽर्थान्तरे द्रव्ये किं प्रमाणमिति । यतोयं परो
रूपादिभ्यो ऽर्थान्तरं द्रव्यं प्रत्यक्षेण सिद्धमपि स्वसिद्धान्ताभ्यासाहितव्यामोहा-
पस्मारो न तथा व्यवहरति अतो ऽनेनानुमानेन स व्यवहार्य्यते । अस्ति हि
सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवच् चन्दनस्य रूपा-
दय इति व्यपदेशः । तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति चन्दनोपलम्भमपि
अन्यथा सद्वृत्तमाचार्ह्यत्येतावन्मात्रे वक्तव्ये कथमाह तदग्रहइति तेनापिग-
च्छामो रूपादिग्रहे ऽस्य चन्दनबुद्धिरभिमतेति । न चासौ मनोमात्रयोनिः स्मृती
ति न्याय्यम् उपपादितमेतस्याः सविकल्पिकाया इन्द्रियजन्यत्वं व्यवसायात्म-
कपदव्याख्यानावसरे । द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि निराकरिष्यन्ते ।
तस्मात्सिद्धमुपलभ्यत्वं चन्दनस्य व्यपदेश्यस्य सो ऽयं चन्दनो विवादगोच-
रेभ्यो रूपादिभ्यो भिन्नः स्वयमुपलभ्यस्य च समस्तैरुपलभ्यैर्व्यपदिश्यमानत्वात्
प्रधानमपि सांख्यैर्व्यपदिश्यते प्रधानस्य रूपादय इति तन्निवृत्त्यर्थमुपलभ्य-
स्येति । प्रधानं तु काल्पनिकं नोपलभ्यते तथा ऽपि रूपादीनां मूलकारणं
प्रधानमित्यस्ति सांख्यानां व्यपदेशो ऽत उक्तमुपलभ्यैरिति । तथा ऽपि रूपा-
दीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यतइत्युक्तं सम-
स्तैरिति । अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति उपलभ्यस्यो-
पलभ्यैनेति वक्तव्ये प्रत्यक्षस्य प्रत्यक्षेणेति वचनं रूपाद्यगमसमये ऽनुमेयेभ्यो
रसादिभ्य* एकान्ततो व्यपदेशं व्यावर्त्तयितुं न त्वस्यानुमानउपयोग इति ।
अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति । सेनावनादिभिरिति । संख्या-
याम् असत्त्वमाशङ्क्य निराकरोति । तदसत्त्वमिति चेदिति ।
विधीयमानं प्रतिषिध्यमानमिति यथासंख्यं निषेधस्य विध्यधीननिरूपणतया
निषेध्यमेकत्वमङ्गीकार्य्यं तत्र संख्येत्यर्थः । ननु सन्त्वमी प्रत्ययास्ते
[illegible] द्रव्यमात्रनिबन्धना भविष्यन्ति कृतं संख्ययेत्यत आह विधि-
प्रत्ययेति । न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेनेत्यर्थः । प्रयोगान्तरमाह ।
[illegible] तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति । घटप्रत्ययस्य विषयश्च
निमित्तं घटप्रत्ययश्च तद्व्यतिरेकेणेति तद्भिन्नगुणसंख्यादिप्रत्ययस्य निमित्तान्तरा-

* रूपादिभ्य इति २ । ३ पु· पा· ।

भावित्वात् तत्किमर्थमत्र तत्समुत्पत्ताविति । धर्मोऽपि द्रौणिनं हन्तीतिवद् ८० । ८
घटादिविषयनिमित्तव्यतिरेकाभाव इत्यपि प्रत्ययग्रहणं कर्तव्यम् । चोदयति ।
महद्बुद्धिपतेति । न संख्याया गुणस्य परिमाणगुणयोगसम्भव इत्यर्थः ।
परिहरति । नैष दोष इति । स्थानशब्देन तिष्ठतीति व्युत्पत्त्या संख्योच्यते
सा येषामस्ति ते गजवाजिपदातिप्रभृतयः स्थानिनः प्रत्येकं महान्तः तत्र ते
हि विच्छिन्नमेव हि यदि पुनस्तज्जातीयस्थान्यन्तरसन्निधाने सत्युपचिताः
बहवः भवन्ति । तेन बहुत्वसंख्योपचयोपकरणात्तदेकार्थसमवेतमहत्त्वोपच-
यान्महती सेनेत्युच्यते । न चैतावता यत्र वर्तं गजादयो यत्र च सहस्रं तयोः
सेनयोर्महत्त्वाविशेषः उपचयापचयोपकरणत्वेन विशेषितत्वात् । एवं पुष्पि
तवनादयो दृष्टव्याः । प्रत्ययभेदादृक्ष्यादिभ्यः संख्याया भेदमुक्त्वा व्यपदेशभेदा-
दप्याह । अत एवेति । स्थाणुशब्देनापीति । मूलानां समानदेशत्वा-
भावान्न एवं तु खदिरश्च स्थाणुश्च समवेतौ । न चावस्थितसंयोगेभ्यस्तत्स-
निवेशेभ्यः स्थाणोरुत्पत्तिरिति युक्तम् । यस्य द्रव्यस्य यावत्संयोग-
प्रचयो ऽसमवायिकारणं स तावानुत्पन्नमात्र एव तत्सन्नकः तस्य च संयो-
योगात् तस्मात्पार्थक्यं संस्थानविशेष एव स्थाणुरिति गमयितव्यम् । अथा-
वस्थितसंयोगानां द्रव्यमाश्रयेतावां घनत्वं ततः संयोगप्रचयपदेन
स्थाणुत्वसामान्यविशेषवद् द्रव्यमुपलक्षणीयम् । तच्च खदिरस्तदोर्भिन्नमिति
प्रतिमाया महारजतमय्या अवगच्छत्याः शरीरं संस्थानमेव एवं शिला-
पुत्रकस्यावयविनः संस्थानमेव शरीरम् । शङ्कते । गुणसमुदाये ते । अता-
दात्म्येनाग्रहणं व्यतिरेकेणाग्रहणं पृथक्शब्दो ऽप्यतादात्म्यमेव सूते । दूष-
यति । अग्रहणस्येति । सतामपि वस्तूनामनुपलम्भो यथा मूलकीलकादीनां
प्रमाणाभावेन यथा पिशाचादीनां चानुपलम्भो ग्राहकाभावेन तस्माद्व्यतिरेका-
ग्रहणमात्रं हेतुरनैकान्तिक इति । शङ्कते । ग्राहकाभावादिति चेत् । ग्राहका-
भावे सत्यग्रहणादिति हेतुः न त्वग्रहणमात्रमित्यर्थः । दूषयति प्रतिज्ञा-
र्थेनेति । प्रतिज्ञार्थस्यासिद्धत्वेन तद्विशिष्टो हेतुरसिद्ध इत्यर्थः । शङ्कते ।
ग्रहणेति । यद्वा प्रमाणम् । निराकरोति । न प्रमाणाभावमात्राद्व्यतिरे-
कप्रतिषेधः यस्तु योग्यप्रमाणाभावादिति विशेषहेतुः तं प्रत्याह । पञ्च ८१
सद्ग्रहणेति । असिद्धता हेतुदोषः । दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धान-

व्यम्। न च परकीयसाधनदोषोद्भावनमात्रात्स्वपक्षसिद्धिरिति सिद्धान्तिनं साधनं
पृच्छति। अथ रूपादिभ्यो ऽर्थान्तरे द्रव्ये किं प्रमाणमिति। यद्योयं परो
रूपादिभ्यो ऽर्थान्तरं द्रव्यं प्रत्यक्षेण विद्वानपि स्वसिद्धान्ताभ्यासाहितव्यामोहा-
पस्मारो न तथा व्यवहरति अतो ऽनेनानुमानेन स व्यवहार्य्यते। अस्ति हि
सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवच्चन्दनस्य रूपा-
दय इति व्यपदेशः। तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति चन्दनोपलम्भमपि
अन्यथा तद्बुद्ध्यभावादित्येतावन्मात्रे वक्तव्ये कथमाह तद्ग्रहइति तेनाधिग-
च्छामो रूपादिग्रहे ऽस्य चन्दनबुद्धिरभिमतेति। न चासौ मनोमात्रयोनिः स्यादि-
ति न्याय्यम् उपपादितमेतस्याः सविकल्पिकाया इन्द्रियजन्यत्वं व्यवसायात्म-
कपदव्याख्यानावसरे। द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि निराकरिष्यन्ते।
तस्मात्सिद्धमुपलभ्यत्वं चन्दनस्य व्यपदेश्यस्य सो ऽयं चन्दनो विवादगोच-
रेभ्यो रूपादिभ्यो भिन्नः स्वयमुपलभ्यस्य च समस्तैरुपलभ्यैर्व्यपदिश्यमानत्वात्
प्रधानमपि सांख्यैर्व्यपदिश्यते प्रधानस्य रूपादय इति तन्निवृत्त्यर्थमुपलभ्य-
स्येति। प्रधानं तु काल्पनिकं नोपलभ्यते तथा ऽपि रूपादीनां मूलकारणं
प्रधानमित्यस्ति सांख्यानां व्यपदेशो ऽत उक्तमुपलभ्यैरिति। तथा ऽपि रूपा-
दीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यत इत्युक्तं सम-
स्तैरिति। अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति उपलभ्यस्यो-
पलभ्येनेति वक्तव्ये प्रत्यक्षस्य प्रत्यक्षेणेति वचनं रूपाद्यवगमसमये ऽनुमेयेभ्यो
रसादिभ्य* एकान्ततो व्यपदेशं व्यावर्त्तयितुं न त्वस्यानुमानउपयोग इति।
अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति। सेनावनादिभिरिति। संख्या-
याम् असत्त्वमाशङ्क्य निराकरोति। तदसत्त्वमिति चेदिति।
विधीयमानं प्रतिषिध्यमानमिति यथासंख्यं निषेधस्य विध्यधीननिरूपणतया
निषेध्यमेकत्वमङ्गीकार्य्ये तच्च संख्येत्यर्थः। ननु सन्त्वमी प्रत्ययास्ते
[illegible] द्रव्यमात्रनिबन्धना भविष्यन्ति कृतं संख्ययेत्यत आह विधि-
प्रारचेति। न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेनेत्यर्थः। प्रयोगान्तरमाह।
१० तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति। घटप्रत्ययस्य विषयश्च
निमित्तं घटप्रत्ययश्च तद्व्यतिरेकेणेति तद्विशिष्टसंख्यादिप्रत्ययस्य निमित्तान्तरा-

* रूपादिभ्य इति १। २ पु॰ पा॰।

मेव रूपादिव्यतिरिक्तग्रहणमितो गुणसमुदायव्यतिरेकेणाग्रहणमित्यसिद्धो हेतुरिति । एकत्रान्यत्वे प्रमाणानामुपपत्तेः एकत्रानन्यत्वे प्रमाणानाम-
१ नुपपत्तेरिति । प्रकृतमुपसंहरति तस्मादिति । आत्मादीनां बुद्धिहेतूनां लक्ष-णस्यानन्तरं हेतुमती बुद्धिर्लक्षणीयेति आह वार्त्तिककारः । अथ बुद्धेरवस-रप्राप्ताया इति । लक्षणं तावत्कृतत्वादपदेष्टव्यमेव तदपदेशद्वारेणान्यदपि किं चित्सूचनीयम् । अत एवोक्तं सूत्रमिति । अन्यत्तु सांख्यमतनिराकरणम् । यथोक्तं भाष्यकारेण । अचेतनस्य करणस्य बुद्धेरिति । इयकारेण नेदं प्रत्याख्यानपरम् अपि तु लक्षणपरमिदमर्थः प्रतीयमानो ऽपेक्षितश्च सोऽपेक्षणीय इत्युक्तं भवति ।

बुद्धि–रम् (सू. १५) ॥ सूत्रतात्पर्यमाह । एतैरिति । पृच्छति । कथमिति । समानासमानजातीयव्यवच्छेदकं हि लक्षणमव्यभिचारितया पर्याय-शब्दाश्च संकेतमात्राधीनप्रवृत्तयः क्व नाम न संभवन्ति तस्मान्नैते लक्षणमिति भावः । उत्तरं व्यवच्छेदेति । ननु व्यभिचारसंभवेन व्यवच्छेदकमयुक्तमत आह एतैश्चेति । संकेतो हि द्वेधा सर्वजनीनो यथा गौरिति गोजातीयस्य वाचकः । प्रादेशिकश्च यथा चैत्र इति पुरुषभेदस्य । तत्र सार्वजनीनः सङ्केतो व्यवच्छेदबुद्धिं भावयितुं तद्विषयमेवात्मैतेष्वेति । उपपत्तिसामर्थ्यादिति भाष्यावयवं व्याचष्टे । पर्यायेति । अचेतनस्येत्यादि भाष्यं तद्व्याचष्टे ।
। ८ ॥ आह बुद्धेरिति । बुद्धिः किल त्रैगुण्यविकारः त्रैगुण्यं चाचेतनमित्यचेतनं सेयमिन्द्रियप्रणालिकया ऽर्थाकारेण परिणमते चितिशक्तिरपरिणामिनी नित्यचैतन्यस्वभावा तस्याः सन्निधानादयस्कान्तमणिकल्पा बुद्धिस्तत्प्रतिबि-म्बोद्ग्राहितया चैतन्यरूपतामापन्नेवार्थाकारपरिणता ऽर्थं चेतयते तेन यो ऽसौ नीलाकारः परिणामो बुद्धेः स ज्ञानलक्षणा वृत्तिरित्युच्यते । आत्मप्रतिबि-म्बस्य तु बुद्धिसंक्रान्तस्य यो बुद्ध्याकारेण संबन्धः स आत्मनो व्यापार-स्तेनोपलब्धिरात्मनो वृत्तिरित्याख्यायते तदिदं बुद्धितत्त्वं जडप्रकृतितया तत्त्वमपरमिव स्वयमप्रकाशं चैतन्यमात्रसंपर्कमहत्त्वच्छायापत्त्या प्रकाशते प्रकाशयति चार्थानिति तन्निराकरणाय पर्यायोपन्यासः । नात्मवृत्तेरुप-लब्धेरन्या ऽस्ति बुद्धिः नापि बुद्धेरुपलब्धिरन्यदिति । अयमभिसं-धिः । ॥ तावद्बुद्धेरात्मच्छायापत्तिरिन्द्राविव मार्तण्डमण्डलतेजःसंक्रान्तिः

पारमार्थिकी चितेरपरिणामितया सङ्क्रमायोगात् । तस्माद् भ्रान्तिः सा च न तावद्बुद्धेः तस्या अचेतनत्वात् । नाप्यात्मनः तस्याकूटस्थत्वात् तथात्वे परिणामापत्तेः । तस्मात्कूटस्थापनमित्यात्मचैतन्यं न स्वपरोपकारीति बुद्धेः स्वाभाविक चैतन्यमास्थेय तथा चोभयचैतन्ये दूषणमुक्तम् । प्रत्ययव्यवस्थया यदेककर्तृकत्वानुमानं तत्र स्यादित्यर्थः । अथ द्वयोश्चेतनयोरैका पुनर्भेदाग्रहो वा तैककर्तृत्वाभिमान इत्यत आह । बुद्धिवृत्त्यविशिष्टायामिति । ८२ । १

बुद्धिर्ज्ञानसाधनमिति । बुद्ध्यतेऽनेनेति व्युत्पत्त्या मन उच्यते गन्धादिविषयतया सुखदुःखविषयतया चेय बुद्धिर्भाव्यमाना निर्वेदाय कल्पत इति । भाष्यकारः क्रमप्राप्तं मनोलक्षणसूत्रमवतारयन्नस्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानीत्याह स्मृतीत्यादि । सुखादिप्रत्यक्षमित्यादिशब्देन विषयतयेच्छादयः सङ्गृहीताः । इच्छादय इत्यादिशब्देन कार्यतया सुखादयः सङ्गृहीताः ।

युग-क्रम् (सू. १६) ॥

अनिन्द्रियनिमित्ता अबाह्येन्द्रियनिमित्ता इत्यर्थः । स्मृतीत्यादिभाष्यस्य वार्त्तिककारस्तात्पर्यमाह । स्मृतीति । अनेनेन्द्रियेत्यादि भाष्यं व्याचष्टे । यस्मादिति । इन्द्रियगतसद्भावादिव्यावृत्त्यर्थमुक्तमिन्द्रियसंयोगीति तथा ऽप्याकाशादीनां मनस्त्वं मा भूदत उक्तं सहकारीति । तथा ऽप्यालोकस्य मा भूदत उक्तं निमित्तान्तरमिति । तथा ऽप्यात्मनो मा भूदत उक्तमव्यापीति । आक्षिप्य भाष्यं समाधत्ते कथं पुनरिति । चक्षुरादिभ्यो ऽनुत्पत्तौ सत्यां क्रियात्वात् । अत्र च य आत्मनो विशेषगुणास्ते सर्वेऽन्द्रियजन्मानो यथा गन्धादिप्रत्ययाः तथा च विवादाध्यासिताः स्मृत्यादयः तस्मात्तेऽपीन्द्रियजन्मानः अत्र च संस्कारादिषु न करणव्यापार इति । सेव हेतुमाश्रित्य समाधत्ते । अथायुगपदिति । संयन्निधभेदादिति । यदा तस्यैव मनःसंयुक्तस्येन्द्रियस्य क्रमेण नीलादयो ऽर्थाः समवधानेऽ सदा तत्क्रमात् क्रम इत्यर्थः । युगपत्क्रम गृहीत्वा विहृन्तेऽपि मनःपरित्यागो मा भूदत उक्तं सत्यां बुभुत्सायामयुगपद्ग्रहणमिति । ८४

न हि कि चित्करणं सद्भूयापि सदिति स्याद् यदैव धारावाहिकज्ञानोत्पत्तिर्न स्यात् । द्वितीयादिज्ञानेष्वपि सैव सामग्रीति सकृदेव यावत्कालेऽव्यवकरणात्मयमपेक्ष्य ऽपायोगात् । सेपयोगे वा यत्नादपि न जनयेद् भाविनोपात् । ः

च कर्तुर्व्ययं क्रमकारिताधर्मः स ह्यनेककरणाधिष्ठानेन युगपन्नानाकार्य्याणि करोति युगपन्माणवको गच्छति पठति वहति चाचार्य्यस्य कमण्डलुमिति तस्मात्सर्वमवदातम् । तदिदमपि मनःस्मृत्यादिसाधनतया भाष्यमाणं निर्वेदाय कल्पतइति सिद्धम् । क्रमप्राप्ता त्विति भाष्यम् । प्रवृत्तिलक्षणमवतारयितुं मनसो ऽपि प्रवृत्तिर्देशनीया न चाप्रतिपादिते मनसि शक्या दर्शयितुमिति मनसो ऽनन्तरत्वं प्रवृत्तेरित्यर्थः ।

प्रवृ-म्मः (सू. १७) ॥ आरम्भः प्रवृत्तिः सा द्विधा ज्ञानहेतुः क्रियाहेतुश्च । तत्र या ज्ञानोत्पादद्वारेण पुण्यपापहेतुः सा वाक्प्रवृत्तिः वागिति च ज्ञानफहेतूपलक्षणं तेन मनसा इष्टदेवताद्यनुचिन्तनं चक्षुरादिभिः साध्वसाधुदर्शनादि सूचितं भवति क्रियाहेतुर्द्वेधी कायनिमित्ता मनोनिमित्ता चेति । तदेतद्वा-
६ तिककारो विभजते । शरीरेणेति । ननु प्रवृत्तेर्जन्महेतुत्वमुक्तं द्वितीयसूत्रे न चेयं क्षणिका सती आमुष्मिकं जन्म साधयितुमर्हति तस्माद् द्वितीयसूत्रव्याघात इति चोदयति । क्षणिकत्वादिति परिहरति नेति । प्रयोज्यव्यापारपूर्वकत्वेन प्रयोजकव्यापारनिरूपणात् प्रवृत्त्यनन्तरं दोषलक्षणम् ।

प्रव-पाः (सू. १८) ॥ रागद्वेषौ हि मोहप्रभवौ पुरुषं प्रवर्तमानं प्रवर्तयतः तयोर्धर्मः प्रवर्तना सा च मोहेकार्थसमवायः तावद्वयं रागादिचयः स्पन्दते यावदस्य मोहो वर्ततइति । प्रत्यात्मवेदनीया इति चोद्यभाष्यं तस्यार्थः लक्षणं ह्यनुमानं न च प्रत्यात्मवेदनीयेषु समानासमानजातीयव्यावृत्तेषु स्फुटतरेषु तदुपकमिति भावः । परिहारभाष्यं कर्म्मलक्षणा इति । तस्यार्थः स्वरूपतः स्फुटत्वे ऽपि न निर्वेदविषयतया स्फुटता तया चेह प्रयोजनं प्रवर्तनात्वेन चैते निर्वेदविषयाः सा च प्रवृत्त्या कार्य्येण लक्ष्यतइति कर्म्मलक्षणा इत्युक्तम् । यतः कर्म्मणा प्रवृत्त्या प्रवर्तकरागादियुक्ताः पुरुषा लक्ष्यन्ते ऽतो रागादीनां प्रवर्तनात्वमपि सूचितं भवति । यद्वेनोक्तं भवन्तीति स्वरूपमात्रं रागादीनामुक्तं भवति न तु प्रवर्तनात्वमपि तेषामित्यर्थः । तदेतदस्य वार्त्तिककारः प्रश्नपूर्वकं व्याचष्टे का पुनरिति । अथवा ऽन्यतन्त्रः । का पुनरियं प्रवर्तना प्रवर्तकानां दोषाणां व्यापारः कथं गम्यते
१९ दोषा हि गम्यन्ते न तु तेषां प्रवृत्तिहेतुत्वमपीत्यर्थः । उत्तरं प्रत्यात्ममिति ।

स्वपरात्मनोर्यथासंख्यं प्रत्यक्षानुमानाभ्यां मोहैकार्यसमवायो हि रागादीनां मानसप्रत्यक्षवेदनीय इत्यर्थः । उद्देशक्रमप्राप्तं प्रेत्यभावं लक्षयति ।

पुन-वः (सू.१९) ॥ सत्त्वनिकायः प्राणिनिकायः । नन्वात्मनो नोत्पत्तिः संभवति नित्यत्वादित्यत आह भाष्यकारः उत्पन्नस्य संबद्धस्येति । तदेतद्वार्त्तिककारो व्याचष्टे । पूर्वेति । पुनर्ग्रहणमिति पुनरित्यभ्यासमाह तथा चानादिता सूचिता भवति । तदेतद्वार्त्तिकभाष्यात् द्वितीयसूत्रे कृतव्याख्यानम् । पूर्वोभ्यस्तसूत्रे चायमर्थं उपपादयिष्यते । आजवंजवीभाव* इत्यागमभाष्यया ऽस्यार्थस्यागमिकत्वं सूचयति क्रियामित्युपवर्गेणमपवर्गेण चेत्यर्थः । यद्यपि शरीरेन्द्रियबुद्धिसुखदुःखभोगातिरिक्तं गौणमुख्यभिन्नं फलं नास्ति ते च यथायोगं पूर्वं लक्षितास्तेन च रूपेण निर्वेदायैयोगिनस्तथा ऽपि प्रवृत्तिदोषजनितत्वेनापि रूपेणामी निर्वेदायैयोगिन इति तेन रूपेण लक्ष्यन्ते ।

प्रवृ-तम् (सू.२०) ॥ अथ च प्रवृत्तिजनित इति वक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुभावो ऽपि तु प्रवृत्तिकार्ये सुखदुःखे अपि प्रतीति दर्शनार्थम् । दोषसलिलावसिक्तायां खलु आत्मभूमौ धर्माधर्मबीजे सुखदुःखे जनयतः नान्यथा । न चास्ति संभवो न तत्र हृष्यति तद्व तस्य सुखं न च तद् द्वेष्टि तद्व तस्य दुःखमिति । सूत्रे ऽर्थग्रहणं गौणमुख्यफलावरोधार्थं भाष्ये च निष्ठा समाप्तिः सा च प्रलये ऽप्यस्तीत्यत उक्तं पर्यवसानमिति । अवसानमात्रमस्ति न पुनः परितः पुनरपि सर्गहानोपादानयोर्भावादित्यर्थः । सुबोधं वार्त्तिकम् । नानुक्ते शरीरादौ तेषां दुःखत्वं शक्यं लक्षयितुमिति लक्षणेभ्यः परमिदं दुःखलक्षणम् ।

बाध-तम् (सू.२१) ॥ अथ च बाधनेति बाधनाविषयां बुद्धिं लक्षयति तेन बाधना ■ तदनुषङ्गिणश्च शरीरादयो गौणमुख्यभावेन लक्षिता भवन्ति । सैव हि बाधनाबुद्धिर्दुःखे मुख्या शरीरादौ गौणीति । अलमेभिरिति प्रत्ययो निर्वेदः वर्जितया योगिनः स्वयमुपलभन्ते स्वयमुपभन्तेषु विषयेषु चोदायोन्यमुपेक्षाबुद्धिर्वैराग्यं तत्परशब्द इति वार्त्तिकम् । अनुषङ्गश्च संबन्धः स च बाधनायां विषयविषयिभावः शरीरादिषूक्तः । के चिद्विरक्तमन्या मन्यन्ते न दुःखं नामास्ति स्वरूपत इति तन्निराचिकीर्षुराह स्वरूपतस्तु दुःखमिति । विकल्पो

* आजवंजवीभाव इ पु पाठः ।

१७ विधेय । अभावफलत्वप्रसङ्गादिति । यद्यप्युपात्तदुरितक्षयहेतवोऽपि धर्माः सन्ति तथाऽप्यधिकोत्कर्षशालित्वादिफलानां दर्शपौर्णमासादीनां सहस्रसंवत्सरपर्यन्तानां विधायकेभ्यो वचनेभ्यो भावफल एव धर्मो गम्यते भावस्यैवोत्कर्षयोगित्वादिति । क्रमप्राप्तमपवर्गलक्षणमवतारयति भाष्यकारः यत्र त्विति ।

तद्–र्गः (सू २२) ॥ तदित्यनन्तरं गौणमुख्यभेदभिन्नं दुःखं परामृशतीत्याह भाष्यकारस्तेन दुःखेनेति । मुख्यमेव दुःखमिति भ्रमो मा भूदत आह । जन्मनेति । अनेन जायमाना दुःखशब्देन सर्वे शरीरादय उच्यन्त इत्युक्तं भवति अभयमिति । पुनःसंसारभयाभावमाह अभयं [illegible] ब्रह्मेति [illegible]भयश्रुतेः । ये तु ब्रह्मैव नामरूपप्रपञ्चात्मना परिणमत इत्याहुस्तान् प्रत्याह अजरमिति । सर्वात्मना परिणाम एकदेशेन वा । पूर्वस्मिन् कल्पे सर्वात्मना ब्रह्मणोऽन्यथात्वाद् विनाशप्रसङ्गः । एकदेशपरिणामे तु सावयवत्वेन घटादिवदनित्यत्वप्रसङ्ग इति सूक्तमजरमिति । वैनाशिका आहुः प्रदीपस्येव निर्वाणं मोक्षः तस्य चेतस इति तान् प्रत्याह अमृत्युपदमिति । एतदुपपादयिष्यते वार्तिककारः । तदेतद्भाष्यं वार्तिककारो व्याचष्टे । तेनेति । आत्यन्तिकग्रहणं महाप्रलयावस्थानिवृत्त्यर्थम् । अथ भाष्य नित्यं सुखमात्मन इत्यादि तस्यार्थः । विज्ञानमानन्दं ब्रह्मेति सामानाधिकरण्यश्रुतेः ब्रह्मस्वभाव सुखं तथा च ब्रह्मणो नित्यत्वात् तदपि नित्यमित्यर्थः । आत्मन इति षष्ठी राहोः शिर इतिवन्मन्तव्या । तदेतद्भाष्यं व्याचष्टे । आत्यन्तिकीति । तेषामित्यादि भाष्यं व्याचष्टे । तदेति । अत्रानुमानमुपन्यस्यातिप्रसङ्गेन निराकरोति नेति । अथात्मनि तु सुखं नित्यं नेच्छति तत्राह अनेका-
। १० न्तिकता वा । नित्यस्याभिव्यक्तिरित्यादिभाष्यं व्याचष्टे नित्यमिति । यदभिसंधिः सुखं तावदात्मनो गुणो नात्मा । उपपादितो हि गुणगुणिनोर्भेदः एव विज्ञानमप्यात्मगुणः न [illegible]यव्यतीभ्यां ज्ञानव्यक्तिभ्योऽनुदयव्ययधर्मा भवितुमर्ह[illegible] वा

न चात्मैव तत्स्वभावः सुषुप्त्यवस्थानुपपत्तेः अचेतयन्नेव हि सुषुप्त इत्युच्यते । न च तदा विषयशून्यं स्वनिष्ठमात्मचैतन्यमित्युक्तं तदवस्थाभेदस्य सुषुप्तोत्थितेन स्वाप्नान्तिकस्येव स्मरणप्रसङ्गात् । सुखं च न ज्ञानजातीयमित्युपपादितं प्रत्यक्षसूत्रे । न च किं चिदपि स्वयंप्रकाशमिति चतुर्थे निवेदयिष्यते । तदेव व्यवस्थिते दूषणं भाष्यवार्तिकोक्तं द्रष्टव्यं यथा ऽयमात्मनः संयोग इति । संसारावस्थायां तावदयमात्मनः संयोगो धर्मं निमित्तमपेक्षमाणः सुखज्ञानमकार्षीत् । यदि तु मुक्त्यवस्थायां तदनपेक्ष एव सुखज्ञानं करोति हन्त रूपादिज्ञानेषु इन्द्रियान्तराण्यपि नापेक्षेतेति भावः । यद्युते योगजेति । न वयं विषयमात्रापेक्षां ब्रूमो येन रूपादिष्वपि ज्ञानमुत्पादये- ८९ दपि तु संसारावस्थायां यत्सुखज्ञानायानेनापेक्षितं तदपेक्षते धर्मस्य सदा तेनापेक्षित इति मुक्त्यवस्थायामपि धर्ममेवापेक्षते एतावान् विशेषो यदयं योगज इति । तथा च न रूपादिज्ञानप्रसङ्ग इति । यद्युते नित्यो ऽसाविति । निराकरोति योगेति । ननु त्वन्मते यथा सुखसंवेदनं जिज्ञासितमेवमस्मन्मतेपि सुखसंवेदनहानाय घटिष्यत इत्यत आह न चायं सुखरसमिति । अस्मन्मते हि दुःखहानायैव तदनुषक्तं सुखं जिहासितं नित्यं तु सुखं सर्वदुःखविनिर्मुक्तं सत् दुःखहानाय जिहासितं भवतीत्यर्थः । न केवलमानुकूल्यात्प्रतिबन्धकत्वं नास्ति शरीरादीनां प्रत्युत मुक्त्यवस्थायामपि कल्पनीया इत्याह । नित्यं शरीरादीति । सिद्धान्तिनो वचनमनुभाष्य दूषयति* । प्रमाणाभावादित्युक्तं तच्च नेति । शास्त्रेण हि मोक्षसाधने लोकः प्रवर्तनीयः अप्रवर्तमानश्च प्रवर्तनीयः सुखार्थी च प्रवर्तते तत्साधने सुखं चेष्टमिति सुखात्मको मोक्ष इत्यर्थः । सेयं लोकप्रवृत्तिरनैकान्तिकत्वेन संशयहेतुरिति परिहरति । न प्रवृत्तीति । स्यादेतद् मुख्यासंभवेन गौणमाश्रीयते सुखशब्दस्य सुखे मुख्यो भाक्तस्तु दुःखनिवृत्तौ तस्मान्नित्यानन्द एव मोक्ष इत्यत आह यदि पुनरिति । संबाधकः संप्रत्ययप्रवृत्तो योगी ९० । ९ धर्माधर्मौ तावदात्मनि पारमार्थिकौ न त्वविद्याकल्पितौ तौ च वीतरागेणापतत्वेन सता क्षप्यौ योगेन वेत्तुं न सत्त्वेन न हि सत्स्वेव तेषु विषयेषु

---

* वेत्यर्थोऽपि पुस्तकपाठः ।

पात्तमुपात्तं भुञ्जानस्त्यक्तं त्यक्तं चोपाददानः संसारान्न मुच्यते तस्मादयं
रागो बन्धनमिति समाम्नातस्तन्निबन्धना च प्रवृत्तिः परिहर्त्तव्या अन्यथा
तु नित्यसुखावधारणजनितेयं तृष्णापिशाची लब्धप्रसरा विषयसुखेष्वपि
त्यासन्नेषु पुरुषं प्रवर्त्तयन्ती मोक्षमस्य सुदूरं प्रतिक्षिपेदिति मनागपि
प्रसरोऽस्या न दातव्यः । तस्मान्नित्यानन्दप्रतिपादकश्रुतिरात्यन्तिके दुःख-
वियोगे भाक्तीति युक्तमिति भावः । चोदयति । यद्यपीति । रागवद्-
द्वेषस्यापि प्रसरो न दातव्यः तस्य च त्वया प्रसरो दत्त इति तुल्यो दोष
इति । परिहरति नाप्रतिकूलत्वात् । यथा नित्यसुखोपादानं मोक्षप्रतिकू-
लतया सत्या प्रतिकूलं नैवमात्यन्तिकदुःखहानं द्वेषानुषक्तं द्वेषः क्रोधो मन्यु-
रित्यनर्थान्तरं ज्वलनात्मको हि स भवति नैव वैराग्यमलप्रत्ययो हि स
इत्यप्रतिकूलं दुःखहानमित्यर्थः । तदनेन **नित्यं सुखमात्मनो व्यज्यते
मोक्ष इत्यादि तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो
भवती**त्येवमन्तं भाष्यजातं व्याख्यातं बोद्धव्यम् । यद्योरमित्यादेर्भाष्यस्या-
यमर्थः । एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां प्रसक्तस्य यदि नित्यं सुखं
भवति कामं भवतु मा भूदुभयोरपि पक्षयोर्वीतरागप्रवृत्तौ न मोक्षाधिगमो
विकल्प्यते न सन्दिग्धो भवतीत्यर्थः । येनाभिप्रायेण मोक्षमुपन्यस्यति चित्तं
मुच्यत इति । संसारी हि मुच्यते रागादयस्तद्धेतवः न चात्मनि नित्ये
रागादयः संचारं कर्तुमुत्सहन्ते नित्यस्याविकार्य्यत्वेन तादवस्थ्यादुपनेया-
ऽपनेयाभावात् । यथाऽऽहुर्वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः । चित्तं तु कार्य्यं रागादिवया-
त्संचारी तद्वियोगाच्च मुच्यत इति युक्तमित्यर्थः । देवमनुष्यादिजातिर्गतिस्त-
त्रोत्पत्तिः । तदेतद्दूषयति नायतत इति । क्षणिकत्वाच्चित्तस्य जन्म विनाश-
प्रयोजनमेव जन्मानन्तरमेव विनाश इति क्षणस्याभेद्यत्वेनोपनेयापनेयाभा-
वात् । स्वरसभङ्गित्वाच्च वैयर्थ्यमित्यर्थः । यद्युक्ते सन्ततेरिति । अनादिः
खलु कार्य्यकारणप्रवाहरूपा बुद्धीनां सन्ततिः स चात्मसाक्षात्कारोन्मू-
लितसवासनक्लेशजालस्य निवर्तते निवृत्तिश्चेयमेव तस्या यतत्सन्तानव-
०२ र्तिनश्चेतसोऽनागतस्यानुत्पाद इति भावः । निराकरोति । न तस्याश-
पपरत्वात् । उत्पन्नस्यानुत्पादो न शक्यः नापि सन्ताननिवृत्तिः शक्या कर्तुं-

मन्त्यक्षणानुपपत्तेः । स ह्यन्त्यक्षणः किं चिदारभते न वा । आरम्भे नान्त्य इति न कार्यकारणप्रवाहनिवृत्तिः प्रवाहस्य सन्तान इति न सन्ताननिवृत्तिः । अनारम्भे तस्यासामर्थ्येनासत्त्वात्ततः पूर्वे सर्वएव क्षणा असन्तः स्युरिति कस्योच्छेद इति भावः । शङ्कते अनागतानुत्पाद इति । तथा सत्यनाग- ६१ तानुत्पादलक्षणार्थक्रियाकारित्वादन्त्यक्षणोपपत्तिरिति भावः । निराकरोति । अनागतेति । प्रागभावस्यानादित्वादिति भावः । पृच्छति । तर्हि कस्येति । नित्यस्यानुपकार्यत्वादुपनेयापनेयाभाव इति भावः । उत्तरं च इति । यथा वास्तविकस्यैवोपकार्यत्वं तथा क्षणभङ्गभङ्गउपपादयिष्यतइति सिद्धम् । संशयलक्षणावतारपरं भाष्यं स्थानवत एव तर्हीति । तस्यार्थः स्थानं क्रमः तद्वत एव तर्हि इदानीमिति क्व चित्पाठः । स्थानवत एव तर्हीति । तर्हि तदानीमुद्देशसमये क्रमवतः संशयस्य प्रमेयानन्तरमुद्दिष्टस्य प्रमेयलक्षणानन्तरं स्थानं क्रमो लक्षणस्येत्यर्थः । तदेतद्वार्त्तिककारो व्याचष्टे प्रमेयेति । एतदेव स्फुटयति । येति । स्थानं क्रमग्रहणेन व्याख्यातं मत्वर्थश्च प्राप्तिग्रहणेन ।

समा—यः (सू.२३) ॥ अथ च विमर्शः संशय इति संशयसामान्यलक्षणं तत्र च संशय इति लक्ष्यनिर्देशो विमर्श इति लक्षणपदम् । एकस्मिन् धर्मिणि विरोधिनानार्थावमर्शो विमर्शः किं स्विदिति ज्ञानम् । तदनेनासमानजातीयेभ्यः प्रमाणादिभ्यः समानजातीयेभ्यश्च विपर्ययादिभ्यः संशयो निवर्तितो भवति । समानेत्यादीनि तु त्रीणि विशेषलक्षणानि । तेषु विमर्शः संशय इत्यनुवर्तनीयम् । अथ त्रिविधोऽयमर्थो विमर्शविशिष्टः संशयो लक्ष्यपदं समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेरिति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणानीति । तदेतदाह वार्त्तिककारः तत्र समानेति । त्रिविध एवेति । ये पञ्चविधमाचक्षते ते निराकृताः । तदनवधारणं ज्ञानं संशय इति संशयसामान्यलक्षणपरं भाष्यं व्याचष्टे तत्र विषयस्वरूपेति । प्रत्ययो ऽनवधारणात्मकश्चेति । आक्षेपपरिहारौ प्रथमसूत्र एव व्याख्यातौ । प्रत्ययशब्दस्य निरवयवमनन्यमभ्युपेत्य व्याख्यानं प्रतीयते इति परमार्थतस्तु प्रत्ययशब्दो ज्ञानपर्यायः ज्ञानत्वं तु सामान्यं संशयादिष्वप्यस्तीति न विरोध इति । समानधर्मोपपत्तेरिति व्याचष्टे समानेति । विकल्पयति किं पुनरिति । कस्मादिति । मा कार्षीद् दृष्टे सत्ययं गुण एव कस्मान्न करोतीति प्रश्नार्थः । ,, । २०

१।३ समाधत्ते न साधारण्येति । यादृशं सव्यापचयपरिमाणभेदयोगि परिमाणं स्थाणुपुरुषयोस्तादृशमस्यापि पुरोवर्त्तिनो द्रव्यस्य परिमाणं तस्मात्सदृशपरिमाणधर्मस्य धर्मिण उपपत्तिरित्यर्थः । महत्त्वदीर्घत्वसामान्यवद्धर्मयोगस्तु सन्नपि न संशयकारणम् । असादृश्ये तद्योगे ऽपि संशयाभावादिति भावः । स्यादेतत् । उपपत्तिः सत्ता न च सदृशो धर्मः सत्तामात्रेण संशये हेतुः अपि तूपलब्धः न चोपलब्धेर्वाचकमत्रास्ति पदमित्यत आह तस्योपपत्तिरध्यवसाय इति । यद्यप्ययमुपपत्तिशब्दः सत्तावचनस्तत्परश्च तथा ऽपि पदान्तरसमभिव्याहारादवगम्यते सत्तामात्राभिधाने ऽपि तदुपलब्धिर्विवक्षितेति । विषयविषयिणोरभेदविवक्षया सामानाधिकरण्यमुपपत्तिरुपलब्धिरिति । पृच्छति कस्मादिति । अस्मदायत्ते हि शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहइत्यर्थः । उत्तरमनुक्तमपीति* । विशेषापेक्ष इति विशेषस्यापेक्षोच्यते । अपेक्षाशब्दश्च यद्यपीच्छायां वर्त्तते तथापीह जिघृक्षायां वाक्यसामर्थ्यात् । न च सा संशयस्य हेतुः तस्याः संशये सति भावात् । तस्माद्विशेषापेक्षया जिघृक्षालक्षणयेह विशेषयोः पुरोवर्त्तिनोस्तु सादृश्यात्स्मरणे सत्यग्रहणं लक्षणीयं यथा गङ्गायां घोष इति तीरं स्वपदद्रुमेव लक्षयति न तु तीरमात्रमेव ग्रहणं तथा ऽपि स्मर्यमाणमेवागृह्यमाणं सत्तु लक्षणीयं न त्वगृह्यमाणमात्रम् । अनेनैवाभिप्रायेण वक्ष्यति भाष्यकारः विशेषस्मृत्यपेक्ष इति । तस्माद्विशेषाग्रहणप्रतिषेधात् सामान्यज्ञानमभ्यनुज्ञातं भवतीति भावः । परिहारान्तरमाह अथ वेति† । स्यादेतत् । उपपत्तिशब्दः सत्तावचनश्चोपलब्धिवचनश्च तथा च विनिगमनायां को हेतुरित्यत आह यः पुनरिति । नन्वभावः प्रमाणालम्बनं तत्कस्मात्तत्र न विरोध इत्यत उक्तं स्वतन्त्रमिति । अथ वा सत्तावाचको ऽप्ययमुपपत्तिशब्दः स्वाभिधेयविषयामुपलब्धिं लक्षयतीत्याह विषयशब्देनेति । न चेयमलौकिकी लक्षणेत्याह लौकिकमिति । यथा धूमो न सत्तामात्रेण हेतुस्तथोक्तं प्रागिति । एकदेशिनामुपसंख्यानमुपन्यस्यति अव्यवच्छेदेति ।

१।३ ते हि मन्यन्ते व्यवच्छेदहेतुरपि धर्मः समानो भवति यथा कृतकत्वं साध्यधर्मिणि शब्दे दृष्टान्तधर्मिणि च घटादौ समानमिति न चासौ

---

* शुद्धमवार्त्तिक पु प ८५ । प ८ यसमाविति अनुतमपीति चापपाठ ।

† अथ वावत्यार्थमिति मु ला मु अपपाठ ।

नित्यत्वसंशयहेतुरपि त्वनित्यत्वस्यायोगं साध्यधर्मिणा व्यवच्छिनत्ति तस्मा-
दव्यवच्छेदहेतोरिति वक्तव्यमित्यर्थः । तदेतद् वक्तव्यं दूषयति न समा- ६३
नेति । समानो हि धर्मः प्रतिसंबन्धिनमपेक्षते केनेति संशयपदेन च स्ववि-
षयोपस्थापकेन परस्परविरोधिनावुपस्थितौ तेन ताभ्यां समान इति गम्यते ।
तेन विपक्षितत्सजातीयवृत्तित्वे सति अन्यजातीयवृत्तिरेव गम्यते न चैवं
कृतकत्वं तस्मान्न वक्तव्यमव्यवच्छेदहेतोरिति । समानशब्दार्थः सादृश्यं
तच्च नास्तीत्यर्थः । अथैवोपलब्ध्योरित्यादिपदद्वयं शङ्कापूर्वकं योजयति
सोऽयं साधारण इति । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इति शिरःपा-
ण्यादीनामुपलब्धिर्वल्मीककोटरादेरनुपलब्धिः पुरुषस्य साधकं प्रमाणं तद्धि सद्धु-
शिरःपाण्यादेरनुपलब्धिर्वल्मीककोटरादेरुपलब्धिः पुरुषस्य बाधकप्रमाणं तद्धि
पुरुष एवायमिति वा इदंतया व्यवतिष्ठते इदंतानिषेधेन वा नायं पुरुष
इति नेदंतया व्यवतिष्ठते तदभावो व्यवस्था । तदनेन साधकबाधकप्रमाणा-
भावो दर्शितः । विशेषाकाङ्क्षायां चेति विशेषस्मृतिर्दर्शिता । विमर्शपूर्वकं समस्त-
मित्यवधारयति । किमिदमिति । तदेकपदपरिग्रहे दोषमाह यदि स-
मानेति । विशेषः शिरःपाण्यादिः विशिष्यते ह्यनेन पुरुषः स्थाणोरिति
अनुपलब्धसामान्यस्यापि ✱ विद्युपलब्ध्यनुपलब्ध्यव्यवस्थास्तीति । यथा सप्तमे
रसे दशमे द्रव्ये । न हि तत्र साधकं बाधकं वा अस्ति प्रमाणानां च संशयः
विशेषापेक्ष इत्येतावतीति । तद्यथा हस्तिनं दृष्ट्वा तत्संबन्धिनो स्थूलाह-
स्तिपको स्मरति न च तत्र संदिग्धे एक*द्विपदपरिग्रहे दोषमाह एवं स-
मानेति । नौदोलाद्यारूढो हि गच्छन् विदूरे आरोहपरिणाहवद्वस्तुदर्शने
सत्यपि च साधकबाधकप्रमाणाभावे विशेषस्मृत्यभावान्न शाल वा नाग इति
स न संदिग्धे एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च पदद्वये
विधीयमाने ऽन्यतः स्मर्यमाणाद्विशेषात्सदृशधर्मवति धर्मिण्यनुपलभ्यमाने
संशयः स्याद् अस्ति हि तदा विशेषस्मृतिः साधकबाधकप्रमाणाभावश्च न
त्वस्त्वनुपलभ्यमाने समानधर्मे धर्मिणि तद्गता वल्मीककोटरादयो वा शिरः-
पाण्यादयो वा शङ्क्यग्रहा इति यदा ऽयं द्रष्टेति । यदा खल्वयं दृष्ट्वा प्रतिपद- ६४
रङ्कुरोद्भेदपुलकिताभिर्मन्दमलयमारुतान्दोलनललितलास्यशालिनीभिः शाखा-

* एकेतिपदं त्रिषु पुस्तकेषु नास्ति ।

भिर्मधुमदमुदितमधुपमालागुञ्जितवल्लकीवाद्यमनोहराभिर्मत्तपुंस्कोकिलकलवि-
पञ्च्यमानपञ्चमाभिरारब्धसङ्गीतकं सहकारतरुमालोक्याथ विदूरवर्ती कुञ्ज-
रसदृशधर्मवन्तमनुभवति तदा ऽस्यास्ति समानधर्मोपलब्धिरस्ति च करितरु-
रूपविशेषस्मृतिर्न तु साधकबाधकप्रमाणाभाव इति न संशेते। कतिपयव्यक्त्या-
श्रयत्वं सहकारत्वादेर्विशेषस्याल्पविषयत्वम् आरोहपरिणाहादेस्तु बहुव्या-
पित्वं महाविषयत्वं नानार्थोपसर्पणे च विरुद्धार्थोपसर्पणं तदनेन स्थाणुपुरु-
षयोरित्यादि भाष्यं व्याख्यातम्। पश्यन्नित्युपपत्तिविवरणं विशेषं बुभुत्स-
मान इति। विशेषापेक्ष इत्यस्य विवरणं किं स्विदिति विमर्शविवरणम्। स्यादे-
तत् संशयोत्तरकाला बुभुत्सेति कथं बुभुत्समानः संशेत इत्यत उक्तं भाष्य-
कृता समानमनयोरिति। विशेषापेक्षाशब्देनेच्छावाचिना ऽगृह्यमाणविशेष-
स्मरणं लक्षितमिति भावः। सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मो-
पलब्धिर्विनश्यदवस्था विशेषस्मृत्या सहाविनश्यदवस्था एकस्मिन् क्षणे सती
संशयज्ञानस्य हेतुरिति सिद्धम्। त्रिपदपरिग्रहमनेकधर्मोपपत्तेर्विप्रतिपत्ते(रित्य-
त्रापि योजयति। एतेनेति। द्वे द्वित्वे नैकीकृत्याद्यामन्तरयोरिति द्रष्टव्यम्।
अनेकधर्मोपपत्ते)रित्यत्र भाष्यकृतो व्याख्यां ग्रहीतुमेकदेशिव्याख्यानमुपन्यस्य
दूषयति अनेकेति। शब्दो हि संयोगजः संयोगजत्वं हि कार्ये द्रव्ये गुणे च
रूपादौ शरीरादिक्रियायां चास्तीति द्रव्यगुणकर्मणां समानं तस्मादनेकस्य
धर्मश्चरितार्थः। एवं शब्दगतो ऽनेको ऽपि धर्मः समानतयैव द्रव्यत्वादिसंदे-
हहेतुः विभु संयोगजत्वं साधारणं सत्त्वादिना निर्विभक्तस्य निर्गुणत्वं गुणकर्म-
णोः। एवं क्षणिकत्वं द्रव्यगुणकर्मणामिति समानधर्मोपपत्त्या गतार्थमित्यर्थः।
८ पृच्छति। अथेति। भाष्यकृद्व्याख्ययोत्तरम् असाधारण इति। पुनः पृच्छति
कथमिति। समासपदशब्देन तदेकदेशो ऽनेकशब्दो लक्ष्यते समासगतेना-
नेकशब्देनेत्यर्थः। उत्तरं समानेति। एतदुक्तं भवति यतो ऽनेकस्मात्समाना-
समानजातीयादेव स्वाश्रयं व्यावर्तयति अतो ऽनेकापादानकव्यावृत्तिहेतुत्वाल्ल-
क्षणया ऽनेक इत्युच्यते। तदनेन समानजातीयमसमानजातीयं चाने-
कमिति भाष्यं तस्माद्विशेष इत्यध्याहृत्य व्याख्यातम्। अध्याहृतविशेषपद-
विवरणं विशेषको धर्म इति। सम्बन्धसामान्यविवक्षया षष्ठी तस्यानेकस्येति

( ) एतांशान् सम्. २ पु नास्ति।

लक्षणार्थान्तरमाह **तस्य चानेकस्येति** । निवर्त्त्यनिवर्त्तकसंबन्धेनानेकत्व- ९५
स्येन धर्मो लक्ष्यत इत्यर्थः । तदनेन त्रिनेत्राध्याहारं **समानजातीयमस-
मानजातीयं चानेकं तस्य धर्म्मो** निवर्त्तकतयेति व्याख्यातम् । न त्व-
त्र समासभ्रान्तिः कर्त्तव्या दर्शयिष्यति बहुव्रीहिमिहैव वार्त्तिककारः । तदनेन
लक्षणाबीजद्वयोपन्यासेनासाधारणो धर्म इति महावाक्यार्थं व्याख्यातम् ।
प्रकारान्तरेणानेकधर्मपदं व्याचष्टे **एकानेकेति** । एकं चानेकं च तदुभयमनेकं
तदेतस्यानेकस्य प्रत्ययहेतुर्धर्मो ऽनेकधर्मः भेदाभेदप्रत्ययहेतुरित्यर्थः ।
विभागजत्वं विभागजानां शब्दानामन्योन्यस्याभेदप्रत्ययहेतुः तदितरेभ्यश्च
भेदप्रत्ययहेतुरिति तदिदमाह **यतो विभागजन्यत्वादेव प्रत्ययो भवतीदं
विभागजं शब्दजातमेकम्** इदं च ततो ऽन्यदनेकं भिन्नं तत्र य एकप्रत्य-
यहेतुर्धर्मो भेदप्रत्ययहेतुः स एवानेकप्रत्ययहेतुर्धर्मो ऽनेकधर्मो भेदप्रत्यय-
हेतुर्विशेषः । जात्यभिप्रायं चैकवचनं सदादिर्हि धर्मो द्रव्यगुणकर्मणामभेदप्रत्य-
यहेतुः सामान्यादिभ्यश्च शब्दं निर्विभजति तदिदमाह **यतः** सदादेरेव प्रत्य-
यो भवतीदमेकं यतश्च विभागजत्वादेव प्रत्ययो भवतीदमनेकमिति तस्मात्त्रि-
द्रुमेकं चानेकं चानेकमिति तत्प्रत्ययहेतुरुपचारेणानेक इति । तदिदमुत्त्राप्य
व्याख्यातम् । अथोदाहरणमाह **यथेति** । द्रव्यादिकोटिविषयविशेषे संशयप्र-
दर्शनार्थमुक्तं **सामान्यविशेषसमवायेभ्य इति** । सदनित्यं द्रव्यवत्कार्यं
कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः तेनानेन सदादिना
निर्विभक्तस्य पृथक्कृतस्येत्यर्थः ।

स्यादेतत् । यदेन सहचरितं दृष्टं तत्तु विद्यमानं तत्स्मारयत्तद्वि-
शिष्टेनापि सम्बन्धादनिश्चाययत्संशयहेतुर्भवति यथा समानो धर्मः असा-
धारणस्तु धर्मो विभागजत्वं नर्ते शब्दात् क्वचित्पार्थिवादौ वा उत्क्षेपणादौ
गन्धादौ वा दृष्ट इति कथं स्मारयेद् अस्मारयन् वा कथं संशयं जनयेत् ।
तस्मात्को ऽयं भवेदित्यतो धर्मादिति जिज्ञासामात्रमुत्पादयेद् न त्वयं
वायं वेति संशयमित्यत आह **न हीति** । कस्मान्न दृष्टमित्यत आह **सर्वत्रासं-
भवात्** । न हि द्रव्यादेर्विभागतो जन्म सम्भवति तदन्वयव्यतिरेकाननु-
विधानादित्यर्थः । नन्वत एवोक्तं न संशयहेतुरित्यत आह **विभागजत्वम्** ।
**संशयं करोति** **सर्वतोव्यावृत्तेरिति** । अयमर्थः । यद्यपि विभाग- ,, १

भिर्मधुमदमुदितमधुपमालागुञ्जितवल्लकीवाद्यमनोहराभिर्मत्तपुंस्कोकिलकलवि-पञ्च्यमानपञ्चमाभिरारब्धसङ्गीतकं सहकारतरुमालोक्याथ विदूरवर्त्ती कुञ्ज-रसदृशधर्मवन्तमनुभवति तदा ऽस्यास्ति समानधर्मोपलब्धिरस्ति च करिसरू-रूपविशेषस्मृतिर्न तु साधकबाधकप्रमाणाभाव इति न संशेते । कतिपयव्यक्त्या-श्रयत्वं सहकारत्वादेर्विशेषस्याल्पविषयत्वम् आरोहपरिणाहादेस्तु बहुव्या-पित्व महाविषयत्वं नानार्थोपमर्पेण च विरुद्धार्थोपमर्पेण तदनेन **स्थाणुपुरु-षयोरि**त्यादि भाष्यं व्याख्यातम् । पश्यन्नित्युपपत्तिविवरणं **विशेषं बुभुत्स-मान** इति । विशेषापेक्ष इत्यस्य विवरणं किं स्विदिति विमर्षविवरणम् । स्यादे-तत् संशयोत्तरकाला बुभुत्सेति कथं बुभुत्समानः संशेत इत्यत उक्तं भाष्य-कृता **समानमनयोरि**ति । विशेषापेक्षाशब्देनेच्छावाचिना ऽगृह्यमाणविशेष-स्मरणं लक्षितमिति भावः । सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मो-पलब्धिर्विनश्यदवस्था विशेषस्मृत्या सहाविनश्यदवस्था एकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम् । त्रिपदपरिग्रहमनेकधर्मोपपत्तेर्विप्रतिपत्तेः(रित्य-त्रापि योजयति । एतेनेति । द्वे द्वित्वे नैकीकृत्याद्यानन्तरयोरिति द्रष्टव्यम् । अनेकधर्मोपपत्ते)रित्यत्र भाष्यकृतो व्याख्यां ग्रहीतुमेकदेशिव्याख्यानमुपन्यस्य दूषयति **अनेके**ति । शब्दो हि संयोगजः संयोगजत्वं हि कार्य्ये द्रव्ये गुणे रूपादौ शरीरादिक्रियायां चास्तीति द्रव्यगुणकर्मणां समानं तस्मादनेकस्य धर्मश्चरितार्थः । एवं शब्दगतो ऽनेको ऽपि धर्मः समानतयैव द्रव्यत्वादिसंदे-हहेतुः त्रिषु संयोगजत्वं साधारणं सत्त्वादिना निर्विभक्तस्य निर्गुणत्व गुणकर्म-णोः । एव चाधिकस्य द्रव्यगुणकर्मणामिति समानधर्मोपपत्त्या गतार्थमित्यर्थः ।
८ पृच्छति । अथेति । भाष्यकृद्व्याख्योत्तरम् **असाधारण** इति । पुनः पृच्छति कथमिति । समासपदशब्देन तदेकदेशो ऽनेकशब्दो लक्ष्यते समासगतेना-नेकशब्देनेत्यर्थः । उत्तरं **समाने**ति । एतदुक्तं भवति यतो ऽनेकस्मात्समाना-समानजातीयादेव स्वाश्रयं व्यावर्त्तयति अतो ऽनेकापादानकव्यावृत्तिहेतुत्वाल्ल-क्षणया ऽनेक इत्युच्यते । तदनेन **समानजातीयमसमानजातीयं चाने-कमिति** भाष्यं तस्माद्विशेष इत्यध्याहृत्य व्याख्यातम् । अध्याहृतविशेषपद-विवरणं विशेषको धर्म इति । सम्बन्धसामान्यविवक्षया षष्ठी तस्यानेकस्येति

( ) एतांयान् ग्रन्थ च पु नास्ति ।

लक्षणवीजान्तरमाह **तस्य चानेकस्येति** । निवर्त्त्यनिवर्त्तकसम्बन्धे नानेकश- ९५
ब्देन धर्मो लक्ष्यत इत्यर्थः । तदनेन विनैवाध्याहारं **समानजातीयमस-
मानजातीयं चानेकं तस्य धर्म्मो** निवर्त्तकत्वेनेति व्याख्यातम् । न त्व-
त्र समासभ्रान्तिः कर्त्तव्या दर्शयिष्यति बहुव्रीहिमिहैव वार्त्तिककारः । तदनेन
लक्षणवीजद्वयोपन्यासेन**ासाधारणो धर्म** इति महर्षिकवाक्यं व्याख्यातम् ।
प्रकारान्तरेणानेकधर्मपदं व्याचष्टे **एकानेकेति** । एकं चानेकं च तदुभयमनेकं
तदेतस्यानेकस्य प्रत्ययहेतुर्धर्मो ऽनेकधर्मः भेदाभेदप्रत्ययहेतुरित्यर्थः ।
विभागजत्वं विभागजानां शब्दानामन्योन्यस्याभेदप्रत्ययहेतुः तदितरेभ्यश्च
भेदप्रत्ययहेतुरिति तदिदमाह **यतो विभागजन्यत्वादेव प्रत्ययो भवतीदं
विभागजं शब्दजातमेकम् इदं च ततो ऽन्यदनेकं** भिन्नं तत्र य एवैकप्रत्य-
यहेतुर्धर्मो भेदप्रत्ययहेतुः स एवानेकप्रत्ययहेतुर्द्धर्मो ऽनेकधर्मो भेदप्रत्यय-,
हेतुविशेषः । जात्यभिप्रायं चैकवचनं सदादिर्हि धर्मो द्रव्यगुणकर्मणामभेदप्रत्य-
यहेतुः सामान्यादिभ्यश्च भेदं निर्विभजति तदिदमाह **यतः सदादेरेव प्रत्य-
यो भवतीदमेकं यतश्च विभागजत्वादेव प्रत्ययो भवतीदमनेकमिति तस्मात्त-
द्धुमेकं चानेकं चानेकमिति तत्प्रत्ययहेतुरुपचारेणानेक इति** । तदिदमुद्गाह्य
व्याख्यातम् । अथोदाहरणमाह **यथेति** । द्रव्यादिकोटिविषयविशेषे संशयप्र-
दर्शनार्थमुक्तं **सामान्यविशेषसमवायेभ्य इति** । सदनित्यं द्रव्यवत्कार्यं
कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः तेनानेन सदादिना
निर्विभक्तस्य पृथक्कृतस्येत्यर्थः ।

स्यादेतत् । यदनेन सहचरितं दृष्टं तत्किं विद्धस्यमानं तत्स्मारयत्सद्धि-
वद्धेनापि सम्बन्धादनिश्चायकत्वात्संशयहेतुर्भवति यथा समानो धर्मः असा-
धारणस्तु धर्मो विभागजत्वं नर्ते शब्दात् क्वचित्पृथिव्यादौ वा उत्क्षेपणादौ
गन्धादौ वा दृष्ट इति कथं स्मारयेद् अस्मारयन् वा कथं संशयं जनयेत् ।
तस्मात्को ऽयं भवेदित्यतो धर्मादिति जिज्ञासामात्रमुत्पादयेद् न त्वय
याय वेति संशयमित्यत आह **न हीति** । कस्मान्न दृष्टमित्यत आह **सर्वत्रासं-
भवात्** । न हि द्रव्यादेर्विभागतो जन्म सम्भवति तदन्वयव्यतिरेकाननु-
विधानादित्यर्थः । नन्वत एवोक्तं न संशयहेतुरित्यत आह **विभागजत्वम्** ।
**संशयं करोति सर्वतो व्यावृत्तेरिति** । अयमर्थः । यद्यपि विभाग- ५५ ।

यत्त्वं न द्रव्यादौ क्व चिद्दृष्टं तथा ऽपि तद्व्यतिरेकः प्रत्येकं द्रव्यादौ दृष्ट इति विभागजत्वेन सदादिविशेषवान् शब्दो द्रव्यकर्मभ्यां व्यावर्त्तमानः किं गुणः गुणकर्मभ्यां व्यावर्त्तमानः किं द्रव्यं गुणद्रव्याभ्यां वर्त्तमानः किं कर्मेति व्यतिरेकमुखेन तत्तत् स्मारयन् असाधारणो धर्मो भवति ६ संशयकारणमिति । देशयति ननु चेति । अयमभिसन्धिः । वंशे पाट्यमाने वंशदलयोः क्रिया ततस्तयोर्मिथो विभागः ततो वंशदलावष्टब्धनभोभागविभागः सो ऽयं विभागजो विभागो न वंशदलकर्मजः अवयवक्रिया हि तदवष्टब्धनभोभागविभागजनिका द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकत्वेन व्याप्ता विकसत्कमलकुड्मले दृष्टा । न हि तत्र मुकुलिताद्विकसितकमलमन्यत् । आकुञ्चितप्रसारिताङ्गुलिकरतलवत्तत्त्वेन प्रत्यभिज्ञायमानत्वात् । वंशदलक्रिया ऽपि चेत्तादृशी नूनमनया ऽपि द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनिकया भवितव्यं तथा च द्रव्यं कार्य्यमपि न नश्येत् तस्मान्नानया वंशदलाकाशविभागो जनयितव्यः न चान्यदस्य कारणं संभवति । तस्माद्वंशदलक्रियाजनितो दलयोर्विभागः । कार्य्यैकार्थसमवेतः तदवष्टब्धाकाशप्रदेशविभागस्यासमवायिकारणमेषितव्यः एवं च गुणः शब्दो विभागजत्वाद् विभागजविभागवदिति विभागजत्वं गुणत्वनिश्चयहेतुरिति सिद्धं भवति । परिहरति अनभ्युपगतविभागजविभागस्य एतद्विभागजत्वमेवं संशयकारणं भवति । अनभ्युपगमबीजं च कुतः पुनरेतदेवमवगतं पद्मपत्रावयवक्रिया विभागद्वयजनिकेति । विभागद्वयक्रमकल्पनायां प्रमाणाभावादिति चेद् हन्त वंशदलयोरपि तुल्यम् । ननूक्तं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकं स्यात् कर्म ततश्च द्रव्यनाशो न स्यादिति । अथ विपर्ययः कस्मान्न भवतीति वंशदलद्वयक्रियैव विभागद्वयजनिका पद्मपत्रावयवक्रिया त्ववयवविभागजनिका तदवयवाकाशविभागस्त्ववयवविभागजन्मा यदि च पद्मपत्रावयवक्रिया उभयजनिका भवेद् वंशदलक्रियैव द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनं विभागं जनयेदिति । न चान्यतरत्र विभागविषययौगपद्यानिश्चयक्रमप्रमाणाभावश्च तुल्यः तस्मात्पद्मपत्रावयवक्रियाविभागजनकत्वसंदेहादशक्यनिश्चयो व्याप्यव्यापकभावः । क्रियावैलक्षण्यात्तु स्वहेतुवैलक्षण्यजन्मनः कार्य्यस्य विभागस्य वैलक्षण्यं स्यात् । यदेको द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी अप्रतिद्वन्द्वी चेतरः

तथा ऽपि* चेत्तत्रैतदप्यं क्रियाया अभ्युपगन्तव्यं यदेका विभागमेकं जनयति अन्या तु विभागद्वयमिति । तस्मादेतदुदाहरणबलेन न विभागजविभागसिद्धिः । यत्त्वङ्गुलिकर्मानन्तरमङ्गुलितरुविभागो हस्ततरुविभागः शरीरतरुविभागश्च दृश्यते तत्राङ्गुलितरुविभागमङ्गुल्याश्रया क्रिया करोतु हस्ततरुविभागन्तु न शक्ता जनयितुं तस्याः स्वाश्रयसमवायात् स्वाश्रयसमवेतकार्य्यजनने च क्रियायाः सामर्थ्यावधारणात् । तस्मादङ्गुल्यादितरुविभागः क्रियातो ऽसंभवन्नङ्गुलितरुविभागमेव कार्य्यैकार्थसमवायलक्षणप्रत्यासत्त्या निमित्तीकरोतीति विभागजविभागसिद्धिं मन्यते तं प्रत्याह यः पुनरिति । अस्तु वा विभागजो ९५ विभागः तथा ऽपि विभागजन्यमीदृशमसाधारणमेवेत्यत आह अस्तु चेति । अस्तु तस्याभ्युपगतविभागजविभागस्यापि विभागजन्यमसाधारणं विशिष्टं तदेव दर्शयति विभागजेति । पाट्यमाने हि वंशे शब्दोत्पत्तौ वंशदलयोर्विभागो निमित्तकारणं वंशदलाकाशविभागस्त्वस्यासमवायिकारणं न तु भेर्य्याकाशसंयोगवद् वंशदलाकाशसंयोगो ऽसमवायिकारणं भवितुमर्हति । तथा हि प्रयोगः यो ऽयं वंशदलविभागनिमित्तः शब्दः स निमित्तसमानजातीयासमवायिकारणजन्यः तदसाधारणनिमित्तजन्यत्वात् यो यः शब्दो यदसाधारणनिमित्तजन्मा स सर्वस्तज्जातीयासमवायिकारणजन्यः यथा भेरीदण्डसंयोगनिमित्तः शब्दो भेर्य्याकाशसंयोगासमवायिकारणकः तथा चायं तस्मात्तथा । तदेवं वंशदलविभागलब्धजन्मना वंशदलाकाशविभागेनासमवायिकारणेन जनितः शब्दः । तदेव विभागजविभागासमवायिकारणकत्वं शब्दस्य तदपि यद्यप्यङ्गुल्याकाशविभागजहस्ताकाशविभागासमवायिकारणे कायाकाशविभागे ऽस्ति तथा ऽपि कारणमात्रविभागजविभागासमवायिकारणकत्वादिति हेतुभेदप्रकारो विभागजत्वादित्यनेन सूचितः । न चाङ्गुल्याकाशविभागपूर्वकः कायाकाशविभाग एवं स हि कारणाकारणविभागपूर्वको न तु कारणमात्रविभागपूर्वकः तदिदमुक्तं विभागजविभागासमवायिकारणकः शब्दो नान्यः पदार्थ इति । ननु सहचरितो दृष्टः स्मारयन् विशेषसंशयहेतुर्भवति न तु यो व्यावृत्तः तेनासाहचर्य्यादिति शङ्कामपनेतुं भाष्यकारीयमुत्तरमाह तुल्यजातीयेष्विति । यद्यपि व्यतिरेकमुखेनासाधारणः शक्तः स्मार- ९६

---

* तथा ऽपीति पुस्तकद्वये पाठः ।

यितुं तथा ऽपि भाष्योक्तमप्युक्तं यत्खलु सदादिरूपसंपन्नं विशेषवत्तत्समानजा-
तीयेभ्यो ऽसमानजातीयेभ्यश्च व्यावृत्तं यथा पृथिवी द्रव्यम् । अबादिभ्यश्च
द्रव्यान्तरेभ्यो गुणकर्म्मभ्यश्च विजातीयेभ्यो गन्धवत्त्वेन व्यावृत्तं द्रव्यजाती-
यमेवं रूपत्वेन रूपं गुणः उत्क्षेपणत्वेनोत्क्षेपणं कर्म तथाविधः शब्दः
सदादिरूपसम्पन्नो विभागजत्वेन समानासमानजातीयेभ्यो विशिष्यते तस्मा-
द्भवति द्रव्यं गुणः कर्म्म वेति संशय इति । पूर्वव्याख्यानतो ऽनेकशब्देनासा-
धारणधर्मो लक्ष्यतइत्युक्तं संप्रति समानशब्दपर्य्यालोचनया ऽप्यनेकशब्दो ऽसा-
धारणे धर्म्मे लक्षणयेत्याह **समानधर्मस्य संशयकारणत्वेनोपयो-
गादिति** । समानं हि प्रतियोगितया ऽसमानं बुद्धौ सन्निधापयति तच द्वय-
स्यापि समानशब्देन भक्त्यर्थाभ्यामुपात्तस्य समानधर्मस्यासमानस्य च
समानस्य संशयकारणत्वेनोपयोगादिति योजना । पृच्छति **कस्मादिति** ।
अस्मदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहइति भावः । उत्तरं
**नैवमिति** । असाधारणो हि धर्मो व्यतिरेकमुखेन संशयहेतुः स चानेकस्मा-
द्व्यावृत्त्या सिध्यति सा च लाक्षणिकानेकपदाधीना नासमानपदाल्लभ्यतइति
प्रयोजनवल्लाक्षणिकपदोपादानम् । लक्षणैव चेयमनेकस्माद्व्यावृत्तो ऽनेकधर्म इति
विपक्षेण निर्वर्त्यतइति । अभ्युच्चयमात्रमाह **लाघवं चेति** । असाधारणस्य
संशयकारणत्वे व्यावृत्तिः प्रयोजिकेति मन्वानश्चोदयति **यद्यनेकेति** । परि-
हरति **नैष दोष इति** । व्यभिचाराव्यभिचारौ हि संशयनिर्णययोः प्रयोजकौ
नान्वयव्यतिरेकमात्रमित्यर्थः । चोदयति **यदि तर्हीति** । सपक्षासपक्षसाधारण्यं
हि हेतोर्व्यभिचारः स चेत्संशयस्य कारणं हन्त समानधर्मोपपत्तिरेव सर्वत्र
संशयकारणमिति कृतमनेकग्रहणेनेत्यर्थः । परिहरति **सत्यमिति** । सत्यं सप-
क्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः स च संशयस्य प्रयोजकः तथा ऽप्ये-
कस्यान्वयः साधारणो ऽपरस्य व्यतिरेक इत्येतावतोभयोपादानमित्यर्थः ।
यत्नमनेकधर्मोपपत्तेरिति स्वमते व्याख्याय परमतव्याख्यानं दूषयितुमुपन्य-
स्यति **ननु इति** । नित्यः शब्दः श्रावणत्वाच्छब्दत्ववदित्येकः पञ्चरूपोप-
पन्नो ऽव्यभिचारी हेतुः अनित्यः शब्दः कृतकत्वाद् घटवदित्यपरः पञ्चरूपो-
पपन्नो ऽव्यभिचारी हेतुरिति । तद्दूषयति **तदयुक्तमिति** । न ह्यव्यभिचारिणौ
पञ्चरूपोपपन्नावित्यर्थः । न चायं प्रतिवादिनः प्रयोगो ऽपि युक्तः विरुद्धशब्द-

स्थाणौ विरुद्धार्थे इति स्वरूपमनयोर्विरुद्धं परस्पराभाववदित्यर्थः । **विशेषदर्शनादुपजात** इति । संशयस्य हि विशेषादर्शनं जनकं विशेषदर्शनं च निवर्तकमिति स चेत् त्वन्मते निवर्तकादुत्पद्येताऽव्यभिचारिहेतुजनिताद्विशेषदर्शनान्नास्य निवृत्तिः स्यादित्यर्थः । न च यदा निवर्तकमस्यास्ति तदा जनकमपीत्याह **न हि विशेपदर्शने सतीति** ।

स्यादेतत् । प्रत्यक्षमेव स यथार्थं गकार इत्याकारं प्रत्यभिज्ञासमाख्यातं शब्दस्य स्थेमानमाकलयत् तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति नित्यत्वं परिच्छेत्स्यतीत्यत आह **नायमर्थः प्रत्यक्षस्य विषयः** । तदेव हि प्रत्यक्षं संशयस्य निवर्तकं यदनन्यथासिद्धं यथोपाधयाहि चक्षुः । इदं तु सादृश्येनापि संभवात्स्वयं संदिग्धं सन्न संशयोच्छेदायालमित्यर्थः । मा भूत्प्रत्यक्षस्य विषयो भवति त्वागमस्य नो खलु क्षणिकः शब्दो ऽर्थप्रत्यायने समर्थः तस्यान्वयव्यतिरेककालानवस्थायिनो ऽगृह्यसमयत्वेनार्थप्रतिपत्तेरनुपपत्तेः । तस्माद्वर्णोऽपि वाचान्नित्यो ऽयमित्यागमो नाभिधत्ते तथा ऽपि विदितसंगतेरर्थप्रत्ययं कुर्वन्नात्मनो नित्यतामाक्षिपन्नित्यताविषयो भवति यथा ऽऽहुर्नित्यस्तु स्याद्दर्शनस्य परार्थत्वादित्यत आह **नागमविषयः** । यद्यपि वर्णव्यक्तयः क्षणिकाः तथा ऽपि स्वस्वसामान्यविशेषगत्वादुपहिता गवादिव्यक्तय इव गोत्वाद्युपधानाः शक्यसंकेता इति न नित्यतामाक्षिपन्त्यागम इत्यर्थः । **भवतु किं नो बाध्यत** इति । न खलु चन्द्रमसः परभागे हरिणसदृशद्वावयवदेहः शक्यः कदा चिदप्युच्छेत्तुमस्मदादीनामित्यर्थः । **कथं न बाध्यत** इति । घटादावनित्यानित्यभावे शब्दे कृतकत्वं दृष्टमिति चानित्यत्वेन स्वभावतः प्रतिबद्धं तथा च न बुद्ध्यादीनामनित्यत्वं साधयितुमर्हतीत्यर्थः । **सर्वमिति** । कृतकत्वं प्रयत्नानन्तरीयकत्वप्रत्ययभेदभेदित्वादित्यर्थः । **सर्वं चानुमानमिति** । यदि च पञ्चरूपो ऽपि हेतुः संशयकारणं सर्वमनुमानमेवमिति सर्वमप्रमाणं स्यादित्यर्थः । वैनाशिकाः प्राहुर्नित्यासंभवादिति । **न बाधापरिज्ञानादिति** । बाधविषयापरिज्ञानादित्यर्थः । स्वदेशे ९८ । परोत्पत्तिप्रतिबन्धकत्वं सप्रतिघत्वं †सौत्रान्तिकमते हि रूपं सप्रतिघमिष्यते मूर्ते च नित्ये सर्वेति अनित्य सर्वेति वा ऽभिलापो नोपपद्येत स्थाणुरेवेति

---

* अर्थप्रतिपत्तेरिति च पु० नास्ति । † सप्रतिघत्वम् पा० पु० पा० ।

वा पुरुष एवेति वा ऽभिलापः । चोदयति नैवं भविष्यतीति । मा भूदभि-
लाप इत्यर्थः । परिहरति व्याहतमिति । स एवैकग्रन्थेनाह ननु चेति । तदेव
पङ्गुरूपोपपन्नयोर्हेत्वोरेकत्र समावेशाभाव उक्तः । यदि पुनरसत्प्रतिपक्षत्वरूप-
रहितयोरेकत्र समवेशो ऽङ्गीक्रियते तथा च संशयहेतुत्वमित्यभिप्रायेण शङ्कते
अथ कृतकत्वेति । निराकरोति तथा ऽपीति । प्रत्येकं सत्प्रतिपक्षस्य मिलि-
तयोस्त्वसाधारणस्य तादृशो ऽन्यस्यादर्शनादित्यर्थः । तत्किमिदानीं सत्प्रति-
पक्षतया कृतकत्वमसाधनमेव शब्दानित्यत्वे तथा च बहु व्याहतं स्यादि-
त्यायुष्मान् पृच्छति यदा पुनरेवंभूताविति । उत्तरं तदा तयोरिति ।
ननु कृतकत्वस्य साध्यत्वात् श्रावणत्वस्य च सिद्धत्वात् प्रथमभाविना
नित्यानुमानेन सिद्धाङ्गकेनापहृतविषयं चरमभाविसाध्याङ्गकमनित्यानुमान-
मेव बाध्यतामित्यत आह पश्चाच्च क्रियमाण इति । सिद्धमपि श्रावणत्व-
मनुमानिकत्वादनित्यधर्मसाधारणतया सव्यभिचारं सन्नित्यत्वस्य साधनं
न भवितुमर्हतीति । कृतकत्वस्य तु पाञ्चरूप्यं नित्यत्वस्य च प्रमाणबाधन-
मुपपादयिष्यत इत्यर्थः । विप्रतिपत्तेरित्यस्य व्याख्यानं विप्रतिपत्तेरिति ।
यद्यपि विरुद्धा प्रतिपत्तिर्विप्रतिपत्तिः तथा ऽपि तस्या वादिप्रतिवादिग-
ताया अत्यन्तपरोक्षत्वात्संशयकारणत्वानुपपत्तेः स्वकार्ये प्रवादं लक्षयतीत्य-
र्थः । अत्र भाष्यकार उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संश-
यकारणत्वं मत्वा समानधर्मोपपत्तेरित्यनेन गतार्थता परिहरन्नाह स च पूर्वः
समानो ऽनेकश्चेत्यादि । तदुपन्यस्य वार्त्तिककारो दूषयति तत्रेति । नो खलु
समानानेकधर्मोपलब्धौ सत्यां सत्यां च विशेषस्मृतौ साधकबाधकप्रमाणा-
सद्भावे संशयो भवतीत्युक्तं तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्थे पृथक् संशय-
कारणे इति । विशेषमपि दूषयति । समान इति । ननु यदि नास्ति
भेदः तत्किमिदानीं सर्वेषां सादृश्यत्वाविशेषेण व्याप्याणामपि संशयका-
रणानां समानानेक*विप्रतिपत्तीनामभेदस्तथा च पृथगुपादानवैयर्थ्यमित्यत
८ आह समानानेकधर्मयोरिति । पुनश्चोदयति समानधर्मः सर्व एवा-
पमिति । अयमभिसन्धिः असाधारणो ह्यदृष्टपूर्वः क्वचिदपि न संशय-
कर्तुमुत्सहते यत्पुनरसाधारणधर्मं संशयहेतुत्वेनोपदर्शितं भाष्यकृता

* समानानेकधर्मेति १ पु० पा० ।

तत्समानमेव न त्वसाधारणं यथा ऽऽहुः । अन्यो ऽसाधारणो धर्मस्त-
द्वता ऽन्या च दृश्यते । सर्वसाधारणी सा चेदिष्टा संशयकारणम् । ततः साधा-
रणस्यैव सिद्धा संशयहेतुता । यत्तु वार्त्तिककारेण सर्वव्यावृत्त्या ऽसाधारणस्य
संशयकारणत्वमुक्तं तथापि तदभावस्य साधारणस्य संशयहेतुत्वं किमाया-
तमसाधारणस्य । यथा ऽऽहुः सर्वतो ऽस्य निवृत्तत्वादभावात्संशयो यदि ।
अनन्यवृत्तिरूपस्य ततो ऽसाधारणस्य किमिति । विप्रतिपत्तिरपि विरुद्धहेतु-
द्वयसमुत्था यस्मिन् संशयकारणं विरुद्धहेतुद्वयसमावेशश्चासाधारण एव
स च साधारणे निविशत इति सूक्तं सर्वं यथार्थं समानधर्म एवाभिधीयत इति ।
परिहरति न सूत्रार्थापरिज्ञानादिति । न वयं सर्वत्र साधारणमपेक्षा- १००
मीमहे अन्वयव्यतिरेकव्यभिचारवस्तुगतत्वमेतमात्रमाद्रियमाणाः कारणभे-
देन त्रिविधं संशयमाचक्ष्महे इत्यर्थः । वार्त्तिककारो भाष्यकारमतमुपन्यस्य
दूषयति अपरे पुनरिति । साधकबाधकप्रमाणाभावरहिते द्वयमपि न संशय-
कारणमुक्तमित्यर्थः । अपि चैतयोः पृथक् संशयकारणत्वे ऽनिश्चयबुद्धिरपूर्वे
न प्रवर्त्तेत लोकः तथा च लोकविरोध इति दर्शयति उपलब्ध्यनुपलब्ध्यो-
र्द्वैविध्याच्चेति । न चास्य क्व चिदाश्वासो निःशङ्कता न चानभ्यासदशापन्ने
उपलब्ध्यनुपलब्ध्यव्यवस्थायाः संशय इति वाच्यम् । अनभ्यासदशापन्ने हि दूरा-
द्दृष्टिपाते उपलब्ध्यव्यवस्थाया अपि न नागो नगो वेति संशयः किं तु किंशुक-
कुसुममिदं यदि वा उदवुंधो वेति अत्र समानधर्मोपपत्तिरेव कारणमितरसहिता
तथमयोरुपलब्ध्यनुपलब्धिमात्रादपि न संशयो विना समानधर्मादिदर्शनेनेत्युक्तम् ।
विकल्पं दूषणान्तरमाह येषां चेति । सामग्रीभेदेन भेदे त्रैविध्यं संशयस्य
सामग्रीनिवेशिकारणभेदेन तु न पञ्चविधो ऽपि त्वनेकविध इत्यर्थः । समाना-
नेकधर्मोपपत्तेरित्यत्र षष्ठीतत्पुरुषं मत्वा ऽऽक्षिपति समानधर्मग्रहणादिति ।
बहुव्रीहिं मत्वा समाधत्ते अयं परिहार इति । अर्थेनेति । कश्चासौ विशेष-
श्चेति किंविशेषः अनुपलब्धपूर्वो विशेषो ऽस्य इत्यर्थः । उपलब्धपूर्वायां
व्यक्तौ संशये तद्गता विशेषाः सुस्मूर्षिताः तज्जातीयव्यक्त्यन्तरसंशये त्वन्यग-
तास्ते सामान्यद्वारेणोपलब्धा एवेति । सामान्यप्रत्ययादिति । सामान्यवा- १०३ ।
नेव सामान्यः यथा सामान्यो ऽयं धर्मसेतुर्नृपाणामिति । सामान्यश्चासौ प्रत्य-
यश्चेति धर्मो तथोक्तः अव्यवस्थितविशेषत्वं साधकबाधकप्रमाणाभाव इ-

त्यर्थः । बौद्धाभिमतं संशयलक्षणमुपन्यस्यति **अन्ये त्विति** । गूढाभिप्रायो दूषयति **तैरपीति** । अविदिताभिप्रायः शङ्कते **धर्मी चेदिति** । दूषणवादी स्वाभिप्रायमुद्घाटयति । **यदि तावदिति** । बौद्धानां हि राद्धान्ते न रूपादिधर्माश्रयः कश्चिदस्ति धर्मी ततश्च सिद्धान्तव्याकोपः । यदि त्वाह भवतु राद्धान्तव्याकोपो न हि शास्त्राश्रयो वाद इति तथापि दोषान्तरमाह **धर्मधर्म्मिणोरश्चेति** । **अथाप्यसद्विशेति** । समानानेकधर्मपदवद्बहुव्रीहिरित्यर्थः । सामान्यशब्दो हि भवितरि दृष्टो यथा सामान्यार्थसमुत्थाने विभागस्तु समः स्मृत इति भावः । **व्यर्थं चाभिधानमिति** । सामान्यविशेषतद्वदभ्युपगमे ऽपि तद्वतो ऽश्रवणात् साधर्म्यस्य सामान्यस्य विशेषा इति गम्येत न च सामान्यस्य विशेषा इति विरुद्धार्थमभिधानं स्यादित्यर्थः । वैशेषिकलक्षणे हि विशेषाप्रत्यक्षादित्यनेन साधकबाधकप्रमाणाभावो दर्शितः इह त्वसौ वक्तव्यः तस्मान्न्यूनं बौद्धलक्षणमित्याह **उपलब्धीत्यादि** । यदि च साधर्म्यदर्शनादित्यनेनान्वयमात्रव्यभिचारो ऽभिमतो बौद्धेन ततो ऽनेकधर्मदर्शनादिति वक्तव्यमिति । तदेवं सामान्यलक्षणमेकं त्रीणि च विशेषलक्षणानीति स्थितम् । तदेतानि चत्वारि लक्षणानि पुञ्जीकृत्य विचारयति **समानेति** । यदि तावत्संशयसामान्यलक्षणे स्थिते त्रीणि विशेषलक्षणानि ततः संशयत्वेनोपगृहीतानां त्रयाणां परस्परव्यवच्छेदकमात्रं लक्षणं वक्तव्यं ततः समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरित्येतावन्मात्रं वक्तव्यं कृतमत्र शेषेण तन्मात्रादेव परस्परव्यवच्छेदसिद्धेः । तस्मात्परस्परव्यवच्छेदमनपेक्ष्य संशयकारणकथनपरमेतत्सूत्रं तथा चान्यान्यपि संशयकारणानि सन्तीति तान्यपि वक्तव्यानि यदा खल्वयमात्मनः शमादौ संशेते किमहं चन्दनवनितादिसन्निधाने रक्तो विरक्तो वेति सो ऽयमस्यात्मनः सन्निकर्षजन्मा संशयः अन्तरस्य शमादेर्विषयस्येति समाधत्ते **अस्तु तावदिति** । यद्यपि तावन्मात्रेण समानजातीयव्यवच्छेदसिद्धिः तथा ऽपि विजातीयव्यावर्तनाय सामान्यलक्षणमनुवर्तनीयं तथा च प्रतिपत्तिगौरवं स्यादिति तल्लाघवाय शेषापेक्षा युक्ता । आत्मनः सन्निकर्षादयस्त्वत्यन्तसाधारणा विजातीयव्यवच्छेदायापि नालमिति नोपात्ता इति भावः । एवं संशयकारणावधारणादर्थात्संशयभेदावधारणमित्युक्तं सम्प्रति कारणविशेषेण संशयस्वरूपमेवोच्यतइत्याह **स्वरूपनिर्देशो वेति** । विप्रतिपन्नो ऽपि

पुरुषः सन्दिग्धवत्प्रतिपाद्य एवेति मन्वानश्चोदयति संशयवदिति । विप्र- १०५ । ४
तिपन्नो न शिष्यः किं तु जल्पवितण्डाभ्यां शिष्यतां नीत्वा सन्दिग्ध एव
प्रतिपाद्यस्तदस्त्यभिप्रायेण परिहरति सत्यमिति ।

उद्देशक्रमप्राप्तस्य प्रयोजनस्य लक्षणम् ।

यम-नम् (सू. २४) ॥ अर्थशब्दो गौणमुख्यप्रयोजनावरोधार्थः ।
तत्र मुख्यं सुखदुःखप्राप्तिपरिहारौ गौणं तु तत्साधनम् । अथ भाष्य
यमर्थमित्यादि । अर्थाधिकृत्येत्यस्य व्याख्यानं व्यवसीय निश्चित्ये-
त्यर्थः । ससाधनौ च सुखदुःखप्राप्तिपरिहारावर्थः न च सुखदुःखप्राप्तिपरिहारौ
स्वरूपेण प्रवृत्तिनिवृत्तिगोचराविति तदुपायप्रवृत्त्यैव चेतनप्रवृत्तिगोचराविति
दर्शयति तदाप्तिहानोपायमनुतिष्ठतीति । प्रवृत्तिहेतुत्वादिति । यद्यपि
सुखदुःखाप्तिहाने तदुपायाप्यायन्ति तथाऽपि सामान्येन ज्ञायमानानीच्छा-
द्युपहारमुखेन प्रवृत्तिहेतवः । ननु सूत्रेऽधिकृत्येत्यस्ति भाष्ये व्यवसायेति
तत्कुतो न विरोध इत्यत आह व्यवसायोऽर्थस्याधिकार इत्यादि ।
तदेतद्वार्त्तिककारो व्याचष्टे यमर्थमधिकृत्येति व्यवसायेति । पृच्छति कस्ये-
ति । सुखदुःखप्राप्तिपरिहारयोर्व्यवसायस्तथैव प्रवर्तयेद् न चानयोः प्रवृत्तियोग्यता
न चान्यनिश्चयोऽन्यत्र प्रवर्तयति अतिप्रसङ्गादिति भावः । उत्तरं सुखदुःख-
साधनानामिति । ततश्च प्रतीतिप्रवृत्त्योः सम्प्रतिपत्तिरित्यर्थः । सर्वव्यापिता-
मस्य दर्शयति अनेन प्रयोजनेनेति । वितण्डाया अपि प्रयोजनमुक्तं प्रथमसूत्रे
चोद्यमानस्य प्रवर्त्यमानस्येत्यर्थः । शङ्कते यदीति । लोक्यतेऽनेनेति लोकः
प्रमाणं तदन्वितस्तदुपपन्नं न च प्रमाणमीदृशमनवस्थाप्रसङ्गादिति भावः ।
निराकरोति अतिदोषोऽयमिति । यथा च प्रमाणस्य प्रमाणोपपन्नता ऽनव-
स्था तथा द्वितीये निवेदयिष्यते । न च प्रसिद्धतरतया न प्रयोजनं लक्षणीय-
मिति युक्तं कथमस्य प्रयुक्तो साधनत्वं क्व च प्रयोजयति कथं च व्यापकमिति
सर्वस्य परीक्षकवेदनीयत्वात् । अथान्य इति* । अप्रामाणिको लौकिक
इति यथा घटे घटे चेष्टयेण इति । निराकरोति तन्न बुद्ध्यामह इति । प्रयोज- १०६ । -
नस्य प्रामाणिकत्वादित्यर्थः । यदप्युक्तं न्यायप्रयोगात् प्रयोजनं न भवति तस्मान्न
वक्तव्यमिति । तन्न युक्तं या खलु निष्पत्तेरनेनेति न ब्रूमः प्रयोजनं न्याय-

* अत्र मु पा पु ग्रन्थस्त्रुटितः ।

स्याङ्गमित्यपि मुख्यं प्रयोजनमेव हि तत्र स्याद् यदृते पुरुषादन्यार्थमिति प्रयोजनवांस्तु न्यायो निष्प्रयोजना तद्गता चिन्तामङ्गीकरोति फलवत्सन्निधावफलं तदङ्गमिति न्यायात् । तस्मादनङ्गमपि प्रयोजनं परीक्षायां मूलं स्वर्ग इव चेतिकर्त्तव्यताकस्य यागाद्यनुष्ठानस्येति सिद्धम् ।

क्रमप्राप्तं दृष्टान्तं लक्षयति ।

लौकि—न्तः (सू. २५) ॥ दृष्टान्त इति लक्ष्यनिर्द्देशः शेषं लक्षणम् । साध्यसाधर्म्यात्तद्धर्मभावित्वेनाख्यते तथा साध्यवैधर्म्यादतद्धर्मभावित्वेनाख्यते य सो ऽर्थस्तस्मिन् तथा च नालिख्याप्ति । उदाहरणसूत्राद्वेदृष्टविशेषप्रतिलम्भः । लोकसामान्यं किं तदित्यत आह **नैसर्गिकमिति** । शास्त्रपरिशीलनलब्धजन्मा बुद्धातिशयो वैनयिकः तद्रहिता लौकिकाः प्रतिपाद्या इति यावत् । तद्विपरीतास्तदुभयसम्पन्नाश्च परीक्षकाः प्रतिपादका इति यावत् कथानङ्गत्वान्न बहुवचनम् । तदनेन वादिप्रतिवादिनो दर्शितौ तयोर्बुद्धिसाम्यं व्याचष्टे यथा यमर्थमिति । लक्षणप्रयोजनमाह । **दृष्टान्तविरोधेनेति** । दृष्टान्तस्य विरोधो विरुद्धत्वं साध्यविकलत्वादि । **प्रतिपत्ता** इति प्रतिपक्षसाधनानि समाधिरभूतदोषारोपस्य प्रतिषेधः । लक्षितस्य दृष्टान्त उदाहरणलक्षणाय कल्पते घटवदिति भाष्यम् । अथ वार्त्तिककारो लौकिकपरीक्षकस्वरूपमविवक्षितमिति मन्यान आह **बुद्धिसाम्येति** । अविवक्षाप्रयोजनमन्वयव्यतिरेकाभ्यामाह एवं चेति । परेषां दृष्टान्तलक्षणाक्षेपमुपन्यस्य दूषयति **सो ऽयं दृष्टान्त** इति । दृष्टान्तस्य प्रयोजनमाह **दृष्टान्तः सारूप्यवृत्तिरस्त्यर्थः** । यथा ऽऽचेन्नोक्त तत्तदक्षरमनूद्य दूषयति **असिद्धसाधनार्थो चेति** । न यन्वसिद्धः साध्येन साधनस्याविनाभावो दृष्टान्तेन साध्यत इत्यर्थः ।

अथ भाष्यकार. सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्टे अथ **सिद्धान्त** इत्यादिना । तत्रेदमित्यभूतमिति वार्त्तिककारो व्याचष्टे **इदमिति सामान्यत इति** । भाष्ये तु संस्थितिरित्थंभावव्यवस्थेति सामान्योपक्रमस्याभ्युपगमस्य प्रमाणतो विशेषपर्यन्ततां परिसमाप्तिः संस्थितिरित्यर्थः । अर्चे-यार्थे सूत्रमित्याह वार्त्तिककारः । **अस्यार्थस्येति** ।

तन्त्रा—न्तः (सू. २६) ॥ सूत्रार्थमाक्षिपति **किं पुनरिति** । लक्षणार्थं चेति । सामान्यलक्षणार्थं न खलु सामान्यलक्षणमन्तरेण शक्यो

विभाग इत्युक्तम् । समाधत्ते नामार्थमिति । लक्षणार्थत्वं सामान्यलक्षणार्थत्वं १०७
तन्त्र्यन्ते व्युत्पाद्यन्ते प्रमेयाण्यनेनेति तन्त्रं प्रमाणं तदेवाधिकरणमाश्रयो
ज्ञापकत्वेन येषामर्थानां ते तथोक्ताः । अव्यवस्थितो ऽप्रामाणिक इत्यर्थः
आभिमानिकं च प्रामाणिकत्वं तेन सिद्धान्तभेदिनामर्थानां सर्वेषां ■ प्रामाणि-
कत्वप्रसङ्गः । तदेवं भाष्यकारेण व्याख्याय सामान्यलक्षणं पठितमेव व्याख्या-
नपूर्वकमेव विभागसूत्रं पठति तन्त्रार्थसंस्थितिरिति । तन्त्रग्रहणेन च
सर्वतन्त्रप्रतितन्त्रयोरुपादानं तयोरपि तन्त्रत्वात् तदिदमुक्तं तन्त्रभेदा-
दिति । अनवधारितार्थपरिग्रह इति । शास्त्रकारस्य नोपात्तो यथा मनस
इन्द्रियभाव इति ॥

सर्व-न्तः (सू. २८) ॥ यद्यपि घ्राणादिषु भौतिकत्वाभौतिकत्वादौ*
विप्रतिपत्तयस्तथा ऽपि इन्द्रियत्वे नास्ति विप्रतिपत्तिरिति । तदेतद्वार्त्तिककारो
व्याचष्टे सर्वेषामिति । अत्र चोदयति । न दृष्टान्तादिति । परिहरति
भिन्नत इति । न चैवं सर्वतन्त्रसिद्धान्तस्तस्य सर्वैरेव निश्चितत्वादिति ।
अनुमानागमयोरिति । संबन्धग्रहणाश्रयावनुमानागमौ यत्र च संबन्धग्रहः
स दृष्टान्त इत्यर्थः ।

समा-न्तः (सू. २९) ॥ समानशब्द एकपर्यायः नैयायिकानां हि
समानं तन्त्रं न्यायशास्त्रं परतन्त्रं च सांख्यादिशास्त्रं चेतना आत्मानो निरति-
शया अपरिणामिनो ■ केन चिद्धर्मेणोपजननापायधर्मेण युज्यन्ते प्राकृतेषु च
तत्कार्येषु महदहङ्कारपञ्चतन्मात्रभूतसूक्ष्मेषु विशेषो ऽतिशय इत्यर्थः । तदेत-
त्सूत्रं वार्त्तिककृद्व्याचष्टे सामान्येति । योगानामेव सांख्यानामेवेति नियमः ॥

यत्-न्तः (सू. ३०) ॥ यस्यार्थस्य साध्यस्य वा हेतोर्वा सिद्धाविति
विषयसप्तमी ■ तु निमित्तसप्तमी द्वयोश्चानयोर्निमित्तनैमित्तिकत्वायोगात् । तेन
यस्मिन्नर्थे ज्ञायमाने तदनुषङ्गिणो ऽर्थास्तदन्तर्भावेन ज्ञायन्ते सोर्थः साधा-
दधिक्रियमाणस्तदनुषङ्गिणां चाधारः तदाश्रयत्वात्तत्सिद्धेः स पक्षो वा भवतु
हेतुर्वा तेन ह्यर्थाधिकरणसिद्धान्तः । एवस्तावद्द्वियाद्याध्यासितमुपलब्धिमत्का-
रणमुत्पत्तिमत्त्वाद् वस्त्रादिवदिति । अत्र ■ पृथिव्यादिगतेनोत्पत्तिमत्त्वेनोपल-

* भौतिकत्वादय इति २ पु॰ पाठः ।

ब्धिमत्पूर्वकत्वं तद्भूतं साध्यमानं स्वसिद्धान्तर्गतानुषक्तसर्वज्ञत्वाद्युपेतमेव सि-
ध्यति नान्यथेहोपलब्धिमत्पूर्वकत्वसिद्धिरिति । भाष्ये हेतुः प्रतिसंधानं सिद्धाद्
अनुपपद्यर्थान्तरान्विते सिद्ध्यतीत्युदाहृते तदेतत्सर्वाविरोधार्थे* वार्तिककृदाह ।
वाक्यार्थेति । हेतुरीदृशः पक्षश्च वाक्यार्थ इत्यर्थः । पूर्वो ऽर्थो यः साक्षादधि-
कृतः तस्य सिद्धावन्तर्गत इति भाष्यार्थः । अथाभ्युपगमसिद्धान्तलक्षणसूत्रम् ।

अप-न्तः (सू. ३१)॥ तद्वार्तिककारो व्याचष्टे **अपरीक्षितोऽसूत्रित**
इति । सूचितस्य प्रायेण परीक्षासंभवात् । मनसो हीन्द्रियत्वेनासूचितस्यापि
इन्द्रियत्वाभ्युपगमः प्रमाणाधिकरणो यतः तस्मादयमभ्युपगमसिद्धान्तः ।
सूत्रं चैव योजनीयम् असूचिताभ्युपगमाद्धेतोर्यतस्तद्विशेषपरीक्षणं क्रियते तस्मा-
द्विशेषपरीक्षणात् ज्ञायते ऽसूचितमप्यभ्युपगतं सूत्रकारेण । सो ऽयमस्याभ्युपगमो
ऽभ्युपगमसिद्धान्तः । एवं स्वमतेन सूत्रं व्याख्याय भाष्यकारव्याख्यानं दूषयति
**शास्त्रानभ्युपगतं** इति । प्रमाणीकृतेन शास्त्रेणाननुज्ञातः प्रमाणानधीन
इत्यर्थः । प्रमाणतन्त्राभ्युपगमसंस्थितिरिति हि सिद्धान्तसामान्यलक्षणं न च
प्रमाणानधीनाभ्युपगमस्तदन्वेतीति नायमीदृशो ऽभ्युपगमसिद्धान्तो भवितु-
मर्हतीति हृदि निधायायुक्तता ऽपि दर्शिता । मनः प्रत्यक्षाद्याधारत्वात् प्रमा-
णिकं च पुरुषं प्रत्यक्षत्वादिति बुद्धिमतोरवधानस्यायुक्तत्वादित्यर्थः ।
**सर्व एवायं पक्ष** इति । सर्वतन्त्रप्रतितन्त्रसिद्धान्तौ तावत्साक्षादभ्युपगम्य-
मानौ स्वमुखेनैव पक्षतया ऽभिधीयेते अधिकरणाभ्युपगमौ तु साक्षादनभ्युप-
गम्यमानावप्यर्थादभ्युपगन्तव्यावित्यर्थापत्त्या पक्षावित्यर्थः । ननु यद्युपपन्नः प्रमा-
णतया ऽभ्युपगमसिद्धान्तस्तर्हि सिद्धान्तभेदिनामर्थानां प्रामाणिकत्वेन विरुद्ध-
धर्मसमालिङ्गिता भावाः प्रसज्येरन्नित्यत आह **तत्प्रत्ययात्** । तस्य प्रमाणोपपन्न-
कर्मत्वस्य प्रत्ययादभिमानादित्यर्थः । पक्ष इति । पक्षिव्यक्तीकरण इत्यस्माद्व्यु-
त्पन्नं कर्मतया व्यज्यमानतया वा उपादानं स्वार्थस्य पक्ष इति पदमुपादीयते
ऽनेनेति व्युत्पत्त्या क्रियासाधन इति प्रधानक्रियासाधने क्रियाविशेषयुक्त इति ।
अवान्तरव्यापारयुक्ते तेन हि प्रधानक्रियायां कारकाणां वैचित्र्यं भवतीति ।
**यश्चासौ न्यायस्याभ्युपगम** इति । यावदभ्युपगतं न्याय्यसाधनन्याय-
इति तावदभ्युपगतं भवति प्रमेयसाधनं प्रमाणमिति न च धर्मिण्यनभ्युप-

* सर्वाविरोधार्थमिति २ । ३ पु. पाठः ।

गते तदाश्रयो ऽभ्युपगतो भवति तस्मादुभयथा ऽपि सर्वतन्त्रसिद्धान्तानप-
ह्नव इत्यर्थः । अथ संग्रहः पक्षशब्देनेति । यथा दण्डिशब्देन दण्डसंबन्धोप- ११०
हितधीमानः समानासमानजातीयाः सर्वे संगृह्यन्ते तथा पक्षशब्देनापीत्यर्थः ।
अयं तु कल्पः सर्वतन्त्रसिद्धान्ताव्यापकत्वकथनेनैवार्थादपाकृत इति न
पृथग् निराकृतः । पक्षशब्दो हि व्यज्यमानत्वोपाधिनिबन्धनप्रवृत्तिः न च
व्यज्यमानत्वमस्ति निर्धर्मव्यक्ते सर्वतन्त्रसिद्धान्तइति भावः । वाक्या-
र्थप्रतिपत्तावित्ति । पीनो देवदत्तो दिवा न भुङ्क्ते इत्यस्य दिवा भोजननिषे-
धो ऽर्थः तस्मात्तद्विपरीतरात्रिभोजनविधिरर्थापत्तिर्लौकिकसिद्धा सा च न यथा
प्रमाणान्तरफलं तथा द्वितीये निवेदयिष्यते । तदनेन प्रबन्धेन भदन्तदिग्ना-
गोदितानि दूषणानि निराकृतानि ।

प्रति-वा:(सू. ३२)॥ वार्त्तिककारः सूत्रतात्पर्यमाह । अवयवाना-
मिति । नन्ववयवसामान्यलक्षणमन्तरेणावयवो विभागोद्देशः तद्विशेषलक्षणं च
न चेदं सामान्यलक्षणं विभागपरत्वादित्यत आह सूत्रम् । विभागपरमप्येतद-
र्थादवयवसामान्यलक्षणं सूचयतीति सूत्रम् । अन्यपरादपि वाक्यात् प्रतीयमानो
ऽर्थो ऽपेक्षितः स्वीक्रियत एवेति शाब्दाः । तथावयवपदादेव सामान्यलक्षणमव-
गम्यते अवयवत्वेनैकवाक्यता दर्शिता सा च पदानां* परस्परासत्त्यापितायोवि-
षसंबन्धयोग्यार्थप्रत्ययेन भवति तस्मात्तथाविधार्थप्रत्यायनमेव प्रतिज्ञादीनाम-
वयवसामान्यलक्षणं सिद्धमिति सूत्रमित्यनेन दर्शितं वार्त्तिककृतेति । विभागोद्दे-
शतात्पर्यमाह विभागेति । अवयवग्रहणमुपलक्षणार्थं द्व्यवयवमित्यपि द्रष्ट-
व्यम् । अथ भाष्य तत्राप्रतीयमानइति । सामान्येनावगतधर्मिणि विशेष-
णाग्निमत्त्वादिना संदिग्धे अग्निमत्त्वादितत्त्वावधारणं प्रत्ययः तस्यार्थः प्रयो-
जनं हानोपादानोपेक्षाबुद्धयः अस्य प्रवर्तिका उत्पादिका जिज्ञासा प्रत्ययसा-
धनानुसरणद्वारेण प्रत्यासत्तिः संशयतत्त्वज्ञानयोर्विशेषणता न तु स्वरूपगता
संशयानन्तरया जिज्ञासया संशयस्य व्यवधानात् शक्य प्रमेय तस्मिन् प्राप्तिः
शक्तता प्रमाणानां प्रमातुश्च सा च स्वरूपसहकारिभ्यां द्वेधा तामिमां भा-
ष्यकारो ऽनया वाचोभङ्ग्या दर्शयति प्रमातुः प्रमाणानीति । प्रतिज्ञादिव-
दिति वैधर्म्यदृष्टान्तः प्रतिपक्षोपवर्णनमिति । यदि शब्दो नित्यः स्यान्न

---

* पदपदार्थानिति २ पु॰ पा॰ ।

स्यात्कृतक इति अनित्यत्वस्य नित्यत्वं प्रतिपक्षः तस्मिन् हेत्वभाववर्णनेन न चायमकृतक इति तदुपवर्णनप्रतिषेधे सति तत्त्वज्ञानाभ्यनुज्ञानार्थम् । ज्ञायते ऽनेनेति तत्त्वज्ञानं प्रमाणं तदभ्यनुज्ञानार्थं संशयव्युदासस्तर्कापरनामा व्युदस्यते ह्यनेन प्रमाणाभ्यनुज्ञानद्वारेण प्रमाणेतिकर्तव्यताभूतेन संशय इति ।
१० तदेतद्वाक्यजातं प्रश्नपूर्वकं वार्तिककृद्व्याचष्टे कथं पुनरिति । न पुनर्जिज्ञासादयः परप्रतिपादकाः शब्दादवगताः सन्तः अथ मा भूवन् परप्रतिपादकाः स्वप्रतिपादका एव कस्मान्न भवन्तीत्यत आह निश्चितत्वाच्चेति । साधनादेव गम्यते प्राप्तं च ज्ञायत इत्यर्थः । शक्यप्राप्तिश्च ज्ञायत इत्यर्थः । तत्किं सर्वथैवानङ्गं जिज्ञासादय इत्यत उक्तं भाष्यकृता प्रकरणे तु जिज्ञासादयः समर्था इति । तदनुभाष्य व्याचष्टे प्रकरणे त्विति । प्रकरणं कथाप्रवृत्तिः तदुत्थापका जिज्ञासादयो ऽवयवा अङ्गमित्यर्थः । ते च जिज्ञासादय उत्पन्नाः प्रकरणस्योत्थापकाः स्वरूपेण न पुनः स्वज्ञानेन येन स्ववाच्यप्रतिपाद्याः सन्तः प्रकरणे ऽप्यङ्गं भवेयुः यथा प्रतिज्ञादयः स्वज्ञानेन स्वार्थान्* प्रतिपादयन्तः तस्मात्सर्वथैव जिज्ञासादिवाचकपदप्रयोगो ऽनर्थक इति भावः । अत एवाह परप्रतिपादकत्वादिति । तुशब्दो जिज्ञासादिभ्यो व्यवच्छिनत्ति अवयवमपीत्यपिना ह्यवयवप्रतिषेधं समुच्चिनोति । उपनयनिगमनयोरित्यत्र प्रतिज्ञाया अपीति द्रष्टव्यम् ।

साध्य-ज्ञा (सू. ३३) ॥ परिगृह्यते ऽनेनेति परिग्रहः स च वचनं चेति परिग्रहवचनम् । उदाहरणमनित्यः शब्द इति तदाक्षिप्य वार्तिककारः समाधत्ते सिद्धत्वादिति । अग्निमानेव नातद्वान् नास्याग्निनेदानीमयोग । स च पर्वते ऽग्निमति साध्यमाने विशेषणविशेष्ययोः परस्परसम्बन्धलक्षणो नियमो ऽर्थात् सिध्यति न साक्षादयोगव्यवच्छेद एव साध्य लिङ्गस्यान्यापोहविषयत्वानभ्युपगमात् । तस्य निर्देश इति निर्दिश्यते ऽनेनेति हि प्रतिज्ञावाक्यमुच्यते अथान्यव्यवच्छेद वाक्यार्थं मन्वानो भदन्तः प्रतिज्ञालक्षणमनिष्या-
१५ प्याप्तिभ्यामाक्षिपति उभयथेति । उभयोरवधारणयोः प्राप्तौ संशये किमिदमवधार्यते किं चेदमिति प्रसक्तावित्यर्थः । प्रतिज्ञावधृतेति† यत एवकारश्च

---

* स्वात्मानमिति न पु पा० ।

† इदं मु ना पु नास्ति ।

ततो ऽन्यथावधारणमिति हि शास्त्र इति भावः । व्यतिरेकित्यादीति । ११३
व्यभिचारित्यादित्यर्थः । समाधत्ते सर्वस्मिन्वाक्य इति । सर्वो वाक्यार्थ
इत्युत्सर्गः क्व चित्पुनरन्ययोगव्यवच्छेदो ऽपीति । सामान्यश्रुतौ नियम इति ।
यथेन्द्रियार्थसन्निकर्षोत्पन्नमित्युक्ते ज्ञानं सुखादि च सामान्येन प्राप्तं तत्र
ज्ञानग्रहणं न विधायकं प्राप्तत्वादतः सुखादिव्यवच्छेदफलं विज्ञायते यदि
त्वसन्दर्शनमतिक्रम्य सर्वत्रावधारणं करोति ततो ऽस्य लोकविरोध इत्याह
सर्वत्र चेति । तत्किं लोके न क्व चिदवधारणमित्यत आह यत्र चेति । चोद-
यति ननु चेति । सिद्धनिर्देशः साध्यशब्दस्यार्थ इत्यभिप्रायः । परिहरति
न सूत्रार्थ इति । सर्वसन्देहेष्विदमुपतिष्ठते व्याख्यानतो ऽर्थप्रतिपत्तिरिति भावः ।
चोदकः स्वाभिप्रायमुद्घाटयति अथ पुनरिति । असाध्यनिर्देशः सिद्धनि-
र्देशः तस्य निवृत्तिः साध्यशब्दादवगम्यते न तु प्रज्ञापनीयो ऽर्थ इत्यर्थः ।
परिहरति असाध्यं चेति । भवेदेतद्यदि सिद्धमात्रमसाध्यं स्यादपि त्वनु-
पपद्यमानसाधनं सिद्धिरस्य तदप्यसाध्यं तथा चासिद्धस्य चाक्षुषत्वादेर्नि-
वृत्तिरित्यर्थः । पुनश्चोदयति अथ पुनरिति । न कृतकत्वादि साध्यं नाप्य-
नुपपद्यमानसाधनं नापि कृतकत्वादि पराङ्गत्वेनोपात्तं येनाप्रज्ञापनीयं स्यादि-
त्यर्थः । परिहरति नैष दोष इति । प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य
परिग्रहवचनमिति सूत्रार्थो न पुनर्धर्ममात्रपरिग्रहवचनमिति । अभ्युपगम्य
व्यवच्छेदं शब्दार्थमेतदुक्तं परमार्थतस्त्वनियमः क्व चिदुत्सर्गः क्व चिद् व्यव-
च्छेद इत्यत आह यथेदमिति । इतो ऽपि नासिद्धयोर्हेतुदृष्टान्तयोः प्रसङ्ग
इत्याह साध्यनिर्देश इति च प्रतिज्ञायामिति । प्रमाणतन्त्रः खल्वभ्युप-
गमः सिद्धान्तः न च चाक्षुषत्वादिषु प्रमाणमूलता तदभिमानो ऽपि बाधकाद-
पाकृत इति । ननु यदि सर्वतन्त्रसिद्धान्तातिरिक्तानां सिद्धान्तान्तराणां साध्यत्वं
तर्हि साध्येनैव चरितार्थत्वादपार्थकं पृथगभिधानमेतेषामत उक्तमवस्थाया-
मिति । विमत्यवस्थायां सर्वतन्त्रे तु विमतिरशक्येत्युक्तम् । परिहारान्तरमाह
जिज्ञासादीति । विभागसूत्रेण प्रकरणोत्थानहेतवो वाक्यावयवतया निरा-
कार्य्यतया जिज्ञासादयो बुद्धिस्थीकृतास्तेन यत्र जिज्ञासादयः स साध्यः न च
चाक्षुषत्वादिषु प्रमाणबाधितेषु सन्देह इत्यर्थः । परिहारान्तरमाह अर्हत्यर्थ-
इति । अपरमपि परिहारमाह कर्मकरणयोर्वेति । एवं तावच्चाक्षुषत्वादिपर्य्या ११५

लोचनया साध्यशब्दस्य न हेतुदृष्टान्तयोः प्रसङ्ग इत्युक्तं संप्रति लोकख्याति-
स्फुटास्तिस्रो विधा अर्थानां कृतमत्र सूत्रानुसरणेनेत्याह साध्याऽसिद्धसि-
द्धभेदादिति । अन्यतरासिद्धयोर्हेतुदृष्टान्तयोः प्रसङ्गो मा भूदिति कर्मतया
तदुपादीयन्त इत्युक्तम् । उभयपक्षेति । पक्षशब्दो बहुवचनः सप्रतिपन्नमुभयोर्व-
र्गयोरित्यर्थः । परिहारान्तरमाह अथ वेति । अवयवानामेतत्प्रकरणे तेषां
च प्रधानैकार्थप्रत्यायनेनैकवाक्यतामापन्नानामवयवभावः यत्प्रत्यायनोद्देशेन ते
प्रवर्त्तन्ते तत्प्रधानं धर्म्मी च सिषाधयिषितधर्मविशिष्टस्तथा न च साक्षात्प्र-
त्यायनाय ते प्रभवन्तीति तदर्थे साधने व्याप्रियन्ते तेन सिषाधयिषितधर्मवि-
शिष्टं च धर्म्मी तेषां प्रधानं विषयश्च प्रधानं च प्रथमं बुद्धौ विपरिवर्त्ततइति
साध्यशब्देन स एवोच्यते न तु हेतुदृष्टान्तावप्रधाने इत्यर्थः । तदेवमदुष्टमस्म-
ल्लक्षणमिति यदस्मल्लक्षणमनेन दोषेण मङ्क्षु भदन्तेनान्यथा लक्षणं प्रणीतं
तदेव दुष्टमित्याह न चेदमिति । ननु यत्र साध्यपदमस्ति भवतु तत्रेष्टग्रहण-
मनर्थकं न त्वस्मिंस्तदस्तीति कथमिष्टग्रहणमनर्थकमित्यत आह कर्म्मग्रह-
णाच्चेति । मा भूत्साध्यपदमस्ति तु पक्षपदं तदपि हि पठ्यमानं व्यज्यमानं
साध्यमेवाह तच्च कर्म्म चेप्सिततममिति । प्राप्तुमिष्टमित्यर्थः । चोदयति । अथा-
प्यनिष्टेति । नन्वनिष्टः पक्ष इति विप्रतिषिद्धमित्यत उक्तम् । अर्थतः किलेति ।
वस्तुव्यवस्थापनाय प्रवृत्तस्य तादृशं नेष्टमित्यर्थः । बौद्धपक्षमुपन्यस्यन्नेव मध्ये
तदभिमतं किं चिन्निराकरोति अश्रावण इति । कृतव्याख्यानमेतत्प्रथमसूत्रे ।
अपि त्वनुमानतः करणतो विकारादेः न हि व्यङ्ग्यं व्यञ्जकं कारणमनुविधत्ते ।
नो खलु महति प्रदीपे घटो महानल्पे वा ऽल्प इति महति तु कारणे महान्
शब्द इति । तस्मात्कारणतो विकारात् कार्य्यः शब्दो यथा महद्भिः स्थूलपिण्डै-
रारब्धो ऽवयवी महानिति । तदनेन प्रत्ययभेदभेदित्वं हेतुरुपलक्षितो भवति ।
आदिशब्देन सतः शब्दस्याभिव्यक्तौ दोषादित्येवमादयो ग्राह्याः । दोषश्च
दर्शेध्माद्विश्वदुपयुक्तानामृचां निर्दिष्टकत्वेन पुनरुपयोगः कार्य्यत्वे पुनरन्य-
त्वेन निर्दिष्टकत्वमित्यर्थः । यद्यप्यागमो ऽपि शब्दानित्यत्वे ऽस्ति यथा सोमं
राजानमसृजत ततस्त्रयो वेदा असृज्यन्तेति तथा ऽपि नासदासीन्नो सदा-
सीदाम्नाय एव व्यत्ययमवश्यासीदिति नित्यत्वे ऽप्यागमदर्शनादनिश्चयाद-
। १० नुमानस्यैवात्र प्रामाण्यं तथा चानुमानविरोध इति । प्रसिद्धिविरोधं तु न

बुबुध्यामहे प्रमाणविरोधाद्भेदेन । अवोधमाह को ऽयं प्रसिद्धिविरोध इति । एकग्रन्थेनाह प्रसिद्धिः प्रत्यक्षादीनामिति । अचन्द्रः शशीति यदि ११७ चन्द्रे शशिशब्दवाच्यत्वं निषिध्यते तदा लोकव्यवहारावगतान्वयव्यतिरेकप्रभवानुमानविरोधः । अथ विकल्पज्ञानगोचरत्वनिषेधः ततो भवतः स्वसंवेदनप्रत्यक्षविरोधो ऽस्माकं तु मानसप्रत्यक्षविरोध इति सर्वथा न प्रमाणा*-दन्या प्रसिद्धिरिति । तदेवं बौद्धपक्षमुपन्यस्य तदुक्तान्युदाहरणानि दूषयित्वा बौद्धपक्षमुपसंहरति । एतदर्थेति† । तदेतद्दूषयति एतच्चेति । वस्तु हि यादृशं स्वकारणादुत्पन्नं तादृशमेव तद् न तस्यान्यथाभाव इति न तत्र दोषो विद्यते तद्विषयाणि पदान्यपि प्रत्येकमदुष्टान्येव या पुनः पौरुषेयी दृष्टमन्यथार्थमन्यथा समारोप्य भ्रान्त्या वा परविप्रलम्भाय वा प्रतिज्ञादिरूपेण वाक्यक्रिया सा स्ववचनविरोधादिशालिनी दुष्टा तद्द्वारेण पुरुषो निगृह्यते नार्थो न पदानीति । स्वार्थापवादः स्ववचनविरोधः कर्तृदोषो भ्रमो वा विप्रलम्भो वा क्रियायामुपचर्यते । न च क्रियायाः भ्रमो वा विप्रलम्भो वा तयोरभिप्रायभेदतया पुरुषधर्मत्वात् क्रियाया वस्तुसाधनात् पुरुषाभिप्रायशक्तिरिति क्रियाद्वारेणेत्युक्तम् । चोदयति प्रतिज्ञाया इति । तदेतदतिप्रसङ्गेन दूषयति नैतद्युक्तं हेत्वादीनि । न पुनर्दूषणानि न्यूनतावयवान्तर‡दोषापेक्षयोद्भावनानीति त्रैरूप्यसंपन्नो हेतुः पूर्वः स त्रिषु रूपेष्वन्यतमेन रूपेण रहितो न्यूनो ऽसिद्धो वा विरुद्धो ऽनैकान्तिको वा भवतीति सो ऽयं न्यूनतादोषो हेतोः । अवयवदोषश्च प्रतिज्ञादोषः स्ववचनविरोधादिः हेतुदोषो ऽसिद्धत्वादिरेवमुदाहरणदोषः साध्यविकलत्वादिः उत्तरदोषो जातिः प्राप्त्यप्राप्तिसमादिः तस्यापि उपादानं स्वीकार इति यावत् । भावो ऽप्रतिभादिः स हि वादिनो वा प्रतिवादिनो वा ऽभिप्रायः तस्योद्भावनानि दूषणानीति । न हि संभवे सत्युपचार इति । प्रतिज्ञागता हि दोषा यदि तद्गतत्वे- ११८ नोद्भाव्यमाना न वादिनो निग्रहमापादयेयुः ततस्तत्र निष्प्रयोजनत्वेनासंभवात् पदमपि उपचर्येरन् वारयन्ति । प्रतिज्ञागतानि दूषणानि निग्रहीतुं वादिनमिति । सो ऽयं प्रतिज्ञादोषाणां प्रतिज्ञायां संभव इति । कस्मात् पुनर्मुख्या

---

* प्रमाणवादिति ३ पु० पाठः ।  † तदर्थेति पु० वा पु० पाठः ।
‡ अवयवान्तरेति ३ पु० पाठः ।

१६ इत्येव न प्रयुञ्जत इत्यत उक्तं लौकिकप्रयुक्तवाक्यार्थान्वाख्यानं*
नानाविधैर्लौकिकप्रयोगो नियोज्यः पर्य्यनुयोज्यो वेत्यर्थः। स्यादेतत् इष्टग्रहणमन-
वरारूढमप्यभिप्रायव्याप्तं साध्यं यथा स्यादित्येवमर्थं यथा परार्थाश्चक्षुरादय
इति। अत्र हि परार्थमात्रमवरारूढं न च तन्मात्रं साध्यमपि त्वात्मशरार्थं
तच्च नोच्चारयति मा भूदनन्वयो हेतुः सधानत्वादिति† तस्मात्तदवरोधार्थ-
‡मिष्टग्रहणमित्याह अर्थग्रहणेनेति। परिहरति अयमप्यर्थः साधनादेव
गम्यते§। अयमभिसन्धिः वचनलिङ्गा हि वक्तुरभिप्राया भवन्ति यत्परं च वचनं
स वचनार्थः तात्पर्य्यं चास्य क्व चिच्छाब्दं क्व चिल्लक्ष्यमिति सर्वे यथासौ वचना-
र्थः। यस्तु नैवंविधः कथमसौ वाद्यभिप्रायव्याप्त इत्यवगन्तव्यम्। न च क्व चिदपि
पक्षः प्रतिज्ञापदवाच्यस्तस्य वाक्यार्थत्वेन लक्ष्यत्वादेवेति। अनिष्टनिवृत्ति-
रिष्टेति। तत्साधनमनिष्टमात्मनपि तदानीमिष्टमेव अन्यथा तत्र प्रयत्नानुत्प-
त्तेरिच्छापूर्वकत्वा‖त्तस्येति। अथ संशयो विचारणेति। ततश्च संशयविषय
त्वमानो जिज्ञास्यमानश्च साध्य एव भवति न साधनादिरित्यर्थः। स्थाना-
न्तरीयं च मद्वचनस्य लक्षणं साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृत इति
दूषयति एतेनेति¶। अत्रापि साध्यपदादूर्द्ध्वं पृथगवचनमुच्यमिति तथा पक्षो यः
साधयितुमिष्ट इत्यत्रापि च सुबन्धुनये विरुद्धार्थानिराकृतग्रहणं कर्त्तव्यम्।
एतदुक्तं भवति। न केवलमस्माकमेतद्विरुद्धार्थानिराकृतपदमनर्थकं प्रतिभाति
समानतीर्थानामपि तथा विभाति यतस्तैर्नोपात्तमिति। अत एवं वक्तव्यं पक्षो
यः साधयितुमिष्ट इति। यद्यप्यत्रापि प्रयोज्यप्रयोजकव्यापारयोः साधयितु-
मिति समाने तथाऽपि तुमुना य एव साधयिता वादी स एवेप्सितेत्युक्तं
भवति। न पुनर्वादिनो नियोक्ता साधयिता वादी चोदितेनेति। इष्टितृत्वं च
वादिनो ध्रुव कृत्वैतदुच्यते यदा पुनरीप्सितृत्वमपि प्रयोजके सञ्चार्य्यते तदा स्वप-
। ३१ क्षहेतुनाप्यप्रतीकार इत्यभिप्रायः। तत्स्वभावकयोरन्येति। सिद्धः साध्यस्य
प्रयोजकः कर्ता स हि सिध्यन्तं साध्यं साधयति वादी तस्मिन्नेव साधना सम
वेता। यस्तु तस्यापि प्रयोजकस्तृतीयस्थानपतितो न तस्मिन् साधना समवे-

---

* लौकिकवाक्यान्वाख्यानमिति मु॰ वा॰ पाठः। † सहेतुत्वादिति २ पु॰ पाठः।
‡ तदवरोधार्थमिति २ पु॰ पाठः।
§ प्रतिज्ञाप्रयोगादेव गम्यत इति २ पु॰ अधिक पाठः।
‖ पृथक्त्वमिति २ पु॰ पाठः। ¶ तनेति मु॰ वा॰ पु॰ पाठः।

तीति । यः कारयति स करोत्येवेति कथं चिदस्य भक्त्या कर्तृत्वं तच्चायुक्तं सति मुख्ये कर्त्तरीत्यभिप्रायः । आञ्जस्यं मुख्यत्वं पूर्वाभिप्रा*यस्थितमुद्घाटयति । तुमुनश्चेति । अत्रोक्तं भाष्यकारीयाभ्युपगमसिद्धान्तनिराकरणाव- १२० सरे ऽप्रमाणकमर्थमिति । यस्तावच्छास्त्राविरुद्धो ऽर्थः प्रमाणसिद्धः स शास्त्रीय एव शास्त्रेऽभ्युपेतप्रमाणसिद्धत्वात् तं व्युत्पादयन् न शास्त्रं बाधते । यस्तु प्रमाणीकृतवैशेषिकतन्त्रः शब्दनित्यत्वं साधयति सो ऽनवधेयवचनः न हेत्वभिधानं यावत्परीक्षकप्रतिवादिभ्यां नीयते अपि तु प्रतिज्ञोच्चारणानन्तरमेव निगृह्यते । यस्तु वैशेषिकतन्त्राध्ययनमात्राद्वैशेषिकत्वमात्मनो दर्शयित्वा शब्दनित्यतां प्रतिजानीते नासौ प्रमाणीकृतवैशेषिकतन्त्र इति न निगृह्यते । यत्राप्रमाणको ऽभ्युपगम इति । अभ्युपगम्यत इत्यभ्युपगमः तदभिधानं प्रतिज्ञेति वक्तव्यमिति । वाक्यग्रहणात्तद्ग्रहणस्य लाघवादित्यर्थः । यस्तु तत्र भवता नैयायिकेनेति । प्रकृतमुपसंहरति तस्मादपेतेति । पक्षान्तरसंगतिं प्रदर्शयन् प्रतिज्ञावचनस्य साधनाङ्गत्वमपि दर्शयति हेतोरवसरप्राप्तस्येति । प्रतिज्ञानन्तरं हेतुवचनस्यावसरः । तथा हि परप्रत्यायनाय वचनमुच्चारयन्ति प्रेक्षावन्तः तदेव च परो बोधयितव्यो यद्बुभुत्सते तथा सत्यनेनापेक्षिताभिधानात् परो बोधितो भवति नो खल्वाम्रान् पृष्टः कोविदारानाचक्षाणः प्रत्युपधेयवचनो भवति अनवधेयवचनश्च कथं प्रतिपादको नाम । यथा ■ माठर समिधमाहरेति गुरुणा प्रेषित एषो ऽहमाहरामीत्यनुक्त्वा तदर्थं यदायं गृहं प्रविशति तदा ऽस्मै कुप्यति गुरुः आः शिष्यापसद छान्दसवत्तर माठर मामवधीरयसीति ब्रुवाणः । एवमनित्यं शब्दं बुभुत्समानायानित्यः शब्द इत्यनुक्त्वा यदेव किं सिद्ध्यति कृतकत्वादिति वा यत्कृतकं तदनित्यमिति वा कृतकश्च शब्द इति वा तत्सर्वमस्यानपेक्षितमापद्यते। ऽबद्धाभिधानं तथा चानवहितो न बोद्धुमर्हतीति । यत्कृतकं तत्सर्वमनित्यं यथा घटः कृतकश्च शब्द इति वचनमर्थसामर्थ्येनैवापेक्षितशब्दानित्यत्वनिश्चायकमित्यवधानमेवेति चेद् न परस्पराश्रयत्वप्रसङ्गात् । अवधाने सत्यतो ऽर्थनिश्चयस्तस्माच्चावधानमिति । न च परिषत्प्रतिवादिनौ प्रमाणीकृतवादिनौ यदेतद्वचनमनुसन्धाय प्रवर्तिष्येते तथा च सति न हेत्वाद्यपेक्षेतां

* पूर्वावस्थितमभिप्राय ३ पु० पाठः ।

तद्वचनादेव तदर्थनिश्चयात् । अनित्यः शब्द इति त्वपेक्षितउक्ते कुत इत्यपेक्षायां कृतकत्वादिति हेतुरुपतिष्ठते । सो ऽयं पञ्चावयवप्रयोगे च तल्लक्षणे च प्रतिज्ञानन्तरकाल एवावसरो हेतोः तदेवं हेतोरवसरप्राप्तस्य सामान्यलक्षणापदेशद्वारेण तद्विशेषलक्षणम् ।

उदा–तुः ( सू. ३४ ) ॥ सूत्रयत्यर्थाभ्यामुभयलक्षणसूचनात्सूत्रम् । अत्र च हेतुरिति लक्ष्यनिर्देशः स च विभागोद्देशे वाक्यावयव इति वचनरूपः तस्य सामान्यलक्षणं साध्यसाधनं साध्यते ऽनेनेति व्युत्पत्त्या यद्यपि पारार्थ्यापन्नं कृतकत्वादिकमर्थमाह तथा ऽपि तस्य वचनात्मकहेतुसामानाधिकरण्यानुपपत्तेर्विषयि कृतकत्वादित्यादिकं वचनमुपलक्षयति । यदि च वचनं हेतुरित्युच्येत तत्साध्येन समभिव्याहृत प्रतिज्ञा स्यात् । अथ वचनमित्येतावदुच्येत तदातिव्याप्तिः स्यात् । उपचारे तु न क्ष चित्प्रसङ्गः उपनयादपि साधनं न परार्थतया गम्यते किं तु प्रतिपादिकार्थप्रधानतया स्वनिष्ठमिति न तथापि प्रसङ्गः । हेत्वाभासाश्च न साधनमिति साधनपदेनैव निराकृताः । न्यायवाक्यावयवत्वेन च नान्यशब्दे प्रसङ्गः । तदेवं समानासमानजातीयव्यवच्छेदकत्वं सिद्धं सामान्यलक्षणस्य । इदं चाये भवेत तु विशेषलक्षणं हेतुरिति यद्यपि सामान्यपदं तथा ऽपि प्रकरणादन्वयव्यतिरेकिहेतुपरं द्रष्टव्यम् । तेन हेतुरिति लक्ष्यनिर्देशः परिशिष्टं तु लक्षणं तदेतद्भाष्यकृद्व्याचष्टे उदाहरणेनेति । साधर्म्यपदव्याख्यानं सामान्यादिति । साध्यसाधनपदव्याख्यानं साध्यस्य धर्मस्येति । साध्यस्येति धर्मिमात्रे बुद्धिर्मा भूदत उक्तं धर्मस्येति । धर्मविशिष्टस्य धर्मिण इत्यर्थः । तदेव स्फुटयति साध्ये प्रतिसन्धायेति । उदाहरणे साधर्म्यात्साध्यस्येत्यनेनान्वयपक्षधर्मत्वे अन्वयव्यतिरेकपक्षधर्मत्वानि च दर्शितानि । साध्यसाधनमित्यत्र च साध्यग्रहणेनाबाधितविषयत्वासत्प्रतिपक्षत्वे सूचिते । तद्विपरीतस्य साधनानर्हत्वादिति तदेतद्वार्त्तिककारो व्याचष्टे । उदाहरणेनेति । यो धर्मो धूमादिः साध्ये भवति स तथाभूत एवोदाहरणे ऽपीति उदाहृियतइत्युदाहरणं दृष्टान्तधर्मी तस्मिन्न पुनः स एव कुतः अन्यधर्मस्येति । यदि तर्हि नान्यस्य धर्मो ऽन्यत्र वर्त्तते कथं तर्हि समानता सा हि तत्त्वान्यत्वविरोधिनीत्यत आह किं तु तत्तुल्यः । स एवोच्यते यथा तानेव शालीन् भुञ्ज्महे तानेव तित्तिरीनिति तदनेन सामान्यादिति भाष्यं व्याख्यातम् ।

उदाहरणग्रहणप्रयोजनमाह यदि पुनरिति । साधर्म्यमात्रं हि विरुद्धे चासा- १२२ ।
धारणे सव्यभिचारे चास्ति तेषामपि वचनं हेतुः स्यात् तेषामपि यथास्वं
साधारणत्वादिस्वनिष्ठमित्यर्थः । ननु तथा ऽपि सव्यभिचारे ऽप्युदाहरण-
साधर्म्यमिति कथं निवर्त्यतइत्यत आह उदाहरणेति । विशिष्टविधानस्य
शेषनिषेधो ऽर्थसिद्ध इत्यर्थः । पक्षान्तरमाह अवधारणेन चेति । साधर्म्यादि-
त्यत्रो विशेषेण सर्वसाधर्म्यप्राप्तावुदाहरणसाधर्म्यमपि प्राप्तमेवेति विधानान-
र्थक्यं परिसंख्यापकं सदवधारणार्थमेव भवति । तद्वद्योतनाय चैवकार
इत्यर्थः । साधर्म्यमेवेत्यत्र साध्यपदं योजनीयं तेन साध्यैकदेशासिद्धमपाक-
रिष्यति । पृच्छति कस्य पुनरिति । उत्तरं कस्यान्यस्येति । अत्रैव हेतुद्व-
यमाह प्रकृतत्वात् प्रत्यासत्तेश्च । साध्यं खल्वत्र प्रकृतं प्रधानं तदुद्दे-
शेनावयवानां प्रवृत्तेः साध्यसाधनमिति च पदेन सन्निधापितमिति तदेव द्विती-
यमवधारणं स्फुटीकरोति । अत्रापि चेति । साध्ये प्रतिसंधायेति भाष्यार्थमाह
साध्योदाहरणाभ्यामिति । द्वाविति । सपक्षव्यापकाव्यापकावित्यर्थः । अनै-
कान्तिकस्य चेति । साधारणस्य वा असाधारणस्य वेत्यर्थः । एवं भाष्यमा- १२३ ।
नेनेति । परिभाष्यमानेन नातिप्रसक्तस्येति परिसंख्यापकं हेत्वाभासलक्षणं न
विधायकमित्यर्थः । एतत्किल हेतुलक्षणं भवन्तो दूषयां बभूवुः साधनं यदि
साधर्म्यं न वाक्यांशः न ह्यर्थः पञ्चावयववाक्यस्यावयवः न पञ्चमी यदि
साधनसाधर्म्ययोरत्यन्ताभेदो यदि वा सामान्यविशेषभावेन कथं चिद्भेद
उभयथा ऽपि न पञ्चमी । साधनसामानाधिकरण्येन प्रथमाप्रसङ्गात् । अत्य-
न्ताभेदे चैकतरपदाप्रयोगात् । वाक्यं चेत्ततः पञ्चम्युपपद्यते । साधनं हि वा-
क्यरूपं साधर्म्यादर्थादुत्थितं यतः तद्विशेष्यं स्यात् । न हि वाक्यमेवा-
र्थादुत्थितम् अपि तु विवक्षात इति न विशेष्यं कुतः साधनत्वासंभवः ।
अर्थसमुत्थानामपि ज्ञानविवक्षादीनामप्रसङ्गो ऽसाधनत्वादिति । न तथापि द्वैधा
दोषात् साक्षात्साधनं पारंपर्येण वा यदि पारंपर्येण वक्तृज्ञानं तर्हि साक्षा-
त्साधर्म्यसमुत्थं पारंपर्येण च श्रोतुः साध्यविज्ञानसाधनं हेतुः स्यात् । अथ
साक्षात्साधनं तर्हि श्रोतृज्ञानं पारंपर्येण साधर्म्यसमुत्थं साक्षात्साधनं हेतुः
स्यात् । प्रकृते त्वन्यसंभवः यदि तु पञ्चावयववाक्यस्य प्रकृतत्वात् ज्ञानादि-
व्यवच्छेदः तथा ऽप्यन्यसंभवः उपनयस्यापि साधर्म्यसमुत्थत्वात् । स्वलक्ष-

येन बाधा चेन्न विकल्पादिसंभवात् । तस्मात् पक्षस्तु तथापि विशेषणमन-
र्थकम् साधर्म्यस्य हेतुरित्येतावन्मात्र वक्तव्यमिति । तदेतद्दिग्नागदूष-
८ णमुपन्यस्यति उदाहरणसाधर्म्याच्चेति । यदार्थात्मक साधर्म्यमेव साध-
नमुच्यते तदेतद् दूषणमित्यर्थ. । यदि पुनरर्थात्मकस्य साधर्म्यस्यार्थात्मकमेव
साधन सामान्यमुच्यते तथाह । अथ पुनरिति तदिदमुक्त भदन्तेन । न
पञ्चमी । अन्ये त्वेतदन्यथा व्याचक्षत इत्याह । अन्ये त्विति । विशेषातिरिक्तं
न सामान्य नाम किंचिदस्ति तस्य कल्पनामात्रत्वात् । भेदस्य वस्त्वधिष्ठान-
त्वा दित्यभिप्रायः । दोषान्तरमाह साध्यसाधनेति । यदा हि साध्यसाधन
नामोदाहरणसाधर्म्यादतिरिक्त नास्ति किं तु शब्दमात्रमवशिष्यते तदोदा-
हरणसाधर्म्यमनेनाभिधेयत्वेन विशेषणीय तथा च साध्यनिर्देशः प्रतिज्ञेत्य-
नेन विरोधः । अनेन ह्यवयवः शब्दात्मकः प्रतिज्ञा लक्ष्यते हेत्वादिसमुदा-
यापेक्षया चावयवो भवति न चाभिधानाभिधेयात्मकः समुदायो दृष्ट इति
तस्मात्समुदायाभावान्नोभयेषामवयवत्वं तदिदमुक्त न वाक्यार्थ इति । तदे-
तल्लक्षणव्याचक्षाणैरस्माभिः परिहृतमिति न परिहारान्तरं प्रयोजयतीत्याह
तत्र त्विति* । उक्त यथा हेतुपदसन्निधौ साधनपद हेतुपदे प्रवर्तते न चोप-
नये प्रसङ्गः तस्य प्रातिपदिकार्थमात्रप्रधानत्वेन हेतुभावाप्रकाशकत्वात् । अथ
चोदयति । साधर्म्यस्येति साधर्म्यस्य लिङ्गस्य कृतकत्वादित्यादिहेतुपदवा-
च्यस्य व्यभिचार्यव्यभिचारित्वयोगादुदाहरणविशेषणयोगो न पुनः साध्य-
साधनपदवाच्यस्य कृतकत्वादित्यादेर्हेतुवचनस्येत्यर्थः । तदुक्त भदन्तेन तथापि
विशेषणमनर्थक वचने ऽपीत्यर्थ. । तदेतद्दूषयति वचनस्य इति । वचनमपि दर्श-
नभेदेनोभयथा ऽपि भवति यथा मीमांसकानां नित्य वचनं वैशेषिकाणामनित्य-
मिति केषांचिन्मूर्तः शब्दः केषांचिन्मूर्त इति यथा ऽऽहुर्वायुरापद्यते शब्द-
तामिति । तथा प्रातिस्विकमपि भेद सर्वेषामेव शब्दानामितिकरणो दर्शयती-
त्याह दर्शनचेति । स्ववाग्विरोधमाह स्वयमिति । अनभ्युपगतेति । अनभ्यु-
पगतो ऽर्थान्तर विपक्षो यस्य हेतोरनित्यत्वे साध्ये कृतकत्वादेः स तथोक्तः ।
यदभ्युपगत भदन्तेन तस्मात् पक्षस्त्वित्ति तद्दूषयति । यदपीति । विवक्षातः
: । १८ कारकशब्दप्रयोगादिति । कारकत्वेन सम्बन्धित्वमुपलक्षितं क्रियाकारक-

* तत्रैव इति पु घा पु पाठः ।

र्मत्वात्सम्बन्धित्वस्य न तु पञ्चमी वा षष्ठी वा कारकविभक्तिरिति । अत्र भाष्यका-
रेण शुद्धं हेतुवचनमुदाहृतम् । उत्पत्तिधर्मकत्वादिति तस्य चोदाहरणसाध-
र्म्यसमुत्थत्वज्ञापनायोदाहरणमपि दर्शितमुत्पत्तिधर्मकमनित्यं दृष्टमिति ।
अत्र भाष्यकारेण शुद्धं हेतुवचनमुदाहृतं तत्प्रतिज्ञापदेन पूरयित्वा वार्त्तिक-
कार आह उदाहरणमिति । अत्र पृच्छति । किं पुनरिति । सतो वि- १२५
नाशो ऽनित्यत्वं तद्योगो वा तद्वोभयमयुक्तं न हि सदसतोः कश्चिदस्ति
सम्बन्धो ऽसमानकालत्वात् ततश्चानित्यः शब्द इति सामानाधिकरण्यं न
स्यादिति । अपि च शब्दस्य भूत्वा यदभवनं न तदेव पिठरस्य न चाभव-
नत्वं नामास्ति सामान्यं येन दृष्टान्तो न साध्यविकलः स्यात् । न च सामा-
न्यातिरिक्तं सादृश्यं धर्मान्तरं दृष्टमिष्टं वा तस्मान्मृषाशेषमनित्यत्वं साध्य-
मिति भावः । गूढाभिप्राय उत्तरं यस्यानित्यत्वमस्ति तदनित्यं । स्वाभिप्रायेण
पृच्छति अथेति । उत्तरवाद्यभिप्रायमुद्घाटयति उभयान्तेति । अपरान्तेति
वक्तव्ये उभयान्तग्रहणेन पूर्वान्तनिवेशनं हेतोरुत्पत्तिमत्त्वस्यात्यन्तिकीं प्रत्या-
सत्तिमविनाभावोपयोगिनीं दर्शयितुमिति । अयश्चैवंरूपस्य चोपलक्षणत्वं न वि-
शेषणत्वं तद्वापरान्तस्य भिन्नकालस्य सम्बन्धस्यापि विरोधितया बुद्धिस्थस्य
सम्भवति । तथा च येवापरान्तावच्छिन्नस्य सता पिठरस्य सैवापरान्तावच्छिन्नश-
ब्दस्यापि । एवं सत्तासमवायो ऽपि तद्विषयो पिठरशब्दयोः समानः । विरो-
धिभावः पश्चाद्भावस्वाभावसमावात् प्रध्वंसस्य विशेषः । पृच्छति अथोत्पत्ती-
ति । न तावदुत्पन्नस्योत्पत्तिर्धर्मः तदा ऽप्युत्पद्यत इति प्रत्ययप्रसङ्गात् । नाप्य-
नुत्पन्नस्य असतो धर्मित्वायोगादिति भावः । गूढाभिप्राय उत्तरमुत्पत्तिरिति ।
उक्ताभिप्रायवान् पृच्छति का पुनरिति । उत्तरमसाद्विशेषणस्य सतो ऽत्य- १२५
न्तमभावभावप्रतिषेधः । असदिति प्रागभावमाह विशेषणत्वं च प्रागभाव-
स्य उपलक्षणत्वं तच्च भिन्नकालस्यापि बुद्धिस्थतामात्रेणोक्तं तेनासद्विशेषणस्य सत
इत्येतावतैव पूर्वान्तपरिच्छिन्नस्य सत्तासम्बन्धः सत्ता वा तद्विशेषणेऽन्यतिर्देशेन ।
यश्चैवंभूतस्तस्य गगनवन्नात्यन्तमसम्भवः गगनकुसुमवद्वा नात्यन्ताभाव इति
स्वरूपमुक्तमुत्पत्तिमुपलक्षयितुमुपलक्षणोपलक्ष्ययोश्चाभेदविवक्षया सामानाधि-
करण्यम् । न चैव लब्धोत्पत्तिनि वस्तुन्युत्पद्यत इति प्रसङ्गः लभ्यमानोत्प-
त्तितदवयवेषु सदुत्पादनानुकूलव्यापारावेशलक्ष्यपूर्वापरीभावेषु तत्प्रयोगात्

लोके दर्शनात्। तस्मात् पूर्वान्तावच्छिन्नवस्तुगततया तत्संबन्धेन वा तस्यैव वस्तुनो ऽपरान्तावच्छिन्नता तत्संबन्धो वा साध्यत इति सर्वं रमणीयम्। ननु भाष्यकृदभूत्वा भावित्वमित्यस्य वाक्यस्यार्थमुत्पत्तिं वक्ष्यति त्वं पुनरसद्विशेषणस्य सतो ऽत्यन्तमभावप्रतिषेध इत्यस्य वाक्यस्यार्थमुत्पत्तिं तत्कुतो न विरोध इत्यत आह वाक्यार्थेति। य एवार्थो भाष्यकारेणोत्पत्तिशब्दार्थतया ऽभ्यनुज्ञातो ऽङ्गीकृतः स एवास्माभिरपि नात्यन्तमभावप्रतिषेधस्योत्पत्तिरपि त्वसद्विशेषस्य सतः सत्ता वा तत्संबन्धो वेत्युक्तमित्यर्थः।

सूत्रान्तरमवतारयति। किमेतावदिति।

तथा—सू (सू. ३७)॥ अथ यदि वैधर्म्यादित्युच्यते ततः सकलकेसरादिमत्पदार्थपक्षीकरणेनात्मवत्त्वं यदा विपक्षित्वेन साध्यते तस्यास्ति पक्षवैधर्म्यमिति हेतुः स्यादित्यत आह उदाहरणेन वैधर्म्यमिति। विपक्षेणेत्यर्थः। तथा ऽपि यदा शरीरमात्रं पक्षीकृत्य सात्मकत्वं साध्यते प्राणादिमत्त्वेन तदा ऽस्ति तस्योदाहरणेन वैधर्म्यमिति सो ऽपि हेतुः स्यादित्यत आह एवेति। न चैतावता सपक्षत्वप्रसङ्गः सपक्षस्याभावात्। अवधारणस्य व्याख्या पक्षसत्त्वेनोपपत्तेरिति। तथा ऽपि अन्वयव्यतिरेकिणो हेतोरनैकान्तिकस्य च विपक्षैकदेशव्यापिनः संग्रहः स्याद् यथा अनित्यः शब्दः उत्पत्तिधर्मकत्वाद् अनित्यो मूर्त्तत्वादित्यत आह वैधर्म्यमेवोदाहरणेनेति। विपक्षोदाहरणेनेत्यर्थः। भाष्यकारीयमुदाहरणं निगदेनोपन्यस्यति अनित्यः शब्द इति। नित्यमनुत्पत्तिधर्मकं दृष्टमिति योजना। तदेतद्दूषयति एतच्चेति। मा भूत्प्रयोगमात्रभेदाद् भेद उदाहरणभेदाद् भेदो भविष्यतीत्यत आह उदाहरणमात्रभेदाच्चेति। तदेतद्भाष्यकारीयमुदाहरणं दूषयित्वा स्वकीयमुदाहरणमाह उदाहरणं त्विति। प्राणादिना ■ स्वकारणं प्रयत्नादुपलक्षयति। यदुभयपक्षसंप्रतिपन्नं निरात्मकं तत्सर्वमप्राणादिमद् दृष्टमिति विपर्ययेण योजना। प्राणादिकारणेच्छारहितं यदित्यर्थः। तस्मान्नेदमिति। नेच्छादिसमवायिकारणरहितं यश्चासौ इच्छादिसमवायिकारणं पृथिव्यादिविलक्षणो द्रव्याणां नवमः स आत्मेत्युच्यत इत्यर्थः। अन्वयिव्यतिरेकिणोस्तद्व्यतिरेकिणश्च तन्त्रान्तरसिद्धेन नाम्ना तन्त्रान्तरसिद्धान्तं दर्शयति सो ऽयमवीत इति। विविधेन प्रकारेण इतः प्राप्तो वीतः पक्षव्यापकत्वे

सति सपक्षव्याप्त्या ऽव्याप्त्या च तस्मादन्यो ऽवीत इति । गूढाभिसंधिः पृच्छति **कथं पुनरिति** । गूढाभिसंधेरुत्तरम् । **अथ यो ऽभ्यनुज्ञात इति** । यथा १२६ । वीतस्यार्थपरिच्छेदकत्वं तथैवावीतस्येत्यर्थः । प्रष्टा स्वाभिप्रायमुद्घाटयति **वीतो ऽन्वयादिति** । गृहीताविनाभावो हि हेतुः साध्येन तस्य परिच्छेदकः स च दृष्टान्तधर्मिणि हेतुसाध्यधर्मयोर्दर्शने सत्यविनाभावो दृष्टो भवति । न च सात्मकत्वं क्वचिद् दृष्टं तत्कथं तेनाविनाभावदर्शनं प्राणादिमत्त्वस्य दर्शने च नावीतः किं तु वीत एवेत्यर्थः । उत्तरवादी प्रष्टारं पृच्छति **अथ प्रमेयत्वमिति** । प्रष्टा आह **व्यभिचारादिति** । उत्तरवाद्याह **न तर्ह्यन्वय इति** । स एवैकयान्ये-नाह **यदि चेति** । तदेवमुत्तरवादिना स्वाभिप्रायमुद्घाटितः* पृच्छति **कथमव्यभिचारित्वं व्यतिरेकिण इति** । अव्यभिचारमाह **यावदिति** । अत्रापि यावदनात्मकं तत्सर्वम् अप्राणादिमद् दृष्टमिति व्यत्यासेन योजना । साध्यविपर्ययस्य व्याप्यत्वाद् व्यापकनिवृत्तौ च व्याप्यं निवर्तते यथा वृक्षत्वनिवृत्तौ शिंशपात्वमारादुपलभ्यमानाद्देशात् शिलामयाद्वा प्रदेशादित्यर्थः । यदि पुनरेवमुच्यते निवर्ततामप्राणादिमत्त्वं जीवच्छरीरात् प्राणादिमत्त्वस्य प्रमाणेन उपलब्धेर्न तु निवर्तिष्ट नैरात्म्यं तस्माद्व्यभिचारादहेतुत्वमित्याशङ्कते **अथ पुनरिति** । निराकरोति **न युक्तमिति** । किं जीवच्छरीरे साध्ये नैरात्म्यनिश्चयाद् व्यभिचार उत तत्संदेहात् । यदि निश्चयात् कृतं व्यभिचारेण बाधितविषयत्वेनैव हेतोरपाकरणात् । अथ संदेहात् तथा सत्यन्वयिनो ऽप्यहेतुत्वे सर्वानुमानोच्छेदप्रसङ्ग इत्यर्थः । शङ्कते **सर्वात्मकत्वप्रसङ्ग इति चेत्** । निराकरोति **न विकल्पानुपपत्तेः** । शङ्कावाक्यं विभजते **यदीति** । न तावदयमात्मा नाम प्रमाणेन क्वचिदुपलब्धः यस्य प्रतिषेधो १२७ नैरात्म्यमवगम्येत तदुपलम्भे वा कृतमनया कुसृष्ट्या । तस्मात् कल्पयित्वा ऽऽत्मानमप्रामाणिकं तत्प्रतिषेधस्य घटादावप्राणादिमत्त्वेन व्याप्तिं गृहीत्वा जीवच्छरीरे व्यापकस्याप्राणादिमत्त्वस्य निवृत्त्या नैरात्म्यस्य व्याप्यस्य निवृत्तेरात्मा ऽवगन्तव्यः । एवं च सति कल्पनाकोपस्यापरिमेयत्वाद् यद्यदेव कल्प्यते तत्तदभावस्य घटादौ सुलभत्वाद् अप्राणादिमत्त्वेन व्याप्तेर्जीवच्छरीरे ऽप्राणादिमत्त्वस्य व्यापकस्य निवृत्तेरात्मवद्भावयत् सकलकाल्पनिकसिद्ध्यादि-

---

* स्वाभिप्रायमुद्घाटयितुमिति ३ पु पा ।

१ मन्यप्रसक्तं इत्यर्थः । निराकरणाकाङ्क्षं विभजते तत्र नैषं कस्माद् विकल्पानुपपत्तेः । विकल्पयति किमिति । अयमर्थः । प्राणादयो हीच्छान्वयव्यतिरेकानुविधायिभावाभावतया इच्छादिकार्याः कार्यत्वे च व्यवस्थिते कार्यं समवायिकारणापेक्षमितीच्छादीनां समवायिकारणेन भाव्यमिति कार्यत्वाद् घटादिवत् शरीरेन्द्रियादीनां च समवायिकारणत्वनिषेधे सति परिशेषादिच्छादीनां समवायिकारणं परिशिष्यते तद् द्रव्यमात्मेति शेषवदिति व्याख्यायते* तदस्य विशेषतो ऽनवगतस्यापीच्छादिसमवायिकारणतया सामान्यरूपेणावधारितस्य शक्यः प्राणादिरहितेषु घटादिष्वभावः प्रतिपत्तुं निरात्मकशब्देनापि चायमेवार्थ उच्यते ऽनेन प्राणादिलक्षणकार्याभावेन घटादौ नैरात्म्यलक्षणकारणाभावस्य व्याप्तिरवधारिता सो ऽयं जीवच्छरीरे कार्यस्याभावो व्यापको निवर्त्तमानः स्वव्याप्यं तत्कारणाभावमादाय निवर्त्तत इति सिद्धं जीवच्छरीरे प्राणकारणं चात्मेति । यदि च क्षित्यादयो ऽपि तथा तदात्मनो नामान्तराणि नार्थान्तराणि । नामानि च लोकतन्त्राणि । अवधारितं कार्यं प्राणाद्युपलक्षितमिच्छादि यस्य सो ऽवधारितकार्यः स च स्वभावो यस्य तथोक्तः । एतदुक्तं भवति सामान्यतस्तावदिच्छादीनां कार्यत्वेनान्वयव्यतिरेकिणा हेतुना समवायिकारणवत्त्वमनुमितम् उभयसिद्धश्च घटादाविच्छादिकारणाभावः । ये ऽपि हि नैरात्म्यवादिनो बुद्धं वा भूतपरिणामभेदं वा इच्छादिकारणमाचक्षते ते ऽपि घटादौ न तदातिष्ठन्ते । तस्मादुभयसिद्धनैरात्म्या घटादयः तेषु चेच्छादिकार्याभावेन नैरात्म्यं व्याप्तं सो ऽयं जीवच्छरीरे कार्याभावो व्यावर्त्तमानः कारणाभावं व्यावर्त्तयति । न च कार्येणैव कारणमनुमीयतां जीवच्छरीरे किं व्यतिरेकिणा वक्रमार्गेण सिद्धान्तं को नु पक्षेण साधयेदिति वाच्यम् । कारणमात्रस्य ततः सिद्धेरित्युक्तम् । परिशेषाद्विशेषसिद्धिरिति चेत् स एव व्यतिरेकीत्युक्तम् । यदि हि पृथिव्यादिसमवायिकारणा इच्छादयो भवेयुः घटादिष्वपि प्रसज्येरन् । तस्माद् घटादिष्विच्छादिकार्यनिवृत्त्या द्रव्याष्टकातिरिक्तकारणनिवृत्तिर्व्याप्ता दृष्टेतीच्छादयः शरीरे दृश्यमाना व्यापिकां स्वनिवृत्तिं निवर्त्तयन्तो व्याप्यद्रव्याष्टकातिरिक्तकारणाभावनिवृत्तिमुखेन नवमं द्रव्यं साधयन्ति । न चैवां बुद्धिरेव समवायिकारणं द्रव्यस्यैव

* [illegible]

समर्थाधिकारवन्नियमाद् बुद्धेश्चाद्व्यत्वात् । यथा च भूतानां परिणतिभेदो न कारणं तथा तृतीयेऽपपादयिष्यते । व्यतिरेकमुखेनापि प्राणादेः सात्मकत्वेनान्वयसिद्धौ न केवलव्यतिरेकीति चेद् न स्वाभाविकं साध्येन प्रतिबन्धमन्वयव्यतिरेकिणो व्यासेधामः किं तु सपक्षाभावेन विधिमुखेनास्य प्रतिबन्धं निराकुर्मः । अत एव चान्वयिनो भिद्यते । न च घट एव सपक्षः जिज्ञासितविशेषस्य ज्ञातविशेषादन्यत्वात् । शरीरादिषु च सत्सु नैरात्म्यनिषेध एवात्मसद्भावः अपनिषेधस्य सद्भावलक्षणत्वात् । सपक्षाभावस्तु नैरात्म्येनाप्यव्यपदेश्य इति कथं नैरात्म्यनिषेधेन व्यपदिश्यतामतो ऽधिकरणात्ययोगादित्युक्तम् । एतेन परैरुक्तं सपक्षाव्यतिरेकी चेद्व्यवेद्धेतुरतो ऽन्वयी । नान्वयव्यतिरेकी चेन्नैरात्म्यं न सात्मकम् । तदनेन निराकृतम् । एतच्चास्माभिरन्वयिहेतुसमर्थनेन स्फुटीकृतम् । तस्मात्सर्वमवदातम् । विपक्षव्यतिरेकिमात्रेण व्यतिरेकिणो गमकत्वं मत्वा चोदयति यदि तर्हीति । परिहरति न हेत्वर्थाप- १२७ रिज्ञानादिति । न वैधर्म्यमात्रेण गमकत्वम् अपि त्वव्यभिचारिणा स चाव्यभिचारो नास्तीत्यर्थः । ननु मा भूद् गन्धवत्त्वे हेतुर्व्यतिरेकव्यभिचारात् अनित्यादिविहितत्वादव्यस्य व्यभिचारात् । यस्य पक्ष [illegible] केवलं न तु सपक्षविपक्षौ न तस्य व्यतिरेकव्यभिचारो ऽस्तीति स कस्मान्न हेतुरिति चोदयति यः पुनरिति । परिहरति सत्यमिति । व्यतिरेकधर्मो ऽव्यभिचारो नास्ति व्यतिरेके संभवति अपतो ऽधिकरणात्ययोगादित्युक्तत्वादिति । प्रत्युदाहरणान्तरं दर्शयति एतेनेति । एतेन विपक्षाभावात् सतो व्यावृत्त्यभावेनेत्यर्थः । चोदयति यः पक्षैकदेश इति । यदि हि पक्षैकदेशवृत्तिरपि विपक्षाभावाद् न व्यतिरेकी हेतुः तर्हि यस्य पक्षैकदेशवृत्तेरपि सतो विपक्षान्निवृत्तिरस्ति स हेतुः प्रत्यक्षेण चास्ति अन्वयोदाहरणवैधर्म्यमेवेति व्यतिरेकिहेतुलक्षणमित्यभिप्रायः । परिहरति अयमपि न हेतुः कस्मात् सूत्रार्थानापादितत्वात् । तं सूत्रपाठपूर्वकं दर्शयति सूत्रार्थ इति । अत्र च येन पक्षैकदेशवृत्तेर्व्यतिरेकाभावनिराकरणं तदुदाहरणं प्रदर्शितम् । उदाहरणेनैव वैधर्म्ये नानुदाहरणेन पक्षेणापि अस्य तु पक्षेकापि इति व्यतिरेकोऽपि न हेतुः न पुनर्वैधर्म्यमेवेति सूत्रार्थः । तथा सति अव्यभिचारमात्रस्य निवृत्तिः स्याद् न तु पक्षैकदेशवृत्तेरित्यर्थः । अस्मिन् हेतु-

लक्षणमुपन्यस्य दूषयति हेतुर्विपक्षाद्विशेष इत्यन्ये । एतद्व्याचष्टे अन्ये
त्विति । साधर्म्यमात्रनिराकरण इति । यस्य कस्य चित्साधर्म्यस्य
निराकरणे विपक्षसाधर्म्यनिराकरणे तावदिष्टसंग्रहः । यदा तु सपक्षादपि
धर्म्यनिराकरणं तदा ऽनिष्टस्य विरुद्धत्वादेः संग्रहः । उपलक्षणं चैतद् इष्टा-
निष्टसंग्रह इति इष्टपरित्याग इत्यपि द्रष्टव्यम् । स चानेकभेद इति ।
सपक्षादपि विशेषे सति विपक्षाद्विशेषः पक्षादपि विशेषे सति विपक्षाद्विशेषः
विपक्षमात्राद्विशेष इति प्रकाराः । अत्र पूर्वयोः प्रकारयोर्यथाक्रममसाधारण
स्यासिद्धस्य च हेतुत्वप्रसङ्ग इति तन्निवृत्त्यर्थं विपक्षादेवेत्यवधार्यते । द्विती
यमवधारणमवतारयितुमाह अवधारणे चेति । विपक्षादेवेत्यनेनावधार-
णेन विशेषोऽवधारितः न विपक्षः स चायं विशेषः चाविशये च प्रसूत इति
विपक्षैकदेशवृत्तेरपि पक्षसपक्षसाधारणस्य हेतुत्वप्रसङ्ग इति तन्निवृत्त्यर्थं द्विती-
यमवधारणं विशेष एवेति उपसंहरति तदेवमिति । तदेतदव्यापकत्वेन दूष
यति सत्यमेक इति । अत्र चोदयति विपक्षैकदेशवृत्तिप्रतिषेधादिति ।
विशेष एवेत्यवधारणे विपक्षैकदेशवृत्तिः गौरयं विषाणित्वादिति हेतु
त्वेन प्रतिषिद्धः । तस्मादेतस्मिन्नवधारणे सत्येव विपक्षादेवेत्यवधार
णीयं तथा च विपक्षादेव यो विशेष एव स हेतुः सपक्षात्तु यो विशेष एव
स न हेतुरित्युक्तं भवति । तथा चाश्वो ऽयं विषाणित्वादिति सपक्षाद्विशेष
एवेति हेतुत्वेन प्रतिषिद्धो भवति । यस्तु सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयक
त्वादिः स सपक्षाद्विशेष एव न भवति अपि तु सामान्यमपीति । तस्य हेतु
त्वमवधारितमिति । हेतुरेवासावित्यर्थः । परिहरति यद्येवमिति* । यदि
सपक्षादपि यो विशेषः सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिर्हेतुः एव विप
१३ क्षादेवेत्यवधारणं बाधितं भवति । शङ्कते अथेति । न विपक्षादेवेत्येतन्मात्रम
वधार्यते येन सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिर्न हेतुः स्यादपि तु यो
विशेष एव स हेतुरिति प्राप्ते विपक्षादेवेति नियम्यते तेन साधारणस्य वि
शेषस्य† विपक्षवृत्तेर्हेतुत्वं प्रतिषिद्धं भवति । यथा ऽश्वो ऽयं विषाणित्वादिति
य पुनर्विशेषश्चाविशेषश्च सपक्षे हेतुः तस्य हेतुत्वे ऽपि न विपक्षादेवेति
बाधितं भवति । यद्यपि चैवं सति सपक्षैकदेशवृत्तेर्हेतुत्वं न च्युतं तथा ऽपि

* इदं मुद्रितया पु नास्ति । † अवधारणस्येति २ पु पा ।

विपक्षादेवेत्यनेनावधारणेनानिषिद्धमनुमतमेव । तेन चाश्रुतेनार्थेनावधारणी अव-
धारणे इत्यर्थः । निराकरोति एवं चेति । यथा तत्तुल्यैकदेशवृत्तेरविहितमपि १२९ ।
हेतुत्वमनिषेधादनुमतमेवं पक्षैकदेशवृत्तेरपीति सोऽपि हेतुः स्यादित्यर्थः ।
पुनः प्रत्यवतिष्ठते नैष दोष इति । पक्षधर्मत्वे सति विशेषे पक्षेति नियमे
कृतः पक्षैकदेशवृत्तेः प्राप्तिः अपक्षधर्मत्वात्तस्येत्यर्थः । परिहरति यो धर्मः
पक्षस्येत्यनेनेति । पर आह न कर्तव्य इति । दूषयितुमवधारणं विकल्पयति
किं पुनरिति । प्रथमकल्पं गृह्णाति अस्तु तावदिति । तमपि दूषयितुं
विकल्पयति किं पुनरस्येति । सामर्थ्यं प्रयोजनाभिसंबन्धः संभवव्यापनपक्षे
ऽव्यापननिवृत्तिः प्रयोजनम् । असंभवनिवृत्तिपक्षे त्वत्यन्तायोगव्यावृत्तिः फलम् ।
यथा नीलं सरोजं भवत्येवेति । विकल्प्य दूषयति उभयथा ऽपीति । पुनर-
न्यस्त्वाह न चेति । अत्यन्तायोगो निषिद्धो भवति न त्वयोग इत्यर्थः ।
शङ्कते अथेति । विशेषणसंगतो ह्येवकारो ऽयोगं व्यवच्छिनत्ति यथा चैत्रो
धनुर्धर इति हेतुविशेषणं चेदवधारणं पक्षेति । तस्मात्सिद्धं पक्षैकदेशे वृत्ते-
र्निराकरणमित्यर्थः । निराकरोति सत्यमिति । येयमनुमानसूत्रे व्याख्यात-
प्रायमिति नेह व्याख्यातम् । हेतुर्विपक्षाद्विशेषः इति च सौत्रा-
न्तिकपक्षमिति । यदा त्वनित्यत्वहेतौ लक्ष्ये लक्षणं विचार्यत इति विपक्षा-
भावो साध्यः । ननु नित्यो विपक्ष इत्यत आह न ह्यसतीति । न हि
निरूपाख्यमाख्यायत इत्यर्थः । न चाभावादन्यत्वं नाप्यधिकरणं येन
पञ्चमी वा सप्तमी वा प्रवर्ततेत्याह न चासतीति । न चासतो विपक्षाद्व्या-
वृत्त्यभावेन विशेषो ऽनीत्याह विपक्षासंभवे सतीति । पक्षस्यैवेति । अत्र
चैवकारान्वयः पदान्तरानपेक्षतयं सूचयन्ति । पक्षस्यैव धर्म इति हेतुलक्षणे
ऽवधारणे च हेतुः स्यात् । समान एव सिद्ध इति । हेतुलक्षणे अस्य
विशदित्वे साध्ये गोत्वादिर्हेतुः स्यात् । विपक्ष एव नास्तीत्युच्यमाने अनित्यः
शब्दः प्रमेयत्वादित्यपि हेतुः स्यात् । तस्मात्त्रयः पक्षा ज्ञेयाः । तथा च
पक्षस्य धर्मः । समाने च सिद्ध इत्यत्र व्यभिचारी हेतुः स्यात् । पक्षस्य
धर्मो विपक्षे च नास्तीत्युच्यमाने ऽसाधारणो हेतुः स्यात् । समाने च सिद्धो
विपक्षे नास्तीत्युच्यमाने अनित्यः परमाणुः कृतकत्वादिति हेतुः स्यादिति
अतः क्रमभङ्गमिमं तदाह पक्षस्येति । शेषं सुबोधम् । अथ दिङ्नागेन १

सपक्षे सन्नसन् द्वेधा पक्षधर्मः पुनस्त्रिधा । प्रत्येकमसपक्षे च सदसद्द्विविध
त्वत इति । न च पक्षधर्मान् हेतुतदाभासान् दर्शयित्वा तत्र यः सन् सजातीये
द्वेधा चासंस्तदत्यये । स हेतुर्विपरीतो ऽस्माद्विरुद्धो ऽन्यस्त्वनिश्चित इति
हेतुतदाभासविवेको दर्शितः । तस्यार्थः । यः पक्षधर्मः स सपक्षे सन्नसन् द्वेधा
इति [illegible] पुनरसपक्षे सदसद्द्विविधत्वतः प्रत्येकं त्रिधा भवतीति पक्षधर्मः सपक्षे
सन् विपक्षे सदसद्द्विविधत्वतस्त्रिधा पक्षधर्मः । सपक्षे द्वेधा विपक्षे सदसद्-
द्विविधत्वतस्त्रिधेति यथोदाहरणं प्रमेयकृतकानित्यकृतप्रयत्नजाः । अनि-
त्ययत्नजास्पर्शानित्यत्वादिषु ते नव । नित्यत्वादिषु साध्येषु प्रमेयत्वादयो
नव । हेतुतदाभासाः तेषां यथासंख्यं नित्यत्वादीनि । साध्यान्युदाहरन्ति
नित्यानित्यप्रयत्नोत्थमध्यमविकल्पाश्वताः । अथवानित्यनित्याश्च प्रमेयत्वा-
दिसाधनाः । तदेतेषु हेतुतदाभासेषु हेतुर्निर्धारितो येन तदुपन्यस्य वार्त्तिक-
१२ कारो व्याचष्ट तत्र य इति । तदेतद्दूषयति यथाश्रुतीति । तत्र यः सन् सजा-
तीये द्वेधा यो ऽसंस्तदत्यय इत्येतावन्मात्रान्न लभ्यत इत्यर्थः । चोदयति ननु
चोक्तमिति । उक्तं दिङ्नागेन साध्यधर्मो यतो हेतुस्तदाभासश्च भूयसेति
तदेतत्परिहरति उक्तमेतदिति । न पुनः पक्षधर्मे यथेत्यर्थः । अवधारणमबुद्ध्वा
शङ्कते अथापीति । अवधारणार्थालाभेनोत्तरमाह सत्यमर्थादिति । ननु
पक्षधर्मत्वनिवृत्त्यैव पक्षाव्यापकत्वं गम्यते न ह्यव्यापको भवत्यपक्षधर्मनिवृ-
त्तिमान् इत्यत आह अपक्षधर्मनिवृत्तिमात्रत्वेन चेति । अत्यन्तनिवृत्तनि-
षेधेन वृत्तिमात्रं स्यात् नैकान्तिकी वृत्तिरित्यर्थः । चोदयति न प्राप्त इति । परि-
हरति नावधारणस्येति । हेतुत्वाभावादेव पक्षधर्मो नान्य इति नियमख्या-
पनार्थमवधारणमिष्टं भवद्भिरित्यर्थः । शङ्कते अथोभयमिति । निराकरोति
तथाऽपि सन् सजातीय इति । तदेतत्पूर्वमेव व्याख्यातप्रायम् । द्वेधा
चेति । सर्वथा न वक्तव्यमिति । सन् सजातीय इत्यस्योपादाने ऽनुपादाने
चेत्यर्थः । सन् सजातीय इति नोपादातव्यमिति यदुक्तं तत्र शङ्कते अथ म-
न्यसेति । निराकरोति अवधारणेति । यद्यवधारणं युज्येत अवधारणार्थो
युक्त आरम्भस्तदेव त्वयुक्तमित्यर्थः । आद्ये पद इति* । पक्षस्य धर्म इत्यस्मिन्
१२ पद इत्यर्थः । अन्यपदे इति । अन्ये पदे ययोः पक्षधर्मत्वविपक्षासत्त्वयोस्ते

* इदं पु॰ का॰ पु॰ नास्ति ।

तयोक्ते । तत्र त्रैविध्यं निराक्रियत इति* । ननु सजातीयः इति सर्वत्रेति सजातीये द्वेधा चेति पदोपादाने ऽनुपादाने चेत्यर्थः । सजातीयएव द्वेधे- १३४ । त्यनेनैवेति । हेतुसदाभासयोरौत्सर्गिके पक्षधर्मत्वे स्थित इति भावः । यदुक्ते अथ मा भूदिति । सजातीयएव द्वेधेति नावधारणमित्यर्थः । निराकरोति तथा ऽपीति । ननु सजातीये द्वेधेति मध्यमपदे इत्यर्थः । तदेवं सजातीये एव द्वेधेत्यवधारणं दूषितं ततः द्वितीयमवधारणं यदुक्ते अथ पुनरिति । निराकरोति तथा ऽपीति । तथापि पक्षैकदेशवृत्तिरपि हेतुः प्रसक्तः यदि च तद्वत्येवेति नावधारणेन ततो ऽनैकान्तिको ऽपि हेतुः स्यादिति दोषः । दिङ्नागस्येव प्रदेशान्तरहेतुलक्षणम् । साध्यधर्मः पक्षधर्मः । तदंशेन तस्यैव पक्षस्यांशेन साध्यधर्मसामान्येन व्याप्तो हेतुरिति । तदेव तद्धेतुलक्षणमुपन्य-स्यास्मिन् पूर्वोक्त दोषमतिदिशति एतेनेति । अतिदेशमेव स्फुटयति अव्या-पकादिरिति । यथानुमतलक्षणे पक्षाव्यापकस्य हेतुत्वं तद्वदेतिव्याप्तम् इत्य-स्य विपक्षालोचनेन सपक्षसत्त्वं विपक्षाच्च व्यावृत्तिरित्यर्थः । तथा च पूर्वोक्त-दोषप्रसङ्ग इत्यर्थः । सिंहावलोकितन्यायेन दूषयति असंस्तवरूपत्व इतीति । अन्येषां हेतुलक्षणं दूषयितुमुपन्यस्यति तादृगिति । तदेतद्व्याचष्टे तादृगेति । किंकारो ऽन्यचो । पक्षधर्म इति च हेतोरभिधानं तेन त्रिलक्षण प्रविभा-गात्मा हेतुरित्यर्थः । दूषयति यत्तावदिति । श्रावणत्वादपीति । सद्भूता-ऽसाधारण इत्यर्थः । यस्तु तादृगविनाभावीति विपक्षे सत्ताप्रतिषेधात् पक्षे सत्त्व गम्यते विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वादिति मन्येत तं प्रत्याह भवतु तावदिति । एकदेशाभ्यनुज्ञाने ऽपि विशेषनिषेधस्योपपत्तेर्न समस्ता-भ्यनुज्ञाने प्रमाणमस्तीति भावः । चोदयति ननूपदर्शनग्रहणादिति । परिह-रति न तल्लभ्यत इति । न हि चाक्षुषत्वमिति । चाक्षुषत्वं रूपत्वादिजातेर्नि-त्याया अभावात् न चाक्षुषत्वमनित्यत्वेन विना भवतीत्यर्थः । यस्तु मन्येत विशेषनिषेधस्य शेषमात्राभ्यनुज्ञाहेतुत्वेनागृह्यमाणविशेषत्वात् पक्षसत्ताभ्यनु-ज्ञानं तथा चोपदर्शनपदेन पक्षे हेतोः सत्त्वोपदर्शनं भवतीति तं प्रत्याह उपेत्य चेति । सुबोधम् । तदेवं लक्षणं दूषयित्वा तदुदाहरणं दूषयति यत्त्विदमिति । १ एतस्मिन् हेतुलक्षण इत्यर्थः । प्रयत्नानन्तरीयकत्वं प्रयत्नकारणकत्वं तत्साधा-

---

* इदं सु. भा. पु. नास्ति ।

त्पारपर्येण वा तत्र प्रथमे कल्पे दूषणमाह **प्रयत्नानन्तरीयकत्वस्येति** । द्विती-
यकल्पमाशङ्क्य दूषयति । **अथेति** । प्रयत्नपदश्रवणमपार्थकमित्यर्थः । भावप्रत्ययवाच्य
विकल्प्य दूषयति **यथेदमिति** । **एवमप्युपलब्धेरेवेति** । न हि बौद्धरा
द्धान्ते कि चिदुपलभ्यमान नित्यमस्ति येनोपलब्धिविशेष्येत इत्यर्थः । **प्रय-
त्नानन्तरमन्यथा चेति** । यद्यपि उपलब्धिकर्म तत्तथा प्रयत्नादेव पुरुषव्या
पारादेवोपलभ्यते नान्यथेत्यर्थः । शङ्कते **अथेति** । अस्माकं नैयायिकानामिति
भाव । उत्तर **यैवेति** । अस्मद्दूषणेन चेदास्थाय त्वया बौद्धेनोच्यते ततः प्रयत्न-
द्वयेनाप्यनैकान्तिकत्व तदवस्थमेवेत्यर्थ' । **अव्यापकं चेति** । न हि दवदहना
भिघात' प्रस्फुटद्वेणुदलविभागजन्मा टात्कारो ऽस्मदादिप्रयत्नसाध्य इत्यर्थ ।
शङ्कते **अथेति** । वर्णात्मकमित्यर्थः । निराकरोति **तत्रापीति** । पारम्पर्येणापि
प्रथम एव वर्णः प्रयत्नानन्तरीयक' न द्वितीयादय अतिपारम्पर्य्यावयवे त्वति-
प्रसङ्गः प्रायेण तस्य तत्र तत्र सुलभत्वादिति । शङ्कते **अथ च इति** । विशेष'
प्रयत्नानन्तरीयकत्व धर्मिविशेषण प्रयत्नानन्तरीयकत्व सामान्य च हेतु
रित्यर्थ' । निराकरोति **तथा ऽप्यन्य इति** । न हि भवतामस्माकमिव
विशेषातिरिक्तमस्ति वस्तु सामान्य सद् यो हेतु स्यात् । न च कल्पनारो-
पित हेतु. सम्यग्ज्ञानस्य भवितुमर्हति न चात्यन्तासत. कल्पना ऽपि सम्भ-
वतीति भाव । तदेवमुदाहरणं दूषयित्वा प्रसङ्गेन परेषामुदाहरणविचार दूष-
यति **यदप्युक्तमिति** । यत् खलु सर्वसामर्थ्यरहित तदाश्रितानाश्रितभावाभा-
वधर्मरत्न भवतीत्यर्थ । **नित्यं तु किं चिद्भवतीति** । तस्य धर्मयोग सम्भव
त्येव न त्वस्याप्यप्रयत्नानन्तरीयकत्व त्वप्रत्ययाभिधेय हि जन्म प्रयत्नेन प्रय
त्नादन्येन वा विशेषणीयम् । यस्य [illegible] जन्मैव नास्ति तस्य तद्विशेषण दूरो-
त्सारितमित्यर्थः । **एतेनाभाव इति** । नैयायिकाभिमतो ऽप्यभावो व्या-
ख्यात: तस्यापि हि प्रागसत स्वकारणेन समवाय इति जन्म नास्तीति न
तद्विशेषणयोग इत्यर्थ' । प्रकृतमुपसहरति **तदेवमिति** ।

हेत्वाद्युक्ते नाव्याप्तो ऽसौ साध्यधर्मेण हेतुभावे व्यवतिष्ठते न च व्याप्ति-
प्रदर्शनमुदाहरणमन्तरेणेति हेतुलक्षणानन्तरं क्रमप्राप्तमुदाहरणलक्षणमाह ।

**साध्य–रणम्** (सू. ३६)॥ सूत्रमित्युदाहरणसामान्यलक्षणमप्यनेन
। ५ सूचितमिति दर्शितम् । अस्य तात्पर्यमाह **अस्येति** । दृष्टान्तानुरूपो नोदा-

हरणस्य वचनात्मकस्य स्वरूपतो लक्षणं संभवति तस्मात् स्वाभि-
धायकवचनोपलक्षकत्वेन लक्ष्यस्य सामानाधिकरण्यं भजमानत्वमभिसंधि-
नोक्तमुदाहरणोपलक्षणमिति । अनेन च समानजातीयेभ्यः प्रति- १२१
ज्ञादिभ्यो ऽसमानजातीयेभ्यश्च प्रमाणादिभ्य उदाहरणं व्यवच्छिन्नं भव-
ति । **साध्येन साधर्म्यमित्यादि** भाष्यं तस्यार्थः साध्येन धर्मिणा
शब्देन साधर्म्यं दृष्टान्तस्य स्थाल्यादेः कृतकत्वं तद्ध्यनित्यत्वेन साध्ये
च शब्दे दृष्टान्ते च स्थाल्यादौ समानं तस्मात् कारणात् प्रयोजकात् तद्ध-
र्मभावी तस्यैव साध्यस्य शब्दस्य धर्मो धर्मान्तरं येन विशिष्टः शब्दः सिषा-
धयिषितो ऽनित्यत्वेन तदनित्यत्वं तद्धर्मः स एव भावस्तद्भावः सो ऽस्या-
स्तीति तद्धर्मभावी स्थाल्यादिरनित्यत्वधर्मवानिति यावत् । तेन तादृशा
दृष्टान्तेनोपलक्षितं तद्विषयं वचनमुदाहरणमिति । तत्र वार्तिककारः सूत्रपदं
व्याचक्षाण एव फलतो भाष्यं व्याचष्टे साध्येति । उदाहरणसाधर्म्यादित्यस्य
व्याख्यानं साध्यसाधर्म्यादित्यथापि बोधयति **अत्रापीति** । साध्यशब्देनैव
कृतकत्वं साधर्म्यं दृष्टान्तस्य नासाध्येन विपक्षेणाकाशादिना नित्येन ततो हि
कृतकत्वं व्यावृत्तमिति तथा च व्यभिचारो व्यवच्छिन्नो भवति । साधर्म्यमे-
वेति भागासिद्धो व्यवच्छिन्नः यस्मात्साध्यात्साधर्म्यं तद्धर्मभावी भवतीत्ये-
तस्मो ऽयं दृष्टान्त उदाहरणमिति यावद्वाक्यं न समाप्यते तावद्बौद्धस्य
पृच्छति किं कृतकत्वादिति । अवधारणद्वययोगिनः साध्यसाधर्म्याद्दृष्टान्तो
ऽवश्यमेव तद्धर्मभावी भवतीति गतार्थं तद्धर्मभावीत्येतदिति भावः । उत्तरं ११
न भवत्यपीति । यथा नित्ये शब्दे साध्ये ऽमूर्तत्वादेः साध्येन शब्देन
सर्वथा साधर्म्यात् कर्म न तद्धर्मभावि भवति नित्यं न भवतीत्यर्थः । साध्ये-
नैवेत्यवधारणेनैवैतदुदाहरणं प्रत्युक्तमिति । शिष्योपाध्याययोरत्यन्तमेवासनय-
स्त्वादयो ऽप्यौपाधिकसम्बन्धा उदाहार्याः । हेतुलक्षणे तु सामान्यलक्षणापेक्षं विशे-
षलक्षणमिति नातिव्याप्तिः । अत्र साध्यसाधर्म्यपदेन साधनविकलमनु-
दाहरणं भवतीत्युक्तं भवति । यथा नित्यः शब्दो ऽमूर्तत्वात्परमाणुवदिति
तद्धर्मभावीत्यनेन साध्यविकलं परास्तम् यथा नित्यः शब्दो मूर्तत्वात्कर्मव-
दिति । एतेनोभयविकलमपि परिहृतं यथा नित्यः शब्दो ऽमूर्तत्वात् घटवत् ।
पञ्चम्युपादानेन च साध्यसाधर्म्यप्रयुक्तं तद्धर्मभावित्वं यत्र वचने प्रदर्श्यते

तदेवोदाहरणं नान्यदिति दर्शितं भवति । प्रयोजकत्वं च साध्यसाधर्म्यस्य हेतोः स्वाभाविकः सम्बन्धो व्याप्यत्वमिति यावत् । प्रयोज्यत्वं च साध्यसाधर्म्यस्य व्यापकत्वमिति यावत् । तेनाप्रदर्शितान्वयविपरीतप्रदर्शितान्वययोरनुदाहरणत्वमुक्तं भवतीति । तद्यथा अनित्यः शब्दः उत्पत्तिमत्त्वात् घटवदिति । यो यो ऽनित्यः स स उत्पत्तिमान् यथा घट इति समाख्यानिर्वचनसामर्थ्यात् सामान्यलक्षणमप्यनेन सूचितमित्याशयवता भाष्यकृता समाख्यानिरुक्तिः कृता तां वार्त्तिककारो दर्शयति उदाह्रियते ऽनेनेति । चोदयति ननु चेति । परिहरति नैष दोष इति । वचनस्य विशेषणत्वेनोपलक्षणत्वेनेत्यर्थः । अभिधीयमान इति चाभिधानोपलक्षणपरं नाभिधेयपरम् । असामानाधिकरण्यदोषस्य तावदयस्यात् तद्धर्मभावीति सूत्रावयवव्याख्यानपरं भाष्यं तस्य धर्म इत्यादि । अत्र चोत्तरमिति पाठाभिप्रायं तदेतद्भाष्यमनुभाष्य व्याचष्टे तस्य धर्म इति । तस्य धर्मस्तद्धर्म इति हि धर्मस्य सम्बन्धित्वेन पृथग्वचनम् । न च धर्म एव धर्मस्य नापि धर्मान्तरं धर्मस्य किं तु धर्मिण इत्यर्थः । भाष्यकारीयामनुपपत्तिमुक्त्वा वार्त्तिककारः स्वकीयामप्याह धर्मे च साध्य इति । अनेन हेतूदाहरणयोरनयलक्षणयो*र्व्याघात उक्तः । भाष्यं साध्यसाधर्म्यादुत्पत्तिधर्मकत्वादिति तद्व्याचष्टे तस्य धर्मिण इति । तद्धर्मभावी भवतीति तदनुपपन्नं न हि कृतकत्वात् स्थाल्यादेरनित्यत्वं भवति जायते बीजादिवाङ्कुर इत्यत उक्तं भवति विद्यते वैधर्म्योदाहरणस्य लक्षणम् ।

तद्वि–तम् (सू. ३७) ॥ अनुवृत्तेन पूरयित्वा सव्याख्यानसूत्रं पठति
६ साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति । सात्मकतया साध्येन जीवच्छरीरेण वैधर्म्याद् घटादेर्दृष्टान्तस्य सात्मकत्वसाधर्म्यविरहादिति यावत् । तस्य साध्यस्य जीवच्छरीरस्य धर्मः प्राणादिमत्त्वं तद्धर्मः स एव भावस्तद्धर्मभावः सो ऽस्यास्तीति तद्धर्मभावी न तद्धर्मभावी अतद्धर्मभावी प्राणादिरहितो घटादिरिति यावत् । एतदुक्तं भवति । यत्र घटादौ साध्यधर्माभावप्रयुक्तः साधनधर्माभावः स घटादिर्वैधर्म्यदृष्टान्तः तद्विषयः शब्द उदाहरणमिति । सूत्रस्थश्च चाशब्दः समुच्चये वेदितव्यः । व्यतिरेकविषयत्वाद्वैध-

* पूर्वो इति ३ पु पा० ।

१८ पपाद्य परेषां लक्षणं दूषयितुमुपन्यस्य व्याचष्टे तथा सिद्ध इति । यथा च स एव साध्यो विशिष्ट प्रत्ययभेदाभेदित्वेनेति प्रत्ययः कारणं तदेतत्साध्यसाधनधर्मत्व दृष्टान्तस्य बौद्धराद्धान्ते ऽव्यापकं स्थाल्यादौ दृष्टान्ते कृतकत्वानित्यत्वरूपसाध्यसाधनधर्मत्ववैकल्यात् प्रागभावो हि स्थाल्याः कृतकत्वं प्रध्वंसाभावश्चानित्यता राद्धान्ते बौद्धानां न चैवमुभयं स्थाल्यामस्ति तस्याः स्वाभावविरोधित्वादिति दूषयति अत्र विस्फूर्जता ऽपीति । एतेनेति । अव्यापकत्वेन निर्दिश्यते ऽस्मिन्ननेन चेति । निदर्शनं साध्येनानुगमो हेतोः साध्याभावे च नास्तितेति च प्रत्युक्तं कृतकत्वानित्यत्वयोः स्थाल्यासम्भवदर्शनादव्यापकत्वेन अस्मद्राद्धान्ते यथा तयोः स्थाल्यादौ सम्भवः तथोक्तं हेतुलक्षणसूत्र इति । भाष्ये पण्डितरूपवेदनीयमिति । प्रशस्तपण्डितवेदनीयमित्यर्थः । स्वप्रतिपत्तौ व्याप्तिस्मरणानन्तरं तथा चायं न तथेति वा परामर्शं ज्ञानोत्पादात् उदाहरणवचनस्य च व्याप्तिनिपादकत्वात् परामर्शज्ञाने हेतोरुपनयस्योदाहरणपूर्वकत्वनियमाद् उदाहरणानन्तरमुपनयं लक्षयति ।

उदा-यः (सू. ३८) ॥ अपेक्षापदं भाष्यकृद्व्याचष्टे उदाहरणतन्त्र इति । उदाहरणवशं परतन्त्र इति यत्र वशिनं उदाहरणस्य यस्य इत्यर्थः । एतदेव कर्मणो ऽभावं निष्कृष्य विवृणोति यथाः सामर्थ्यं धर्मेण उदाहरणस्य फले न उपनयेनाभिसम्बन्ध इत्यर्थः । तथात्वातथात्वयोर्विषयं विभजते साध्यसाधर्म्ययुक्त इति । ननु हेतोरुपसंहार उपनयो न साध्यस्य तथा चानुपपन्नः साध्यस्योपसंहार इत्यत उक्तं साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमिति उदाहरणसिद्धव्याप्तिहेतुमत्तया साध्यमुपसंह्रियते न स्वरूपेणेत्यर्थः । अथाप्युदाहरणापेक्ष उपसंहार उपनय इति सामान्यलक्षणम् । तथा न तथेति चेति सामान्यलक्षणापेक्षे विशेषलक्षणे इति बोद्धव्यम् । अत्र के चिदाहुः हेतुवचनादेव बोदाहरणात् साध्यसिद्धेरसाधनाङ्गमुपनय इति तन्निराकर्त्तुमाह वार्त्तिककारः यथा तथेति । प्रतिबिम्ब-

० । ५ नार्थे तदेतत् प्रश्नपूर्वकं विभजते किं पुनरिति । तदनेन व्युत्पन्नाव्युत्पन्नतया परेषामनियमप्रतिसाधनत्वात् स्वप्रतिपत्त्यनुसारेण परो बोधयितव्यः व्याप्तिस्मरणानन्तरोत्पन्नलिङ्गपरामर्शपूर्वकश्च स्वयमनुमेयार्थप्रत्यय इति

तथैव परे बोध्यन्ते । तथा च परामर्शज्ञानहेतोरुपनयस्य सिद्धमर्थवत्त्वम् । १४० ।
न च यथा लिङ्गपरामर्शज्ञानान्वयव्यतिरेकानुविधानमनुमेयज्ञानस्य तथा दधि-
भक्षणाद्यनुविधानमपि येनातिप्रसङ्गश्चोद्येतेति । प्रयोजनान्तरमुपनयस्याह
**साध्ये वा संभव** इति । चोदयति **ननु चे**ति । यद्यपि साधनतया कृतक-
त्वमुक्तं प्रतिज्ञानन्तरं प्रतिपत्तुः साधनस्यैवापेक्षितत्वात् तथा ऽपि तद्वासिद्धं
तच्च साधनत्वेन व्यवतिष्ठत इति स्वसिद्धिमाक्षिपति सामर्थ्यादिति भावः । परि-
हरति **नोक्त** इति । यत्परः शब्दः स शब्दार्थ इति शाब्दाः । साधनत्वपरश्च
कृतकत्वादिति सामर्थ्यादेवोदाहरणमपि न प्रयोक्तव्यम् । अथापि
साधनत्वसामर्थ्याद्विशेषाद् अव्याप्तस्य साधनत्वायोगात् तद्विषयस्यापि प्रमेय-
त्वादेः शब्दनित्यत्वादौ साधनत्वभ्रमेण प्रयोगो ऽसिद्धे ऽपि तुल्य इति
व्याप्तिप्रदर्शनार्थोदाहरणप्रयोगवद्धेतोः सिद्धत्वप्रतिपादनाय उपनयस्यापि
प्रयोग इति रमणीयम् । निगमनलक्षणावसरे भाष्ये द्विविधस्य पुनरिति ।
साधर्म्येण वैधर्म्येण द्विविधानामपि हेतूदाहरणोपनयानां समानं निगमन-
लक्षणमित्यर्थः ।

हेत्व–नम् (सू. ३९) ॥ तस्मादिति । हेत्वपदेशात्कृतकमनित्यः
शब्द इति प्रतिज्ञायाः पुनर्वचनम् । यद्यपि च सिद्धनिर्देशो निगमनं साध्यनि-
र्देशश्च प्रतिज्ञा तथा ऽपि यस्यैव प्रतिज्ञायां साध्यत्वमासीत् तस्यैव निगमने
सिद्धत्वमित्यवस्थाभेदमनाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते
तथा च पुनर्वचनमप्युपपन्नं तदेतद्भाष्यकारो व्याचष्टे **साधर्म्योक्त** इति ।
व्युत्पादयति **निगम्यन्त** इति । साधर्म्यवैधर्म्ययोः प्रतिज्ञातः प्रभृति निग-
मनान्तं प्रयोगमाह **तत्रे**ति । तत्र प्रथमसूत्रवदेव यथास्वमवयवेषु प्रमाणानां
परमन्यायं स्तोतुं समयमाह । **अवयवसमुदाये चे**ति । **आप्तोपदेशस्ये**-
ति । तद्देश वेदमेतमसाधीदित्यादेरुपदेशस्य प्रत्यक्षानुमानाभ्यां प्रति-
सन्धानात् । ननु कस्मात् प्रतिज्ञायामाप्तोपदेशो न भवति कृतमस्या आगमान्तर-
विषयत्वेनेत्यत आह । **अनुपेक्षे**ति । अनुमानं हेतुः । स्यादेतद् द्वितीयं
लिङ्गदर्शनं हेतुर्न च तदनुमानं तृतीयस्योपनयविषयस्य लिङ्गदर्शनस्य तथा-
भावादित्यत आह **उदाहरण**मिति । उदाहरणे दृष्टान्तधर्मिणि साध्यसाध-
नयोः प्रतिबन्धं सादृश्य सम्यग् दृष्ट्वा लिङ्गस्य प्रतीतेः । यदुक्तं भवति

यद्यपि त्रयाणामपि लिङ्गदर्शनानां सस्मृतीनामनुमानत्वं तथाऽपि तदेक-
देशे मध्यमेऽपि लिङ्गदर्शने समुदायोपचारादनुमानव्यपदेश इति प्रत्यक्षवि-
षयमुदाहरणं कस्मात् दृष्टेनोदाहरणे प्रतिबन्धेनादृष्टसाध्यधर्मिण्यनुमेयस्य
सिद्धेः यदि पुनर्न मूलं प्रत्यक्षमाश्रीयेतानवस्थया नादृष्टं सिद्ध्येदिति भावः ।
निगमनप्रयोजनं प्रतिपादयति **सर्वेषामिति** । प्रतिज्ञादीनामुपनयान्ताना-
मेकोऽर्थः स्वभावप्रतिबद्धं लिङ्गं वा अनुमेयं वा तस्य प्रतिपत्तिः तस्यां
सामर्थ्यप्रदर्शनं निगमनमिति तदनेनैकार्थत्वं दर्शितम् । द्विविधं हि प्रयो-
जनं तत्रावान्तरं स्वभावप्रतिबद्धं लिङ्गप्रतीतिः परमं च साध्यप्रतीतिरिति
संप्रति विभागे साकाङ्क्षत्वं दर्शयति । **इतरेतराभिसंबन्ध** इति । अभिसं-
बन्धेन फलेनाकाङ्क्षामुपलक्षयति **असत्यामिति** । प्रथमं हि प्रतिज्ञापदं तदु-
त्तरकालं हि साधनाकाङ्क्षायां प्रतिज्ञामाश्रित्य हेतुपदं प्रवर्तते न पुनः प्रथ-
ममेव हेत्वपेक्षेति हेतुलक्षणेऽस्माभिः प्रतिपादितमिति । हेतुपदविरहे
आकाङ्क्षां दर्शयति । **असति हेताविति** । उदाहरणाभावेऽप्यपेक्षामाह
**असत्युदाहरणे** इति । उपनयाभावेऽप्यपेक्षामाह **उपनयं चान्तरेणेति** ।
निगमनाभावेऽप्यपेक्षामाह **निगमनाभावे चेति** । अवयवानां प्रातिस्विकं
प्रयोजनमुक्तमपि विस्पष्टितया भाष्यकारः प्रतिपादयति **अथेति** । पञ्चावय-
वप्रतिपादनप्रयासस्य प्रयोजनं दर्शयति **न चैतस्यामिति** । कथं पुनः प्रज्ञ-
मत इत्यत आह **अव्यवस्थाप्येति** । व्यवस्थापिते न जातेरवसर इत्याह
**व्यवस्थिते हीति** । अथ के चिदाहुः निगमनमसाधनाङ्गं कथं प्रतिज्ञया
गतार्थत्वादिति तन्मतमपाकर्तुं वार्त्तिककारः सप्रयोजनं निगमनं दर्शयति
१५ **प्रतिज्ञाविषयस्यार्थस्येति** । चतुर्भिः खल्ववयवैर्हेतोस्त्रीणि रूपाणि द्वे वा
प्रतिपादिते न त्वबाधितविषयत्वासत्प्रतिपक्षितत्वे । पञ्चसु वा चतुर्षु वा
रूपेषु हेतोरविनाभावः परिसमाप्यते तस्मादबाधितत्वासत्प्रतिपक्षितत्वरूपद्व-
यसूचनाय निगमनं तदिदमुक्तं **विपरीतप्रसङ्गप्रतिषेधार्थमिति** । साधने
प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति । सोऽयं प्रतिज्ञाविषयार्थस्य अशेष-
प्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयस्यार्थस्य सिद्धतया पुनर्वचनेन निगमनेन
प्रतिविध्यते । न च प्रतिज्ञावचनादेव तत्सिद्धिः तस्य साध्यपरत्वात् । न चा-
न्यपरादप्यवान्तरसिद्धिः हेत्वादिप्रयोगवैयर्थ्यप्रसङ्गात् प्रतिज्ञात एव सर्वोप-

संभवात्। तस्माद् रूपद्वयप्रतिपादनार्थं निगमनं यथा च पैङ्ग्यातिरिक्तमेतद्रूप-
द्वयं तथोपपादितमस्माभिः प्रथमसूत्रे। हेत्वाभासेषु च शेषं दर्शयिष्यत इति।
यदस्मिन् सूत्रार्थे परस्य प्रतिज्ञायां निगमनं गतार्थं मन्यमानस्यावकाशो
नास्ति। यत्तु मन्येत न हेतोरविनाभावसिद्धिमन्तरेण सिद्धिनिर्देशो निगमनं
भवति न च पक्षद्वयं विना अविनाभावसिद्धिः निगमनात्तु तत्सिद्धौ न
सिद्धनिर्देशो निगमनमपि तु तदपि साध्यनिर्देश एवेति तं प्रत्युपेत्य तदीयमनि-
राचिकीर्षया परेषां वाक्यमुपक्षिप्यते। परेषां वाक्यं पठति उपनयनिगमने १४०
स्त इति। दूषयति इदं तावदिति। यथाश्रुति निगमनोपनययोरभेदं साधयति
अर्थगतं चाविशेषं हेतुमाह तद्वत्प्रतिज्ञानिगमनयोरैक्यं वाक्यस्य कार्यं द्विरवदा-
पतितम्। शङ्कते अथ हेतूपनयाविति। उपलक्षणं चैतत् प्रतिज्ञानिगमने
अस्यापि द्रष्टव्यम्। अर्थाविशेषादिति अविशिष्टार्थत्वादित्युन्नेतव्यम्। तथा
च सधन्य भवति वह्निमुरभिप्रायः। अत्रापि दोषमाह स विपक्ष इति। पुनः
शङ्कते अर्थैकप्रयोजनत्वेनेति। निराकरोति तथापीति। भिन्नार्थैकप्रयो-
जनत्वे साध्ये हेतोरविरोधो हेतुस्तु न प्रतिज्ञार्थादतिरिच्यत इत्यर्थः।
तदर्पितमिति। अन्यत्र हेत्वर्थो ऽन्यत्रोपनयार्थ इत्येतद्दर्शितमित्यर्थः।
एतेनोपनयनिगमनप्रयोजनाभिधानेन ये त्र्यवयवं वाक्यमाहुस्तान्प्रत्यपास्त-
मित्याह। पक्षधर्मत्वेति। यत्तु परैरुपनये दूषणं विकल्प्याभ्यधायि तत्तावदु-
पन्यस्यति यदपि यथा तथेति। सर्वसामान्ययोगे हि तदेव स्यान्न तु तथेति
अन्यथा शब्दस्य कृतकत्वादिति न हि यथा घटः कृतकः तथा शब्दो ऽपि
कृतकः घटशब्दयोरभेदप्रसङ्गादित्यर्थः। तस्मात्सामान्यप्रतिषेधे विशेषप्रतिषे-
धे च कृतकत्वसामान्य परिशिष्यते तस्य च यथातथाभावयोरभावात्कृतकत्वा-
दित्येव स्यात् तथा न हेत्वर्थातिरेक उपनयः स्यादित्याह परिशेषा-
दिति। तदेतत्परेषां दूषणं निराकरोति तदप्ययुक्तमिति। यथा तथेति १४१
वाक्यमुपमानैकदेशमुपमानमुपचाराद् उपमानमर्थो यस्य सो ऽयमुपमा-
नार्थ उपनयः तस्य भावस्तत्त्वं तस्मात् तदुपमाने न सर्वथा साध्यसाधन-
साधर्म्यमाश्रित्य प्रवर्तते साध्ये शब्दे साधनस्य कृतकत्वस्य स्थालीगतस्य यः
सर्वथाभावः स्थालीत्वाद्यर्थसमवायः तमाश्रित्य न प्रवर्तते तथा च
शब्दस्थाल्योरभेदप्रसङ्गात्

व्युदासेन कृतकत्वसामान्यमात्रसाधारण्येन यथातथेत्युपमानोपपत्तिरित्यर्थः ।
नन्वेवमपि कृतकत्वसामान्यमात्रं शब्दे स्यान्न तु यथातथाभाव. तथा च
२ न हेतोरतिरेक इत्युक्तमत आह **कृतकत्वसामान्यं त्विति** । न हि
जातु शालेयसन्निधौ गोत्वसामान्यमात्रं भवत्यपि तु विशेषसहितं तथा च
यथाभाव उपपन्न इत्यर्थः । एतेन यत्परैरुपनयस्य दृष्टान्तादभिन्नत्वं वर्णितं
तदपि परास्तमित्याह **गतार्थत्वादिति** । अनेनोपमानसमानत्ववर्णनेन एत-
देव विभजते **यदप्युक्तमिति** । व्याप्तिप्रदर्शनविषयो दृष्टान्तः दृष्टव्याप्तिकस्य
हेतोः साध्यधर्मिण्युपसंहार उपनय इति महान् भेद इत्यर्थः । एतेन निगमन
प्रतिज्ञायाः समानाभिधेयत्वे ऽपि प्रतिज्ञार्थत्वेन प्रयुक्तम् । प्रतिज्ञायाः साध्यपर-
त्वाद् निगमनस्य विपरीतशङ्कानिवृत्तिपरत्वादिति प्रयोजनभेदसामान्यमात्रविव-
क्षया गतेनेत्युक्तम् । अथ भाष्यकारैरेकस्मिन्नन्वयव्यतिरेकिण्येव वीतावीतयो-
रपि पञ्चावयवे उदाहृते तत्र कदा चिद् भ्रान्तिः स्यादेकोदाहरणतया द्वे
अपि वाक्ये परस्परापेक्षे यथेति तन्निराकरणायाह ते एते इति । न पुनर-
न्वयि व्यतिरेकि चेत्येकं वाक्यमित्यर्थः । अथ भाष्यं तर्कलक्षणावतारपरम्
**अत ऊर्ध्वमिति** । उद्देशक्रमानुसारेण ।

**अवि-तर्कः** (सू ४०) ॥ तर्कप्रवृत्तिक्रममाह **अविज्ञायमानत-
त्त्वे ऽर्थे** इति । यद्यपि संशयस्य पश्चादेव जिज्ञासा भवति तथा ऽपि जिज्ञासा-
याः परस्तादपि संशयो भवति स चात्र विवक्षितः तर्कप्रवृत्त्यङ्गत्वात् तर्कस्य हि
प्रसङ्गापरनाम्नो द्वयोः पक्षयोरेकतरनिषेधेनैकतरः प्रमाणविषयतया ऽभ्यनुज्ञा-
तव्य इति विषयव्यवस्थया तर्कप्रवृत्तिः प्रत्यङ्गता संशयस्येति । कारणोपपत्त्येति
व्याचष्टे **संभवत्यस्मिन्कारणं प्रमाणमिति** । अत्र च कारणव्याख्यानं **प्रमा-
णमिति** उपपत्तिव्याख्यानं **संभवतीति** अनुज्ञाव्याख्यानम् **एवमेतन्नेतर-
दिति** । एतदुक्तं भवति । यस्मिन्विषये प्रमाणं प्रवर्तितुमुद्यतं तद्विपर्ययाशङ्कया
न तावत्प्रवर्तते न यावदनिष्टापत्त्या विपर्ययाशङ्का ऽपनीयते तदपनय एव च
स्वविषये प्रमाणसंभव इति चोपपत्तिरिति व्याख्यायते । तथा प्रमाणस्योपपत्त्या
इतिकर्तव्यतया प्रमाणस्याभ्यनुज्ञातस्य निर्णीते विषये प्रमाणमप्रत्यूहं
प्रवर्तते । न चोपपत्तिरेवास्तु निश्चयहेतुः कृतं प्रमाणेनेति वक्तव्यम् । उप
पत्तेः स्वतन्त्राया अप्रमाणसिद्धतया स्वतो निश्चयायोगात् तदुपपादितं प्रय-

मभ्युपैति । उदाहरणमाह निदर्शनमिति । स्वकृतस्य कर्मणः* इत्यादिना भा०
पूर्वस्य कारणमित्यन्तेन संसारो दर्शितः तत्त्वेत्यादिना ऽपवर्ग इत्यन्तेना-
पवर्गः । तेन संसारापवर्गौ विरुद्धौ वादिप्रतिवादिनौ प्रति आत्मनित्यत्वविषयं
प्रमाणं वर्त्तमानम् अनेन तर्केणानुगृह्यत इति प्रमाणविषयविपर्ययाननुज्ञैव प्रमा-
णविषयाभ्यनुज्ञा ऽनिष्टप्रसक्तविपर्ययस्यैव साक्षान्निवर्त्तनात् । अत एव भाष्ये
उपसंहारः † यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानातीति ।
ननु यदि तर्क एवमेतन्नेतरदित्येवमाकारः कथं पुनरयं तत्त्वज्ञानार्थो न तु
तत्त्वज्ञानमेवेति चोदयति कथं पुनरिति । परिहरति अनवधारणादिति ।
पर्यायैर्निरवधारणादत्यन्तभेद उक्तः भावितामुन्नितात् । अत एव प्रसन्नाद्वि-
मलादिति । प्रमाणस्य सामर्थ्यादिति तर्कस्य स्वातन्त्र्यमपाकरोति । स्यादेत-
द्यदि न तर्कस्तत्त्वनिश्चयसाधनमपि तु प्रमाणमेव हन्त भोः किमर्थं तर्हि
वादे प्रमाणतर्कसाधनेत्युक्तमित्यत आह सोऽयं तर्क इति । व्यत्यभिप्रायेण
प्रमाणानीति प्रमाणविषयविपर्ययाशङ्काविघटितानि प्रमाणानि प्रतिसंदधान
इत्यर्थः । वार्त्तिककारः सूत्रतात्पर्यमाह अस्येति । समानजातीयात्स्वयमादेरस- १४
मानजातीयाच्च रूपादेर्व्यवच्छिद्यते । यद्यपि संशयविज्ञाने ऽप्यविज्ञाततत्त्वे ऽर्थे
प्रवर्त्तेते तथा ऽपि न कारणोपपत्तित इति तयोर्व्यवच्छेदः । तत्त्वं व्याचष्टे
यथेति । समानासमानजातीयव्यवच्छिन्नमविपरीतं रूपं तत्त्वमित्यर्थः । चोद-
यति कुतः पुनरिति । न हि सामान्यज्ञानविधायकं पदमत्रास्तीत्यर्थः परि-
हरति अविज्ञातेति । विशेषनिषेधः शेषाभ्यनुज्ञाहेतुरित्यर्थः । विवृणोति
अविज्ञाततत्त्व इति । समासो ऽयमिति । अवधारयति षष्ठीविग्रहेणेति ।
युक्तमुपपन्नं तृतीयाविग्रहेण त्वनुपपन्नमित्यर्थः । संशयवादाह विशेषहेत्व-
भावादिति । युक्तमिति प्रतिज्ञामात्रेणोच्यते न त्वत्र हेतुरभिधीयत इत्यर्थः ।
युक्तत्वे हेतुमाह युक्तमर्थग्रहणसामर्थ्यादिति । अन्यश्चोदयति अर्थग्र-
हणमन्तरेणापीति । येन हि ज्ञानं निरूप्यते न ज्ञाता तस्य साधारण्या-
दिति सामर्थ्यमित्यर्थः । गूढाभिसंधिः परिहरति एवमपीति । तस्याभिसंधि-
भेदमुररीकृत्य चोदयति स मूलसमास इति । उत्तरवादाह भवत्येवेति । १५

---

* कुतस्येति १ पु० पाठः । † अत उपसंहारे भाष्यकार उपसंहरतीति १ पु० पा० ।
‡ तर्कमिति १ पु० पा० ।

नाथाप्यनेन स्वाभिप्रायो दर्शित इति मत्वा पुनश्चोदयति अनुक्तेऽपीति ।
उक्तपरिहारपूर्वं स्वाभिप्रायमुद्घाटयति अत्रोत्तरमिति । समस्तानभिधानप्र-
सङ्गाच्चेति स्वाभिप्रायोद्घाटनम् । एतदुक्तं भवति सामर्थ्यप्राप्तस्यानभिधानेति-
प्रसङ्ग इति न सामर्थ्यमाश्रित्य लक्षणे संशयो निराकरणीय इति तन्निरा-
करणार्थमर्थपदं कर्तव्यमिति । अथ चोदयति अविज्ञाततत्त्व इति न
वक्तव्यमिति* । न हि तत्त्वे ज्ञाते तत्त्वज्ञानार्थिता भवति तस्माद्गम्यते
अविज्ञाततत्त्व इति भावः । गूढाभिसन्धिरुक्तं परिहारं स्मारयति अत्र ताव-
दुक्तमिति । अविदिताभिप्रायश्चोदक आह मा भूदिति । अस्तूहस्तर्क इत्ये-
तावदेवेत्यर्थः । उत्तरवादी स्वाभिप्रायमुद्घाटयति न बुद्धिधर्मेति । यद्यपि
नास्माकं राद्धान्ते शुश्रूषादयो बुद्धिगुणा बुद्धितत्त्वस्यैवाभावात् तथाऽप्या-
त्मगुणा अपि साङ्ख्याभिप्रायेण बुद्धिगुणा उक्ताः । एतदुक्तं भवति यद्यूहस्तर्क
इत्येतावदुच्येत यदि वा तत्त्वज्ञानार्थमूहस्तर्क इत्येतावन्मात्रं ततो विज्ञा-
ततत्त्वेऽपि यदूहः पूर्वानुभूतपरिच्छेदात्मा जायते पुनस्तत्त्वज्ञानार्थं सो
ऽपि तर्कः स्यात् तस्मादविज्ञाततत्त्व इति वक्तव्यमित्यर्थः । यद्यपि कारणो-
पपत्तित इत्येतस्मादप्ययमर्थो गम्यत एव तथाऽपि कारणोपपत्तेरेवंरूपार्थं
नाविज्ञाततत्त्वपदग्रहणमन्तरेण भवति । तथा हि अधिगतपरिच्छेदात्मा ऽप्यूहः
कारणस्योपपत्त्या संभवेन जायते कारणासंभवे कार्यस्यासंभवात् न त्वविज्ञा-
ततत्त्व इति ततो व्यवच्छेदः । तथा च सति प्रमाणमपि तर्कः स्यादत
उक्तं कारणोपपत्तित इति । उक्ते अपि प्रयोजनानुवृत्त्या न त्विह लाघवादरः
सूत्रकारस्येति मन्तव्यम् । चोदयति षष्ठ्याभिधानमिति† । परिहरति न
विभक्तिव्यत्ययादिति । यथा ऽन्यत्र कणभुजः सूत्रे विप्रतिपन्नः पृच्छति
कस्मात् । प्रत्येकमन्येनाह यदि व्यत्ययेनेति । परिहरति न युक्त इति ।
सामान्येनाधिगतस्य विशेषेण ज्ञापनार्थम् । नित्यत्वादयो विशेषाः समवा-
यिनः पक्षादयश्च धूमादिसंयोगिन इति । शेषं सुगमम् । दर्शयति ऊहः
संशयनिर्णयाभ्यामिति । केचित्सिद्धान्तैकदेशिनो ऽनुमानं तर्क इत्याहुः ।
अन्ये त्वनुमानमेव मुख्यपक्षे विपर्यये ऽनिष्टप्रसङ्गापेक्षं तर्क इति वर्णयन्ति ।
१८ तत्र प्रथमचोदकं प्रत्याह यत्तावदिति । आक्षिप्य आक्षिप्तहृदय. न [illegible] तर्क-

* वक्तव्यमिति च पाठो मु. पा. पु. न दृश्यते । † षष्ठ्यानभिधानमिति ३ पु. पा. ।

प्रत्ययस्वरूपं चेतयत इत्यर्थः । विशेषदर्शनादिति । विशेषदर्शनान्निश्चयः १४४ ।
प्रमाणेन भवति न तर्कात् तदनुज्ञानमात्रत्वात् तर्कस्येत्यर्थः । चोदकं निरा-
कृत्य सिद्धान्तैकदेशिनं निराकरोति एतेनेति । यदि संशयात्प्रच्युतो निर्णयं
चाप्राप्तस्तर्हि तस्य स्वरूपं वक्तव्यमिति पृच्छति किं पुनरिति । उत्तरं भवे-
दिति । प्रमाणविषयाभ्यनुज्ञेत्यर्थः । द्वितीयमेकदेशिनं निराकरोति यैरपीति ।
युक्तिर्हि प्रमाणोपपत्तिस्तज्जन्मा च प्रत्ययस्तर्कः यश्च स चानुमानमिति त्वयो-
च्यते अस्माभिस्तु तर्क इति संज्ञाभेदमात्रमित्यर्थः । शङ्कते अथेति । निराकरोति
अनुमानमिति । प्रमाणोपपत्त्यतिरिक्ताया युक्तेरनिरूपणाद् युक्त्यर्थो वक्तव्यः
न ह्यपेक्षणीयमन्तरेणापेक्षा शक्या निरूपयितुमिति भावः । ननु यदेव किं-
चित्स्वविषयाधिगमे ऽनुमानमपेक्षते सैवापेक्षणीया युक्तिरनुमानस्य भविष्यती-
त्यत आह स्वविषयाधिगमे चेति । शङ्कते अथेति । निराकरोति एवमपीति ।
यद्युत्पत्तौ प्रत्यक्षागमापेक्षमनुमानं न वक्तव्यं युक्त्यपेक्षमिति सर्वस्यानुमानस्य
तदभावे ऽव्यभिचारेण विशेषणायोगादिति भावः । पुनः शङ्कते अथानुमान-
स्येति । निराकरोति तत्रापीति । एवमपि तर्को नार्थान्तरं स्यादनुमानभेदस्य
चेदृशस्य प्रमाणत्रयान्तर्भाव इति भावः । कतमयं प्रमाणानि भवेदिति । प्रत्य-
यो ऽवधारणप्रत्ययश्चेत्यर्थः । चोदयति अनुमानमिति । विपर्ययो ऽनिष्टप्र-
सङ्गो व्यतिरेकी लिङ्गं तद्गृहीतसंबन्धं लिङ्गिनि न प्रवर्तत इति लिङ्गलिङ्गिसंब-
न्धस्मृत्यपेक्षत्वात् *प्राणादिमत्त्वप्रसङ्गादितिवदनुमानमेवेत्यर्थः । परिहरति न
तर्क इति । युक्तं व्यतिरेकिणि जीवच्छरीरे धर्मिणि प्राणादिमत्त्वस्य साधनधर्मस्य
दर्शनान्न तु यद्युत्पत्तिमानात्मा ऽभविष्यन्न संसारापवर्गावुपपत्स्येतामित्यत्रात्म-
नि धर्मिणि साधनधर्मे उत्पत्तिरस्ति यद्दर्शनतः संस्कारोद्बोधे सति लिङ्गलिङ्गि-
संबन्धस्मृतिर्भवेदित्यर्थः । न केवलं प्रसङ्गसाधने साध्यधर्मिण्यसिद्धमपि त्वन्य-
गत एव प्रसङ्गहेतुः न त्वनुमानमन्यगताद्धर्मात् प्रवर्तते तस्मादनुमानादस्य
स्फुटो भेद इत्याह अनुमानं चेत् । भाष्यव्याख्यानं सो ऽयमिति । नैतद्वि- १४५ ।
संशयमात्रस्य लक्षणमपि तु परीक्षाप्रयोजनस्य स च निर्णयो विमर्शानन्तरोत्पन्नतर्क-
सहायप्रमाणनिबन्धनस्तर्कं प्रवेति निर्णयभेदलक्षणमिति नान्यापरं तल्लक्षण-
मिति दर्शयितुं भाष्यकारो निर्णयलक्षणमवतारयति एतस्मिंस्तर्कविषये ।

---

* प्राणादिमत्त्वादिति क॰ पु॰ पाठः ।

**विमृ-यः (सू. ४१)**॥ अथ पक्षप्रतिपक्षयोः कर्मतया न निर्णयसाधनत्वमित्यनुपपत्त्या साधनोपालम्भो वादसूत्रगतौ लक्षणीयाविति तावेव साधद्वाराप्यनूद्य विभजते । **स्थापना साधनं प्रतिषेधः साधनस्योपालम्भः** लक्षणनिबन्धन एवग्रन्थमाह । **तौ साधनोपालम्भाविति** । यद्यप्युपालम्भो न प्रतिपक्षाश्रितः तथाऽपि तदुद्देशेन प्रवृत्तस्तदाश्रित इत्युच्यते । मुख्यपदोपादानोल्लङ्घनेन लाक्षणिकपदोपादानलभ्यं प्रयोजनमाह **व्यतिषक्ताविति** । अर्थग्रहणसामर्थ्यलभ्यमेकतरनिर्णयावसानत्वमाह **अनुबन्धेन प्रवर्तमानाविति** । एतच्च वार्तिके स्फुटीभविष्यति । तमेव साधनोपालम्भयोः परस्परानुबन्धं दर्शयति **तयोरन्यतरस्येति** । यस्य साधनस्य वा उपालम्भस्य वा ऽवस्थानं तस्य साधनस्य वा उपालम्भस्य वा यो ऽर्थः पक्षः प्रतिपक्षो वा तस्यावधारणमित्यर्थः । अथ पक्षप्रतिपक्षप्रयोगाद्वादे कथयो ऽस्तीति भ्रान्त्या चोदयति **नेदमिति** । **एक** इति वादी । **प्रतिज्ञातमर्थं हेतुतः स्थापयति** । **द्वितीयस्य** प्रतिवादिनः **प्रतिषिद्धं** प्रतिषेध्यं वाद्युक्तस्य हेतोर्दूषणमिति यावत् । **उद्धरति** दूषणाभावीकरोति । द्वितीयेन [illegible] प्रतिवादिना वाद्युक्तस्य हेतोः स्थापनाहेतुत्वं प्रतिषिध्यते तस्यैव वादिनः प्रतिवाद्युक्तदूषणप्रतिषेधहेतुश्च प्रतिवादिनैवोद्ध्रियते च वादिनो वा प्रतिवादिनो वा हेतुश्चोपालम्भश्च निवर्तते तस्मिन्निवृत्ते यो ऽवतिष्ठते एकस्तेनार्थनिर्णयो [illegible] द्वाभ्यां तस्मादयुक्तं पक्षप्रतिपक्षाभ्यामिति । न तावत्तत्त्वविषये निर्णये वादिप्रतिवादिनोः स्तः तयोर्निश्चितयोरेव प्रवृत्तेः । अभ्युपेत्य परिहरति **उभाभ्यामिति** । वादिनः साधनस्य सम्भव प्रतिवादिन उपालम्भस्यासम्भवः एव *प्रतिवादिनः साधनस्य सम्भवो वादिन उपालम्भस्यासम्भव इति । **विमृश्येति विमर्शं कृत्वेति** । अनुपादेयो ऽपि विमर्शः कार्यत्वात्कृतिव्याप्य उक्तः । विमृश्येतिपदोपादानस्य प्रयोजनमाह **सो ऽयमिति** । अवधार्य नियमेन विषयीकृत्येत्यर्थः । एकधर्मिस्थयोरित्यस्य व्यतिरेकमाह **यथा क्रियेति** । विरुद्धयोरित्यस्य कालभेदेन व्यतिरेकमाह **एकधर्मिस्थयोश्चेति** । न निर्णयमात्रस्येदं लक्षणमपि तु परीक्षाविषयस्येत्याह **न चायं निर्णय इति** । अर्थावधारणं निर्णय इति एतावन्मात्रं लक्षणम् इन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षे भवतीति

* प्रति ३ पु पा ।

योजना । इति व्यवस्थितमभ्युपगममुद्घाटयति वादे शास्त्रे चेति । न हि ज्योतिष्टोमादीनां स्वर्गादिसंबन्धनिर्णये आगमेन कर्तव्ये विमर्शोऽस्ति नापि वादजल्पवितण्डासु विमर्शो विजिगीषयोरेव वादिनोस्तत्र प्रवृत्तेरित्यर्थः । वार्त्तिकं संबन्धोऽर्थश्च पूर्ववत् ॥ संबन्ध उद्देशक्रमेण तर्कानन्तर्यलक्षणः १४५ अर्थश्च प्रयोजनम् । समानासमानजातीयव्यावृत्तिरित्यर्थः । शेषं भाष्यव्याख्यानेन गतम्* । ननु भवतु पक्षशब्दलक्षितस्य साधनस्य निर्णयं प्रति कारणत्वं प्रतिपक्षलक्षितस्य तु तद्दूषणस्य न साक्षात्साधकत्वमित्यत आह पक्षाभ्यामेति । हेतुत्वं वारयत्येवेत्यर्थः । पक्षप्रतिपक्षाभ्यामिति । साधनदूषणाभ्यामित्यर्थः । लक्षणमाक्षेप्तुं विकल्पयति क्व पुनरयमिति । अथ पक्षप्रतिपक्षाभ्यामेवेति प्रथमः कल्पः । तदा हि यत्र यत्र कारकत्वं ततोऽन्यत्रावधारणमिति निर्णये नियमो भवेत् । निर्णय एवेति द्वितीयः कल्पः तदा हि पक्षप्रतिपक्षाभ्यामित्यत्र नियमः । विमृश्यैवेति तृतीयः तदाऽपि निर्णये नियमः । तत्र प्रथमं कल्पमाक्षिपति यदि विमृश्येति । एतस्मिन्खलु कल्पे निर्णयः पक्षप्रतिपक्षविमर्शातिलङ्घनेनान्यत्र न प्रवर्तत इति प्रत्यक्षं प्रमाणं निर्णयफलं न स्यात् । न हि तत्र पक्षप्रतिपक्षौ नापि विमर्श इति प्रत्यक्षलक्षणं बाध्यत इत्यर्थः । तृतीयकल्पमाक्षिपति एतेनेति । व्याघातेनेत्यर्थः । द्वितीयकल्पे दूषणमाह अथ पक्षेति । तदा निर्णयस्यानियमात् पक्षप्रतिपक्षौ तद्भावश्चेति तदुभयं तदापद्य निर्णयः प्राप्नोति तथा चाव्यापकं लक्षणमित्यर्थः । प्रथमं कल्पमालम्ब्य समाधत्ते तर्कविषय इति । न निर्णयमात्रस्येदं लक्षणमपि तु निर्णयविशेषस्येत्यर्थः । निर्णय इति । निर्णयमात्रमित्यर्थः । अथ निर्णयस्य किमिति । निर्णयसामान्यस्येत्यर्थः† । एकस्य च प्रमाणैरिति । प्रत्यक्षादिभिः संहत्य प्रमाणैरिति । साधनदूषणसमाधानैरित्यर्थः । पक्षप्रतिपक्षाभ्यामेव वादे निर्णयो न तु विमर्शः शास्त्रे तु निर्णय एव न तु शास्त्रातिरिक्तं साधनान्तरमाश्रीयत इत्यर्थः । पक्षप्रतिपक्षशब्दाभ्यामिति । लक्षणायां हि येन हि लक्ष्यते तदवच्छेदकतया तदपि बुद्धौ सन्निधीयते ततश्च तेन नियमो भवति लक्ष्यमाणस्य यथा गङ्गायां घोष इति गङ्गासंबन्ध्येव तीरं घोषेणान्वीयते न त्वकूपारतीरमपीति । चोदयति अर्थेति । परिहरति न नेति । पर्यवसाये १४६ ।

---

* व्याख्यातमिति ३ पु० पा० ।   † निर्णयमात्रस्येत्यर्थ इति ३ पु० पा० ।

क्रियमाणे काल्पनिकत्वं प्रतिषिध्यते न चाकल्पित विरुद्धधर्मवदित्येकतर-
१ निर्णयः । नेदं पक्षप्रतिपक्षाभ्यामित्यादि चोद्यभाष्यं व्याचष्टे पक्षप्रति-
पक्षाभ्यामिति । उभाभ्यामिति । परिहारभाष्यं व्याचष्टे उभाभ्यामेवेत्या-
दीति । पृच्छति एतस्मिन्निति । प्रथमं साधनं द्वितीयं दूषणं तृतीयं समाधा-
नम् । उत्तरं सर्वत्र कदा चित्प्रथमे कदा चिद् द्वितीये कदा चित्तृतीय इत्य-
र्थः । परस्य तु तृतीय इत्याह अथ वेति । उभयत्र कल्पे प्रश्नः कथमिति ।
उत्तरम् एकस्तावदिति । निर्णयो ऽनुमानमेवेति के चित् । तथा हि तृतीय-
लिङ्गदर्शनं प्रत्यक्षफलं निर्णयस्तदेव चानुमानमतो निर्णयो नानुमानादतिरि-
च्यत इत्यर्थः । परिहरति न लिङ्गलिङ्गीति । यदि निर्णयमात्रमनुमानमुच्येत
न तदा तस्य सर्वस्य लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षत्वमिति । यदि तु लिङ्गपरा-
मर्शो निर्णयस्तस्य चास्ति लिङ्गसम्बन्धापेक्षित्वमिति तत्राह प्रमाणफल-
त्वात् । सामान्यव्याप्तो वा विशेषः सामान्यवृत्तौ निवर्त्तते शिंशपात्वमिव
वृक्षत्वनिवृत्तौ न च फले प्रमितिरूपे निर्णये प्रमाणकारकस्य फले नास्तीति
नानुमानत्वं तद्विशेष इत्यर्थः । इतश्चानुमानान्निर्णयो भिद्यत इत्याह
निर्णयः स्वविषयवेति । न हि निर्णयो निर्णयत्वेन प्रतिपत्त्यनुबन्धिभू-
ताद्विषयादन्यत्रानुमाने तु तत्र चान्यत्र च यथा ऽनुमेयो ऽग्निरेव हेत्वा-
दिभिः परिच्छिद्यते ऽग्निज्ञानेनानुमानेन यदा तु धूमज्ञानेनाग्निरनुमीयते
तदा ऽन्यत्रेति गमयितव्यं शेषमतिरोहितम् ॥

**इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां प्रथमस्याध्यायस्य प्रथममाह्निकम् ।**



नितान्तदक्षिणलक्षाधियो गृह्णन्त्वमत्सराः ।
वाचस्पतिगिरामेष तत्त्वानि विबुधा इव ॥

उद्देशक्रमप्राप्तं वादलक्षणसूत्रमवतारयितुं भाष्यं तिस्रः कथा भवन्तीति तदयुक्तम् । वृहत्कथादीनां तिसृषु कथास्वनन्तर्भावात् । न च सामान्यलक्षणाभिधानमन्तरेण विशेषलक्षणावतारो* ऽस्ति वादादयश्च कथाविशेषा इत्यत आह वार्त्तिककारः तिस्रः कथा भवन्तीति । नायं कथामात्रनियमो १४८ येन वृहत्कथादीनामकथात्वं स्यात् अपि तु यत्र नानाप्रवक्तृके विचारे वक्ति तद्विचारवस्तु विचारविषया वाक्यसंदृब्धिः कथेति यावत् । तस्यां कथायामेव नियमस्तिस्र एवेति । तथा च नानाप्रवक्तृकविचारविषया वाक्यसंदृब्धिः कथेति सामान्यलक्षणम् । पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितमित्येतदप्यर्थादुक्तं भवतीति द्रष्टव्यम् । यद्वक्तु विचार्यत इत्यर्थाभिधानमात्रं न तु विचारवस्तित्वस्यास्य विवरणम् । वादादिष्वधिकारिणः पुरुषानाह तत्र गुर्वादिभिरिति । वादलक्षणस्यानन्तर्ये हेतुमाह तत्र यथोद्देशमिति । सूत्रमिति । सामान्यलक्षणमप्यनेन सूत्रेणेत्युक्तं भवति । एकाधिकरणस्थावित्यादिभाष्यं प्रश्नपूर्वकं व्याचष्टे काविति । वस्तुधर्माविति विभजते वस्तुधर्मावितीति । धर्मशब्दो विशेषे तदनवधारणाद्वस्तुनः सामान्यतो ऽवधाय उक्तो भवति । तदिदमाह वस्तुनः सामान्येनेति । अविरुद्धावप्येवं न विचारं प्रयोजयत इत्यर्थः । प्रमाणतर्कसाधनोपालम्भपदस्य तात्पर्यमाह अस्येति । अनेन तस्य विशेषणमित्यादिभाष्यं व्याख्यातम् । यद्यपि वितण्डायामपि पक्षप्रतिपक्षपरिग्रहो ऽस्ति तथा ऽपि प्रतिपक्षसाधनं नास्ति तस्याः साधनहीनत्वात् । यद्यपि च जल्पे ऽपि पक्षप्रतिपक्षसाधनमस्ति तथा ऽपि न प्रमाणमूलैरवयवैस्तर्केण च साधनोपालम्भाविति जल्पवितण्डाभ्यां प्रमाणतर्कसाधनोपालम्भग्रहणेन व्यवच्छेदः । यथा चैतत्तयोर्पश्चादुपपादयिष्यते । आक्षिपति कथं पुनस्तर्केणेति । समाधत्ते न ब्रूम इति । तर्कस्येतिकर्तव्यतारूपस्य प्रमाणानुग्राहकतया प्रमाणमूला अवयवास्तर्कमूला अपि भवन्ति तथा च तर्कस्यापि साधनोपालम्भहेतुभावः सिद्धो भवतीत्यर्थः । विकल्प्याक्षिपति साधनमुपालम्भश्चासिद्धिमिति । परं प्रति हि सिद्ध्युपलब्धी विवक्षिते न च [illegible] प्रमा- १५०

* वक्तर इति ३ पु पा० ।

प्रमाणतर्काभ्यां तयोः स्वप्रतिपत्तिहेतुत्वात् । अवयवार्थस्यावयवशब्दार्थस्येत्यर्थः । उभयथा ऽभिमतत्वे ऽपि करणसाधनपक्षं कक्षीकृत्य भाष्यं समाधत्ते नान्यार्थत्वादिति । अन्यप्रयोजनत्वादित्यर्थः । यदा तु भावसाधनौ तदा पृच्छति कथैतदिति । विप्रतिपन्नस्य प्रश्नः न प्रतिपक्षविषय उपालम्भो नापि तत्साधनविषयः तयोर्वस्तुनोः स्वकारणादुत्पन्नयोः यदा तद्रूपत्वेन पुरुषधर्मोपालम्भानात्मकत्वादित्याक्षेपार्थः । समाधत्ते एवमेतदिति । धर्मो धर्मविशिष्टः पक्षः प्रतिपक्षो वा कर्म तस्य विषय तस्य धर्मिणो वास्तवं तादृशत्वमतादृशत्वं वा करणस्य [illegible] कर्मैव विषयः । तत्र कर्मकरणे समर्थे एव नासमर्थे । अन्यविषये तु पुरुषस्ते नियुञ्जानो ऽसमर्थीकरोति । सो ऽयं पुरुषस्यापराधो न कर्मकरणयोः । यथा ऽऽकाशे निशातमसिं व्यापारयतः पुरुषस्यापराधो नाकाशस्य खड्गे समर्थस्यासेर्वा निशातस्य दारुणि समर्थस्य । तस्मादौपचारिकः साधनस्योपालम्भो न मुख्यः मुख्यस्तु पुरुषस्य वचनद्वारेण तद्ग्राह्यते पुरुषस्येति वचनमुपवर्ण्यते न [illegible] पक्ष पक्षद्वारेणानुद्भावनादिभिः सिद्धम् । यथा ऽयमर्थः सूत्रपदेभ्यो लभ्यते तथा प्रश्नपूर्वकं दर्शयति कथं पुनरिति । यदुक्तं प्रमाणतर्कसाधनोपालम्भपदं वादस्य जल्पवितण्डाभ्यां विशेषणार्थमिति तत्प्रकारं पृच्छति कथमिति* । पृष्टेवाह नन्विदमपीति । उत्तरं न समानमिति । नियममाह प्रमाणतर्कसाधनोपालम्भ एव वादः । एवकारेण छलादिसाधनोपालम्भत्वं वादस्य व्यवच्छिद्यते तथा च जल्पवितण्डाभ्यां व्यवच्छेदः । एतदुक्तं भवति तर्कानुगृहीतप्रमाणमूला अवयवाः परमार्थतो भवन्तु मा भूवन् वादिप्रतिवादिनोस्त्वभिप्रायो भवति प्रमाणमूला अवयवा इति । एतावतैव प्रमाणतर्कसाधनोपालम्भता वादस्य वीतरागकथात्वेन तत्त्वनिर्णयप्रधानत्वात् । जल्पवितण्डयोस्त्वप्रमाणमूलत्वं विदुषा ऽपि प्रतिवादिना छलादिभिः प्रत्यवस्थेयमेकान्तपराजयाद्वरं संशयोऽस्त्वितीच्छता जिगीषुणा । यथा चास्य शास्त्रे व्युत्पादनं नापद्रुष्ट यथा चैवमाचारस्तथा जल्पलक्षणे वक्ष्यामः । जल्पे निग्रहस्थानविनियोगादिति भाष्यं तदनुपपन्नम् । उपालम्भग्रहणादेव वादे ऽपि निग्रहस्थानस्य लब्धत्वादित्यत आह वार्त्तिककारः छलजातीति । असत्युपालम्भग्रहणे इत्यर्थः । चोदयति समं-

* ततो कथमिति ३ पु पाठ ।

स्तेति । *यद्युपालम्भग्रहणस्य निग्रहस्थानविधाने प्रयोजनं हन्त भोः न जल्पा-
द्वादस्य विशेषः कृतं चोत्तराभ्यां पदाभ्यामित्यर्थः । परिहरति नोभयोरिति ।
नियमः परिसंख्या तदनेन कस्य चिदनुज्ञानार्थमिति भाष्यं व्याख्यातम् ।
सिद्धान्ताविरुद्ध इत्यत्र भाष्यव्याख्यामुपन्यस्य दूषयति सिद्धान्ताविरुद्ध १५१ ।
इत्यनेन किञ्चेति । भाष्यमते दूषिते पृष्ट्वा स्वमतेन व्याचष्टे अथ किमिदं
पदमिति । पृच्छति कस्मात्पुनरिति । उत्तरं गुर्वादिभिरिति । न खल्व-
प्रतिभामात्रोद्भावने तत्त्वप्रतिपत्तावुपयुज्यते अधिकं तु न यद्यपि तत्त्वप्रतिपत्तिं
साक्षाद्धन्ति तथा ऽपि तत्प्रयोजनानुसरणे परः प्रतिपत्ता समाकुलित-
बुद्धिः न तत्त्वं प्रतिपत्तुमर्हतीत्यधिकस्यापि तत्त्वप्रतिपत्तिविघातहेतुत्वमिति ।
तत्त्वबुभुत्सुरिति जिगीषुतां निराकरोति । न हि गुर्वादिभिर्जिगीषासंभवः ।
त्रिविधं फलमिति । अनधिगततत्त्वावबोधः संशयनिवृत्तिरध्यवसिताभ्यनु-
ज्ञानमिति फलानि त्रीणि । प्रतिद्वन्द्विनि तु न वादो ऽपि तु जल्पवितण्डे । चोद-
यति प्रमाणतर्केति । पारमार्थिकात्तर्कसहितात्प्रमाणादेकस्मिन्विषये साधनो-
पालम्भयोः संभवे विरुद्धधर्माध्यासितमेकदा वस्तु प्रसज्यत इत्यर्थः । परि-
हरति नैष दोष इति । वादे ऽभिप्रायो नियम्यते वादिप्रतिवादिनोः प्रामा-
णिकधिया साधनोपालम्भौ ताभ्यां प्रयोक्तव्यौ नाप्रामाणिकधिया जल्पवित-
ण्डयोरिव न पुनर्वस्तु नियम्यत इति तथा च वादे बुद्धिपूर्वे छलादिप्रयोगे
तदुद्भावनमपि संभवति तावदेव चोद्भाव्य यावत्यनुद्भाविते तत्त्वप्रतिपत्तिव्या-
घातः यस्मिंस्त्वनुद्भाविते ऽपि न तत्त्वप्रतिपत्तेर्व्याघातः तत् प्रयुक्तमपि नोद्भा-
वनीयम् । एतच्च पञ्चमे ऽध्याये निपुणतरमुपपादयिष्यते । साधनोक्तं प्रकारं
दूषणे ऽप्यतिदिशति दूषणमप्येवम् । पूर्वस्मिन्प्रयोजने स्थिते भाष्यकारः प्रयो- १५२ ।
जनान्तरमन्वाचिनोति अवयवेष्विति । न हि पञ्चावयवोपपन्नं प्रमाणं सदनु-
ग्राहकं च तर्कमन्तरेण भवतीति पञ्चावयवोपपन्नादेव प्रमाणतर्कप्रतिलम्भे साध-
नोपालम्भयोर्व्यतिषङ्गज्ञापनायावयवं साधनोपालम्भग्रहणं तावत्कर्तव्यमन्य-
थैकः सुस्थानस्थित† एष शब्दस्यानित्यत्वं प्रति पञ्चावयवोपपन्नं वाक्यं प्रयुङ्क्ते
अपरो ऽपि तादृशः शब्दनित्यतां प्रति तादृशमेव वाक्यं प्रयुङ्क्त इति तौ ऽपि

---

* द्वि· पा· पु· अत्र कतिपयदेशस्त्रुटितः तेन पाठोद्धारः कर्तुं न शक्यते ।

† सुस्थानस्थित इति २ पु· पा· ।

वादः प्रसज्येत । साधनोपालम्भविशेषणाय च प्रमाणतर्कग्रहणं कर्त्तव्यमिति भावः । प्रयोजनान्तरमन्वाचिनोति **अन्तरेणापि चेति** । वादः पञ्चावयवोपपन्न इत्येकः कल्पः प्रमाणतर्कोपसाधनोपालम्भ* इति द्वितीय इत्यर्थः । प्रयोजनान्तरमन्वाचिनोति **छलजातीति** । **विनिग्रहो जल्पो मा विज्ञायि** वादगतनिग्रहस्थानरहितो मा विज्ञायीत्यर्थः । तद्विधाने कीदृशो ऽर्थो भवतीत्यत आह **छलजातिनिग्रहस्थानेति** । वादगतो निग्रहो न जल्पे जल्पगतश्च निग्रहो न वाद इति मा विज्ञायि इष्यते हि वादगतो निग्रहो जल्पे सो ऽयमिष्टो ऽर्थो ऽन्याधिक्यात् प्रमाणतर्कग्रहणाल्लभ्यत इत्यर्थः । तदेवं स्वाभिमतं वादलक्षणं व्याख्याय योऽन्यथा लक्षणं दूषयितुमुपन्य-
२० स्यति **अपरे त्विति** । स्वपक्षस्य सिद्धिः परपक्षस्य चासिद्धिः तदर्थं वचनं वाद इत्यर्थः । दूषयति **अत्र चेति** । प्रथमं हेतुं विभजते **एताविति** । पूर्वः पक्षो ऽयुक्तः पर उत्तरस्तु युक्त इत्यर्थः । एकस्य वाशब्दस्य धर्मिणो ऽनेकनित्यानित्यविशेषणाभिसंबन्धिनः पुरुषाभिसन्धिभेदादनेकशब्दाभिधानं स्वपरशब्दाभिधानमित्यर्थः । तदेव चिन्त्यते किं तत्स्वीकरणमिति न तावद्भूमिधनादिष्विव स्वोचितार्थक्रियासु यथेष्टविनियोगयोग्यत्वं स्वत्वमर्जनापादितमनित्यत्वादिना प्रतिज्ञाते शब्दादौ संभवतीत्यर्थः । चोदयति **ममेति** प्रत्ययोत्पत्तिकारणत्वं स्वत्वमकारणमस्वत्वमिति । दूषयति **निर्दिष्ट इति** । यथेष्टविनियोगयोग्यमेव ममेतिप्रत्ययकारणं नान्यत् । न चैतन्नित्यत्वादिना प्रतिज्ञाते शब्दे ऽस्ति वास्वकारस्येत्यर्थः । अपि चोपकारकत्वेन व्याप्तं स्वत्वं गोघटादिषु तथा दर्शनात् पक्षान्निवर्त्तमानमुपकारकत्वं स्वत्वमपि स्वव्याप्यं निवर्त्तयति धूमत्वमिव शिंशपात्वमित्याह **यच्च यस्येति** । द्वितीयं कल्पमाहुते **साधनीयेति** । निराकरोति **अहो शब्दार्थेति** । विशेष्यपदादनतिरिक्तार्थं विशेषणपदमित्यर्थः । अपि चेद् विशेषणपदं सामान्यतः प्रवृत्तं विशेषे ऽवस्थापयति न वा अवस्थापयति चेद् [illegible] साधनीयमानार्थता स्वशब्दस्य न चेद्विशेषणं व्यर्थमित्याह **व्यवच्छेदार्थमिति** । ननु च विशेष्यशब्दो विशेषणयोगाद्विशेषे वर्त्तमानो ऽपि सामान्यशब्द एव ततश्च शक्नोति
१।१९ समानमर्थं वक्तुमिति दर्शयति **सामान्यशब्दा अपीति** । परिहरति **न ते**

* प्रमाणतर्कसाधनोपालम्भ इति ३ पु० पा० ।

सामान्यशब्दा इति । अपि च साधनीयः पक्ष इति विरुद्धोपदर्शनेन स्फुटा १५२ ।
प्रतीतिर्भवतीति अयुक्तप्रतिपादनार्थं युक्तस्याप्युपन्यास इति । यदि न पक्षेण
दूषणं सम्बध्यते कस्तर्हि तस्य विषय इति शङ्कते अथ दूषणस्येति ।
उत्तरम् कस्य चिदिति । उत्तरदोषो जात्युद्भावनम् । आक्षिप्यन्तइत्याक्षेपाः
के ते भावाः अप्रतिभाविक्षेपादयः. नेति स्वपरपक्षाभ्यां सम्बध्यन्ते नापि
स्थापनयेति । चोदयति सत्यमिति । परिहरति उपचरितेति । ननु
प्रयोजनादिदृष्टं मुख्यशब्दार्थलङ्घनमिति गाथा भवतामित्यर्थः । अपि चोपचा-
रत्वेऽप्यपरमेव क्रियतां लक्षणं लाघवायेत्याह यदि चेति । शङ्कते अथेति ।
निराकरोति स्वरूप इति । मुख्यत इत्यर्थः । चोदयति स्थापनयापीति ।
परिहरति न दोषेति । ननु न दूषणमात्रं सम्बध्यते अविरुद्धार्थमिति च
दूषणमात्राभिधाने तत्कृतो विशेषप्रतिलम्भ इत्यत आह सामान्याभिधा-
नेपीति । तृतीयं कल्पं दूषयितुमुपन्यस्यति स्वपरशब्दाविति । एतदपि
सूत्रान्तरेण* दूषयति न युक्तमेतदपीति । ते साधनदूषणे स्वपरशब्दाः
सम्बध्नन्तइति सूत्रे हि नियमेन स्वपक्षे साधनं परपक्षे दूषणमुक्तं तथा चोत्त-
रपक्षो दूषणीय एवेति उत्तरपक्षवादिना ऽपि दूषणीयम् । एवं पूर्वपक्षोपि
साधनीय एवेति उत्तरपक्षवादिना ऽपि साधनीयो न दूषणीयः स्यादित्यर्थः ।
अपि चायुक्तस्य पूर्वस्य पक्षस्य साधनं युक्तस्य चोत्तरपक्षस्य दूषणमिति विप-
रीतप्रसङ्ग इत्याह स्वपक्षस्योत्तरपक्षवादिनः पूर्वपक्षादयुक्तपक्षाद्वन्यो
युक्त इत्यर्थः । न पदार्थो नावयवार्थ इत्यर्थः । एतेन सूत्रान्तरनिय-
माभिधानव्याघातेनेत्यर्थः । व्याख्याता निराकार्यत्वेन यत्तु कस्य दूषयि-
तुमुपन्यस्यति एक एवायमिति । दूषयति युक्तमेतत् । एकस्यानेक विशे-
षणम् । द्वितीयं हेतुमुपन्यस्तं व्याख्यातुं स्मारयति समासेति । न केवल
विशेष्यात्पृथक् स्वार्थो विशेषणं नावधार्यते अपि त्वन्यस्मादपि न भिद्य-
तइत्याशयवानाह भेदाच्चेति । चोदयति असत्यपि भेद इति । न केवलं
पत्युर्विशेष्यात्स्वेना न भिद्यते ऽपि तु ततो ऽन्येभ्यो ऽपि हास्तिकाश्वीयर-
थपदातिभ्य इति यथ पानकमपि न केवलं तदङ्गेभ्यो नीरकादिभ्यो
ऽपि त्वन्येभ्यो ऽपि फलसलिलादिभ्य इति । परिहरति तथा नेति । उक्त १५४ ।

---

* सूत्रान्तरविरोधेनेति २ पु पाठः ।

१ प्रस्तुत्य शङ्कते अथ मन्यसे स्वार्थं इति । उक्तस्मार्थेन निराकरोति तस्येति। एतेन कर्मधारयबहुव्रीही अपीत्याह एतेनेति। अपि च स्व. पदो यस्य साधयितुः स तथोक्त तथा च साधयितृविषय स्यादित्याह साधयितृविषयं चेति । ननु मा भूदर्थेऽविनियोगयोग्यार्थता स्वशब्दस्य साध नीयार्थता तु भविष्यति तथा च समासोपपत्तिरिति चोदयति ननु चेति। षष्ठीसमासपक्षोक्त दोष स्मारयति न संभवतीति । अपि च *साधात्स्व-पदस्य भेदे सूत्रान्तरव्याघाती ऽभेदे वा एतस्य व्याघात इत्याह विरोधादिति । अपि च वाक्यसमासयो समासी ज्यायान् लाघवादित्याह आस्तां तावदिति । न ह्ययं समर्थः समास इति । सिद्धसिद्ध्यर्थमित्यस्य समास: स्वपदपरपदयो: प्रत्येक न सम्बन्धार्थ इत्यर्थात् कस्य सिद्धि: कस्य सिद्धसिद्धिरित्यर्थः । परिहरति पदसामर्थ्यात्तु समासः सिद्धसिद्ध्यर्थमिति। समासे ऽपि तर्हीति। स्वपदपरपदसिद्धसिद्ध्यर्थमिति समासे ऽपीत्यर्थ.। एकवचनबहुवचनप्रसङ्गोपि नास्त्यसामर्थ्यादिति चोद्यसमाधानाभ्या दर्शयति एकवचनेति । अनित्यत्वे ऽपि समासविधे समास एव विग्रहाद्ज्यायानिति चोद्यसमाधानाभ्या दर्शयति अनित्य इति । भवतु गौरवमपि को दोष इत्यत आह अनुगत्यर्थं चेति† । लघुनोपायेनाशुसिद्धौ गुर्वभिधानमनर्थक यथा ऽऽह अक्के चेन्मधु विन्देत किमर्थं पर्वत व्रजेत् । इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेद् इति । अनर्थकप्रयोगश्चानपेक्षित. यन्मेरिति तेषामपासनात् शास्त्र स्यात् तदिदमुक्त शास्त्रत्वेनेति । सिद्धसिद्ध्यर्थमित्येतदपि दूषयति सिद्धसिद्ध्यर्थमित्येतदपि न युक्तमिति । तत्र तावदिति। तदिति तयोर्मध्यइत्यर्थ. । अधिकरणप्रत्यायनमिति।प्राश्निकप्रत्यायनमित्यर्थ । कुतो व्याहतमित्यत आह ये चैते इति । यो यस्मादर्थे अधिकरणे वर्त्तते स तस्येति व्याहतमित्यर्थ । चोदयति नायमिति। सिद्धिज्ञान तस्य पदो विषय आश्रयास्तु प्राश्निका इत्यर्थः । विकल्प्य दूषयति न युक्तमेतदिति । न तावत् ज्ञान पदविषय प्राश्निकाधिकरण चेति बोद्धुराद्वान्ते घमयति ज्ञानस्याधारत्वात् । विषयविषयिभावस्यात्मस्थितत्वात् ।

१ । ९ तस्मादन्या सिद्धि तच्चेदमुपलिप्सते किं तर्हीति । सिद्धियोगात्सिद्धः पदो

* पदार्थैति ३ पु पाठ । + अर्थगत्यर्थ चेति ३ पु पा ।

भवति प्रमाणयोगस्य सिद्धिः सैवार्थस्य तथा तत्त्वात्तु प्राश्निकानां प्रतीति-
र्भवति तस्मान्न प्राश्निकप्रतीतिः पक्षस्यासिद्धिरिति विरोधः । यस्मात्त्वो ऽर्थ-
स्तथा भवति तस्मात्तथाभावादधिकरणप्रत्यायनं भवतीति । द्वितीयं कल्पमा-
शङ्कते **अथासिद्ध इति** । यावत्पक्षविषयं साधनं न प्रयुज्यते तावदधिकरणप्र- १५७
त्यायनं ततः साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं सा-
धनदूषणप्रयोगो ऽनर्थकः । दूषणान्तरमाह पक्षस्येति । न प्रयोजनमन्तरेणे-
दानीन्तनानामस्मदादीनां मुख्यार्थशब्दस्यातिक्रमो ऽवाचकपदप्रयोगेण लभ्यते
इत्यर्थः । यथा ऽऽहुः अस्मदादयो ऽशब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे
इति । स्यादेतत् । मञ्चस्थाः क्रोशन्तीति वक्तव्ये विना ऽपि प्रयोजनं मञ्चाः
क्रोशन्तीत्युपचारो दृष्ट इत्यत आह **अपि तु प्रमाणासंभवेनेति** । प्रमा-
णासंभवेनापि स्थितेति योजना । नन्विहापि विना ऽपि प्रयोजनं प्रमा-
णासंभवभावेनोपचारो मञ्चाः क्रोशन्तीतिवद्भविष्यतीत्यत आह लोकप्र-
युक्तशब्दार्थवदुपचारो ऽपि लौकिको न प्रयोजनाभावेन शक्यो ऽपवदितुं न
लोकः पर्यनुयोज्यो यतः इदानीं तु न अस्मदादिप्रयोगः प्रयोजनाभावेन शक्यः
पर्यनुयोक्तुमित्याशयेनाह **न चेदं लौकिकमिति** । **अपरे त्विति** । न दूषण-
विषयत्वमसिद्धेर्येन न पक्षेण संबध्येतापि त्वसाधनं तत्र पक्षविषयमेवेति न मु-
ख्यार्थलङ्घनमित्यर्थः । अत्रापि पूर्वोक्तं प्रसङ्गमाह तथादीति । तस्मात्पक्षस्येती-
च्छता सिद्ध्यसिद्धिज्ञानाज्ञाने पक्षधर्मावेवाभ्युपगन्तव्ये यतस्तयोः पक्षधर्मत्वा-
देतद्भवति सिद्धः पक्षो ऽसिद्धः पक्ष इति । अस्तु तद्धैवमित्यत आह **एवं
सतीति** । न द्रष्टृधारता ज्ञानस्य विषयता च बौद्धराद्धान्ते संभवतीति भावः ।
शङ्कते **अथ मा भूदिति** । अस्ति खल्वालयज्ञानं यद्रूपाश्रित्यापि प्रवृत्तिज्ञा-
नानि जायन्ते । तस्मादालयप्रत्ययो द्रष्टा तत्स्थे एव सिद्ध्यसिद्धी । ननु पक्षस्य
तद्विषयत्वात्तस्यापीति चेत् कः पुनरयं विषयभावः । तत्कारणत्वमिति चेत्
चक्षुरादीनामपि ज्ञानकारणानां विषयत्वप्रसङ्गः । अतत्तदाकारत्वस्याविषयत्व-
प्रसङ्गः । ज्ञानप्रकाश्यत्वं विषयत्वमिति चेत् । न ज्ञानेनार्थे प्रकाशाजननात्
तस्माज्ज्ञानस्य तदसमवायिनः तदविषयस्य द्रष्टृस्थतैवेति सिद्धम् । निराकरोति
तथा ऽपीति । पुनः शङ्कते **अथ तथा ते इति** । प्रमाणयोग इत्यर्थः । निरा-
करोति तथा ऽपीति । तत्र जिज्ञासुः पृच्छति **के पुनरेते वादि** । सूत्रद्वयं १५८ । :

नोनमाह वस्तुधर्मावि ति । यद्यपि प्रमाणयोगायोगौ प्रमेयस्य प्रमातुश्च साध नाद्यन्वये कर्त्तृत्वानुपपत्ते तथाऽपि प्रमेयस्य प्राधान्यात्तस्यैवाभिधानप्रत्ययाविति प्रमेयधर्मावुच्येते व्यत्ययव्यक्तौ न तु प्रमातृधर्माविति सिद्धार्थमित्यर्थशब्दानुपपत्ति । कस्माद्विकल्पानुपपत्तेः । विकल्पमाह अर्थशब्दः खल्वि ते । इह सूत्रे धननिमित्ताद्विवचनता ऽर्थशब्दस्य न सम्भवतीति चयमवशिष्यन्त इति त्रेधा प्रवर्त्तत इत्युक्तम् । साधन साधनाभासौ दूषण दूषणाभास इति चतुर्विध वाक्य प्रथमकल्पमपाकरोति । तत्र तावदि ते । तदिति तेषु मध्य इत्यर्थः । चन्यात्तरेण युक्तायुक्तत्वेन विशेषणाच्चतुर्विधवाक्यसङ्ग्रहार्थौ सुद्दिष्टौ अर्थ शब्दो व्याख्यातः । न च युक्तायुक्तविशेषणौ चतुर्विधवाक्यसङ्ग्रहौ भवति । साधनाभाससम्बन्धिनः पक्षस्य युक्तत्वाभावनाद् दूषणाभाससम्बन्धिनश्च प्रति-पक्षस्याभावायुक्तत्वाभावादित्यर्थः । अथ न साधनादियोगो ऽपि तु साध्यधर्म एव साधनानपेक्षो युक्तायुक्तत्वमिति शङ्कते अथ पुनरि ते । निराकरोति तथा ऽपीति । कुतो व्याघात इत्यत आह नहीति । यदि प्रत्यायन सिद्धिः प्रतीतिः तथा ऽपि सा प्रत्याय्य न सम्भवति अथ कार्य्य तथा ऽपि कर्म कार्य्य न सम्भवतीति व्याघात इत्यर्थः । द्वितीय कल्पमाशङ्क्य निराकरोति अथ प्रयोजन इति । प्रयोजन कार्य्य तत्र कारणाभावाद्वृत्तिमर्हतीति न हि वह्निरिति गृहीतः पचति दहति पचति वेत्यर्थः । तृतीय कल्पमाशङ्क्य निराकरोति अथाभिधेय इति । अन्यकारः सूत्रकारः । एवं स्थिते । एव सति सिद्धि-शब्दो ऽभिद्धिशब्दश्च वाद स्यात् । ननु धननिमित्तादयो ऽप्यर्थशब्दवाच्याः सन्ति ते कस्मादिह न गृह्यन्त इत्यत आह तत्र सूत्रे न चान्यो ऽर्थशब्दस्य विषयः सम्भवति न हि सिद्धिर्धन वा स्वपरपक्षयोः साधन वा निवृत्तिर्वा सम्भवतीत्यर्थः । अपि च वचनविशेषपक्षे व्याघातव्याघात इत्याह सिद्ध्य सिद्ध्यर्थं च वचनं वाद इति ब्रुवाणेनेति । नैयायिकहेतुद्वारेण पूर्वमिदं सूत्रमुत्तरम् । उपसंहरति तदेवमिति । तन्त्र शास्त्र लोकं च वादन्त इति । अथावयवप्रयोगात् साधनदूषणाभासयादिनश्च वादित्वेन लोकसिद्धस्याभा-दित्वापादनात् सिद्धासिद्धिशब्दयोश्च वादत्वापादनादित्यर्थः । सूत्र दूषयित्वा

। १३ सूत्रं दूषयति यथा चेति । *अस्य पञ्चत्वेनेति । अव्याप्तीयपक्षस्य न हि पक्षस्य-

* अत्र इत्यत्र च व्याप्ति ३ पु पाठः ।

तिरेकेण पक्षाधारं साध्यं ज्ञानमन्यत्वासिद्धिप्रसङ्गाद्विधेयं संभवति ज्ञानस्य पुरुषाधारतया ऽनाधारतया वा पक्षाधारत्वानुपपत्तेः । पक्षस्य तु प्रश्नोत्केन चित्संबन्धेन यादृशतादृशेनेत्यर्थः । ते साधनदूषणयोरित्यत्र पृथगुक्ते साधनदूषणे युक्तायुक्तार्थाभ्यां ते युक्तायुक्तत्वे । साधनदूषणैरिति । न हि कर्म करणं भवतीत्यर्थः । अपि ■ युक्तायुक्तार्थाभ्यामभेदे साधनदूषणपदमनर्थकं ते इत्यनेनैव युक्तायुक्तत्वाभिधायिना गतार्थत्वादित्याह युक्तायुक्तशब्दाभ्यां चेति । अथ न १५९ । पर्यायता ऽपि तु सामान्यविशेषभावो युक्तायुक्तत्वे सामान्यं साधनदूषणे च विशेष इति शङ्कते अथ मन्यसइति । निराकरोति न प्रथमेति । उभयथाभिधाने विशेषणविशेष्यभावे कामचारादुपपत्तेरित्युक्तम् । द्वितीयं कल्पमाशङ्क्य दूषयति योग इति चेदिति । न खलु योगो नाम कोऽद्भुतः साध्यसाधनवृत्तिर्दूष्यदूषणवृत्तिर्वा कश्चिदस्तीत्यर्थः । अपि च यावृतो ऽपि योगः साध्यसाधनवाचकयोर्निरूपणतया नानिरूपिते साध्ये निरूपितो भवति निरूपणं च निर्णय इति योगनिरूपणात्प्राक् साध्यनिर्णयात्कृतं योगनिरूपणेन साध्यनिर्णयार्थेनेति । युक्तायुक्तत्वेन करणेनाधिकरणप्रत्यायनमिति व्याघात इत्याह साधनेनेति । भवति साध्यते । तृतीयं कल्पमाशङ्क्य निराकरोति अथ पदार्थस्येति । युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति युक्तायुक्तत्वयोः करणत्वं दर्शितं तत्तथान्यतयाप्यपदे ■ संभवति कर्मत्वात् तदिदमुक्तं ते व्यवच्छेद्ये परिच्छेद्ये न तु व्यवच्छेदस्य परिच्छेदस्य साधने इति । अधिकरणप्रत्यायनमिति दूषयति अधिकरणेति । शास्त्रसंबन्धः प्रयोजनेनेति चोदयति प्राश्निकप्रत्यायनादिति । कश्चिच्चोदकः पृच्छति तत्प्रत्यायनादिति* । चोदकस्योत्तरं प्रतिवादी किमेति सिद्धान्त्याह । सन्तमप्यर्थं न प्रतिपद्यतइति । न खल्वाध्यात्मिकापलिसंपन्नः समाहितः समयसाधनप्रयोगे सति सन्तमर्थं न प्रतिपद्यतइति संभवतीत्यर्थः । तथाविधेनापि चेत्प्रतिपन्नो ऽर्थो ऽन्यथा प्रतिपन्नः कथमसौ तथा संनित्यमिधीयतइत्याह कथं चेति । शङ्कते अथ जिगीषुतया प्रतिपद्यमानो ऽपीति । कामकारो ऽनुज्ञा । निराकरोति तथा ऽपीति । न प्रतिपद्यते प्रतिपद्यमान इति व्याहतं न चायमनुज्ञानिषेधो न प्रतिपद्यतइति वादे वीतरागकथात्वाज् जिगीषाया अभावादिति भावः । यच्च प्राश्निकप्रत्यायनादिति । अन्यदीयेन करणेनान्यः प्रतिपद्यतइति सुभाषितम् । १६०

---

* इद सु० पा० पु० न दृश्यते ।

२ अन्यविषयस्येति । अन्याश्रितस्येत्यर्थः न चायं नियम इति । न वादे प्राश्निकानामुपादानं देवागतानां तु न वर्जनमित्यर्थः । वादस्य जल्पवितण्डाभ्यामभेदमभिप्रेत्य चोदयति यदा तु नायमिति । आशयस्थितमर्थमनभ्युपगच्छन् परिहरति सत्यमिति । अभिप्रायं दर्शयति न त्रैविध्येति । दूषयति न भवद्भिरेव प्रतिषेधादिति । त्रैविध्यानभ्युपगमादिति दूषयति यदपीति । यच्चोक्तं वृत्तौ पक्षसिद्धिविषयमेतदपि दूषयितुमुपन्यस्यति यच्चोक्तमिति । न कामतो विना प्रयोजनमिति । विना ऽपि प्रयोजनं प्रमाणाभावेनापीति योजना । वृत्त्युक्तं दूषणं वृत्तावाह तदर्थं वचनं सिद्धासिद्धार्थमित्यर्थः । अधिकरणं दूषयति अधिकरणमिति । न हि प्राश्निकाधारमिति । प्राश्निका एव तावद्वादे न सन्ति अभ्युपेत्य उक्तमिति । शङ्कते प्रत्यायनाधारत्वादिति । सिद्धिः प्रत्यायनं तदाधाराः प्राश्निका इत्यर्थः । निराकरोति नेति । शङ्कते तत्सन्निधिरिति । देशमिलिते प्राश्निके सतीत्यर्थः । निराकरोति नेति । न हि देशमिलितं कारणं मा भूद्रासभो ऽपि धूमस्य कारणमिति भावः । चोदयति यदि प्राश्निका न सन्ति तद्वाद इति । तयोर्वादिप्रतिवादिनोर्वादस्य परीक्षकाः कस्य च तयोर्वादस्य क्व वासौ परीक्षा प्राश्निकाभावे हि वादतत्परीक्षातदधिकरणानामज्ञानमित्यर्थः । परिहरति साधनेति । वीतरागौ हि वादिप्रतिवादिनावेव वादस्वरूपज्ञानं तत्परीक्षां च कर्तुं शक्नुतः तत्किमत्र प्राश्निकैः साधनप्रयोगः पक्षविषयः दूषणप्रयोगः स्थापनाविषय इति वादस्वरूपं साधनदूषणतदाभासानां परितो ज्ञानं परीक्षा तदर्थे तस्मिन् वादे ऽधिकारो वीतरागयोरेव वादिनोस्तदिदं क्वेति विप्रश्नस्योत्तरमिति तस्मात्सम्प्रत्यर्थो ऽधिकरणार्थः । पराभिमतः प्राश्निक इति । यावत्स नास्ति वादिप्रतिवादिनोरेव वीतरागयोः कथासमाप्तेरित्यर्थः । यदपि वृत्तौ चोदितं यदि सिद्धासिद्धार्थं वचनं वादस्तदा प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि रथ्यावादे प्रसङ्ग इति तदप्यतिनिर्बीजमित्याह यदपीति । न हि प्रियाप्रियवचःसामान्यार्थपर्येण वा सिद्धासिद्धार्थता नापि साधनदूषणयुक्तायुक्तत्वविशेषणसम्बन्धः तस्मादेववादी नोत्तरार्हः न ह्युन्मत्ताय कश्चिदनुन्मत्त उत्तरमाह ।
६२ प्रष्टव्यो वा यो ऽप्युन्मत्तः स्यात् तदिदमुक्तं दत्तः स्वहस्त इति । पूर्वं सिद्धासिद्धार्थमिति अपरं युक्तायुक्तत्वमिति उभयोरप्यनेन चोद्येनासम-

स्यात्। यदि त्ववश्यमुत्तरं वाच्य ततो वरमेवं वक्तव्यमित्याह यदि त्विति। १६२
सेयं सूत्रे शिक्षा परैरिह कृतेति तन्निबन्धेन* वार्त्तिककृता ऽपि कृतेति।

उद्देशक्रमानुरोधेन वादलक्षणानन्तरं जल्पं लक्षयति ॥

**यथोक्तोपपन्नः** (सू. २) ॥ अत्रापि समानजातीयाभ्यां वादवितण्डाभ्यामसमानजातीयेभ्यः प्रमाणादिभ्यो व्यवच्छेदः† सूत्रार्थः। यथोक्तोपपन्नपदार्थं व्याचष्टे समस्तमिति। चोदयति यथोक्तोपपन्न इति न युक्तमिति। निग्रहस्थाननियमस्य प्रमाणतर्कसाधनोपालम्भाभिप्रायनियमस्य च जल्पे ऽभावात् भावे वा वादजल्पयोरभेदप्रसङ्गाद्वादलक्षणस्य जल्पव्यापकत्वेन व्यभिचारप्रसङ्गाद् यथोक्तोपपन्न इत्ययुक्तमित्यर्थः। परिहरति नैष दोष इति। उक्तमात्रमिह सम्भवाद् योग्यतामपेक्ष्य गृह्यते न त्वनुक्तो ऽर्थलभ्यो नियमः न ह्यसौ सूत्रपदश्रवणमात्रात्प्रतीयते अपि तु तदर्थे प्रतीते तस्यान्यथा सिद्धौ सत्यां नियम्यते इति प्रमाणतर्कसाधनोपालम्भ इत्येतदनिर्दिष्टमतः इति उक्तमात्रोपलक्षणपरम्। तेन प्रमाणतर्कसाधनोपालम्भः पञ्चावयवोपपन्नः सिद्धान्ताविरुद्धः पक्षप्रतिपक्षपरिग्रह इत्येतस्य वादपदलक्षणे समस्तस्य लक्षणस्यातिदेशः नियमस्यार्थो न सम्भवतीति सिद्धं लक्षणमात्रस्येति। उक्तमात्रस्य चार्थस्य नापि लक्ष्यपदस्येत्यर्थः। अत्रैव दृष्टान्तमाह यथा ऽन्यत्र वैशेषिकतन्त्रे इति। न नियमार्थे पदे इत्युपलक्षणं न प्रमाणतर्कसाधनोपालम्भपदलभ्यो ऽभिप्रायनियम इत्यपि द्रष्टव्यम्। पक्षान्तरमाह अथ चेति। यथा गोमिथुनो रथो गौरश्व इति युक्तपदलोप इति। न नियमार्थयोरित्येतदप्युपलक्षणं पूर्ववदेव। इह वादलक्षणं पठता भाष्यकारेण नियमो ऽप्यतिदिष्ट इति मन्यमानश्चोदयति भाष्यमिदानीमिति। परिहरति न सूत्रेति। जल्पलक्षणानुकूलो यः पाठक्रमः ततो ऽर्थस्वरूपमात्रं प्रतीयते न त्वार्थो ऽर्थ इत्यर्थः। तदुपपन्नम् उक्तमात्रमित्यर्थः। तत्र भाष्यकारेण छलादीनां निषेधार्थतया साधनाङ्गभावमाक्षिप्य परपक्षविघातेन स्वपक्षरक्षणात्तदङ्गभाव इति दर्शितं तदेतद्वार्त्तिककार आक्षिपति **छलजातिनिग्रहस्थानैरिति**। तत् किं निग्रहस्थानान्यप्ययुक्तानि न चैतच्छक्यमित्यत आह **छलं तावदिति**। छलजात्योरविषये: १६३। संपातायातानि निग्रहस्थानानीत्यभिप्रायः। भाष्योक्त समाधिमाशङ्कते अङ्ग-

* तदनुबन्धेनेति ३ पु पा। † जल्पस्येत्यधिकं ३ पु। ‡ स्वपक्षरक्षणादिति ३ पु पा।

। १९ भाव इति। निराकरोति एतदपीति। न हि सहस्रेणाप्यन्धैः पाटच्चरेभ्यो गृहं रक्ष्यत इत्यर्थः। एवमाक्षिप्तः परस्स्थः पृच्छति किमर्थं तर्हीति। सिद्धा-न्तिन उत्तरं साधनेति। वादे यावदायुरपि न साधनविघातसमर्थोऽसि तथा ऽपि तेषां तत्त्वमविद्वान् अभिरस्य साधनं विहनिष्यामीत्यनया बुद्ध्या ऽपहृ-तो व्यामोहितः* तस्माद्वादे प्रमेयोपादानमेषामित्यर्थः। यत्र त्वेषां तत्त्वं वि-द्वान् प्रवर्तते न स वादः किं तु जल्पः वितण्डा वेत्याह यत्र चैतानीति। ननु जल्पवितण्डयोः प्रयोगात् साधनमङ्गं वा स्यादत आह न पुनरिति। ननु न यदि साधनमङ्गं वा कस्मात्तर्हि जल्पवितण्डयोरेषां प्रयोग इत्यत आह साधुसाधनोपादाने चेति। साधुसाधनोपादाने वादिना कृते परेण प्रतिवादिना जिगीषया ऽऽकुलितबुद्धिः द्राक् पारमार्थिकमुत्तरमप्रतिपद्यमानः छलादीनि प्रयुङ्क्ते किमर्थमित्यत आह कदा चिदिति। यथा कथं चित्प्रयोगेण तदनेन प्रकारेण तत्त्वसंरक्षणार्थत्वात् सदाचारो न च शास्त्रकाराणां छला-द्युत्पादनमसदृशं न च घटपटाद्यभिधानप्रसङ्गः वाग्युद्धे तेषामप्रसङ्गादिति। न चापेति। नैकेनापरं तदेवापेक्षमित्यर्थः। शेषं सुगमम्।

उद्देशक्रमानुरोधेन जल्पानन्तरं वितण्डालक्षणमाह।

३ स वडा (सू. ३) ॥ पूर्ववादिपक्षापेक्षया प्रतिवादिन आत्मीय एव पक्षः प्रतिपक्षः तस्य स्थापना साधनं तया हीनः तदनेन जल्पाद् व्यवच्छि-नत्ति। तदेतदाह भाष्यकारः स जल्प इति। तयोरेकतरः प्रतिवादी आत्मीयं पक्षं न स्थापयतीति। परपक्षप्रतिषेधेनेति। तत्स्थापनाप्रतिषेधेनेत्यर्थः। स्या-देतद् यथा प्रतिवादिनः पक्षो वादिपक्षापेक्षया प्रतिपक्ष एवं वादिपक्षोऽपि प्रति-वादिपक्षापेक्षया प्रतिपक्ष इत्युभयपक्षस्थापनाहीना वितण्डेति स्यादत आह

३। १६ वार्त्तिककारः प्रतिपक्षस्थापनाहीन इति। प्रथमपक्षवादिनो हि स्थापनाया अभावे किं वैतण्डिक आहेति। न च पक्षः शक्य आहर्तुं तस्मात्प्रथमपक्ष-वादिनोऽस्ति स्थापनेति द्वितीय एव पक्षः स्थापनाहीन इति सामर्थ्यादुक्त-मिति। अथ वादाभासम् अस्तु तर्हीति। स्थापनाया अभावे स्थाप्यः पक्षो नास्ति न ह्यन्यथा पक्षस्य पक्षत्वमिति भावः। परिहरति पक्षे खलु तदिति। वैतण्डिकोऽपि हि वादी पारिशेष्याद् मत्पक्षं बोत्स्यत इति बुद्ध्या स्वपक्ष-

* पक्षतर्काधिकं न पु ।

स्थापयन् परपक्षस्थापनामाहन्ति तस्मात्परपक्षप्रतिषेधलक्षणं वाक्यमस्य पक्षः परपक्षनिषेधेन पारिशेष्यात् पक्षसिद्धिहेतुत्वादुपचारतः । तस्मादस्ति वैतण्डिकस्य पक्षो न तु परपक्षप्रतिषेधादन्या स्थापना तेनास्य पक्षोऽस्ति नास्ति तु पक्षस्थापना तदिदमुक्तं न कंचिदर्थं प्रतिज्ञाय स्थापयतीति । पक्षत्वं तु तद्वोध्यतामात्रेण न तु स्थाप्यमानतयेति । अस्तु तर्हीति भाष्यार्थमाह वार्तिककारः अपरे त्विति । तस्मात्प्रतिपक्ष- १६६ हीनो वितण्डेति वक्तव्यमित्यर्थः । परिहरति अयुक्तं चैतदिति । न तावदस्थाप्यमानस्यापि स्थापनाहेतुलक्षणा पक्षता न युज्यते तस्मान्न वैतण्डिको दूषणादन्यत् किंचिदभ्युपगच्छतीति अनभ्युपगमात् पक्षोऽस्य नास्तीति वक्तव्यम् । तथा च चतुर्वर्गाभ्युपगमे विरोधोऽनभ्युपगमे वा नायं लौकिको न परीक्षक इति प्रसङ्ग इति भावः । प्रतिपादयितुरयथार्थबोधं प्रतिपन्नार इत्यस्मानित्यर्थः । यस्तु मन्यते चतुर्वर्गाभ्युपगमेऽपि दूषणमात्र वितण्डेत्येव यतस्तत्र लाघवायेति तन्मतमुपन्यस्यातिप्रसङ्गापादनेन दूषयति दूषणमात्रेणेति । समाख्यानिर्वचनसामर्थ्यादेव गम्यत इत्यर्थः । उपसंहरति तस्मादिति । तदनेनार्थेन पक्षे स्थित्वेत्यादि भाष्यं व्याख्यातम् ।

उद्देशक्रमानुरोधेन वितण्डानन्तरं हेत्वाभासेषु लक्षयितव्येष्वर्थाक्षिप्तसामान्यलक्षणमेषां विभागोद्देशपरं सूत्रम् ।

सव्य-साः (सू. ४) ॥ तद्व्याख्यानपरं भाष्यं समाख्यानिरुक्तिवशेन सामान्यलक्षणप्रतिपादकं वार्तिककारः पठति हेतुलक्षणाभावादिति । पृच्छति किं पुनरिति । न ह्यन्यस्यान्यत्वमात्रेण सादृश्यं मा भूत्सर्वस्य सर्वसादृश्यमिति भावः । उत्तरं प्रतिज्ञेति । प्रयोगगतं सामान्यमुक्त्वा प्रयोज्यगतमाह अन्यतमेति । अत्र धर्मत्रितयस्यासत्प्रतिपक्षितत्वे सतो बाध्यविवक्षित्वा चैलक्षण्यद्वैलक्षण्याभिधानं* द्रष्टव्यम् । शेषमतिरोहितम् । षट्प्रभृति यत गणयति तत्र साध्यव्यापकेति । एतस्या विधेऽष्टधा साध्यव्यापकसाध्यैकदेशवृत्तिधर्मभेदात् षोडशीकृत्य विशेष्यविशेषणासिद्धिभेदाच्चतुःषष्टिः । एव समर्थासमर्थविशेषणभेदाच्चतुःषष्टिः । तदेतच्चतुःषष्टिद्वयमष्टाविंशतिक यत पूर्वया विधेऽष्टया सह षट्शतं भवतम् । साध्यव्यापकानां धर्मविशेषणा-

* चैलक्षणाभिधानमिति ३ पु पा । † अन्यथासिद्धेर्थेति ३ पु पा ।

२ मुदाहरणान्याह तत्रेति । विपक्षव्याप्त्यव्याप्तिभ्यां प्रथमद्वितीयौ साधारणौ तृतीयो ऽन्वयव्यतिरेकी साध्यतज्जातीयव्यापको हेतुरेव । *विपक्षव्याप्त्यव्याप्तिभ्यां चतुर्थपञ्चमौ विरुद्धौ हेत्वाभासौ । यत्र विपक्षे न वृत्तिस्तं दर्शयति द्व्यणुकवदिति । षष्ठो ऽविद्यमानसपक्षविपक्षो ऽसाधारणो ऽत एव घटादिवदिति । सप्तमाष्टमौ सपक्षव्याप्त्यव्याप्तिभ्यां साधारणौ नवमः सपक्षैकदेशवृत्तिरन्वयव्यतिरेकी हेतुरेव । दशमैकादशौ सपक्षव्याप्त्यव्याप्तिभ्यामन्वयिनौ हेतू द्वादशस्तु अविद्यमानविपक्षो ऽसाधारणः त्रयोदशचतुर्दशौ त्वविद्यमानसपक्षौ विपक्षव्याप्त्यव्याप्तिभ्यां विरुद्धौ । पञ्चदशो ऽपि व्यतिरेकी हेतुरेव । षोडशस्तु अविद्यमानविपक्षो ऽसाधारण । यदि बाह्यकरणप्रत्यक्षे वाङ्मनसे इति साध्येत तदा नानित्यत्वं सपक्षव्यापकं स्यात् । सामान्ये बाह्यकरणप्रत्यक्षे ऽभावात् । अत साध्यधर्मं विशिनष्टि सामान्यविशेषवदिति । अनित्ये रूपविज्ञाने । अमूर्त्तत्वादिति रूपविज्ञानस्कन्धातिरिक्तानां वेदनासञ्ज्ञासंस्कारस्कन्धानामनित्यतया सपक्षाणां व्यापकममूर्त्तत्वमिति । तज्जातीयैकदेशवृत्तित्वममूर्त्तत्वस्य दर्शयितुं यत्र न वर्त्तते तन्मुखस्थमुदाहरणम् । रूपादिवदिति । अनित्यः शब्दो ऽस्पर्शत्वादिति नित्ये शब्दत्वे न वर्त्तते । अर्थः शब्द इति । शब्दो धर्मी अर्थ इति साध्यो धर्मः द्रव्यगुणकर्मणामन्यतम इत्यर्थः । यदाश्रोत्रग्राह्यत्वादित्युच्येत तत सामान्यादिष्वनर्थेषु विपक्षेष्वपि वर्त्तेत अत उक्तमश्रोत्रग्राह्यसामान्यवत्त्वादिति । श्रोत्रग्राह्यं च तत् सामान्यं चेति विग्रहः । ननु वायुत्वं न विपक्षावृत्ति समवायस्यानाश्रितस्य वायुत्वाद्यत उक्तम् । औलूक्यपक्षे १९ इति । सिद्धान्तभेद इति । सौत्रान्तिकानामित्यर्थः । असमर्थविशेष्यस्योदाहरणं कृतकत्वे सति प्रमेयत्वादिति असमर्थविशेषणस्योदाहरणं प्रमेयत्वे सति कृतकत्वादिति । निरपेक्षं खलु कृतकत्वमनित्यत्वे साध्ये समर्थं प्रमेयत्वं त्वन्यापेक्षमसमर्थमित्यर्थः । तदेवं षोडशधा प्रकृत्या ऽष्टचत्वारिंशद्भवन्ति हेत्वाभासाः. व्यापकाव्यापकभेदेन तु द्विषोडशी यदा विशेषणविशेष्याभिसन्धा चोभयसमासिपत्त्या ऽसमर्थविशेषणविशेष्यतया च उभयसमासिपत्त्या सन्दिग्धविशेषणविशेष्यतया च उभयसमासिपत्त्या विक्रियते

* विपक्षे व्याप्त्यव्याप्तिभ्यामिति ग॰ पु॰ पाठः ।

तदा चतुःप्रत्ययेन ज्ञानवत्त्वं शतं भवति । वाद्यसिद्धप्रतिवाद्यसिद्धतया उभयान्यतरसंदिग्धतया च चतुःप्रत्ययेनाष्टाविंशकं शतमपरम् । तदिदमन्यतरासिद्धम् इत्यनेन वार्तिककृता सूचितम् । द्वाभ्यामूना त्रिंशद् द्वाविंशदिति कथं चिद्व्युत्पत्त्या ते पुनर्व्यापकाव्यापकव्यधिकरणविशेषणविशेष्यव्यधिकरणसंदिग्धविशेषणविशेष्यव्यधिकरणासमर्थविशेषणविशेष्यभेदेन चतुःप्रत्ययेन ज्ञानवत्त्वं शतमपरम् । एवमप्रसिद्धाश्रयविशेषणविशेष्यान्ते । उभयान्यतरपक्षाप्रसिद्धाऽष्टाविंशकं शतम् । अत्रापि द्वाविंशकमिति पूर्ववद्व्याख्येयम् । अन्यतरमात्रमत्र विवक्षितं न तु वादिप्रतिवादिभेदः । ते पुनरसिद्धाश्रयाः पूर्ववद्भेदेन व्यधिकरणविशेषणविशेष्यसंदिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन चतुःप्रत्यये सति ज्ञानवत्त्वं शतम् । तदेवमनन्तराभ्यां ज्ञानवत्त्वशताभ्यां शतत्रयं चतुरधिकं एतदेवाष्टाचत्वारिंशकशताभ्यां ज्ञानवत्तेन शतेन संपिण्डितं द्वाविंशदुत्तराष्टशती विकारभूता भवति अष्टाचत्वारिंशत् प्रकृतयः पश्चाद्विवेचनीया इति । उभयाप्रसिद्धाश्रयविशेष्यमुदाहरति यथा ऽग्निमान्देशो धूमवत्त्वात् । उक्तं हि प्राग् यथा न देशो ऽग्निमत्तया साध्यो ऽपि तु धूमविशेष एवेति । अन्यतरप्रसिद्धाश्रयोदाहरणमाह अस्ति आत्मा इच्छादिगुणत्वादिति । १७० ।
आश्रयासिद्धविशेषणादयो ऽप्यूहनीयाः । असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम् । असमर्थाश्च ते ऽव्यापकाश्च व्यधिकरणतया ऽसिद्धाश्चेति विग्रहः । अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वादिति । कृतकत्वस्यैव विशेष्यस्य सामर्थ्यादसमर्थमनित्यत्वे प्रयत्नानन्तरीयकत्वम् । अव्यापकं च स्तनयित्नुशब्दानामव्यापकत्वाद् व्यधिकरणतया ऽसिद्धं च कोष्ठ्यापुताल्वादिक्रियाया एव प्रयत्नानन्तरीयकत्वं न त्वाद्यस्याद्यशब्दस्य प्रागेव तु श्रोत्रसमवायित्व इति । कृतकत्वे सति प्रयत्नानन्तरीयकत्वादिति असमर्थाव्यापकासिद्धविशेष्याणामुदाहरणं द्रष्टव्यम् । वैमत्येन त्वसिद्धतावचनमुदाहरति । अव्यापकासमर्थविशेष्याणामुदाहरणम् । अनित्यः शब्दः प्र- ,, । ४
त्ययभेदभेदित्वेनोपलभ्यमानत्वाद् उपलभ्यमानत्वं नित्ये ऽप्यस्तीति व्यभिचारादसमर्थम् । कारणभेदभेदित्वमेव [illegible] विशेषणं समर्थव्यभिचारादिति केवलव्यधिकरणविशेष्याणामुदाहरणमस्ति प्रधानभेदादीनां गोघटादीनां सुखदुःखमोहात्मकत्वेनान्वयदर्शनादिति । अन्वयदर्शनं भेदाधिकरणतया

न प्रधानाधिकरणमिति व्यधिकरणेति व्यधिकरणं विशेष्यं केवल-
व्यधिकरणविशेषणानामुदाहरणं रूपरसगन्धस्पर्शाश्चन्दनशब्दादत्यन्तं
भिन्नार्थाः समुदायसमुदायिसद्भावे सति रूपादीनामर्थानां रूपादिशब्दानां
च तेन चन्दनशब्देन व्यपदिश्यमानत्वात् । चन्दनस्य रूपादय इति समुदा-
यसमुदायिसम्बन्धो रूपादिषु व्यपदेशश्च रूपादिशब्देष्विति व्यधिकरणं विशेष-
णमित्यर्थः । सदनेन प्रपञ्चेन द्वाविंशदुत्तरा ऽष्टशती दर्शिता संप्रति द्वानवत-
। ८ शतयुग्मान्तरं दर्शयितुमुदाहरणमाह **अन्यथासिद्धोदाहरणं नित्यः
शब्दो ऽभ्यासात्** । सेय क्रियाऽभ्यावृत्तिर्यथा शब्दानित्यत्वे ऽप्युपपद्यते
यथा द्वितीये दर्शयिष्यते । सिंहावलोकितन्यायेन व्यधिकरणविशेष्य संदि-
ग्धविशेषणमुदाहरति **संदिग्धासिद्धेति** । विशेषणशब्दः तन्त्रेण विशे
षणे विशेष्ये च कर्मकरणसाधनतया प्रयुक्तो वर्तते तेन संदिग्धं विशेषणम्
अप्रसिद्धं व्यधिकरणतया विशेष्यं येषां तेषामुदाहरणमित्यर्थः । यथा संदि-
ह्यमानधूमादिभावे ऽग्निमान् देशो धूमवत्त्वे सति प्रकाशकत्वाद् धूम-
वत्त्वं विशेषणं संदिग्धं प्रकाशकत्वं च विशेष्यं व्यधिकरणं तत्खलु वह्नेर्हि
न देशस्येति । अप्रसिद्धविशेषणसंदिग्धविशेष्याणामुदाहरणं दर्शयति विप-
र्ययेणेति । अप्रसिद्धेत्यपि द्रष्टव्यम् । अग्निमान् देशः प्रकाशकत्वे सति
धूमवत्त्वादिति । संप्रति द्वानवतशतयुग्मान्तरं दर्शयितुं भूमिरचनां
करोति **एवमिति** । ये संदिग्धासिद्धाव्यापकभेदेन त्रिविधा उभयान्यतरा-
सिद्धाश्चतुःषष्टिर्भवन्ति ततः किमित्यत आह ते चतुःषष्टिसमानाः ।
पूर्वसूत्रेण व्यधिकरणविशेषणविशेष्यसंदिग्धविशेषणविशेष्यासमर्थविशेषण-
विशेष्यभेदेन ताश्चतुःषष्टिरूपमित्येकं द्वानवतं शतम् अपरं चाश्रयासिद्ध-
व्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शत-
मिदं चतुरशीतं शतञ्च संदिग्धासिद्धमाश्रित्य । अपरमपि द्वानवत-
। १३ शतयुग्मान्तरमन्यथासिद्धमाश्रित्याह **एवमन्यथासिद्धभेदो द्रष्टव्यः** ।
अन्यथासिद्धभेदो ऽपि हि व्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषण-
विशेष्यभेदाच्चतुःषष्टिरूपमिति । पुनश्च स यथान्यथासिद्ध आश्रयासि-
द्धव्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्चतुःषष्टिरूपमिति
द्वानवतशतयुग्मेन शतद्वयं चतुरशीतम् । अपरमपि द्वानवतशतयुग्ममाह

एवं विरुद्धविशेषणविरुद्धविशेष्यावप्येवेति । विरुद्धविशेषणविशेष्या अपि हि १७० ।
व्यधिकरणविशेषणविशेष्यासंदिग्धासमर्थविशेषणविशेष्यभेदादाश्रयासिद्धव्यधि-
करणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्च शतत्रयं चतुरुत्त-
रम् । सद्धेतुभेदैस्त्रिभिश्चतुरशीतेः शतत्रयैर्द्विपञ्चाशच्छतान्तरं शतस-
मेकं द्वात्रिंशदुत्तरया ऽसमानया सहस्रमेकं चतुरशीतिसहिता च सप्त-
शती सदेवं प्रकृतिभूताच्चत्वारिंशत्प्रभेदेन संपिण्डितं द्वादश द्वे सहस्रे
भवत इति तत्रासत्त्वादिति । पञ्चानां चतुर्णां वा रूपाणां संपत्तिरव्यभिचारः
स चैकस्मिन्विषये विरुद्धयोर्न संभवति । अन्ततो ऽसत्प्रतिपक्षस्यैव रूप-
स्याभावादित्यर्थः । पञ्चानां हेतूनामिति । सपक्षव्याप्त्यव्याप्तिभ्यामन्वयी
द्वेधा व्यतिरेक्येकः अन्वयव्यतिरेक्यपि सपक्षव्याप्त्यव्याप्तिभ्यां द्वेधेति पञ्च हे-
तवः पञ्चानां हेतूनां सद्रूपासद्रूपप्रतिबन्धात् पञ्च पञ्चका भवन्ति । सद्रूपो
ऽन्वयिनो ऽन्वयी व्यतिरेकिणो व्यतिरेकी अन्वयव्यतिरेकिणो ऽन्वयव्यतिरेकी ।
असद्रूपश्चान्वय्यादेर्व्यतिरेक्यादिः तेन प्रतिबन्धः । एतदुक्तं भवति अन्वय्यादा-
वेकैकस्मिन् सद्रूपासद्रूपाः पञ्च हेतवः प्रतिबन्धका इति पञ्चभिः पञ्चकैः पञ्च-
विंशतिर्विरुद्धाव्यभिचारिण इति । चोदयति । तस्यैतत् एवेति । परिहरति
नानर्थकमिति । यस्मात् हि शब्दस्तत्त्वतो प्रमाणं समानासमानजातीयव्य-
वच्छेदकं च लक्षणमुच्यमिति तदेव प्रमाणं न त्वियत्तायामतात्पर्यत्वात् न
चाबाधार्थो सतो ऽप्यनुपयोगात् अलक्ष्यमाणत्वोपपत्तेः प्रमेयान्तरवदिति ।

तदेवमर्थान्तरसामान्यलक्षणं विभागं दर्शयित्वा विशेषलक्षणमवता-
रयति भाष्यकारः तेषां हेत्वाभासानां मध्ये ।

अनै-रः (सू. ५) ॥ अथ चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ
पुनरभिद्वाविवक्षया लक्ष्यलक्षणत्वेनावस्थितौ । यस्यानैकान्तिकपदार्थो ऽप्रसिद्धः
प्रसिद्धश्च सव्यभिचारपदार्थः तं प्रत्यनैकान्त इति लक्ष्यनिर्देशः सव्यभिचार
इति लक्षणं यस्य तु सव्यभिचारपदार्थो ऽप्रसिद्धः प्रसिद्धश्चानैकान्तिकपदा-
र्थस्तं प्रति सव्यभिचार इति लक्ष्यनिर्देशो ऽनैकान्तिक इति लक्षणम् । तत्र सव्य-
भिचार इति लक्षणपदं कक्षीकृत्याह भाष्यकारो व्यभिचार एकत्राव्यव-
स्थितिः । एतदुक्तं भवति सव्यभिचारपदं निर्वचनसामर्थ्यात्लक्षणपदमिति ।
अनैकान्तिकपदलक्षणपक्षे भाष्यकारोऽनित्यत्वमेकान्त इतीत्यादि मह-

१६ निराकारः पर्युदासाभिप्रायेण व्याचष्टे एकस्मिन्नन्ते नियत ऐकान्तिक इति । न हेतुरैकान्तिको येन तदन्यत्वेन हेत्वाभासपरिग्रहादेकजातीयत्वेन हेत्वाभासानां विभागसूत्रविरोधः स्यात् किं त्वेकस्मिन्नन्ते यो नियतः स ऐकान्तिकस्तद्विपर्ययादनैकान्तिको ऽनियतो नित्यत्वे चान्वयेन व्यतिरेकेण चोभयपक्षगामीति यावत् । न चैवममी विरुद्धादयो हेत्वाभासा इत्यभिप्रायः । तदेवमनैकान्तिकः सव्यभिचार इति स्थिते पृच्छति । कः पुनरिति । उत्तर साध्यतज्जातीयेति । अनवगतमेव व्यभिचार इति अनैकान्तिकपदपर्यायत्वमस्य कथमित्यत आह । सर्वो ऽयमिति । प्रमेयत्वादेरस्य तु सर्वव्यापिनो नास्ति व्यतिरेको ऽस्तीत्यत उक्तमन्यत्र प्रमेयादिति । अत्र चोद्देशेऽद्विरुक्त्य दूषणमुक्तं तदुपन्यस्यति । अनैकान्तिक इति । किं पुनरयमिति । ऐकान्तिको* हेतुस्ततो ऽन्यः सर्व एव हेत्वाभास इत्यर्थः । द्वितीय पक्षं दूषयति अथ प्रसज्येति । तथा ऽपि हेतोरभावो ऽनैकान्तिको न चासौ सव्यभिचारः साधर्म्यो हि व्यभिचाराव्यभिचारौ नाभावे सर्वोपाख्याविरहिणि युज्येते इत्यर्थः । तदेतच्चोद्यदूषणं निराकरोति नायं पर्युदासपक्ष इति । पर्युदासपक्षस्तावदस्माकमभिमत उपपन्नतरश्च केवलमयं प्रसज्यप्रतिषेधपक्षमप्याश्रित्य परो दूषयतीति तमेवाङ्गीकृत्य अत्रैव ब्रूम इत्याश्रयतः समाधानम् । न पुनरस्माकमाचार्यस्यापि वार्त्तिककारस्य प्रसज्यप्रतिषेधो ऽभिमतः किं तु पर्युदास एवेति । अभ्युपेत्य तु तथापि प्रसज्यप्रतिषेधाभिधानम् । न हि प्रसज्यप्रतिषेधमनुब्रूमो ऽपि तु कथा चिद्व्युत्पन्नो ऽभावेन विशिष्टं किं चिदेव वस्त्वित्यर्थः । अत्र भाष्ये निदर्शनं नित्यः शब्दो ऽस्पर्शत्वादिति । वैधर्म्यदृष्टान्तमाह । स्पर्शवानिति । अनित्यः कुम्भः स्पर्शवान् दृष्ट इति योजना । वैधर्म्ये व्याप्यव्यापकयोर्विपरीतत्वादिति वैधर्म्यव्यभिचारमाह । दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ गृह्येते । न हि यदनित्यं तत्सर्वं स्पर्शवद् बुद्ध्यादिभिर्व्यभिचारात् । साधर्म्ये ऽप्येष व्यभिचारो वक्तव्यस्तदिह नोक्तम् । ननु च मा भूदिन्द्रियस्य साधर्म्ये स्पर्शवत्त्वमेव त्वनित्यत्वस्य साध्यमित्यत आह । स्पर्शवांश्चाणुर्नित्यश्चेति । तथा ऽपि यदस्पर्शवद् भवति तन्नित्यमपि न भवतीति वैधर्म्ये व्यभिचरति

* अनैकान्तिक इति ३ पु. पा. ।

स्पर्शवतो ऽप्यणोर्नित्यत्वादित्यर्थः । साधर्म्यव्यभिचारमाह आत्मादौ चेति । अथ वार्त्तिककारो ऽस्पर्शवत्त्वस्य हेतोः प्रश्नपूर्वकं स्वरूपं निष्कर्षति । किं पुनस्तदस्पर्शवत्त्वं स्पर्शवद्भिन्नमित्यर्थः । सत्ताविशेषणो वा समवायः १७२ । समवायविशेषणा वा सत्ता अन्वयव्यतिरेकाभ्यामित्यर्थः । वाक्यार्थे च पद-प्रयोगो ऽस्पर्श इति श्रोत्रियपदवदित्याह । वाक्यार्थ इति । अनैकान्तिक इति लक्षणपदं चोदयति । अतिदेशेनेति । यदि हि क्व चिच्छास्त्रप्रदेशे अनैकान्तिकः कथितः* स्यात्तद्व्यतिलङ्घनेनातिदिश्यमानो विदितरूप इह सव्य-भिचारं लक्षयेत् । न त्वस्य शास्त्रप्रदेशे क्व चिदपि कीर्तनमस्तीत्यर्थः । परिहरति नेदमिति । लोकप्रसिद्धत्वेनोक्तप्रायमित्यर्थः । अन्वयेनैवोभयान्ता-नियतो ऽनैकान्तिक इति मन्वानः शङ्कते अव्यापकत्वादिति । परिहरति व्यावृत्तीति । क्व चिदन्वयस्योभयान्तानियमता क्व चिद्व्यतिरेकस्येत्यर्थः । एकीयं मतमुपन्यस्यति अपरे त्विति । दूषयति तैस्त्विति । नोदाहरणे व्यभिचाराल्लक्षणव्यभिचारो भवति अन्यस्मात् । नो खलूदाहरणमाद्रियन्ते परीक्षकाः किं तु लक्षणमित्यर्थः ।

सिद्धा-द्धः (सू. ६) ॥ पृच्छति को ऽस्य सूत्रस्येति । न खलु हेतुरचेतनः सिद्धान्तमभ्युपगच्छति । यस्त्वभ्युपगच्छति चेतनो नासावन्यत-मेन हेतुलक्षणेन युज्यत इति न हेत्वाभासः । न च पक्षः सिद्धान्त इति तद्वि-रोधी न विरुद्धः स्यादिति भावः । उत्तरम् अभ्युपगतार्थविरोधी विरुद्धः । हेतुद्वारेण पुरुषस्याभ्युपगमो हेतावुपचरितः अभ्युपगम-मात्रविवक्षया सिद्धान्तशब्दः प्रयुक्तो न पुनः सिद्धान्त एवेह विवक्षितः तेन पक्षो ऽभ्युपगमविषय इति तद्विरोधी हेत्वाभासः सङ्गृहीतो भवति । विशेषविरुद्धस्य न च हेत्वाभासतेत्युक्तं भवति । न हि विशेषो ऽभ्युपग-मस्य विषयः । न चायं प्रतिज्ञापदगोचरः । किं तु प्रतिज्ञार्थस्य सिद्धा-नुषङ्गीति नाभ्युपगमगोचर इति भावः । ईदृशस्य सूत्रव्याख्यानस्य फलमाह एवं चेति । ईदृशं व्याख्यानमन्तरेणानुक्तस्य विरुद्धस्येत्यर्थः । अभ्युपग-तेन बाध्यत इति । स्वरूपेण हेतुत्वेन चेत्यर्थः । तदनेन तं विरुणद्धी-त्यादिभाष्यं व्याख्यातम् । चोदयति नन्वेवमिति । यदि हेतुत्वबाधाद्विरुद्धो १७३ ।

* कथित इति ३ पु. पा. ।

हेतुः सव्यभिचारादयो ऽपि विरुद्धा. तेषामपि हेतुत्व बाधितम् अबा-
१ धे वा न हेत्वाभासा इति भाव. । परिहरति सत्यमेक एवेति । तादृग्वा-
विरुद्धत्वेन तुल्यत्वे ऽप्यवान्तरभेदविवक्षया पञ्चत्वम् । यथा प्रमाणादीनां
प्रमेयत्वेन तुल्यत्वे ऽपि प्रमाणप्रमेयादीनामवान्तरभेदविवक्षया षोडशत्वम् ।
यद्वा वा सूत्रविरोध एव साधारणतया सूत्रोत्पन्नतया व्याख्यायते । अत्र
विरुद्धविशेष यथासाधनैकान्तिकादिविरुद्धानैकान्तिकादिपदवाच्य इत्यर्थः ।
अस्योदाहरणभाष्यम् । यथा सो ऽयं विकार इति । महदहङ्कारपञ्चतन्मा-
त्रैकादशेन्द्रियभूतसूक्ष्ममहाभूतानि विकारः तस्य व्यक्तिर्धर्मलक्षणावस्थापरि
णाम तस्मादपाय इति । अत्र हेतु र्नित्यत्वप्रतिषेधादिति । तस्य व्याख्यान
न नित्यो विकार उपपद्यत इति । अपेतो ऽपि विकारो ऽस्ति विनाश-
प्रतिषेधात् सो ऽय नित्यत्वप्रतिषेधादिति हेतुर्व्यक्तेरपेतो ऽपि विकारो
ऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते । एतदेव प्रश्नपूर्वक विभजते कथमि-
त्यादिना । विरोधस्य व्याप्यत्वात् सिद्धान्तेन विरुध्यत इत्यभिधाय
सिद्धान्त व्याहन्तीत्युक्तमित्यर्थ. । तदेतद्भाष्यं व्याचष्टे उदाहरणमिति ।
ननु नित्यत्वप्रतिषेधादिति हेतुर्विनाशप्रतिषेधेन सिद्धान्तेन विरुध्यत इत्येव
सुवाचः शास्त्रविरोधमापादयति तथा च कालात्ययापदिष्टो हेत्वाभासो न
विरुद्ध इत्यत आह एते ते वाक्ये परस्परार्थबाधिते इति । दृढतरप्र-
माणबाधितो हि हेतु कालात्ययापदिष्टो भवति । यथा ब्राह्मणेन सुरा
पेया द्रवद्रव्यत्वात् क्षीरवदिति हेतु. । गौडी पैष्टी च माध्वी च विज्ञेया
त्रिविधा सुरा । यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिरित्यादिभिराग-
मैरतिदृढैर्बाधित कालात्ययापदिष्टतया हेत्वाभासो भवति । प्रकृते वाक्ये
परस्पर वस्तुार्थतया न प्रतिष्ठा लभेते न पुनरन्यतरदन्यतरेण यत्र
बाधितु द्वयोरप्युन्मग्नत्वात् । तस्मान्नाय कालात्ययापदिष्ट इत्यर्थ । व्या-
१२ ख्यान्तरमाह प्रतिज्ञाहेत्वोर्वा विरोध इति । सो ऽय विकारो व्यक्तेर-
पैतीति प्रतिज्ञा नित्यत्वप्रतिषेधादिति हेतुना विरुध्यते । व्यक्तिमात्रादपैति
न तु विनश्यतीति हि प्रतिज्ञार्थो ऽपेतो ऽप्यस्ति विनाशप्रतिषेधादित्यनेन
व्याख्यात । तथा च व्यक्तेरपैतीत्यनेन विकारस्य नित्यत्वं प्रतिज्ञात नित्य-
त्वप्रतिषेधादित्यनेन हेतुना विरुद्ध भवति । स्वसिद्धान्तेनेति । स्वशब्दे

स्यर्थः । अत्र चार्थे सुगमं भाष्यम् । अत्र वार्तिककारश्चोदयति । ननु १५
प्रतिज्ञाविरोध इति । प्रतिज्ञाहेत्वोर्विरोध इत्यर्थः । परिहरति नैष
दोष इति । प्रतिज्ञावचनत्वं विरोधस्य विवक्षित्वा निग्रहस्थानेषु प्रतिज्ञा-
विरोधस्योपादानम् । हेत्वाभासत्वं तु तस्यैव विरोधस्य विवक्षित-
त्वाद् हेत्वाभासे ऽन्तर्भाव इति । यदा प्रतिज्ञाया हेतुविरोध इति हेतोर-
न्यतरासिद्धतया प्रतिज्ञातुल्यत्वाभिप्रायम् । यदि हेतुरुभयसिद्धो भवति
तदा हेतोर्वा प्रतिज्ञाविरोधत्वमिति । उपसंहरति अत इति । हेतोर्विरो-
धोदाहरणम् । विरोधकत्वं विरोधः । शब्दस्योत्पत्तिधर्मकत्वं प्रमाणविनि-
श्चितं नित्यत्वप्रतिज्ञां बाधत इत्यर्थः । प्रसङ्गाद्धेत्वाभासातिरिक्तस्य प्रति-
ज्ञापदयोर्विरोधस्य निग्रहस्थानस्योदाहरणमाह प्रतिज्ञाविरोधस्येति ।
तृतीये ऽध्याये चैव विरोध उपपादयिष्यते । हेतोरन्यतरासिद्धतया समान-
बलयोः प्रतिज्ञाहेत्वोर्विरोधोदाहरणं गुणेति । हेतुविरोधोदाहरणं
नास्त्येको भाव इति । अन्यतमत्वं ह्यन्यतरासिद्धमपि यत्समसाधनमिति
प्रतिज्ञार्थं व्याहन्ति । समूहे भावशब्दप्रयोगादिति । उभयसिद्धमेव प्रति-
ज्ञार्थं व्याहन्तीत्येतावता भेद इत्यर्थः ॥

यस्मा-मः (सू. ७) ॥ प्रकरणशब्दार्थमाह भाष्यकारः । विम-
र्शाधिष्ठानमिति । विमर्शः संशयः तस्य विषयो अनवसितावनिर्णीतौ साद्ध्-
यपक्षावेव पक्षप्रतिपक्षशब्दवाच्यत्वात् प्रक्रियते साध्यत्वेनाधिक्रियते इति व्युत्प-
त्त्या प्रकरणम् । चिन्तापदं व्याचष्टे तस्य प्रकरणस्य चिन्ता विमर्शात्प्रभृति प्राग्
निर्णयात् समीक्षणमालोचनं जिज्ञासा सा खलु तत्त्वानुपलब्ध्या कृता नैव
तत्त्वं नित्यधर्मान्नित्यत्वाविनाभाविनो ऽनित्यधर्मात् वा अनित्यत्वाविना-
भाविन उपलभ्यमानस्य पक्षद्वये सदा जिज्ञास्यते । सैव नित्यधर्मानुपल-
ब्धिरनित्यधर्मानुपलब्धिश्चोभौ विशेषाभिसंधितया वादिना निर्णयायापदिश्य-
माना प्रकरणसमो हेत्वाभासः । कुतः उभयपक्षसाम्यात् । यथा नित्यत्वपक्षे
ऽनित्यधर्मानुपलब्धिरेवमनित्यपक्षे ऽपि नित्यधर्मानुपलब्धिः सेयं तत्त्वानुप-
लब्धिमात्रविषयोभयपक्षसमा प्रकरणसमा तु यथा प्रकरणमनिवार्यपक्षमे-
यमियमर्थेत्यर्थः । व्युत्पत्तिमात्रं चैतत् । प्रकरणसमपदस्य प्रवृत्तिनिमित्तन्तु
सत्प्रतिपक्षत्वं अन्यथा ऽनैकान्तिकस्यापि प्रकरणसमत्वप्रसङ्गादिति । प्रसाधने

प्रज्ञाप्यते ऽनेनेति व्युत्पत्त्या निदर्शनमुक्तम् । अनैकान्तिकत्वशङ्कां सत्प्रति-
१३ पक्षस्य व्यवच्छिनत्ति । यत्र समान इति । संशयेन समो ऽनिश्चायकत्वा-
दिति । एतदुक्तं भवति न हि नित्यधर्मानुपलब्धिरुभयपक्षविशिष्टे नित्ये ऽस्ति
येन सव्यभिचारो भवेन्नाप्यनित्यधर्मानुपलब्धिः उभयपक्षवत्यनित्ये ऽस्ति
येन सव्यभिचारो भवेदपि तु परस्परमनयोः सत्प्रतिपक्षतयैव हेत्वाभा-
सत्वमिति । यस्मात्प्रकरणचिन्तेत्युक्तं सूत्रकृता तत् यस्मादर्थं प्रश्नपूर्वकं दर्श-
यति वार्त्तिककारः । कस्मादिति । कारणान्तरं तत्त्वानुपलब्धेर्व्यतिरेकेण
दर्शयति यस्मादिति । अत एवेति । तत्त्वानुपलब्धेरित्यर्थः । चोदयति
नन्वयमिति । पक्षप्रतिपक्षौ हि प्रकरणं तौ च साध्यौ ताभ्यां च समः सा-
ध्यसमः । तथा च साध्यसमाद् हेत्वाभासान्न पृथग् निर्देशः प्रकरणसमस्ये-
त्यर्थः । परिहरति नाविशिष्ट इति । यद्यपि प्रकरणसमशब्दो व्युत्पत्त्या
साध्याविशिष्टेन समानार्थः तथा ऽपि प्रवृत्तिनिमित्तमस्य सत्प्रतिपक्षत्वम् ।
न च तत्त्वानुपलब्धिः स्वयमसिद्धा सा ह्युपलम्भाभावेन सुलभेति भावः ।
परमतमनुभाष्यातिप्रसङ्गापादनेन दूषयति । ये तु संशयहेतुत्वादिति ।
चोदयति समूह इति । यस्मिन्सति भवत्येव तत्कारणं समूहे सति च
भवत्येवेति नैकैकस्मिन् तस्मान्नैकैकं कारणमिति भावः । परिहरति समूहः
कारणमिति । न ह्यकारणानां समूहः कारणं भवितुमर्हति अतिप्रसङ्गात् ।
न च समूहिभ्यो ऽन्यत्वमन्तरेणाजानतः समूहस्य वैलक्षण्यं तस्मात्समूहिन
एवान्योन्यसहकारिणः कारणं तथा च प्रत्येकस्योपपन्नं संशयकारणत्वं
न च यस्मिन् सति भवत्येव तत्कारणम् अपि तु यस्मिन्नसत्येव न भवतीति
चचभङ्गमङ्गे पश्याम इति । ननूभयधर्मानुपलब्धिरुभयपक्षसाधारणीति सव्य-
भिचार एवेत्यत आह उभयधर्मानुपलब्धाविति । नोभयधर्मानुपलब्धिर्हेतु-
रपि तु एकधर्मानुपलब्धिः न चासौ साधारणी । किं तु सत्प्रतिपक्षेत्यर्थः । उभ-
यविशेषानुपलब्धेः प्रकरणसमत्वेनाभिधानादयुक्तत्वात् प्रकरणसमस्योदाह-
१४ रणान्तरं दूषयति । शरीरान्यत्वं त्विति । परेषां किलोदाहरणं नित्य
आत्मा शरीरादन्यत्वाद् आकाशवदिति । यत्र शरीरादन्यत्वमुपलभमानो
यदा तस्य विनाशित्वमात्मनः प्रत्येति न हि तदा जिज्ञासितुं नित्यत्वं प्रव-
र्तते । यदा तु तस्य नित्यत्वं नोपलभते शरीरादन्यत्वमुपलभमानो ऽपि

सदा प्रवर्तेते । तस्मादन्वयव्यतिरेकाभ्यां सत्त्वानुपलब्धिरेव प्रकरणचिन्ता प्रवर्तिका न शरीरादन्यत्वं तस्मान्नैतत्प्रकरणसमस्योदाहरणम् अपि तु सत्त्वानुपलब्धिरेव । इतश्चैतन्न प्रकरणसमस्योदाहरणमित्याह शरीरादन्यत्वं चानैकान्तिकम् । उपसंहरति अतो न सूत्रार्थः । न सूत्रविषय १७६ । एवमन्यान्यपि सत्प्रतिपक्षोदाहरणान्यूहनीयानि ।

**साध्या-मः (सू. ८)** ॥ अथ साध्यसम इति लक्ष्यनिर्देशः साध्याविशिष्ट इति लक्षणम् । तदनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धानां संग्रहः तेषामसिद्धत्वेन साध्याविशिष्टत्वात् । अथ चासिद्धः साध्यसम इति वक्तव्ये साध्याविशिष्टग्रहणमन्यतरासिद्धस्यापि सिद्धेः प्रागहेतुत्वज्ञापनार्थमन्यथा ह्यन्यतरासिद्ध एव साध्यसमो नान्यतरासिद्धः तस्य कदा चित् सिद्धेरिति भ्रान्तिः स्यात् । साध्याविशिष्टेन तु सोऽपि गृह्यत इति । नन्वेवं साध्याविशिष्टत्वेनान्यतरासिद्ध एव स्यादितरे तेषामसिद्धत्वेन साध्याविशेषाभावादित्यत उक्तम् । **साध्यत्वादिति** । यदि हि साध्यं नासिद्धं भवेत् साध्यत्वादेव च्यवेत । न खलु सिद्धं साध्यते । तस्मात् साध्यत्वादसिद्धता सा च कस्य चित् सर्वदा कादाचित्की न कस्य चिदिति सर्वेषामविशिष्टत्वमिति भावः । नापि साध्यत्वस्यातिप्रसक्तस्यातिव्याप्तिः हेत्वाभाससामान्यलक्षणावेक्षितत्वात्तद्विशेषलक्षणस्येति सूत्रार्थः । **साधनीयत्वादिति** च भाष्यगतं न साध्यत्वादित्यस्य व्याख्यानमपि तु गतिमत्त्वस्यासिद्धत्वपरम् । अथ वार्त्तिककारः सूत्रार्थं व्याचष्टे **साध्येनाविशिष्टो य इति** । साध्येन व्यभिचारो मा भूदित्यत आह । **साधनधर्म इति** । हेत्वाभाससामान्यलक्षणयोगे सति प्रतिज्ञातधर्मिणि न व्यभिचार इति भावः । अथ भाष्यकारेण स्वरूपासिद्धाश्रयासिद्धान्यथासिद्धानां साधारणमुदाहरणमुक्तं द्रव्यं छाया गतिमत्त्वादिति । तद्विभजते वार्त्तिककारः द्रव्यं छायेति । अथ स्वरूपासिद्धतां तावदाह । **पर्येषेति** । आश्रयासिद्धतामप्रसार्य तु गतिमत्त्वं छायायाः पञ्चावयवेन वाक्येन साधयति । **गतिमत्त्वमिति** । आश्रयासिद्धमाह **नाश्रयासिद्धत्वादिति** । ॥ । १५ सत्या यत्र छायाया देशान्तरे दर्शनादो ऽस्या गतिमत्त्वमनुमिनोति ■ प्रत्याश्रयासिद्धं देशान्तरे दर्शनम् । तदाश्रयासिद्ध-

५ त्वात् । तदिदमुक्तं सति द्रव्यभाव इति । सति सत्त्व इत्यर्थः । न तावच्छाया सामान्यविशेषसमवायान्तर्भूता अनित्यत्वात्तस्याः । नापि कर्म संयोगविभागासमवायिकारणत्वाभावात् । न गुणो द्रव्यासमवायात् । न मनो दिक्कालगुणः तद्गुणानामप्रत्यक्षत्वात् । नाप्यात्मगुणो बाह्येन्द्रियप्रत्यक्षत्वात् । नापि नभोनभस्वतोः तद्गुणानामचाक्षुषत्वात् । नापि तेजसः । तद्विरोधित्वात् तत्सहचरितगुणान्तरानुपलब्धेश्च अत एव न पृथिवीपाथसोरपि । अपि च तद्गुणश्चाक्षुषो नालोकमन्तरेण ग्रहणं छाया तु तमन्तरेण गृह्यते तस्मिंस्तु सति न गृह्यत इति दुर्घटम् । नापि द्रव्यं तद्धि पृथिव्यादीनामन्यतममेव भवेदन्यद्वा दशमम् । न तावदन्यतम तद्गुणानामनुपलब्धेः नाप्यन्यद्रूपवद्धीति युज्यते । तस्माद्द्रव्यस्य प्रत्यक्षत्वानुपपत्तेः अस्पर्शत्वादनारम्भकत्वेनानेकद्रव्यत्वाभावात् । तस्माद्भाऽभाव एव छाया न तु सतीति सिद्धम् । यस्तु मन्यते मा भूच्छाया सती भवतु भाऽभावः तथा ऽपि नाश्रयासिद्धता देशान्तरदर्शनस्य भाऽभावाश्रयत्वादेवेति स प्रत्यभ्युपेत्यान्यथासिद्धतया साध्यसमत्वमापादयति अभ्युपेत्ये ते । स्वाभाविको हि सम्बन्धो हेतोः साध्येन तदनुमानाङ्गं नौपाधिक इति विवेचितमनुमानलक्षणे । तदयमन्यथासिद्धेरौपाधिकसम्बन्धो भवति हेत्वाभासः । सेयं हेतोरसिद्धिर्द्विधा स्वरूपतो हेतुत्वेन च । स्वरूपतो ऽपि द्वेधा स्वत आश्रयासिद्ध्या च न चैतावता सव्यभिचारादीनामपि हेतुत्वासिद्धेरसिद्धेष्वन्तर्भावः सव्यभिचारत्वादिविशेषणेन तेषामतो भेदात् अन्यथासिद्धस्य तु तद्विशेषणस्यायोगिनो हेतु-
१ त्वासिद्धिमात्रेण साध्यसमेऽन्तर्भाव इति सर्वमवदातम् । संकलयति सो ऽयमि ति । एते ऽसिद्धभेदा उदाहरणभेदेष्वपि द्रष्टव्याः यथा नित्यः शब्दः चाक्षुषत्वादिति स्वरूपासिद्धः । तनुभुवनादीनामकर्त्तेश्वरो ऽशरीरत्वादित्याश्रयासिद्धः । स श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यन्यथासिद्धः । अन्नपानपरिणतिभेदनिबन्धनत्वाद्रूपभेदस्यान्यथासिद्धत्वमिति । अयमप्यसिद्धत्वादिति भाष्ये अविशेषेणावयवस्य छायायाः सत्त्वेनासिद्धिः सूचिता । अथ भदन्तेनेह साध्यसमत्वमुदाहरणान्तरं कल्पयित्वा दूषितम् । इदं क्रियान्वितोदाहरणं नित्यः शब्दो ऽस्पर्शत्वात् बुद्धिवद् । तदेतद्विधा ऽप्यसिद्धं न भवतीति दूषयित्वा भदन्तेन शङ्कितमुभय साध्येनाविशिष्टो दृष्टान्तो यस्मिन्स साध्याविशिष्टो हेत्वाभास इति बुद्धेर्दृष्टान्तस्य नित्यत्वेनासिद्धत्वादित्याश-

त्वा बहुव्रीह्यभावेन दूषितम् । तदेतत्सर्वमभ्युपगमेन वार्त्तिककारो दूषयति
**नित्यः शब्द इति** । यद्येतन्नोदाहरणं किमुदाहरणं को वा सूत्रार्थ इत्यत १७७ ।
आह **यथा त्वस्माभिरिति** । अयं भदन्तोक्तो दोष इत्यर्थः । कस्मादित्यत
आह **भदन्तेन सूत्रार्थो न विज्ञातः** न हि सव्यभिचारो ऽनेन लक्ष्यते ।
येन सव्यभिचारस्यार्थवत्त्वमस्योदाहरणं स्यात् किं तु साध्यसमः नापि
व्यधिकरणबहुव्रीहिदूषणेनापराधो ज्ञातः नापि पुनरुक्तिरिति । दृष्टान्ताभास-
मेव हेत्वाभासं कुर्वता हेत्वाभासदृष्टान्ताभासौ व्यस्तौ भदन्तेनेत्यर्थः ।

काला—तः (सू. ९) ॥ अत्र कालातीत इति लक्ष्यनिर्देशः काला-
त्ययापदिष्ट इति लक्षणम् । हेतोरपदेशस्य हि साध्यधर्मसंदेहविषयः कालः यथा-
ऽऽहुः नानुपलब्धे न निर्णीते न्यायः प्रवर्तते अपि तु संदिग्ध इति । परे
ऽप्याहुः संदिग्धे हेतुवचनादिति । यत्र च प्रत्यक्षानुमानागमविरोधो ऽनुष्णो ऽग्नि-
र्द्रव्यत्वादिति अश्रावणः शब्दो गुणत्वादिति च शुचि नरशिरःकपालं प्राण्य-
ङ्गत्वादिति च स सर्वः प्रमाणतो विपरीतनिर्णयेन संदेहविषयं कालमतिप-
ततीति सो ऽयं कालस्यात्ययेनापदिश्यमानः कालातीत इति । तथा चोदाहृतं
यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः स इत्यत्र वार्त्तिककृता । बाधाविनाभा-
वयोः सहार्थसंभव इति चात्र चोद्यानामाक्षेपो ऽस्माभिः समाहितः । एवं व्यव-
स्थिते भाष्यकारः सूत्रं स्वपरमतश्लिष्टं व्याचष्टे कालात्ययेन संशयकालात्य-
येन **युक्तो यस्यार्थैकदेशः** धर्मविशिष्टो हि धर्मी हेतोरपदिश्यमानस्यार्थः ।
साध्यते हेतुना तस्यैकदेशः साध्यधर्मः स हि धर्मिणि बलवता प्रमाणेन
तद्विपरीतधर्मनिर्णयं कुर्वता संशयकालमतिपातितः स तादृशो हेतुः काला-
त्ययापदिष्टः कालातीत इति स्वमतेनास्यार्थः । अत्र च पूर्वमेवोदाहृतमिति
नेहत्यान्नोदाहृतम् । परमते तु कालात्ययेन युक्तो यस्य हेतोस्तस्य एक-
देशो हेतुविशेषणमिति यावत् स कालात्ययापदिष्ट इति योजना । परमते-
नैव निदर्शनमाह निदर्शनमिति । नित्यत्वं चाभावस्यानभिमतमिति ।
अन्यथा घटादिभिरालोकसंयोगव्यङ्ग्यैर्व्यभिचारः । तदेतत् पञ्चावयव वाक्य-
मुपन्यस्य संयोगव्यङ्ग्यत्वस्य हेतोरेकदेशस्य विशेषणस्य संयोगव्यक्तिकाला-
त्ययेन हेत्वाभासतामाह अयमहेतुरिति । स पुनरयमसिद्धविशेषणतया
हेत्वाभासः साध्यसम एवेति न पृथग्वाच्य इति । स्थूलतया एव दोषो भाष्य-

कारेण नोद्भावितं यत्पुनर्भदन्तेन कालातीतस्य व्याख्यानं कृतं प्रतिज्ञानन्तरं हि हेतोः कालः तमतीत्य हेतुं पश्चादपदिश्यमानं कालातीतो भवति यथा ऽनित्यः शब्दो घटादिवदित्युक्ते कस्मादित्यनुयुक्तो ब्रूते कृतकत्वादिति स कालातीत इति । तेन चैव दूषितं किं निराकाङ्क्षे वादिन्येव प्रतिवादिनः प्रश्न आहो साकाङ्क्षे यदि निराकाङ्क्षे तदा न्यूनमेवास्य निग्रहस्थानं हेत्वाभासस्याप्रयोगात् । प्रयुक्तो हि हेतुस्तदाभासो वा स्यान्नाप्रयुक्तः । अथ साकाङ्क्षे एव वादिनि प्रतिवादिनः प्रश्नस्तथा ऽपि पश्चादप्ययं हेतुः प्रयुक्तो हेतुरेव न ह्यसौ तदा न स्वसाध्याविनाभूतो ऽपक्षधर्मो वेति । तस्मान्न कालातीतो नामास्ति हेत्वाभास इति । तदेतद्भदन्तदूषणमेतद्व्याख्यानानभ्युपगमेन परिहरति । अवयवविपर्यासवचनं त्विति । अनभ्युपगमहेतुं पृच्छति कस्मादिति । उत्तरं यस्येति । अर्थेन सामर्थ्येन सम्बन्धो ऽर्थसम्बन्धः । अपि च येनहन्यादपि नाभ्युपगम्यमहत्त्वाह अवयवेति । यस्यापदिश्यमानस्येत्यादि पुनरुच्यते इत्यन्तं वार्त्तिकं भाष्यव्याख्यानेनैव व्याख्या-
१ तम् । यद्भूते समीकृते ऽभिधानादिति । अयमर्थो नैतदप्राप्तकालेन निग्रहस्थानेन पुनरुक्तम् अपि तु हेत्वाभास एव । स ह्यवयवविपर्यास उच्यते यत्रैकवाक्ये नैव वादी प्रतिज्ञोदाहरणादि प्रयुज्य पश्चाद्धेतुं प्रयुङ्क्ते । यत्र तु प्रतिज्ञोदाहरणे प्रयुज्य विरते प्रतिवादिना ऽनुयुक्तः पश्चाद् हेतुं प्रयुङ्क्ते । तस्माद् न्यूनताद्दूषणेन पक्षे समीकृते पश्चात्ता नीते सिद्धवस्थानं प्रख्यापिते पश्चादभिधानाद्धेतोरेव कालातीतो हेत्वाभासो न पुनरप्राप्तकालम् । निग्रहस्थानमिति चेदिति । निराकरोति यदीति । हेत्वनभिधानेन न्यूनतया समीकृतं पक्ष किमत्र हेतोरसामर्थ्ये [illegible] ह्यन्यदोषेणान्यो युज्यत इत्यर्थः । शङ्कित्वा ब्रूते । एतदस्तीति । निराकरोति नैतदिति । न्यूनतया निगृहीतो यदि पश्चादभिधानेन निगृहीतव्यः ततो वादेव निगृह्यताम् । न त्वयं पश्चादभिहित इति समर्थं गतो हेतुर्निगृहीतुमिति । नाय समीकृताऽभि-
० हितस्येनापि हेत्वाभास इत्यर्थः । उभयनिराकरणमुपसंहरति तस्मादिति ।

उद्देशक्रमानुरोधेन लक्षणक्रमस्य हेत्वाभासानन्तरं छलस्योद्देशाच्छलानन्तरस्यापि हेत्वाभासलक्षणानन्तर्यमाह भाष्यकारः । अथ छलम् ।

---

* हेतुं प्रयुङ्क्ते इति ३ पु पाठः ।

वच-नम् (सू. १०) ॥ यथा धनुरभिमतो ऽर्थः सतो विरुद्धो ऽर्थस्तस्य विकल्पकल्पना सैवोपपत्तिः तया । अथ लक्षणान्तरवच्छलस्य सामान्यलक्षणे कस्मादुदाहरणं न दीयत इत्यत आह **सामान्यलक्षणे** इति । भा. सामान्यविशेषवत् सर्वमुदाहरणं निर्विशेषस्य सामान्यस्यासत्त्वेन केवलस्य सामान्यस्योदाहरणमशक्यमित्यर्थः । **विभागे त्विति** । विभज्यत इति विभागो विशेषलक्षणं तस्मिन्नुदाहरणानि । एवं सामान्यलक्षणमभिधाय तद्विशेषलक्षणान्यभिधातुं प्रथमं तावन्न्यूनाधिकसंख्याव्यवच्छेदार्थं विभागमवतारयति । **विभागश्चेति** । विभज्यते ऽनेनेति विभागः सूत्रमुच्यते । तत्र च विशेषलक्षणमवतारयति । तेषां छलानां मध्ये वाक्छलं लक्ष्यते ।

अवि-नम् (सू. १२) ॥ नव. कम्बलो यस्येति एकत्र विग्रहे नव कम्बला यस्येति अपरत्रेति विग्रहे विशेषः । वाक्छलशब्दार्थं व्युत्पादयति । **वाचि निमित्ते छलं वाक्छलमिति** । नवकम्बल इति उभयत्रापि समानायां वाचि निमित्तभूतायामित्यर्थः । तदेतच्छलं *पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम् । परवाक्ये पर्यनुयोगो ऽस्येति वेदितम् । तदत्र यथा पर्यनुयोगः तथा दर्शयति विमृश्याहितमना भाष्यकारः **अस्य प्रत्यवस्थानमिति** । उभयार्थाभिधाने ऽसम्भवदर्थकल्पनमयुक्तमित्यर्थः । यद्य प्रयोक्ता ऽपि कथं साधारणेन शब्देनार्थविशेषं बोधयति अबोधयंश्च कथं प्रतिपादको नामेत्यत आह **प्रसिद्धश्चेति** । सम्बन्धस्वरूपमाह । **अभिधानाभिधेययोः** यो नियमो ऽयमेतस्यार्थो ऽस्य शब्दो ऽस्यैवार्थस्येति तत्र यः पुरुषस्य नियोगो ऽस्मादयमेव बोद्धव्य इत्येवमाकारः । किमतो यद्येवमत आह **प्रयुक्तपूर्वाश्चेति** । तथा ऽपि किमित्यत आह **प्रयोगश्चेति** । तामिमां भूमिरचनां प्रकृते योजयति **तत्रैवमर्थगत्यर्थं इति** । एतदुक्तं भवति । न चैकेनकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः क्वचिदर्थे गृहीतसहि-कमा बोधयत्यपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारिविशेषे वर्तते । तस्मान्नैव प्रतिपादयितुरपराधो यदेव विशेषशब्दो ऽविशेषात् प्रतिपादयति । किं तु सङ्केतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्तते । तस्मा-दपराधकेन बोधयन्नापराध्यति प्रयोक्तेति सिद्धम् । सामर्थ्यमेव दर्शयति

* नैतच्छलमिति ३ पु. पा. ।

**यथार्थक्रियाचोदनेति** । स्यादेतदविशेषाभिहिते ऽर्थे इति न युक्तं न हि
नवकम्बल इति पदं प्रकरणादिनिरपेक्षं कं चिदर्थमविशेषेणाभिधत्ते गवादिश
ब्दवत् । न हि सङ्ख्याविशेषे च नवीनत्वे च नित्यं कश्चित् सामान्यविशेषो वाक्
१६ लेपादिविव गोत्वं घटाभिःप्रधीनेत्यत आह वार्तिककारः सामान्यश्रुतीति।
**अविशेषाभिहितमभिहितम्** उच्चारितमिति यावत् । समान शब्दो नार्थे सामान्य
मित्यर्थः । नवक इति नामपदमसमस्तस्य वाचकम् । आख्यातपदं यदा कञ्च
िदभिमुखं प्रयुज्यते नवक इति तदा बुद्धिं गतो ऽसीति प्रतीयते । **चोदयति**
**अविशेषेणेति** । समानो हि शब्दो ऽभिधेये संशयमाधत्ते न त्वर्थमभिधत्त
इत्यर्थः । **परिहरति न प्रकरणादीति** । श्वेतो धावतीति सारमेयो द्रुतमट
याति श्वित्री निर्वैनेक्तोत्यर्थः । अर्थे इत्यस्य प्रयोजनमाह **अर्थग्रहणमिति**।
अविशेषयुतो शब्दे इति अर्थे अर्थान्तरकल्पना न शब्दइत्यर्थः । अस्य
प्रत्यवस्थानमित्यादिभाष्यं व्याचष्टे तस्ये■ । सुगमम् ।

संभव-छलम् (सू. १३) ॥ सम्भवतो ऽर्थस्य ब्राह्मणविशेषस्य विद्या
चरणसंपदा विद्याचरण संपदस्तीति । अतिसामान्यं ब्राह्मणत्वं प्राप्ते ब्राह्मणे
तस्य ब्राह्मणत्वस्यातिसामान्यस्य योगादसद्भूतार्थकल्पनया च प्रतिषेध
स्तत्सामान्यच्छलम् । अहो खल्वयं ब्राह्मणो विद्याचरणसंपन्न इति हि स्तुत्यर्थे
वाक्यमभ्यनुजानीत्त संभवति ब्राह्मणे विद्याचरणसंपदिति तदपि वाक्य
स्तुत्यर्थमेव ■ त्वस्य ब्राह्मणत्वाद्धेतोर्विद्याचरणसंपद्विवक्षितेति । तत्र परो
हेतुत्वमस्याविवक्षितमारोप्य वचनं विहन्तीति तदिदं सामान्यच्छलमिति ।
**विषयानुवाद इति** । संपद्विषयस्य ब्राह्मणत्वस्यानुवाद इत्यर्थः । अस्याविव
क्षितहेतुकस्य एवं तदेतद्वार्तिककारो व्याचष्टे **सामान्यस्येति** । विव
क्षितार्थमतिगत * सामान्यमित्यर्थः ।

धर्म-छलम् (सू. १४) ॥ शब्दस्य धर्मः प्रयोग तस्य विकल्पो
द्वैविध्यम् । तस्य च द्विविध प्रयोग प्रधानो भाक्तश्च । तथापि प्रधान औत्स
र्गिक तस्य तु क्व चित्प्रयोगाद् भाक्तो भवति । तदेतदाह भाष्यकारः अभि
**धानस्य** शब्दस्य यथार्थे प्रयोगो धर्मः चौत्सर्गिक सात्त्विकमयमेव नेत्याह ।
**विकल्पो** द्वैविध्य को ऽसौ द्वितीय इत्यत आह । उत्सर्गस्य ■ कुतश्चिद

---

* अतिगतमिति ३ पु० पा० ।

पवादादन्यत्र दृष्टस्यान्यत्र प्रयोगः । तदेवं व्यवस्थिते धर्मविकल्पेन निर्देशे वाक्ये निर्दिश्यते ऽनेनेति व्युत्पत्त्या तत्र भाक्तविवक्षायां मञ्चाः क्रोशन्तीति । अर्थ-सद्भावेन प्रतिषेधः तमेवार्थसद्भावमाह । **मञ्चस्थाः पुरुषाः क्रोशन्ति न तु भा-मञ्चाः क्रोशन्तीति** । वार्तिकमते त्वर्थसद्भावस्यैव प्रतिषेध इति व्याख्येयम् । ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगः हेतुः सर्वे सर्वत्र प्रयुज्येतेत्यत आह **उपचारो नीतार्थः** । प्रापणार्थे. सहचरणादिना निमित्तेनेति । अन्यत्र दृष्ट-स्याप्यन्यत्र प्रयोगः संबन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः । न च्छन्दतः स्वच्छन्देनेत्यर्थः । ननु यदि भाक्ततया ऽप्युपपत्तिस्तर्हि किं विकल्पकमापतितं दुष्टं स्यात् सर्वस्यैव यथा कथं सिद्धान्तत्वेनोपपत्तेरित्यत आह **प्रधानभूतस्येति** । भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धस्य दृष्टान्तलाभाय लोकसिद्ध एवोपचारः कर्तव्यो नापूर्वो विना प्रयोजनम् । लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः । सूत्रव्याख्यानपरं वार्तिकं धर्मविकल्पनिर्देशशब्देन सूत्रस्थे नाभिधानं प्रयोगः शब्दस्य धर्मो भवन् द्विधाभिधीयते । द्वैविध्यमाह । **प्रधानमिति । सो ऽयमभिधानाभिधेयव्यवहार** इति शब्दो ऽभिधेयो गम्यः स च क्व सिद्धाभ्यः क्व सिद्धाक इति सुबोधम् । परीक्षापदेशः सन्नि-धानानन्तर्ये लक्षणपर्येषणादि योग्यत्वे सूत्रकारः छललक्षणं परीक्षते ।

१७९ । १

**वाक्छ-त् (सू. १४)** ॥ स्वाभ्यर्थो गुणशब्दो यो वस्तुतः स स्वार्थे. प्रधानशब्द एव इति कल्पयित्वेति योजना । यथा वाक्छले नवी-नार्थो नवशब्दः संख्याभेदे कल्पितस्तथेहापीति पूर्वपक्षः । सिद्धान्तसूत्रम् ।

**न त-त् (सू. १५)** ॥ तस्योपचारच्छले ऽर्थसद्भावे प्रतिषेधस्यार्था-न्तरकल्पनातः वाक्छलादित्यर्थः । सूत्रतात्पर्यमाह वार्तिककारः **अविशेषादि-त्यस्येति** । विधेयवस्तु मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते । मञ्चा इति त्वनूद्यन्ते । अत एव गुणे त्वन्याय्यकल्पनेति मञ्चा इत्येतदप्रधानमनूद्य-तया भाक्तं न तु क्रोशन्तीति । न विधौ परः शब्दार्थ इति न्यायात् । तदिह विधीयमानं क्रोशनमेव वस्तु प्रतिषिध्यते नैव मञ्चाः क्रोशन्तीति छलवादिना । नवकम्बलो देवदत्त इति वाक्ये तु देवदत्तमनूद्य नवत्ववि-शिष्टः कम्बलो विधीयते । तत्र न विधेयस्य वस्तुतः कम्बलस्य सद्भावः प्रतिषिध्यते । किं तु तद्विशेषणस्य नवतायाः इति महान् भेद इति सिद्धान्तः ।

१८० । १

अवि-ङ्गः (सू. १७) ॥ कि चित्साधर्म्याच्चित्साभावे द्वित्वस्याप्यभ्युपगतस्याभावप्रसङ्गः । श्रेयमिति ब्रुवतो वस्तुत्वेन समस्तभेदोच्छेदप्रसङ्ग । भाष्यवार्तिके चातिरोहितार्थे ।

उद्देशक्रमानुरोधेन जातिलक्षणक्रममाह भाष्यकारः छललक्षणानन्तर्यम् ।

साध-तिः (सू. १८) ॥ प्रतीयमवस्थान प्रत्यवस्थान तथा सति छलस्य सम्यग्दूषणस्य च जातित्वप्रसङ्ग इत उक्त साधर्म्यवैधर्म्याभ्यामिति । न च छले साधर्म्यवैधर्म्ये स्तः न च सम्यग्दूषण साधर्म्यवैधर्म्यमात्रादपि तु प्रयोजका*दिति । प्रयुक्ते हेतौ तदाभासे वा य प्रसङ्गो जायते सा जातिरिति । जल्पे हि वेदप्रामाण्य सिद्धान्त प्रति कुहेतुना यदा नास्तिकैरधिक्षिप्यते तदुत्तर चास्य यदा सहसा न प्रतिभाति तदेश्वरायो जनाधाराणां मा भूद्वेदाप्रामाण्यबुद्धिरिति जात्या अपि प्रत्यवस्थेयम् । अन्यथेश्वरचरिता मुर्वातिनीना प्रजाना विप्लवो भवेदिति । क चित्पुनरबुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोग सम्भवति । वाद्यमानो ऽयं इति जातिवदभ्युपगतिमिति दर्शितम् । तदेतद्वार्तिककारो व्याचष्टे साधर्म्येणेति । यथा पदे इति प्रतिपद्य पद स्थापनाया सत्या प्रत्यवस्थानमिति । सूत्रार्थस्तु यथाश्रुति न पुनरुदाहरणसाधर्म्येण यथाभाष्य बोद्धव्य । यदीव भाष्य तर्हि कथमित्यत आह । उदाहरणार्थमिति । एव वैधर्म्येण वेत्येतदपि यथाश्रुति न पुनर्यथाभाष्यमुदाहरणार्थे तदित्यर्थः । अस्य व्याख्यानस्य गुणाभिधानेन प्रश्नपूर्वक प्रपञ्चमाह किमर्थमिदमिति ।

विप्र-नम् (सू. १९) ॥ सूक्ष्मविषया प्रतिपत्तिर्विपरीता । स्थूलविषया च कुत्सिता । कथमसौ† निग्रहस्थानमित्यत आह विप्रतिपद्यमान इति । अप्रतिपत्तिमाह आरम्भविषय इति । लाघवाय विप्रतिपत्त्यप्रतिपत्ती इति वक्तव्ये कस्मादसमासकरणमित्यत आह असमासार्थे त । विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिक नाम जल्पे निग्रहस्थानमस्ति तदपि ग्रन्थाधिक्येनाख्यायतइत्यर्थ । आरम्भविषये अनारम्भ इत्यादि भाष्य

* प्रयोजकादिति ३ पु पा ।

† कथमात्मेति १ पु पा ।

अ. १ आ. २ सू. २० निग्रहस्थानलक्षणम् । २४५

तद्व्याघाते स्वपरार्थोत्तरा संवित्तिरिति । द्वेधा खल्वारम्भविषये ऽनार- [१८१]
म्भो भवति । दूष्यं वा परोक्तं साधनं प्रतिषेधहेतुं वा न प्रतिपद्यते । सेयं
परार्थोत्तरा अप्रतिपत्तिरुत्तरयितव्यं साधनमप्युपलक्षयति स्वार्थोत्तरा प्रतिप-
त्तिस्तु साधनप्रतिषेधहेतू परकीयौ प्रतिपद्य तत् प्रतिषेद्धुं स्वकीयमुत्तरं न
प्रतिपद्यत इत्यर्थः । चोदयति स्वयं प्रयुक्ते वस्तुतः समर्थे साधने कथम् ।
अप्रतिपत्तिर्विप्रतिपत्तिर्वेति द्रष्टव्यम् । परिहरति तदा ऽपीति । समर्थसा-
धनस्थाने साधनप्रतिपत्तिर्न साधनमात्रज्ञानमित्यर्थः । सूत्रान्तरमवतारयितुं
भाष्यकार आह किं पुनरिति । यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि
भेदस्तथा ऽपि लक्षणाभेदाभिप्रायेणाभेद उक्तः ।

तद्वि-त्वम् (सू. २०)॥ नानाकल्प इति स्वरूपतः । विविध इति
प्रकारतः । यथालक्षणमिति यथास्वरूपमित्यर्थः । अध्यायार्थं संक्षिप्याह यानि-
प्रकारः । तन्त्रप्रतिज्ञेति । तन्त्रस्य शास्त्रस्य प्रतिज्ञा प्रमाणादितत्त्वज्ञा-
नान्निःश्रेयसाधिगम इति सूत्रं शास्त्रमेव हि तत्त्वज्ञानमिति । संसारो दुःख-
जन्मप्रवृत्तिदोषमिथ्याज्ञानानामिति तन्निवृत्तिरस्य संविदा । उत्तरोत्तरापाये तद-
नन्तराभावादपवर्ग इति । तस्मादयः प्रमाणादिसूत्रेणोद्दिष्ट. तत्परिकरो द्वितीय
सूत्रं द्वाभ्यामुद्देशः शेषं सुबोधमिति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्य-
टीकायां प्रथमस्याध्यायस्य द्वितीयमाह्निकम् ।
समाप्तश्चायं प्रथमो ऽध्यायः ॥



कारणमुपेत्य सतः पश्चादकरणात्पूर्वमपि न कुर्यादित्यसंशयः पूर्वं वा करणा-
त्पश्चादपि कुर्यादित्यत्यन्तसंशयः । न त्वसौ निर्विशेषणः संशयकारणमिति
२ नासंशयो नात्यन्तसंशय इत्यर्थः । एतेनेति । समानपदप्रयोगेण सदृशार्थो
हि समानशब्द इति पूर्वं व्याख्यातम् । यदप्येतत् सारूप्याभावादव्यवसायव्य-
वसाययोः कार्यकारणयोरिति । विशेषानवधारणमुभयोः समानमित्यर्थः । भाष्य-
कारेण तु यत्सारूप्यमुक्तं तत्तथा न बोद्धव्यम् । यदि हि कार्यकारणयोः
स्यात् सारूप्यं तदतिव्यापकं चाव्यापकं च । नित्यानामपि कारणत्वात् ।
तस्मात्सारूप्यशब्दो न सारूप्यस्य निर्देशः । अपि तु कार्यकारणधर्मान्वय-
व्यतिरेकपर इत्याह । कारणसद्भावादिति । अनवधारणेनैव तस्यानुप-
लब्धेरिति प्रत्युक्तम् । सत्प्रतिपक्षयोरपि मिलितयोरन्यतरदर्शनेनासाधारण-
त्वान्तर्भावात् । एकैकविवक्षया तु हेत्वाभासान्तरत्वमिति भावः ।
न चाव्यवस्थातः संशय इति । नासौ पृथक्कारणमपि तु समानधर्मोपप-
त्त्यादिपरिकरतयेत्यर्थः । यत्पुनरेतद्विप्रतिपत्ताविति । विषयापेक्षया
विप्रतिपत्तिः स्वरूपापेक्षया सम्प्रतिपत्तिरिति । एवमव्यवस्थायामपि द्रष्टव्य-
म् । को ऽस्य सूत्रस्येति तात्पर्यप्रश्नः । उत्तरं स्वयमिति । संशयपूर्वक-
त्वात्सर्वपरीक्षायाः परिचिक्षिषमाणेन संशयाक्षेपहेतुभिर्न प्रतिपेद्धव्यो ऽपि तु
परैरेवमाक्षिप्तः संशय उक्तैः समाधानहेतुभिः समाधेयः । यथोक्तञ्चेति
भाष्ये यदप्युक्तमित्यर्थः । शास्त्रकथायां वादलक्षणायामित्यर्थः ।

अथ प्रमाणपरीक्षेत्यादिभाष्यम् । आर्थेन हि क्रमेण संशयपरीक्षा-
यामुक्तेनो*द्देशक्रमो बाधितः । प्रमाणादिषु तु तद्बाधकारणाभावाद् उद्दे-
शक्रमानुरोधेन प्रमेयादिभ्यः प्राक् प्रमाणान्येव परीक्षितानि† तत्रापि प्रथमं
प्रमाणसामान्यलक्षणपरीक्षा तत्पूर्वकत्वाद्विशेषलक्षणानाम् । तत्र सामा-
न्यलक्षणमुपलब्धिसाधनं प्रमाणमिति तच्चोपलब्धिसाधनत्वं प्रत्यक्षादीना-
मेवेति प्रत्यक्षादीनामिति उक्तं तदेतदाह वार्तिककारः अथेदानी-
१९ मिति । परीक्षणीयं पृच्छति । किं पुनरेषामिति । सर्वैरेव वादिभिः स्वसि-
द्धान्तव्यवस्थापनाय प्रमाणान्यभ्युपगन्तव्यानि तदभावे तद्व्यवस्थानुपपत्तेः ।
यस्य तु स्वपक्ष एव नास्ति नासौ लौकिको न परीक्षक इत्युन्मत्तवदुपेक्ष्य

---

* उक्तेनेति २ पु नास्ति ।     † परीक्षितान्यपीति २ पु ।

णीय. । तस्मात्सर्वप्रमाणप्रसिद्ध्यर्थं प्रमाणसामान्यं परीक्षणीयमिति भाव । उत्तरम् । **आदौ तावत्संभव** इति । न परीक्षा संशयमन्तरेणेति संशय-बीजमाह । **सदसतोरिति** । पूर्वपक्षमाह । **प्रमुदस्य संशयमिति** । अय- १८८ । मत्र पूर्वपक्षिणो माध्यमिकस्याभिसन्धिः । यद्यपि मम विश्वविचारासहत्व-वादिन' प्रमाणं नाम न किं चिदस्ति विचारसहं तथा ऽपि लोकसिद्धान्येव प्रमाणानि तैरेव प्रमाणैः पर्यालोच्यमानानि विचारं न सहन्ते । सो ऽयं प्रमाणानामपराधो यानि स्वविरोधेन विलीयन्ते न ममापराध इति । ज्ञानं हि प्रमाणं तद्योगात्प्रमेयमिति चार्थं इति च भवति । तद्यदि प्रमाणं पूर्वं प्रमेयादर्थादुत्पद्यते ततः प्रमाणात्पूर्वं नार्थवत्* इति इन्द्रियार्थेत्यादि-सूत्रव्याघातः । अथ पूर्वं प्रमेयं पश्चात्प्रमाणं तदाह पश्चादिति । यद्यपि स्वरूपं न प्रमाणाधीनं तथापि तस्य प्रमेयत्वं तदधीनं तदपि चेत्प्रमाणा-त्पूर्वं न प्रमाणयोगनिबन्धनं स्यादित्यर्थः । तदिदमुक्तं **प्रमेयसंज्ञेति** । **यौगपद्ये** द्विसूत्रव्याघात. सूत्रव्याघातश्च । प्रयोगस्तु प्रत्यक्षादयो न प्रमाण-त्वेन व्यवहर्तव्याः कालत्रये ऽप्यर्थाप्रतिपादकत्वात् । यदेवं न तत्प्रमाण-त्वेन व्यवह्रियते यथा शशविषाणं तथा चैतत्तस्मात्तथेति । एवं पूर्वपक्षिते सिद्धान्तमाह । **अत्र समाधिरिति** । उपलब्धिहेतोरित्यादिभाष्यस्य कालत्रये ऽप्यर्थाप्रतिपादकत्वादिति हेतोरसिद्धतोद्भावनमर्थः । एवं प्रति-फकारो ऽस्यानुमानस्य दूषणमाह । **प्रत्यक्षादीनामप्रामाण्यमिति** चेति । लब्धात्मकं खल्वनुमानं प्रत्यक्षादीनां प्रमाणानामप्रामाण्यमापाद-येत् । न च लब्धात्मकं तस्य तु प्रतिज्ञाविरोधेनात्मलाभ एव नास्तीति कथं तेषामप्रामाण्यमापादयितुमर्हतीति भाव. । यदि प्रमाणानि नार्थं साध-यन्ति प्रत्यक्षादीनीत्येव न स्यात् । न खलु तानि प्रमाणानि ऽसिद्धानि प्रत्य-क्षादीनीत्येव भवन्तीत्यर्थ. । न चैतेषामर्थसाधनत्वं सामान्यविशेषाभिधा-यिप्रत्यक्षादिपदगोचरता ऽपीत्याह । **कथं चान्यथेति** । अपि च प्रामाण्य-निषेधेन प्रमाणानां प्रत्यक्षादीनामसत्त्वम् । न ह्यकमण्डलुर्माणवक इत्यनेन माणवकः प्रतिषिध्यते किं तर्हि तस्य कमण्डलुयोगो धर्म' ततश्च प्रमा-णानामसत्त्वं पूर्वपक्षिणो ऽभिमतं न स्यादित्याह **धर्मप्रतिषेधाच्चेति** ।

* एतदर्थ इति २ पु पा ।

युज्यते । अथ भावस्यास्वतन्त्रत्वादिति । निराकरोति । एवमपीति । प्रतिषिध्यमान इति भावे वक्तव्ये विधीयमान इति दृष्टान्तार्थम् । एतेन तद्धितार्थ इति । प्रामाण्यपदार्थ इत्यर्थः । यथाश्रुतस्य हेतुर्व्यधिकरण इत्याह । पक्षायं हेतुरिति । यत्पुनरित्यादि भाष्यं व्याचष्टे यत्पुनरेतत्प्रमाणेनेति । यतः प्रत्यक्षादीनां निवर्त्येतइति । प्रत्यक्षादीनामभावे कारकहेतुवचनमित्यर्थः । असमर्थं प्रत्यक्षादीनां सिद्धमेव ज्ञापयतीत्याह अथासंभवो ज्ञाप्यते न ह्यसतो निवृत्तिरिति । नाऽसन् घटो मुद्गरप्रहारेण निवर्त्येतेत्यर्थः । दूषयति त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरित्येवमभिधानेनेति । परिहरति नैष दोष इति । स्ववचनं स्वाभ्युपगमविरुद्धमस्माकं तु नैतद्वचनं नाभ्युपगमविरुद्धमित्यर्थः । न च धर्मिणां प्रतिषेधे कश्चिन्न्याय इति । नानुमानं धर्मिप्रतिषेधे प्रभवति आश्रयासिद्धत्वाद्धेतोरित्यर्थः । अपि च प्रमाणमात्रमर्थविषयतः प्रत्यक्षादीनामप्रामाण्यमिति प्रत्यक्षादीनां प्रामाण्यमिति च वाक्ययोरर्थभेदाभेदौ विचार्यं न घटेते इत्याह प्रत्यक्षादीनामप्रामाण्यमिति । एवमेव वक्तव्यमिति । नञोरप्रयोगेण लाघवात् को ऽप्राधर्म्यं चेति । यदा सत्येव घटे तस्यासामर्थ्यं विवक्षित्वोच्यते नास्ति घट इति नोदकाहरणसमर्थ इति तदा गम्यते । तन्त्रान्तराभ्युपगतानां प्रतिषेध इति । तन्त्रान्तरे यादृशं प्रमाणमभ्युपेयते तादृशप्रतिषेधे अन्यादृशस्याभ्युपगमो भवति । यथा प्रधानं नास्तीति जगत्कारणस्य सुखदुःखमोहात्मकत्वं प्रधानत्वं तत्प्रतिषिध्यते न पुनर्जगत्कारणं तस्यान्यादृशस्याभ्युपगमादिति । कथमिति प्रमाणाक्षेपः । कस्येति प्रतिपाद्याक्षेपः । केनेति प्रतिपादकाक्षेपः । प्रतिपाद्याक्षेपं विभजते । अप्रतिपन्न इति । प्रतिपादकाक्षेपं विभजते । प्रतिपन्नश्चेति । क प्रतिपाद्ये । किं प्रतिपाद्यत इति । यदुपादीयते उदाहरणं तत्प्रमाणेनानवधारितं वाक्यमुपादातुमिति भावः । न केवलमवाक्यं व्यर्थं चेत्याह । प्रत्यक्षादीनां चेति । सर्वैः प्रमाणैरिति । उदाहरणादिविषये प्रमाणैर्विप्रतिषिद्धो विरुद्धो भवति । बाधितविषयतया प्रमाणाभासो भवतीत्यर्थः । विरुद्ध चेत्याह सिद्धान्तमभ्युपेत्येति । प्रमाणानामित्यवयवाभिप्रायम् । अवर्ज-

१० नमिति । वर्जनविरुद्धमुपादानमुच्यते उपाददान इत्यर्थः । तत्प्रामाण्ये

वेति। अस्यार्थः। यदि माध्यमिको ब्रूयात् प्रत्यक्षादीनामप्रामाण्यं त्रैका-
ल्यासिद्धेरिति स्वभावस्थाव्यभिचारितानि प्रमाणानि यथालोकप्रतीति सिद्धानि
तेऽव्यभिचारितसिद्धेरितरेषां प्रामाण्यं प्रतिषिध्यत इति। तत्रेदमुच्यते। तत्प्रा-
माण्ये वा अव्यभिचरितप्रत्यक्षादिप्रामाण्ये न सर्वप्रमाणविप्रतिषेधो ऽव्यभि-
चारितानामेव प्रामाण्याभ्युपगमात्। किं पुनरिदमव्यभिचारितसिद्धत्वं किं विचा-
रासहत्वम् आहो सर्वजनसिद्धतया संदेहानास्पदत्वं तत्र पूर्वस्मिन्कल्पे
विचारासहत्वेन स्वयं दुःस्थितेनान्येषां प्रामाण्यं बाध्यत इति सुभाषितम्।
तस्मादुत्तरः कल्पः तथा च न सर्वाप्रामाण्यं तस्यैव प्रामाण्यात्। अथ
भाष्ये विप्रत्युपसर्गः संप्रतिपत्त्यर्थे प्रतिषेधशब्दार्थमनुजानाति विशेष-
मभिदध्यात् न तु तद्व्यतिरिक्तार्थो न व्याघातवचन इत्यर्थः। तदिदमुक्तं
न व्याहते कस्मादर्थाभावात्। स्वभावस्थाव्यभिचारितानां हि प्रमाणानां
प्रामाण्ये सर्वप्रमाणप्रतिषेधव्याघातः पूर्वमुक्तस्तत्प्रतिषेधः पूर्वेण विरुध्यते
व्याघातपरत्वेति। अर्थाभाव इत्यर्थः। तदेतद्वार्त्तिककारो व्याचष्टे विप्रत्युप-
सर्गे विशेषप्रतिषेधे। यावदुक्तं भवति विशेषेण सर्वेषु प्रमाणेषु प्रतिषेध १९४।
इति तावदुक्तं भवति विप्रतिषेध इति प्रतिषेधशब्दार्थाभ्यनुज्ञानत्वाद्विशब्द-
स्य। तेन न सर्वप्रमाणविप्रतिषेध इत्यनेन हियदवहितेन किमुक्तं भवति।
यदुक्तं भवति कानि चिदिति। अव्यभिचारितानि प्रमाणानि विचार्य समुदाय
विचारयति सर्वेति। तदिदं सूत्रकारेण त्रैकाल्यासिद्धेरित्यनुयोगस्य प्रतिषेधे
ऽपि सामान्यात्प्रमाणविरोधव्याघातः संशय्यसिद्धतोद्भावनपरं सूत्रं पठति।

त्रैका-द्धेः (सू. ७)। तत्पाठमाक्षिपति किमर्थमिति। स्वातन्त्र्ये-
ण चैतस्य सूत्रस्यार्थः पूर्वमुक्तः कृतं सूत्रपाठेनेत्यर्थः। परिहरति। पूर्वोक्तेति।
[illegible] तदस्माभिरुत्सूत्रमुक्तमपि [illegible] सूत्रार्थ एवेति ज्ञापनार्थं सूत्रपाठो ऽस्माकमि-
त्यर्थः। नियमेन यः प्रतिषेधः पूर्वमेव वा पश्चादेव वा सहैव नेति स
प्रतिषेधति। अनियमेति। चशब्दो ऽयं यस्मादर्थे। यस्मादनियमदर्शी
ऋषिः। वार्त्तिकं तदुत्पादनज्ञापनार्थः सूत्रपाठ इति। देशयति।
पाठक्रममतिलङ्घ्य कस्मात्तत्रैवेदमिति। अत एव तद्भाष्यं कस्मान्नोक्तमिति
च द्रष्टव्यम्। परिहरति। अविशेषादिति। अथ शब्दः श्रोत्रविवरे सम-
वेतः कथमातोद्यमसंबद्धं गमयतीत्यत आह। यो ऽसौ वीणावेणुमृदङ्ग- १९५

योरिति । अथ शब्दो धर्मो वीणाङ्गुलिसंयोगजशब्दपूर्व इति साध्यो धर्म-तन्निमित्तासाधारणधर्मवत्त्वात् । पूर्वोपलब्धवीणानिमित्तध्वनिवदिति । तदि-दमुक्तं वीणानिमित्तकत्वमिति । धूमदर्शनादिति । संयोगिना वह्निना विशिष्टो धूमो ऽनुमीयते न कार्येण अस्तीति वर्तमानावभासानुप-पत्तेरिति । यत्पुनरासिध्यते यदनियतं न तत्परमार्थसत् । यथा रज्ज्वा-मारोपितः सर्पस्तामेव हि रज्जुं तदेव कश्चित्सर्प इति कल्पयति कश्चिद्धारेति । स एव कदा चित्सर्प इति कल्पयित्वा पश्चाद्धारेति कल्प-यति तथा च प्रमाणप्रमेयभावस्तस्मान्न परमार्थसन्निति । अथेदमुत्तरसूत्रम् ।

प्रमेया च तुला प्रामाण्यवदिति (सू.१६)। तद्योजनिकां करोति। प्रमाणं प्रमेयमिति चेयमिति । अयमभिसन्धिः । क्षणभङ्गपरिणामनिरासे सति स्वकारणादुत्पन्नं स्थिरं वस्तु तत्तत्सहकार्यन्तरसन्निधानात्तत्तद्धर्मयोगे सति तत्तद्बुद्धिव्यपदेशमनुभवति । समावेशं दर्शयितुं पृच्छति यदा पुनरिति । उत्तरम् तदा निमित्तेति । अस्य चार्थस्य ज्ञापनार्थं सूत्रं प्रमेया च तुला-प्रामाण्यवदिति । न केवलं प्रमाणं समाहारगुरुत्वे तुला यदा पुनरस्याः सन्देहो भवति प्रामाण्यं प्रति तदा सिद्धप्रमाणभावेन तुलान्तरेण सम्परीक्षित-सुवर्णादि तेन प्रमेया च तुला प्रामाण्यवत् । यथा प्रामाण्ये तुला प्रमेया च तथा ऽन्यदपि सर्वं प्रमाणं प्रामाण्ये प्रमेयमित्यर्थः । तदेतद्भाष्यकृदाह एवमनवयवेन कार्त्स्न्येन । तन्त्रार्थः शास्त्रार्थ इति । क्व चित्प्रमातृत्वप्र-मेयत्वप्रमाणत्वादीनां समावेशो यथा ऽऽत्मनि । स हि प्रमाता प्रमीयमा-णश्च प्रमेयः तेन तु प्रमितेन तद्गतगुणान्तरानुमाने प्रमाणम् । क्व चित्पुनः प्रमाणत्वप्रमेयत्वफलत्वानां समावेशो यथा बुद्धौ क्व चित्पुनः प्रमाणत्वप्र-मेयत्वयोः । यथा सवयादौ सेय समावेशस्य तन्त्रार्थव्याप्तिरिति । तथा च कारकशब्दा इति । अथ पूरयित्वा व्याचष्टे वार्तिककारः । यथा च प्रमाणेति । यावन्ति यत्र निमित्तानि तावतां तत्र नैमित्तिकानां प्रवृत्तेरव-श्यभावो नियमः । स्वस्थितौ वृक्षः स्वातन्त्र्यात्कर्तेति भाष्यम् । तत्र स्वातन्त्र्यं पृच्छति वार्तिककारः किं पुनः स्वातन्त्र्यमिति । इतरकार-काप्रयोज्यत्व (स प्रयोजको ऽयं न कारकान्तराणां) तत्प्रयोजकत्वं च कारकान्तराणां कर्तुः स्वातन्त्र्यमुक्तम् । इह तु कारकान्तराणामसमाधाना-

( ) एतन्मध्यस्थः पाठः प्राचीनेषु नास्ति ।

दृशं स्वातन्त्र्यं नास्तीति भावः । उत्तरं कारकान्तरानपेक्षत्वं कारकान्तरा- १९६
पेक्षस्य हि प्रयोजकतया कथं चित्स्वातन्त्र्यं विवक्ष्यते तदनपेक्षस्य नितरां
स्वातन्त्र्यमित्यर्थः । **यदा ऽयं स्थितिशब्दो गतिप्रतिषेधवचन** इति ।
यावदुक्तं भवति न गच्छतीति । तदुक्तं भवति तिष्ठतीति । अत्र च निषे-
धस्य निषेध्याधीननिरूपणतया तदुपाधिः पूर्वापरीभावो न तु स्वरूपेण निषे-
धस्य पूर्वापरीभावसम्भव इति । **यदा ऽप्यस्तेरभिधायक** इति । सत्ता-
सामान्याभिधायक इत्यर्थः । **अस्ति वनस्पतीति** । वृक्षस्य हि महत्त्वे
सति रूपवत्त्वे सति सत्तासमवाय एव सत्ताव्यञ्जकाश्रयम् । तत्र यान-
पेक्ष इत्यर्थः । गेहसंबन्धानुभवो गेहसंबन्धप्राप्तिः समवायः । तद्विषया
क्रिया गतिविधारकः प्रयत्नस्तेन हि स तिष्ठति । घटो गृहेऽस्तीति त्वौप-
चारिकः प्रयोगः । **यदा ऽप्ययमभ्रमणवचन** इति । अत्रापि निषेध्यस्य
पूर्वापरीभावोपाधिरेव निषेधस्य तथाभावः । अत्र वा तिष्ठतीत्यत्रापि कया
चित्क्रियया कारकान्तरापेक्षा ऽस्तु तथा ऽपि तत्प्रयोजकत्वेनैव स्वातन्त्र्य-
मित्याह । **समुदायेति** । अवयवानां समूहः समुदायस्तदेकदेशो ऽवयव
इति । ध्रियत इति कर्मणि लकारः । प्रत्यभिज्ञानविषयता या स्थितिः ।
तस्यां तस्यामपि कारकान्तरापेक्षाया प्रयोजकतया स्वातन्त्र्यमित्याह ।
**पूर्वापरेति** । अनेके पर्यायवन्तः प्रत्ययाः प्रागनु गतावयवस्य धर्मिणः
पुनरनुमेयः । अत्र स्मृतिरेव प्रतिसन्धानमिति । वैनाशिको दूषयति ।
**चक्रेति** । यदैव दण्डसंयोगेन चक्रभ्रमणं तदैवेदमुपरते ऽपि दण्डसंयोगे
इत्यर्थः । परिहरति **न प्रमाणेति** । नाबलति बलयति बाधके प्रमाणे प्रत्य-
भिज्ञानस्य शक्यं मिथ्यात्वं ज्वालादिषु तु तदस्तीत्यर्थः । न च समस्तप्रति-
संधानप्रत्ययमिथ्यात्वे मिथ्याप्रतिसंधानप्रत्ययो भवितुमर्हतीति बीजादित्याह ।
**मिथ्याप्रत्ययस्येति** । वैनाशिकः पृच्छति । **अथ भवत** इति । एवं
पृष्टः प्रत्यक्षप्रमाणमत्र शक्यस्तेन बोधयितुमित्यनुमानं प्रमाणमाह ।
**उक्तं प्रमाणमात्मलक्षणो*रूपेणेति** । अनुमानान्तरमाह । **कार्यस्येति** । १९७
कार्यकालानुभवन कार्यकालप्राप्तिः । वैनाशिकः शङ्कते । **अनाधारमिति** ।
**प्रतीत्येति** । पूर्वमपि क्रियतेत्यर्थः । दूषयति । **तन्नेति** । आधेयस्याधा-

* सामान्यलक्षण इति ३ पु पाठः ।

रसमानकालस्थमनुभवसिद्धं तेनाधारेण कारणेन कार्यकाले स्थातव्यम् । अनाधारत्वं तु कार्यस्य नानुभवगोचरः अपि तु युक्त्या साध्यं सा च दृष्टान्ताभावादनुपपन्ना । न च त्रिक्षणिनिवृत्तिमात्रादनुभवः शक्यो ऽपवदितुं वक्ष्यमाणदूषणानि च निराकरिष्यन्ते । यदि हि रूपादीनामाधारवत्त्वं निषिध्यते ततो ऽस्याभ्युपगमविरोधो भवति भूतानि पृथिव्यादीनि भौतिका रूपादय इति । अभ्युपगमान्तरविरोधमाह यथोक्तं भवद्भिरिति । न केवलं रूपादीनामाश्रितत्वं भवद्भिरभ्युपगतमुपपन्नं चेत्याह अनाश्रितत्वाच्चेति । पृच्छति । **कर्मणि कः कारकार्थः** । कारकशब्दार्थः । क्रियानिमित्तं हि कारकं यत्पुनः क्रियाया एव व्याप्यं न तत्क्रियानिमित्तमिति न कारकम् । अकारकं च कथं कर्म । कारकाधिकारित्वात् कर्मसंज्ञाया इति भावः । उत्तरं **क्रियाविषयत्वमिति** । अनात्मसमवेतक्रियाफलशालित्वं क्रियाविषयत्वं कर्मत्वं देवदत्तसमवेतया हि क्रियया दर्शनलक्षणया वृक्षविषयो ऽनुभवो जन्यते इदमेव चानुभवस्यार्थविषयत्वं यदर्थाधीननिरूपणत्वमित्युक्तं प्रमाणलक्षणे इति । तेन क्रियाविषयस्य क्रियातः प्राग्भावाद्युक्तं कारकत्वम् । एवं च विकार्यप्राप्ययोरुपपन्नं कर्मभावः । निर्वर्त्यस्य तु पटादेर्यद्यपि क्रियायाः प्राग्भावो नास्ति तथा ऽपि तदवयवानां तन्तूनां प्राग्भावस्तेषां तादर्थ्येन पटत्वे उपचारात्पटं करोतीति युक्तः प्रयोगः । तथा हि वक्ष्यत्यादिसूत्रे वक्ष्यति कटार्थेषु वीरणेष्विति । एतेन कर्मलक्षणेनाहिं लङ्घयति ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यादयो ऽपि संगृहीता वेदितव्याः । नगरं गच्छति चैत्र इत्यत्र यथा प्राप्तिर्नगरसमवेता एवं चैत्रसमवेता ऽपीति चैत्रस्यापि क्रियाजनितफलशालिनो मा भूत्कर्मत्वमित्यत उक्तमनात्मसमवेतेति । आत्मविषये ऽपि च मानसप्रत्यये यद्यप्यात्मनो न कर्मता तथा ऽपि ज्ञानक्रिया सकर्मकेत्यात्मधर्मस्यात्मव्यतिरिक्तस्य कस्य चित्कर्मणो ऽध्यासनादिति सर्वमवदातम् । **वृक्षः संप्रदानं भवतीति** । पाणिनीयलक्षणानुरोधेन लौकिकप्रयोगानुरोधाच्च संप्रदानमिति नेयमन्वर्थसंज्ञेति भावः । गुरुत्वप्रतिबन्धे कारणमिति प्रकृतोदाहरणाभिप्रायम् । तथा च गुणादीनामप्याधेयत्वाधिगन्तैर्द्रव्यादिभिराधेयभावः सिद्धो भवति । तेन न द्रव्यस्य भावः कारकमिति यदुक्तं माध्यमिकेन तदस्माकमभिमतमेव काल्पनिक

तु कारकं न मुख्यमित्यनेनाभिसन्धिना भाष्यकारेणोक्तम् । एवं च सतीति । न क्रियामात्रमिति । नावान्तरक्रियामात्रम् । यत्प्रधानक्रिया-साधनमवान्तरक्रियाविशेषयुक्तमिति । तदेतदनुभाष्य वार्त्तिककारो व्याचष्टे । एवं च सतीति । तदनेन कारकसामान्यमुक्तम् । विशेषलक्षणपरं भाष्यं १९९ यत् क्रियासाधनं स्वतन्त्रमिति तद्व्याचष्टे यदा तु विशेष इति । स्यादे-तत् क्रियासाधनमित्येतावदेवास्तु क्रियाविशेषयुक्तमिति वा कृतमुभयोपादा-नेनेत्यत आह सर्वस्य च कारकस्येति । यद्यवान्तरक्रियामात्रमुच्यते ततस्तस्मिन् सर्वस्य कर्तृत्वात्कारकवैचित्र्यं न स्यात् । प्रधानक्रियामात्रोपा-दाने च तत्र सर्वेषामवान्तरव्यापारमन्तरेण वैचित्र्यायोगादत उभयोपादानं प्रयोजनवदिति । एवं तदुपपन्न इति भाष्यं व्याचष्टे एवं च शास्त्रमिति । देशयति । यदीति । परिहरति । न शक्तेरिति । पुनर्देशयति शक्ते-रिति । परिहरति । नैष दोष इति । ननु बुद्ध्यादयो ऽपि शक्तिमत्त्वहे-तवो न चैते क्रियारूपाः किं तु गुणरूपा इत्यत उक्तं क्रियेत्यनेनेति । सामर्थ्ये सत्यपि । दुर्बलो हि जानन्नप्युपायं न व्यापारयति यथा पाणिना कुण्ठः कुठारं तेन छिदिक्रियासम्बन्धयोः कारकशब्दो मुख्यः । शक्तिमात्रे तु गौण इति । प्रकृते योजयति कारकशब्दश्चायमिति । सम्प्रति प्रकारा-न्तरेण प्रमाणान्याविषयं समाधीयन्ते । अस्ति भोः कारकशब्दानामिति । अथैते कल्पा उपपद्यन्ते । किं प्रत्यक्षादीनामुपलब्धिः ससाधना निःसाधना वा । यदा ऽपि ससाधना तदा ऽपि किमेभिरेव प्रत्यक्षादिभिराहो प्रमाणा-न्तरेण यदा ऽप्येभिस्तदा ऽपि किं तयैव प्रत्यक्षव्यक्त्या अथैका व्यक्तिर्व्य-क्त्यन्तरेणेति । तत्र प्रमाणान्तराभ्युपगमे विभागसूत्रव्याघातः अनवस्थापा-तश्च । तत्र प्रत्यक्षादिभिः प्रत्यक्षाद्यन्तरापेक्षा ग्रहणे ऽनवस्थापातः तयैव व्यक्त्या तु ग्रहणे चात्मनि वृत्तिविरोधः । न हि तयैवासिधारया सैवासि-धारा छिद्यते तस्मादसाधना प्रमाणोपलब्धिः । अथ चेत् कृतं प्रमेयसाधनैः प्रमाणैः, प्रमाणवदसाधनैवास्तु प्रमेयोपलब्धिरिति पूर्वः पक्षः । नासाधना प्रमाणसिद्धिर्नापि प्रत्यक्षादिव्यतिरिक्तप्रमाणाभ्युपगमो येन विभागसूत्रव्या-घातः स्यात् । नापि च तयैव व्यक्त्या तस्या एव ग्रहणमुपेयते येनात्मनि वृत्तिविरोधो भवेत् । अपि तु प्रत्यक्षादिजातीयेन प्रत्यक्षादिजातीयस्य ग्रह-

व्रमातिष्ठामहे। न चानवस्था अस्ति किं चित्प्रमाणं यत्स्वज्ञानेनान्यधी
हेतुः यथा धूमादि किं चित्पुनरज्ञातमेव बुद्धिसाधनं यथा चक्षुरादि।
तत्र पूर्वे स्वज्ञाने चक्षुराद्यपेक्ष चक्षुरादि तु ज्ञानानपेक्षमेव ज्ञानसाधनमिति
क्वाऽनवस्था। बुभुत्सया च तदपि शक्यज्ञानं सा च कदा चिदेव क्व
चिदिति नानवस्था। न च प्रामाण्यं प्रमाणानामप्रतीतं च वृत्त्यङ्गमिति तदर्थं
प्रमाणान्तरापेक्षायामनवस्थेति वाच्यम् दृष्टार्थे संशयादपि प्रवृत्तौ सत्या
प्रवृत्तिसामर्थ्येन तस्य सुज्ञानत्वात्। अदृष्टार्थेषु प्रवृत्तिसामर्थ्यावधृतप्रामाण्य
प्रमाणसाधर्म्येण तस्य शक्यज्ञानत्वादिति दर्शितं प्रथमे सूत्रे। तस्मात्प्रत्य
क्षादिभिः प्रत्यक्षादीनामुपलब्धिर्न चानवस्थेति सिद्धान्तः। भाष्यं भो
इत्यामन्त्रणे। कुतः पुनरुपलब्धिहेतुत्वमत आह संवेद्यानि चेति। चे
हेतौ उपलब्धिविषयत्वं कुत इत्यत आह प्रत्यक्षं मे ज्ञानमिति। प्रदी
पभावाभावयोर्दर्शनस्य तथा भावात्। ज्ञातृमनसोश्च दर्शनादिति
भाष्यं तद्व्याचष्टे वार्त्तिककारः। न चायमेकान्त इति। ज्ञाता चेय
इति सकर्माभिप्रायं न ह्यन्यस्य समवेता ज्ञानक्रिया येनात्मनः कर्मता
स्यादपि तु [illegible] ज्ञातृस्थैव। परसमवेतफलशालि हि कर्मेत्युक्तं तस्मात्तु
खादीनामात्मधर्माणामेव कर्मता आत्मनस्तु प्रकाशमानता तत्र विवक्षया
चेयत्वाभिधानं मनस्तु यद्यपि स्वज्ञानं प्रति करणं कर्म च तथाऽपि न
स्वात्मनि वृत्तिविरोधः। यदि हि ज्ञानं करणं भवेत्तदाऽऽत्माश्रयदोषप्र
सङ्गः। स्वज्ञतया च ज्ञानं प्रति करणम् अन्यद्धास्य ज्ञानमन्या ज्ञा न च
तत्समवेता ज्ञानक्रिया किं त्वात्मसमवेता तस्मात् चेयत्वं ज्ञानसाधनत्वं
च मनसो न दोषमर्हतीति। ये तु प्रदीपप्रकाशो यथा [illegible] प्रकाशान्तरमपे
क्षते एव प्रमाणान्यपि प्रमाणान्तरमनपेक्षमाणान्यथ सन्ति भविष्यन्तीत्या
चार्यदेशीया मन्यन्ते तान् प्रत्याह।

क्वचि-न्तः(सू० १९)॥ यथाऽयं प्रसङ्गः प्रमाणानामनपेक्षत्वप्रसङ्गः
प्रदीपे प्रदीपान्तरानपेक्षया प्रकाशकत्वदर्शनात्प्रमाणान्तरानपेक्षाण्येवालोकवत्प्र
माणानि सेत्स्यन्ति एवमर्थमुपादीयते प्रसङ्गः। प्रमेयाण्यप्यनपेक्षाण्येव सेत्स्य
न्तीत्येवमर्थमप्युपादेयः तथा च प्रमाणमात्र इत्यर्थः। तदेव प्रदीपदृष्टान्तस्य
वशेन प्रमाणाभावप्रसङ्गमुक्त्वा स्थाल्यादिदृष्टान्तोपादाने तु प्रमाणस्यापि प्रमाणान्त

प्रत्यक्षकारणमित्यर्थः । कारणे सति कार्ये ज्ञानं लक्षयति ज्ञानमिति । द्वितीयं
१० कल्पं शङ्कते अथेति । सिद्धान्तवाद्याह नोभयथा ऽपीति । लक्षणमेव यथं
सिद्धान्तो ऽभिमतः कारणत्वाभ्युपगमः प्रौढिवादेन द्रष्टव्यः । सकलप्रत्यक्ष-
व्यापकमसाधारणं कार्यमवधार्यते । न ह्रीदृशमन्यत्कारणमात्ममनःसंयोगो
वा इन्द्रियमनःसंयोगो वा प्रत्यक्षस्यास्ति पूर्वस्य साधारणत्वाद् उत्तरस्य
चाव्यापकत्वादिति । समाधानान्तरमाह अर्थतो वेत्यादिना मनःसन्निकर्षो
ऽपि कारणमित्यन्तेन । तदेव सिद्धान्तसारमुक्तं नात्ममनसोरित्यादिसूत्र-
मपठित्वैव भाष्यकारो व्याचष्टे । न चासंयुक्ते द्रव्ये इति । सर्वं हि कार-
णजातं कार्योपजननाय परस्परसमवधानमपेक्षते अन्यथा यत्र तत्र स्थितेभ्यो
ऽपि कारणेभ्यः कार्यमुपजायेत । तदात्मना ऽपि मनःसम्बद्धेन कार्ये जन-
यितव्ये सम्बन्धश्चात्ममनसोः संयोग एव भवतु वा संयोगजं ज्ञानम् ।
अर्थेन्द्रियात्मसंयोगजं कस्मान्न भवति कृतं मनःसंयोगेनेत्यत आह ।
मनःसन्निकर्षे इति । तस्मादात्ममनःसन्निकर्षो ऽपि वक्तव्य इति पूर्व-
पक्षः । तदिदं नात्ममनसोः सन्निकर्षेत्यादिसूत्रपाठस्य पुरस्तात्कृतभाष्यम् ।
तदेतद्वार्तिककारो भाष्यमनुभाष्य पूर्वपक्षसूत्रं पठति ।

नात्म-त्तिः (सू २१) ॥ सूत्रार्थमाह । आत्ममनसोरिति । पूर्व-
पक्षस्य क्षणमप्यवस्थानमसहमानो वार्तिककारः प्रतिषेधमस्योक्तं स्मारयति ।
नोक्तेति । तदेव द्वाभ्यां सूत्राभ्यां पूर्वपक्षिते सति भावमात्रेण इन्द्रियार्थसन्नि-
कर्षादीनामनेन कारणत्वमुक्तमिति मन्यमानः पार्श्वस्थः प्रत्यवतिष्ठते । सति
चेन्द्रियार्थेति । न सति भावमात्रेण कारणत्वमाकाशादीनामपि कारणत्व-
प्रसङ्गात् । तादृशश्चात्ममनःसंयोग इन्द्रियात्मसंयोगश्चेति न कारणं युक्त-
मित्यर्थः । दूषयति अकारणभावे ऽपीति । नान्वयमात्रात्कारणत्वनि-
श्चयः । अपि त्वन्वयव्यतिरेकाभ्यां न च दिगादावस्ति व्यतिरेको नित्य-
त्वविभुत्वाभ्यामपवर्जनीयः सन्निधिः सेन्द्रियशरीरवत्योत्ममनःसंयोगस्त्वन्व-
यव्यतिरेकावधृतसामर्थ्यं सुप्तस्य ज्ञानानुत्पादात् । इन्द्रियार्थसन्निकर्षे त्वसति
विप्रकृष्टे व्यवहिते च ज्ञानं न जायते इन्द्रियमनःसन्निकर्षाभावे च नायुगप-
द् ज्ञानानि भवन्ति । तस्मान्नाकाशादिभिरतिप्रसङ्ग इति । तदेतद्वार्तिक-
१२ कारो व्याचष्टे एवं सति भावात् । कारणभावं दर्शयन्ति पूर्वपक्षिणश्च

सिद्धान्तिनो वा असति न भवतीति वादागन्तव्यारेकोऽ* न तु प्रयोजकस्तान् प्रति पार्श्वस्थो ब्रूते । तेषां दिग्देशेति । यथा चान्द्रमसं रूपमिति । २०५ । यद्यपि तथापि तेजस्त्वोपपन्नमस्ति तथाऽप्यत्यन्ताभिभवेन स्वोचितार्थक्रियानुपयोगादसत्कल्पत्वमित्यर्थः । एवं पार्श्वस्थे निरस्ते पूर्वपक्षी ब्रूते यथेवमिति । सिद्धान्त्याह नोपसंख्येय इति ।

ज्ञान इ० (सू २३) ॥ अथ ज्ञानस्यात्मलिङ्गत्वमुच्यते ज्ञानं तावत्कार्यमनित्यत्वाद् घटवत् । क्वचित् समवेतं कार्यत्वाद् घटवत् । न च तत्पृथिव्याद्याश्रितं मानसप्रत्यक्षत्वात् । यत्पुनः पृथिव्याद्याश्रितं तत् प्रत्यक्षान्तरवेद्यमप्रत्यक्षमेव वा । न च तथा ज्ञानम् । द्रव्यगुणकर्मातिरिक्ताश्रितं तदाश्रयश्च द्रव्यजातीयः समवायिकारणत्वादाकाशवत् । तस्य च विभुत्वमात्मलक्षणेऽस्माभिरुक्तम् । अतो गुणजातीयं ज्ञानं कार्यत्वे सति विभुद्रव्यसमवायात् शब्दवत् । एवं व्यवस्थिते प्रश्नोत्तरे वार्त्तिककारो व्याख्यातव्ये । आत्मसमवायादिति । कार्यत्वे सति विभुद्रव्यसमवायादित्यर्थः । विभुद्रव्यसमवाय एवासिद्ध इति वदन्तं आह । न पृथिव्यादिगुणः स्वसंबन्धित्वात् । मानसप्रत्यक्षवेद्यत्वादित्यर्थः । स्वपरसमवेतं प्रत्यक्षान्तरवेद्यं द्रष्टव्यम् । अन्यथा पृथिव्यादिगुणेन द्वित्वादिना व्यभिचारः स्यादिति । तस्मात् ज्ञानलिङ्ग आत्मा न त्वसाधारणगुणो ज्ञानं गमयति । तस्य सदातनत्वे सदा ज्ञानोत्पादप्रसङ्गात् । तस्मात्संयोगमेव कादाचित्कमपेक्षत इत्यर्थः । सिद्ध आत्ममनःसंयोग इति सूत्रकृतोक्तं† । प्रज्ञियादिनयेन समाधिरिति दर्शयितुमुक्तमेव परमसमाधिं स्मारयति । उक्तं चान्येति । अन्यार्थमिति । प्रमेयभूतमनःस्वरूपप्रतिपादनार्थम् अन्यार्थस्यापि तदर्थप्रकाशकत्वम् उपपत्तिलिङ्गम् । ईदृशं हि तल्लिङ्गं यदन्यार्थमपि मनसो ज्ञानकारणत्वं प्रतिपादयतीति । न हि ज्ञानं स्वतन्त्रं येन स्वकारणं मनो नापेक्षेत नापि चक्षुरादि स्वतन्त्रं ज्ञानजनने येन मनो ज्ञानकारणं न स्यादित्याह । न चक्षुरादीनि । तस्मादर्थप्रत्यक्षादात्ममनःसंयोग इन्द्रियमनःसंयोगश्च नोक्तो सूत्रकारेण । देशयति अथ कस्मादिति । इन्द्रियार्थसन्निकर्षे उपायेन ...

* वादागन्तव्यारेक इति पुस्त० पाठः । † सूत्रकृतोक्तमिति १ पु

भावः । परिहरति प्रत्यक्षेति । सर्वानभिधाने हि प्रत्यक्षं न लक्षितं स्यादिति तल्लक्षणाय किं चिद्वक्तव्यम् । तत्रेन्द्रियार्थसन्निकर्ष एव वक्तव्यः समस्तप्रत्यक्षव्यापकत्वात् नेतरावव्यापकत्वादतिव्यापकत्वाच्चेति परमः समाधिः ।

सुप्त-स् (सू. २६) ॥ ज्ञानोत्पत्तेरिति सूत्रशेषः । प्रणिधाय संकल्प्य प्रदोषे सुप्तो ऽर्धरात्रे मयोत्थातव्यमिति सो ऽर्धरात्रएवावबुध्यते । प्रबोधज्ञानमिति । प्रबोधे निद्राविच्छेदे सतीति द्रव्यस्पर्शस्य संज्ञानं प्रबोधज्ञानम् इत्यर्थः । सुप्तमनसामिति व्याख्याय व्यासक्तमनसामिति व्याचष्टे । एकदा खल्वयं विषयान्तरेति । प्राधान्ये च हेत्वन्तरम् ।

तैश्चा-णाम् (सू. २७) ॥ इन्द्रियैर्व्यपदेशं विग्रहसमासाभ्यां ज्ञानस्य दर्शयति घ्राणेति । इन्द्रियविषयसंख्यानुरोधात्ज्ञानस्य तद्व्यपदेश इत्याह । इन्द्रियेति । वार्तिके यथासाधारणं तेनेति । दिगादिरप्युपाधिकल्पितेन प्राचीत्यादिना कार्ये विशेषणत्वमसाधारणमेवेत्यभिप्रायः । अनेन ग्रन्थेनेन्द्रियार्थसन्निकर्ष एव कारणं ज्ञानस्य न त्वात्ममनःसन्निकर्ष इन्द्रियमनःसंनिकर्षो वा ज्ञानकारणमनेनोक्तमिति मन्वानो दूषयति ॥

व्याह-तुः (सू. २८) ॥ परिहारसूत्रम् ॥

नार्थ-त् (सू. २९) ॥ अनेनेन्द्रियार्थसन्निकर्षस्य प्राधान्यमात्रमुच्यते । न त्वात्ममनःसंयोगस्येन्द्रियमनःसंयोगस्य वा ऽकारणत्वमुच्यत इति न व्याघात इत्यर्थः । पृच्छति । असति संकल्पे प्रणिधाने चेति । प्रयुक्तं प्रणिधानं संकल्प इच्छा । उत्तरं यथैवेति । नन्वस्य जात्यायुर्भोगनिमित्तत्वमवगतं न तु मनःप्रेरकत्वमपीत्यत आह । तेन प्रेर्यमाणे मनसीति । भोगो ह्यदृष्टस्य प्रधानं प्रयोजनं तन्नान्तरीयकतया जन्मायुषी आक्षिपति । स्वसंबन्धिसुखदुःखसाक्षात्कारस्य भोगः तदायतनं च शरीरम् । अप्राप्तं च मनो न तत्र भोगं च भोगविषयौ सुखदुःखे च तयोः कारणं च ज्ञानं जनयितुमर्हति नूनं तत्प्राप्तिहेतोर्मनःकर्मणः कारणमदृष्टं वक्तव्यम् । अन्यथा ऽस्य सर्वद्रव्यगुणकर्मकारणता न स्यात् । मा भूत्सर्वार्थतेत्यत आह एषितव्यं चास्येति । बहूनां विशेषणं भूतसूक्ष्माणामिति । व्याहतत्वादिति पूर्वपक्षसूत्रम् । अस्य तात्पर्यमाह वार्तिककारः । अनेनेति । नन्विदं

विभूती इन्द्रियार्थसन्निकर्षस्य प्राधान्यमाह न पुनः संयोगान्तरस्य कारणत्वं
प्रत्याख्यातुमित्यत आह । इयं किलेति । कारणत्वं प्रतिषिध्यतइत्यभि- २०८
मानः पूर्वपक्षिण इत्यर्थः । इष्टव्याघात इति । अयौगपद्यं दृष्टं तस्य
व्याघात इत्यर्थः । शेषं तु भाष्यव्याख्यया व्याख्यातमिति । अतः परमि-
दानीमिति । न ह्यवयवी नाम कश्चिदर्थान्तरभूतो ऽवयवेभ्यो ऽस्ति
अपि त्ववयवा एव परमार्थसन्तः तेषु च कतिपयानवयवान् गृहीत्वा
तत्सहचरितानवयवाननुमाय प्रतिसंधानजेयं वृक्षबुद्धिस्तानेवावयवानाल-
म्बमानाननुमायानुमानमिति प्रत्यक्षस्यानुमानेऽन्तर्भावाद्विभागसूत्रेण न्यूना-
धिकसंख्याव्यवच्छेदो नोपपद्यतइत्यर्थः । निराकरोति । न प्रत्यक्ष-
मर्वं विकल्पानुपपत्तेः । एकदेशो ह्यवयविन आधार इति । एक-
श्चासौ देशश्चेत्येकदेशः । देशश्चाधारो न चाधेयो ऽस्त्यवयवीति कथ-
माधार इत्यर्थः । अहो शब्दार्थकौशलमिति । शब्दे ऽर्थे वा कौशलमि-
त्यर्थः । अर्थे तावत्कौशलमाह । अकार्येति । कार्यस्यैकस्य कारणानां
तदेक कार्यं कर्तुं परस्परप्रत्यासत्तिर्भवति । यथा मृत्पिण्डचक्रसूत्राणां घटे
जनयितव्ये प्रत्यासत्तिः । कार्याणां चैकसामग्रीजन्मनां परस्परप्रत्यासत्तिः यथा
रूपरसगन्धस्पर्शानां कार्यकारणयोर्वा यथा अग्निधूमयोः येषां तु न कार्य-
कारणभावो नैककार्यत्वं वा नैककारणत्वं वा तेषां कुतो नियमवती प्रत्या-
सत्तिरित्यर्थः । शब्दाकौशलमाह । न च परस्परेति । अवयविनं ह्यवय-
वान्तरमवयवान्तरमपेक्षते । ततश्चावयवाः परस्परोपकारिणो भवन्ति । अव-
यव्यभावे तु न परस्परोपकारिणः कथमवयवा इत्यर्थः । न चावृसम-
तिसंधानजेति । स्वस्तिमती हि गां गृहीत्वा कालाक्षी गवि गौरिति
प्रतिसंधानं दृष्टं न स्वयं गृहीत्वा ऽश्वान्तरे गौरिति प्रतिसंधानं दृष्टं
तत्कस्य हेतोः तयोरगोत्वात् । एवमवयवानामवृक्षत्वाद्वृक्ष इति
प्रतिसंधानं न भवेदित्यर्थः । यदुच्येत मा भूद्वृक्षरूपधर्मिग्रहः पूर्वमर्वा-
ग्भागं धर्मिण पृथग्विशेषमनुमाय प्रतिसंधास्यतीत्यत आह । न चानुमानम् ।
कस्मादित्यत आह । अनुमानइति । नायमनुमाता पूर्वमनुपलब्धाग्नि- २११
मनुमानेन च धूमविशेषमग्निं प्रतिपद्य प्रतिसंधत्ते । अयं धूमो ऽयं चा-
ऽग्निरिति । अथ पूर्वं प्रतिसंधानं पश्चादनुमानमित्यत आह । न च

**प्रतिसंधायेति** । प्रतिसंधानसमयपर्यन्तमवगतत्वादुपचितव्यमर्वाग्भागेनेति
१६ व्यर्थमनुमानं स्यादित्यर्थः । अभ्युपेत्याह । **प्रतिसंधायापि** चेति ।
**किं चार्वाग्भागमपमिति** । स भागवान् भागो न भवति किं तु भाग एव ।
कस्मान्न पश्यतीत्यत आह । **नार्वाग्भागपरभागौ संघट्टे** । एकावय-
विसमवायेन हि परस्परसंबद्धौ स्यातां न चावयव्यस्ति न चापि संयुक्तौ
संयोगस्यावयविनिरासमार्गेण निरस्तत्वादित्यर्थः । पृच्छति । **कथं पुन-
रिति** । उत्तरं **नित्यमर्वाग्भागेनेति** । संबन्धस्तावन्नास्तीत्युक्तमेव ।
तमभ्युपगम्य सूत्रं सत्यं संबद्धौ सत्यपि संबन्धे अवयव्यग्रहो ऽभावादित्यर्थः ।
सत्यं संबद्धावित्ययमभ्युपगमवाद एव । **यच्चेदमुच्यते प्रतिसंधानम-
रूपयज्ञेति** । पूर्वं सत्यपि वृत्ते अवयवानामपृथक्त्वान्नावयवे प्रतिसंधानजा
पृथग्बुद्धिरित्युक्तं संप्रति तु वृत्तस्यासत्त्वेन नावयवे वृत्त इति प्रतिसंधानमित्य-
पौनरुक्त्यम् । **रूपं च यथोपलब्धं रसस्येति** । या यथोपलब्धा रसप्रत्ययो-
परञ्जितः स एव रूपप्रत्ययोपरञ्जित इत्यर्थः । **प्रमाणस्य यथाभूता-
र्थपरिच्छेदकत्वादिति** । यथा भ्रान्तमप्यनुमानमर्थसंबन्धेन प्रमाणमिति
न भवति तथा प्रथमे ऽध्याये दर्शितम् । प्रधानानुकारेण भ्रान्तिरिति
विपरीतख्यातौ सत्यां सा चोपपादिता प्रथमाध्याये । **न तथा शब्दस्यार्था-
नभिधानादिति** । कः पुनरयं तथाशब्दार्थः । परमाणूनां रूपं वा नैर-
न्तर्यं वा संयोगभेदो वा उत्पादभेदो वा । यदि रूपमात्रं तद् घटादिष्वपि
पृथग्बुद्धिः स्यात् । अथ रूपभेदः घटान्तरेष्वापृथः स्यात् । न हि तत्पूर्वं
रूपम् । अथ नैरन्तर्यं तद् घटादिष्वप्यस्ति । न वा किंचिदपि । गन्धरसस्प-
र्शपरमाणुव्यवधानात् । न संयोगो भवद्भिरास्थीयत इति कुतस्तद्भेदः
उत्पादभेदो ऽपि परमाणूनां रूपमेव । न हि परमाणुव्यतिरिक्तः कश्चिदस्ति
येषामुत्पादः । रूपं च पूर्वं विकल्पितं यदि हि किंचिदवयविसन्निवेशो
वास्तवः पूर्वापरभागादिशब्दप्रवृत्तिहेतुरुपलभ्यः स्यात् ततस्तथाशब्दार्थः
प्रतीयेत न तु भवतां किंचिदेव वास्तवः वस्तुसतां परमाणूनामभागत्वा-
दित्यर्थः । सामान्यतोदृष्टे धर्मिविषयकमपि प्रत्यक्षं नास्तीति भ्रान्तः
१८ पृच्छति **सामान्यतोदृष्टस्येति** । उत्तरम् । **अयं विशेषः इति** । द्विकस्य
प्रत्यक्षेण प्रसिद्धौ सामान्यतोदृष्टं प्रवर्तते । त्रिकस्य तु प्रत्यक्षेण प्रसिद्धौ

प्रत्यक्षतोऽदृष्टमिति विशेषः । सर्वस्याप्रत्यक्षत्वात् वृक्षबुद्धेर्न प्रत्यक्षतोऽदृष्टाद-
नुमानादपि सामान्यतोदृष्टादित्याह । अवयव्येवेति । २१४

न प्र-त् (सू. ३१)॥ न प्रत्यक्षमनुमानम् । कुतः यावदेकदेश-
ग्रहणस्यार्थजातस्यावयवस्यैकदेशग्रहणादुपलब्धेरित्यत्र हेतुरिष्यते तावदपि
प्रत्यक्षेण । अन्यथैकदेशग्रहणाभावेनानुमानानुदयात् । अनुमानान्तरेण वा तद्-
ग्रहे अनवस्थापातात् । अतस्तावतो ऽर्थजातस्य प्रत्यक्षेणोपलम्भात् प्रत्यक्ष-
मनुमानमिति प्रतिज्ञा हेतुना एकदेशग्रहणादुपलब्धेरित्यनेन बाधिता । एक-
देशग्रहणस्य प्रत्यक्षेणानभ्युपगमे वा प्रमाणान्तरस्य तत्रानुपपत्तेरसिद्धो हेतुः
सेयमुभयतस्पाशा रज्जुरित्यर्थः । अनुमानेनैकदेशग्रहणान्नासिद्धो हेतुरि-
त्यत आह भाष्यकारः न चैकदेशग्रहणमिति । अनुमितिरनुमानम् । भाव-
यितुं कर्तुं न । अनवस्थाप्रसङ्गेन हेत्वभावादिति । तदेतत्सूत्रं वार्तिककारो
व्याचष्टे । विरुद्धश्चायमिति । नन्वेकदेशग्रहणत्वे ऽपि तन्मात्रं प्रत्यक्षं न
तु सर्वं प्रत्यक्षं स्यादित्यत आह न चैवं प्रतिज्ञायते सर्वमिति । अप्र-
कारत्वादिति । अनुमानस्य हि यः प्रकारो यादृशा न तादृशाः प्रत्यक्ष-
स्येति । त्रिकालविषयत्वादेरिति । अनेन परोक्षार्थत्वं सूचयत्यनुमानस्य
प्रत्यक्षं त्वपरोक्षार्थविषयं तस्मादपि भेद इत्यर्थः । लिङ्गपरामर्शग्रहणस्य
प्रत्यक्षफलस्यापि प्रमाणस्य सतो लिङ्गलिङ्गिसंबन्धस्मृत्यनुपपत्तेः ऽस्त्युत्पत्तौ
न त्वेवं प्रत्यक्षस्य प्रमाणस्य यत उत्पत्तौ वा कार्ये वा लिङ्गलिङ्गिसंबन्ध-
स्मृत्यपेक्षेत्यर्थः । अन्यथा ऽपि चेत्यादि भाष्यं व्याचष्टे । इतरथेति ।
न त्वेतदनुमानमित्यभिप्रायार्थमाह । इन्द्रियेति । इन्द्रियसंबन्धात्प्रा- २१
र्थस्य प्रत्यक्षमुत्पद्यते न त्वनुमानमेवमित्यर्थः । अपि चावयविनो ऽसत्वं मन्य-
मानेन त्वयैकदेशमात्रोपलब्ध्या वृक्षबुद्धेरनुमानत्वमुक्तं न त्वियमेकदेशमात्रो-
पलब्धिरपि तु तस्य तत्सहचरितस्य चावयविन उपलब्धिलक्षणप्राप्तस्य सिद्धेरि-
त्याह । न चैकदेशोपलब्धिरिति । तदेतद्भाष्यमनुभाष्य वार्तिककारो
व्याचष्टे न चेति । अथ देशमात्रम् । अकृत्स्नग्रहणादिति चेत् । उत्त-
रभाष्यं न कारणत इति । देशविशेषणम् । न चावयवा इति । एक-
देशग्रहणनिवृत्त्यै हि त्वया ऽवयविग्रहणमास्थीयते स चेत्तावता कृत्स्न-
ग्रहणसंभवो यत एकदेशग्रहणनिवृत्तिः स्यात् । न ह्यवयविग्रहे कृत्स्ना

अवयवा गृहीता भवन्ति । नाप्यवयवी तस्यार्वाग्भागस्य ग्रहणे ऽपि मध्यमपरभागस्यस्याग्रहणादिति देश्यमाप्यार्थः । तदेतद्भाष्यं वार्तिककारो व्याचष्टे । नावयविन उपलब्धिरिति । यत्खलु बहुषु वर्तते तत्प्रत्येक *समाप्त्या वा यथा कम्बिन्दुकपटगुणः । एकदेशेन वा यथा सूत्रं कुसुमेषु । न च कृत्स्नैकदेशाभ्यां प्रकारान्तरमस्ति । अनयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वात् नित्यत्वानित्यत्ववदिति । न चैकत्र कृत्स्नसमाप्तावन्यत्र तस्यैव सम्भव इति तथा सति कृत्स्नसमाप्तेरभावात् तस्माद्यो ऽवयवान्तरे दृश्यते नासाववयवी तथा चावयवा एवेति प्राप्तमित्यपि द्रष्टव्यम् । न ह्यस्य कारणव्यतिरेकेणेति । यदि ह्येकदेशान्तराण्यस्य स्यु ततस्ते ष्वपि वृत्तावेकदेशान्तरकल्पनायामनवस्थाप्रसङ्ग इत्यर्थः । पूर्वपक्षवाद्येव प्रश्नपूर्वकं क्रियातिपत्तिमाह । अथोपलभ्यमान इति । उत्तरभाष्यविषयं भाष्यं कृत्स्नमिति वै खल्वित्यादि । तदेकग्रन्थतया अङ्ग तु भवानित्यादिसन्दर्भेणोपक्रमे भाष्य व्यवस्थितम् । तदेतद्वार्तिककारो व्याचष्टे । एकस्मिन्निति । अयमभिसन्धिः । यत्तावत्कुसुमैकदेशेन वर्तमानं दृष्टमिति । तदनुपपन्नं यदि कुसुमेषु सूत्रावयवा वर्तन्ते किमायातमवयविनः सूत्रस्य । न ह्यन्यस्मिन्वर्तमाने ऽन्यद्वर्ततइत्युक्तम् । न चावयविनो ऽभावे भवत्येतदपि सूत्रमवयव्यवयवैर्वर्ततइति । अथ मा भूत्सूत्र नामावयवि एकदेशास्तु कुसुमे वर्तन्तइति ब्रूमः । तथा च सति नैकमनेकत्रैकदेशेन वर्तते कि त्वनेकमनेकत्रेति । तथा च कुसुमपरमाण्वभावे कस्मिन्सूत्रपरमाणवो वर्ततइत्युक्तं भवति न च वृत्तिरपि परमाणुभ्यामतिरिच्यते यतो भवति वर्ततइति तस्मान्निरन्तरोत्पाद एव परमाण्वोर्वृत्तिरिति व्यवहर्तव्या न पुनः परमाणुस्वरूपातिरिक्ता का चिद्वृत्तिरस्ति वस्तुसती । एतेन कम्बिन्दुकपटगुणप्रत्येकं कृत्स्नपरिसमाप्तिवृत्तिरित्यपि व्याख्यातम् । तथा च वृत्तेरभावादेकदेशेन वा कार्त्स्न्येन वा वर्ततइति रिक्तं वचः । यथालोकप्रत्यय एव वृत्तेरभ्युपगमे सूत्रं कुसुमेषु नैकदेशेन वर्तते किं तु तदेकदेशाः सूत्रं च कुसुमेषु वर्ततइति लौकिको ऽनुभवः । तत्र सूत्रस्य वृत्तिः कुसुमेषु नैकदेशेन वा नापि कार्त्स्न्येन किं तु स्वरूपतः एवमवयवेष्ववयविनः स्वरूपतः

* समाप्त्येति २ पु पाठः ।

अत्र । भूयांस्तु विशेषो यत्सूत्रस्य कुसुमेषु वृत्तिं प्रति सन्ति भागा अपीति सूत्ररूपं च भागाश्च कुसुमेषु वर्तन्तइति अवयविनस्तु स्वावयवेषु वृत्तिं प्रति नावयवान्तराणि सन्तीति रूपमात्रेण तत्र वर्तते ऽवयवीति । तस्मान्न किं चित्क्व चित्कार्त्स्न्येनैकदेशेन वा वर्तमानं दृष्टमिति तयोर्वृत्तिं प्रति व्यापकत्वमसिद्धम् । रूपस्यैव न गमकत्वं* तच्चावयविन्यप्यस्तीति व्यापकानुपलब्धेरसिद्धेर्नावयविनो ऽवयवेषु वृत्तिनिवृत्तिरिति सिद्धम् । यथा च कृत्स्नैकदेशशब्दो नावयविरूपे वर्तेते तथोक्तं वार्त्तिककृतेति । नैकदेशेन वर्तते २१७ । न च कार्त्स्न्येन वर्तते अथ च वर्त्ततइति । यथा वाचोयुक्तिः । यथाभूतं वस्तु तत्तथा निर्दिश्यतइहेति योजना । उभयेन व्याघातादिति । एकस्यानेकवृत्तेः एकदेशेन कार्त्स्न्येन च व्याघात इत्यर्थः । स एव हि धर्मो विकल्प्यते यो विकल्प्यमानो धर्मिणं न बाधते यथा शब्दो नित्यो ऽनित्यो वेति यो ह्यधिकरणं धर्मिणमेव बाधते नासौ धर्मविकल्पो न्याय्यः । आश्रयासिद्धेः तस्यानुपपत्तेरिति । यस्तु मन्यते यत्सत्तत्सर्वमनवयवं यथा विज्ञानं सच्चेदं नीलाद्यनुभवावसितमिति स्वभावहेतुः सत्तामात्रव्यापित्वादनवयवित्वस्य । यथा ह्येकस्य सत्त्वं विरुद्धधर्मसंसर्गेण व्याप्तं तद्विरुद्धस्य विरुद्धधर्मसंसर्गो नीलादीनां सावयवत्वे प्रसजन्स्वविरुद्धं विरुद्धधर्मासंसर्गं निवर्त्तयंस्तद्व्याप्तं सत्त्वमपि निवर्त्तयति तथा हि पाण्यादिकम्पे तत्स्थानो ऽवयव्यपि कम्पतइति तस्य जङ्घादिष्ववयवेष्वविशेषात्तस्यानस्याप्यवयविनः कम्प उपलभ्येत न चोपलभ्यते तस्मात्स एव तदानीं कम्पते न कम्पतइति विरुद्धधर्मसंसर्गः । अथावयवेषु कम्पमानेष्वपि नावयवी तत्समवेतः कम्पते ततश्चलाचलयोर्वस्त्रोदकवद्युतसिद्धिप्रसङ्गः । एकस्यावयवस्यावरणे तत्तदवस्थानो ऽवयव्यावृत इति अवयवान्तरस्यावस्याप्यावरणप्रसङ्गः अभेदात् । न वा ऽस्य क्व चिदप्यावरणमित्यविकलो दृश्येत । अवयवस्यावरणे नावयविनस्तस्यान्यत्वात् । न ह्यन्यस्यावरणे अन्यदावृतं भवत्यतिप्रसङ्गादिति चेद् न । अर्धावरणे ऽप्यनावृतत्वादवयविनः प्राग्वदविकलग्रहणप्रसङ्गः । अवयवदर्शनद्वारेणावयविदर्शनाददृष्टावयवस्यावयविनो ऽप्रतिपत्तिरिति चेद् न । विकल्पासहत्वात् । किं सर्वावय-

* व्यापकत्वमिति २ पु पाठ ।

यद्दर्शनद्वारेणावयविनः प्रतिपत्तिरुत कतिपयावयवदर्शनद्वारेण । पूर्वस्मि-
न्कल्पे नावयवी कदाचिदपि दृश्येत । न ह्यसर्वविदस्सर्वावयवोपलम्भसम्भवः
अर्वाग्भागेन मध्यपरभागयोर्व्यवधानात् । कतिपयावयवदर्शने तु तदभि-
व्यक्तावल्पावयवदर्शने ऽपि बह्ववयवदर्शनवत्स्थूलोपलम्भप्रसङ्गः । रक्ते
चैकस्मिन्नवयवे तत्स्थानो ऽवयव्यपि रक्त इति अवयवान्तरे ऽपि तस्या-
भेदाद्रागोपलम्भप्रसङ्गः । अवयवमात्ररागे वा तत्स्थानस्यावयविनो रूपम-
रक्तं दृश्येत सो ऽयं विरुद्धधर्मसंसर्ग इति । तदनेनाभिप्रायेण वार्तिककारो
ग्रहणाग्रहणलक्षणेन विरुद्धधर्मसंसर्गेण सर्वानेव विरुद्धधर्मसंसर्गानुपलक्षयति।
ग्रहणाग्रहणेति । निराकरोति न भेद इति । इदं तावदत्र वक्तव्यम् । यद-
नुभूतावयविनं नीलमनवयवत्वेन साध्यते ततः सिद्धसाधनं नो खलु रूपवि-
शेषो नीलादिरस्माकमपि सावयवो गुणत्वात् । तदाश्रयो घट इति चेत् ।
ननु घटस्त्वपि च रूपरसगन्धस्पर्शा यथार्थक्रियाकारिणस्तथा व्यपदिश्यन्ते
ते च गुणत्वेन निरवयवा एव न तु तदाश्रयो ऽस्ति यस्य नाम । अथ पर-
सिद्धं द्रव्यं रूपाद्याश्रयं प्रतीकृत्य परसिद्धेनैव तस्य सत्त्वेनानवयवत्वं साधयति
सो ऽयमसिद्धं सिद्धेन साधयन् महानैयायिकत्वमात्मनो वर्णयति । न हि
स्वयमप्रतीतौ साध्यधर्मिणौ परप्रत्यायनाय कल्पेते । यथाऽऽहुः । यो ऽपि ताव-
त्परासिद्धः स्वयं सिद्धो ऽभिधीयते । अनेनैव प्रतीकारः स्वतो ऽसिद्धे तु का
क्रियेति । न च प्रसङ्गसाधने ऽप्येतद्दूषितुमर्हति । न च सावयवत्वेन विरोधाभा-
वात् । न चैकस्य विरुद्धधर्मो बाधकं प्रमाणम् । न तावदेकस्यावयविनो ग्रहणा-
ग्रहणे । अवयवावरणे ऽपि तस्य कतिपयावयवावस्थानस्य ग्रहणादेव । न च
बह्ववयवस्थानस्य ग्रहणमेव कतिपयावयवस्थानस्य ग्रहणे तादृशस्थौल्यानव-
भासादनवभासो ऽवयविन इति साम्प्रतम् । परिमाणभेदो हि स्थौल्यमवयवि-
धर्मो न च तस्य तादृशस्यानवभासो ऽवयवी नावभासितो भवति । तस्य ततो
ऽन्यत्वात् । तस्मादिन्द्रियसन्निकर्षमात्रादवयविनो ग्रहणम् । इन्द्रियेणार्थस्य
इन्द्रियावयवैरर्थस्य इन्द्रियेणार्थावयवानां इन्द्रियावयवैरर्थावयवानां सन्नि-
कर्षात्परिमाणभेदग्रहणमिति सामग्रीभेदादवयविनस्तत्परिमाणभेदयोर्ग्रहणाग्रहणे
उपपद्येते । एतेनार्वाग्भागसहितस्य ग्रहणे ऽपि न मध्यभागपरभागसहित-
स्याग्रहणं कथं विरोधमावहतीत्युक्तं भवति । न वा ऽवयवकम्पे ऽप्यव-

भावाभावौ युगपदेकत्र विरुद्धाविति सिद्धम् । रक्तारक्तयोरेकत्राविरोध सहदर्शनादिति । यत्पुनर्यदनेकवृत्ति तन्नाना अनेकवृत्तिश्चावयव्यभ्युपगत इति प्रसङ्गसाधनं स्वभाव हेतुः नानात्वाभावादनेकवृत्तित्वाभाव इति प्रसङ्गविपर्ययो व्यापकानुपलब्धिरिति तत्र ब्रूमः । एकत्वानेकवृत्तित्वयोः विरोधेन नानात्वस्य व्यापकत्वासिद्धेर्न प्रसङ्गो नापि विपर्यय इति । यथैव नीले परिच्छिद्यमाने तदभावो व्यवच्छिद्यते । अन्यथा न नील परिच्छिन्न स्यात् । एव तदभावाविनाभावि पीतमपि नीलपरिच्छेदक प्रत्यक्ष व्यवच्छिनत्ति तथैकावयवसंसर्गे अवयविनः परिच्छिद्यमाने तदभावो व्यवच्छिद्यते तदभावाविनाभूतावयवान्तरसंसर्गो इति तेपि व्यवच्छेत्तव्याः तदव्यवच्छेदे तदभावो न व्यवच्छिद्येतेति स एव तदानीमेव तत्र भवेन्न भवेद्वेति दुर्घटमापद्येत । सोऽयमेकत्वानेकवृत्तित्वयोर्विरोध इति चेत् । हन्त भावपरिच्छेदे तदभावो व्यवच्छिद्यतइति युक्तम् । भावपरिच्छेदलक्षणत्वात्तदभावव्यवच्छेदस्य । न हि भावादन्यस्तस्य भावाभावो नाम । भावान्तराणि तु कस्माद्व्यवच्छिद्यन्ते । तदभावाविनाभावादिति चेत् । कुतः पुनरयं भावान्तराणां भावाभावाविनाभावः पीतादिभावतादात्म्येन कदा चिदपि नीलस्य भावस्यानुपलम्भादिति चेत् । एव तर्ह्येकावयववृत्तेरप्येकस्यावयवान्तरेषु वर्त्तमानस्य तादात्म्य दृश्यते न तथैकावयवसङ्गाभावाविनाभावो ऽवयवान्तरसङ्गस्य तस्मान्नैकत्वनानावृत्तित्वयोर्विरोधः । अपि च एक विज्ञानमनेके रूपचक्षुरालोकमनस्कारैः कथं जन्यते जन्यमान वा न नानेति कश्चित्कार्यकारणभावो नामास्ति जन्यजनकभावस्य । प्रतीत्य कथमेकम् । समुत्पादमात्र तदिति चेत् । अथ कस्माद्रूपादीन् प्रतीत्य रूप ज्ञानं जायते न पुना रसादीपि । स्वभाव एव तादृशो यतस्तानेव प्रतीत्य जायते न पुना रसमादीनीति चेत् । हन्त भोः स्वभावान् भिन्नान् प्रतीत्य कथमेको भावो जायते । को विरोधो न हि कार्यकारणयोस्तादात्म्य येन कारणस्वभावानुरोध' कार्यस्य भवेदिति चेत् । तत्किमवयवावयविनोरभेदः समवायस्य वा ताभ्या येनावयवभेदे ऽवयविनो वा समवायस्य वा भेदो भवेदिति सम समाधिः । तस्मादवयविनि प्रमाणं यद्याम तत्र दर्शितं बाधके ऽप्यूहमवयविनमवस्थापयिष्यतीति सिद्धम् । यः पुनर्मन्यते

अवयवसमुदाय एवावयवीति तं प्रत्याह भाष्यकारः । समुदाय्यशेषतेत्यादि । सुगमम् ।

साध्य-हः (सू. ३३)॥ न परं प्रत्यसिद्धत्वमेवावयविनः साध्यत्वम् । स खल्वेवं मेने संविन्निष्ठा हि विषयव्यवस्थितिः । स [illegible] संविदा व्यवस्थाप्यते यस्तस्या विषयः । स एव विषयो य आकारमस्यामर्पयति । न च निरन्तरोत्पन्नरूपादिपरमाणुव्यतिरिक्तमवयव्याकारं बिभ्रतीं संविदमीक्षामहे किं तु निरन्तरोत्पन्नरूपादिपरमाण्वाकाराम् । स्थौल्यं च न यद्यपि परमाणूनां प्रत्येकमस्ति तथाऽपि प्रतिभासधर्मो बहुत्वादिवन्न पुनरवयविनमेकमवस्थापयितुमर्हति । यदाहुः सोऽयममूल्यदानक्रयी स्वाकारं च ज्ञाने समर्पयति प्रत्यक्षतां च स्वीकर्तुमिच्छत्यवयवीति । तदेवं परं प्रत्यवयविनोऽसिद्धेर्विप्रतिपत्तिः । ततः साधकबाधकप्रमाणाभावे सति संशय इत्यर्थः । न साध्यत्वं स्वरूपेण संशयहेतुरिति मत्वा भाष्यकृदाह एवं च सतीति । परासिद्धत्वे सतीत्यर्थः । साध्यत्वादिति यथाश्रुतं सूत्रं गृहीत्वा वार्त्तिककारो विकल्प्याक्षिपति । किं पुनरत्रेति । कुतश्चिद्धेतोस्तस्य धर्मिणोऽभ्युपगमनमङ्गीकारमर्हति सर्व- २१९ स्यैव हेतोराश्रयासिद्धेरिति भावः । अथाव्यतिरेक इति । सत्येव धर्मिणि तस्यावयवेभ्योऽभेदो धर्मः साध्य इत्यर्थः । अवयव्यपेक्षत्वादिति । पटमपेक्ष्य हि तन्तवोऽवयवा भवन्ति नो खलु रचकाकरचकावस्थितास्तन्तवोऽवयवा उच्यन्त इति । न च षष्ठीति । पटस्यावयवास्तन्तव इति [illegible] षष्ठी तथा च पटस्येति विशेषणाभावे अवयवत्वमात्रं हेतुः स्यात् स च विरुद्ध इत्यर्थः । अनयोरारम्भकत्वेनावयवत्वमित्यस्योदाहरणम् । न च तन्तुस्तन्त्वोरिति । षष्ठ्यर्थाभावे मूलमुदाहरणमिति । तन्तूनां तन्त्ववयवत्वं प्रथीतीति । तच्छब्दस्य प्रधानपरामर्शकत्वादित्यर्थः । अवयवशब्दस्य चेति । पूर्वं कारणमविवक्षित्वा अवयवशब्दस्य परापरशब्दवत्सम्बन्धिशब्दताभावं गृहीत्वोक्तं सम्प्रति कारणत्वं विवक्षित्वोच्यत इत्यपौनरुक्त्यम् । देशयति । नैव हीति । असत् क्रियमाणं निर्वर्त्यं न चास्माकं सत्कार्यवादिनां तदस्तीत्यर्थः । दूषयति । एतच्चेति । न हि पटाकारप्र- २२ त्ययस्तन्तुमात्रालम्बनो रचकाकरचकावस्थितेष्वपि तन्तुषु प्रसङ्गात् । न च तन्तुपरिमाणभेदालम्बनः तस्य पूर्वमपि सत्त्वात् । असत्त्वे वा सत्कार्यवा-

द्रव्याहतिप्रसङ्गात् । तस्यैवासत उत्पत्तेः । तस्मात्तन्तुष्वपरेषु पट इत्यभिमा-
। २ नापि मिथ्याप्रत्यय इति वक्तव्यं तथा च दूषणमिति । **प्रतिज्ञैकदेशश्चेति**।
संयोगमात्रपक्षीकरणादित्यर्थः । **तान्येव तानीति** । तान्येव प्रत्यासन्नानि
घनभङ्गपरिणामप्रतिषेधादित्यर्थः । **यथा दण्डाद्यनेकं कारणमिति** ।
दण्डचक्राद्यनेकं कारणं घटपटादीनां कार्याणां **संयोगादिनिमित्तान्त-
रापेक्षमिति** । संयोग आदिर्येषां निमित्तान्तराणां कुम्भकारकुविन्दादीनां
तानि निमित्तान्तराणि अतद्गुणसंविज्ञानो बहुव्रीहिः यथा चित्रगुरिति । तेन
साध्यस्यैव दृष्टान्ततेति न दोषः । विमृश्यावधारयति । **वयं तु ब्रूमो
विभाग उत्पन्न इति** । संयोगोऽनपेक्षकर्मकारणकः । कर्मकार्यत्वाद्विभाग-
वदिति स्थिते प्रतिबन्धकापगममात्र विभागेन क्रियत इति सिध्यति । **यथा
वा संयोगः साधारणकार्यद्रव्येति** । यदा हि पटः पाट्यते तदा
येषामवयवानामवस्थितानां संयोगानां पटाख्यं साधारणं कार्यं तस्य साधा-
रणस्य कार्यद्रव्यस्य पटस्य च तदसमवायिकारणानां च संयोगानां केषां
चिद्विनाशोत्तरकालमंशुपटारम्भे तेषामनपेक्षाणां कारणत्वं विभागस्तु कर्मज-
न्यस्तत्र कतिपयसंयोगविनाशद्वारेण साधारणपटादिकार्यविनाशमात्रे व्याप्रि-
यते न तु विभागापेक्षा अंशुपटे जनयितव्ये संयोगः कारणमित्यर्थः । **न हि
प्रमाणमन्तरेणेति** । मिथ्याज्ञानमपि प्रमाणपूर्वकं सम्यग्ज्ञानपूर्वकत्वाद्विप-
र्ययस्येत्यर्थः । **वृत्तस्थितिं भावयद्भिः** । पूर्वापरप्रत्ययैकविषयस्य
वृत्तस्य स्थितिं स्थिरतां भावयद्भिरित्यर्थः । **भेदादर्शनमिति** । आकारभेदा-
दर्शनं यथा घटपटाद्याकारयोर्भेदेन दृश्येते नैवमवयवावयविनोर्नापि सम-
वायसमवायिनोरित्यर्थः । यस्मादयमुपनयो ऽवयवाश्च तन्तवो ऽवयवी च
पट इति । पूर्वमवयवाश्चेत्येतावन्मात्रं हेतूकृतं सम्प्रति स्वावयवावयविनोरि-
त्यपौनरुक्त्यम् । **अन्यो ऽवयवार्थ इति** । अवयविनो ऽन्यो ऽवयवशब्दार्थ
इत्यर्थः । प्रदेशिनो ऽन्यः प्रदेशशब्दार्थ इत्यर्थः । तत्प्रदेशशब्दस्य **व्यप-
देशविषयत्वस्येति** । तन्तवो हि पक्षीकृताः प्रधानमिति तद्वितिं सर्व
नाम्ना हेतुगतेन परामृष्टव्याः । तथा च तन्तुप्रदेशस्य व्यपदेशविषयस्य न
८ तन्तूनामित्यसिद्धो हेतुरित्यर्थः । **तेभ्यस्तूत्पत्तेरिति** । कल्पितस्य हेतोर्वि-
पक्षे तन्तुभ्यस्तूत्पद्यते पट इति । **उभयेन व्याघातादिति** । अभ्युपगमे-

नानभ्युपगमेनेत्यर्थः। द्रव्यान्तरेति। द्रव्यान्तरोत्पत्तिदेशावच्छेदो व्यवच्छेदः २२६
यथा घटोत्पत्तिदेशादन्यो घटोत्पत्तिदेश इत्यर्थः। व्यक्तधर्मादिधर्मभेदेने-
ति। शीतादिस्पर्शेनाविर्भावसंस्थानादय उच्यन्ते ते च कारणेष्वाकारात्पूर्वं नास-
न्निति जन्मापि तेषामपूर्वमित्यर्थः। यथा शंखादिभ्यो रथावयवेभ्य इत्यर्थः।
**हिमवत्परमाणुकमिति**। परमाणुग्रहणं सूक्ष्मद्रव्योपलक्षणार्थम्। न पुनः
परमाणोर्द्व्यणुकादन्यारम्भसंभवः। न च विवादाध्यासितः परमाणुर्महद्द्र-
व्यमारभते परमाणुत्वाद् द्व्यणुकारम्भकपरमाणुवत्। अमहत्त्वात्तु न हिमवत्प-
रमाणुकं प्रत्यक्षं स्यात्। तस्माद्धिमवद्धिमबिन्दुभ्यां संसर्गिभ्यां संयोगादवय-
विद्रव्यमारभ्यते महत्त्वं चास्यावयवमहत्त्वादुत्पद्यते। तथा च प्रत्यक्ष-
मस्य भवति। एवं तोयदविमुक्तोदबिन्दूदधिसंयोगाद् द्रव्यान्तरोत्पत्तिः
प्रतिपत्तव्या। भावो ऽप्रत्यक्षः स्यादिति। भावः सत्ता ननु यथा संयोगः
संयोगिद्वयनिरूपणाधीननिरूपणः तयोरेकस्यैवाप्रत्यक्षत्वे न प्रत्यक्ष एवमव-
यवाप्रत्यक्षत्वे नावयवी प्रत्यक्षः स्यादित्यत आह। न चायं पक्ष इति।
संयुज्यमाननिरूपणाधीननिरूपणो हि संसर्गो युक्तं यत्तदनिरूपणे न
निरूप्यत इति। न त्ववयव्यवयवनिरूपणाधीनो यतोऽनिरूपितेषु न निरू-
प्यत इति। अणुकस्यावयवाग्रहणे ऽपि ग्रहणात्। यथा विदूरवर्तिनो हस्ति-
वनस्पत्यादेरवयवाग्रहणे ऽपि ग्रहणादिति भावः। न च तत्कृतो ऽस्त
भेद इति। ग्रहणाग्रहणकृतो भेद इत्यर्थः। न ह्यैन्द्रियकमन्यस्य सांख्य-
स्यान्यथा सूक्ष्मत्वेनार्थं प्रकाशयति। अन्यस्य नैयायिकस्यान्यथा स्थौल्येन
अविकल्पत्वादेकरूप्येणावस्थानादिति। **प्रत्यक्षप्रमाणविरोधादिति**।
महाभूतानां हि मूलकारणं परमाणवः परमसूक्ष्मास्तेषामप्रत्यक्षत्वं मान-
सानुव्यवसायगम्यं परमसूक्ष्मविषयं मे प्रत्यक्षमिति तद्भावश्चात्मनि संयुक्त-
विशेषणेन मनःसन्निकर्षेण प्रत्यक्षविरोध इत्यर्थः। एके त्विति। यमेव
हि द्व्यणुकं दृश्यं भवन्तो द्रव्यावयवमाचक्षते तमेव वयं परमाणुमाचक्ष्महे
न हि तदवयवकल्पनायामस्ति प्रमाणमिति भावः। कथमवगम्यते
**भिद्यते त्रसरेणुरिति**। अङ्गुल्यग्राभ्यां मृद्यमानस्यास्यादर्शनं सूक्ष्मतया २३४
ऽप्युपपद्यते। जालसूर्यमरीचिस्थमेव तद्रजः कथं विद्युपलभ्यते नान्यथेति
भावः। द्रव्यत्वे सतीति सामान्यसमवायौ निवर्तयति। बाह्येत्यात्मानं

१३ निवर्त्तयति । अनित्यत्वाच्चेति । अनन्तावयवत्वेन मेरुसर्षपयोरभिन्नप-
रिमाणत्वप्रसङ्गात् महाभूतमूलकारणमनवयवं कल्पनीयं न च द्रव्यमनवयवं
विनश्यति आकाशादिवदिति नित्याः परमाणवस्तत्परेणावस्त्वनित्या इति न
परमाणुः । अनित्यत्वमेव कुत इत्यत आह । सामान्यविशेषवत इति ।
संहतानामिति । रूपादीनां संघातः परमाणुरिति । न चासंहतप्रति-
षेध इति । अप्रतिषेधे वा तथाऽसंहताः परमाणव इति भावः । संयुज्यते
चायं विभज्यते चायमवयव्यन्तरेणेति । न व्यतिरेक इति । यथा
भिन्नात्संयोगात्प्राप्तिभावो व्यावृत्तः एवमभिन्नादपि न हि स एव तन्तुस्तेनैव
तन्तुना प्राप्यत इत्यर्थः । सर्पकुण्डलोदाहरणे अन्वयी हेतुरित्यर्थः । अत्यन्त-
स्तमसा न संयोगः किं तु तेषां स्वाभाविकः स कोऽपि परिणतिभेदो यत
सम्भूयकारित्वमित्यर्थः । गुरुत्वान्तरकार्याग्रहणादिति । अवयवगुरुत्वाद्
गुरुत्वान्तरमवयविनस्तस्य यत्कार्यमवनतिविशेषस्तस्याग्रहणादित्यर्थः ।
सत्यमुपपादितः पक्षधर्म इति । कार्याग्रहणेन कार्याभावस्ततः कारणस्य
गुरुत्वस्याभाव इत्यर्थः । प्रतिषेध्य कार्यगतरूपादि तदभ्यनुज्ञात भवतीति ।
तथाऽपि कुतः प्रत्यक्षविरोध इत्यत आह कारणरूपादय इति । ते
हेतौ । एतेन कार्ये रूपादिप्रतिपत्तिः प्रत्युक्ता । निषेध्यत्वेनेति । यदा हि
कार्यमेव रूपादि नास्ति तदा कस्मात्तत्र रूपादिप्रतिपत्तिः प्रतिषिध्यते
इत्यर्थः । यथा रूपाद्यन्तरकार्यमिति । अवयवविगतानां रूपादीनां कार्ये
रूपसंस्काराद्यवयविनस्त्वानुवृत्ता एव दृश्यतेति । उपन्यासः स्थापनम् ।
यद्यप्यवनमनविशेषाभावस्तुलाऽव्यधिकरणः तथाऽपि न यावदी तुला
समवस्थिताऽस्य प्रतीयते किं त्ववनमनविशेषसम्बन्धितेत्येतावतोक्तम् ।
मेऽयमिति । असिद्धत्वादित्येकदेशिनो दूषणम् । तदेतदेकदेशिदू-
षणं दूषयति । न तद्वत्तानुपलब्धेः परमार्थदूषणमाह । अवनमतीति ।
गुरुत्वमवयवोपहितानामणूनामवनमनविशेषं न करोति तुला द्रव्यसमाहार
इति । कार्यकारणद्रव्यसमाहारो मृत्कणमृत्पिण्डशर्कराकपालकुम्भसमाहार
इत्यर्थः । ननु समाहारः कुम्भस्य कारणं तद्गुरुत्वे यद्गुरुत्वमेवेत्यत
१२ आह । न चेति । ये त्वाहुः सर्वो मृत्कणादिः कुम्भपर्यवसानः कार्यम
सदः । परमाणुष्वेव समवैति न हि मृत्कणादिकमारभ्य मृत्पिण्डान्यारभन्ते

इति । प्रसङ्गात्तन्मतमपाकर्तुमुपन्यस्यति । के चित्त्विति । निराकरोति । २२६ ।
तान्प्रतीदमिति । गुरुत्वमनुपतदिति । न च यथा प्रदीपाधीनप्रकाशा
घटादयो न तु प्रदीपः प्रदीपाधीनप्रकाशः तस्य स्वमहिमनिषिद्धतमोऽनुषङ्ग-
त्वात् । एवं गुरुत्वाधीनपाता घटादयो गुरुत्वं तु स्वस्य चान्येषां च
गुरुत्वान्तरानपेक्षं पतनहेतुरिति वक्तव्यम् । न हि प्रदीपेन स्वात्मनि प्रका-
शयितव्ये [illegible] चिदन्यत् क्रियते यादृशा घटादयः । स्वप्रकाशोत्पादे
तादृशः प्रदीपो ऽपि । चक्षुषः पुनरयं स्वभावभेदो, येन घटादौ प्रकाशयि-
तव्ये प्रदीपमपेक्षते न तु प्रदीपे प्रकाशयितव्ये प्रदीपान्तरमिति । तस्मान्न
प्रदीपस्य स्वात्मनि कर्मकरणभावः गुरुत्वं तु द्रव्यगतस्य पतनकर्मणः करणं
तेन हि द्रव्यं पात्यते । स्वगतस्य [illegible] पतनकर्मणः करणत्वे तदेव कर्म
करणं चेति स्वात्मनि वृत्तिविरोधः । आत्मनस्तु स्वात्मनि प्रकाशयितव्ये
कर्तृत्वमेव न कर्मत्वमित्युपपादितमिति । तस्माद्गुणादयो विशेषाधिकरणा
न पतन्ति अद्रव्यजातीयत्वाद्गुरुत्ववदिति सिद्धम् । सिद्धान्त्याह । यद्
पुनरिति । कारणं प्रमाणं रूपादयो न संयोगरूपप्राप्तिमन्तः गुणत्वात्संयो-
गवदित्यप्राप्तेः रूपादिषु निश्चयानदर्शननिमित्तो रूपादिषु प्राप्तिभ्रमो द्रव्येषु
प्राप्तिप्रत्ययः पारमार्थिक एवेति विनिश्चयः । तदनेनाभिप्रायेणोपसंहरति ।
तस्माद्व्यवस्थितमिति । शेषमतिरोहितार्थम् ।

सर्वा-द्धेः (सू. ३४) ॥ स्यादेतद् यथा ऽवयविनं नाभ्युपैति परः एवं
गुणकर्मादि अपि । तत्कथमयं प्रसङ्गः परस्य सर्वाग्रहणमित्यत आह तदिदं २४१ ।
सूत्रमिति । यो ऽपि हि तावद् गुणकर्मादि नेच्छति सो ऽपि न तत्प्रत्यय-
मपह्नुते अस्ति लौकिकपरीक्षकाणामवयविद्रव्यगुणकर्मादिप्रत्ययः सो ऽयमप-
ह्नवनीयः तस्य [illegible] प्रत्यक्षत्वमुपपादितं प्रत्यक्षलक्षणे । अवयविद्रव्यबाधकानि
च प्रमाणान्यधस्तान्निराकृतानि । सो ऽयमसति बाधके स्वयं च गुणादिभिरिव
सहोपलभ्यमानो न शक्यो निराकर्तुमित्यधिकरणार्थः ।

धार-श्च (सू. ३५) ॥ [illegible] एते धारणाकर्षणे गोघटादिकमुपलभ्य-
मानमवयविनं साधयतः कुतो निरवयवे विज्ञानाकाशादौ अवयवे च परमा-
णौ चादर्शनात् । इदमेवं प्रयोगमारोहति । यो ऽयं दृश्यमानो गोघटादिरवयवी
परमाणुसमूहमात्रेण विज्ञानाध्यासितः नासाववयवी धारणाकर्षणानुपपत्तिप्रस-

स्तात्। यो यो ऽनवयवी तत्र तत्र धारणाकर्षणे न भवतः यथा विज्ञानादौ न
२ भवतः घटादिस्तथा तस्मान्नानवयवीति। न विरोध इति व्यभिचारलक्षणो
दोषो विरोधः। अवयविन एव ते प्रत्येकमिति। परमाणुसमूहे तु प्रत्ये-
कमपि न परमाणवो ऽवयविन इत्यर्थः। विशेषहेत्वभावादिति। एष हि
विशेषहेतुः स्याद् यदवयविनमन्तरेण क्वचिद्विज्ञानाकाशादौ संग्रहप्रोत्क-
लक्षणौ धारणाकर्षणहेतुता वा ऽस्य दृष्टा स्यात्। न चासौ दृश्यते
काष्ठतृणोपलादयः प्रत्येकमवयविन एवेत्यर्थः। स्यादेतत्। अवयवित्वेन
तुल्यत्वे ऽपि कस्मादेकत्र धारणाकर्षणे नान्यत्रेत्यत आह पांशुराशीति।
समूहमात्रत्वेन तुल्यत्वे ऽपि यथा कस्मिंश्चिद्विशेषे हेतुरेवमवयवित्वेन
तुल्यत्वे ऽपीति समानमित्यर्थः। तत्सहचरितस्य संबन्धविशेषः स्नेहद्र-
वत्वकारित इति। तस्माद्ग्राह्यकारस्य सूत्रद्वयस्य परमतेन द्रष्टव्यम्। अथे-
दानीमन्वयिन इति। अन्वयव्यतिरेकिण इति। पटो ऽयमित्येकविषया
बुद्धिरेकबुद्धिः तन्तव इति नानाविषया बुद्धिरनेकबुद्धिः। समुच्चितासमु-
च्चितविषयत्वादिति। असमुच्चितविषयत्वादेकबुद्धेः समुच्चितविषयत्वादने-
कबुद्धेरिति। आपाद्धान इतरसूत्रम्।

सेना-नाम् (सू ३६)॥ तथोक्तमिति। बहुत्वसंख्यैव सेना वन
चेति। यस्तु मन्यते सेना वनमिति व्यपदेशाय तज्जातीय वा विज्ञानाय
बहुत्वसंख्या कथं चित्कारणं समवैति यस्त्वयमैन्द्रियकः प्रत्ययः प्रत्येकमगृ-
हीतैकत्वेषु वृक्षेष्वनुत्पन्नापेक्षाबुद्धेरिन्द्रियसंबन्धमात्राद्वागादौ जायते तत्र का-
र्याभावेन बहुत्वस्यानुत्पादात् बहुत्वसंख्यालम्बन इति न परितुष्यति तं
प्रत्याह। अभेदप्रत्ययस्य चेति। उपलभ्यमानरूपेष्वेव कुतश्चिन्निमित्ताद-
नुपलभ्यमानपृथक्त्वेषु मिथ्याभेदबुद्धिर्भवति। न पुनः सर्वथानुपलभ्यमाने-
ष्विति तात्पर्यार्थः। यस्तु नोभयपक्षप्रतिपन्नमस्ति जगति किं चिदेकमिति
मन्यते तं प्रत्याह। एकं नास्तीति। स्यादेतत्। दूरात्काष्ठलोष्टतृणपा-
षाणादयः प्रत्येकं पृथक्कृता नोपलभ्यन्ते। समुदायस्तु तेषां दृश्यते। न
च ते द्रव्यान्तरमारभन्ते विज्ञातात्मत्वात् तथा मा भूवन् परमाणवः
प्रत्येकं दृश्या समूहस्तु तेषां दृश्यते विनैव कार्यान्तरारम्भमित्यत आह।
१२ गृह्यमाणमहत्त्वस्य चेति। तेषामेवागृह्यमाणानामपि भिन्नानां दर्शने ये

न रूपेण ग्रहणयोग्यता निमित्तान्तरात् न गृह्यन्ते परमाणवस्तु परमसूक्ष्मतया न स्वरूपेण ग्रहणार्हा इति मिलिता अपि न ग्रहीतव्या एव न जातु मिलिता अपि पवनसमूहा भवन्ति चाक्षुषाः । रूपवन्महत्त्वमपि भावानां स्वरूपयोग्यता ग्रहणे प्रतीति भावः । ततश्च तदैवेन्द्रियका अनेन्द्रियकाश्चेति महान्विरोधः । अत्रान्तरे वार्त्तिककार आह स्म । को वा विरोधो* बहवः सन्नातिशयाः पृथगप्रयोग्याः कारणं बुद्धेर्यदि नामेन्द्रियाः द्विवदिति । एतदपि वार्त्तिककृतैवार्थादनुपजातविशेषा इति वदता परास्तम् । [२४४] न खलु स्थैर्यसिद्धौ भावानामवयविद्रव्योत्पादमन्तरेणास्त्यन्यो ऽतिशयः परमाणूनां न चायमागन्तुकभावाद्य परमाणवो ऽवयविनं जनयन्ति तेनैव स्थूलबुद्धिं कुर्वन्त्यवयविनोति साम्प्रतम् । यदाभासा हि बुद्धिस्तदस्या आलम्बनप्रत्ययः न चेयं परस्परव्यावृत्तपरमसूक्ष्मपरमाण्वालम्बना तथा सति स्थूलभेदादेकमिति न स्यात् । न चेयं प्रत्ययो विकल्पः स्पष्टप्रतिभासत्वात् । न वा विकल्पोपाधिरस्य विशदता निर्विकल्पकेनापि तस्या ग्रहणात् । न च प्रतिभासधर्मः स्थौल्यम् । नानादिग्देशस्थितस्य निरन्तरस्यैकेन विज्ञानेन ग्रहणं स्थौल्यम् । तत्खल्वीदृशत्वं परमाणूनां प्रतिभासधर्मतयाभावीति प्रतिभासधर्म इत्युच्यते । तथा चेद समीचीन यथानुभव. न हि ते न परमाणवो न च न निरन्तरोत्पन्ना न च न द्विदेशभिन्नास्तं चैकस्मिन्विज्ञाने न चकासति । तस्मात्कस्यायमन्यथात्वम् । यथा ऽऽहुर्न च तद्दर्शनं भ्रान्तं नानावस्तुग्रहात्मतः । आवृतग्रहणं नान्यच्च वस्तुग्रहो भ्रम इति । अथ तावन्मिलितबहुलवद्रूपस्पर्शपरमाणुभिरन्तरिततया नैरन्तर्यमेवा नास्ति । तस्मादन्तरालाग्रहणे दूरादेकघनवनप्रत्ययवदयं मिथ्याप्रत्ययो रूपादिपरमाणूनां सान्तरत्वादनेकत्वाच्च । न चासति बाधके मिथ्येति युक्तम् । उक्तश्च बाधकाभावः स्थैर्यं च भावानामुपपादयिष्यते । तस्मादयुक्तमेतदपीति । इदमेव परीक्ष्यत इति भाष्यम् । सर्वसाधर्म्यमनपह्नुवानस्य अतीन्द्रियं वा ऽऽणुसञ्चयमात्रमिच्छतः सेनावनादीनामपि करिकुसुमादीनामतीन्द्रियाणुसञ्चयमात्रत्वाद् दृष्टान्ताभाव इति तात्पर्यार्थः । शङ्कते दृष्टमिति चेत् । सेनावनादीनि तावद् दृष्टतया न शक्यान्यपह्नोतुमिति सिद्धं निदर्शनमित्यर्थः । निराकरोति तच्च तन्नैवमिति । यदि

* इद मु. या. पु. नास्ति ।

दृष्टमप्रत्याख्येयमवयव्यपि दृष्ट इति सो ऽपि न प्रत्याख्येयः । अयाय परीक्ष्य प्रत्याख्यायते सेनायनाद्यान्यपि प्रत्याख्येयानीति दृष्टान्ताभाव' । साध्यत्वम त्यादिति भाष्यार्थः । वार्तिके कश्चायमनेकस्मिन्निति । अविद्यमानो ऽयमेव । शुक्तौ रजतस्य तस्य दर्शनं वणिग्वीथ्यादौ तस्य द्वारं संस्कारः तेनाध्यारोपित' *शुक्तिविपरीतधर्मो रजतस्य येन सामान्यदर्शनेन तत्तथोक्तं तस्य भाव स्तत्सामान्यदर्शनस्येति । तिरोभूतभेदमुपमानमेव भाक्तं भेदोल्लेखेन वाय मानमिति विवेकः सप्तावामभौपमिकोदाहरणम् । यथा सिंहो माणवक इति । नन्वेतदपि तिरोभूतभेदतया भाक्तमेवेत्यत आह । सिंह इव सिंहः । अयमर्थः । सिंहशब्दादुपमानादाचारे सर्वप्रातिपदिकेभ्य क्विविति क्विबन्ता त्कर्तरि क्विपि कृते सिंहशब्द उपमानार्थो भवति । नानाभावे चाणूना मित्यादिभाष्यं व्याचष्टे । मिथ्याप्रत्यया अपीति । तदभावे तु । प्रधाना भावे तु घटादौ मिथ्याप्रत्यय इति । परमाणुषु संचितेष्विति । येषामपि घटो ऽवयवी तैरपि परमाणुसञ्चयो ऽभ्युपेयः । येषामप्यवयवी नास्ति तैरपि परमाणुसञ्चय उपेयः सो ऽयमुभयसम्मतः सञ्चय इत्यर्थः । ते ऽपि संचिता एवेति । वैभाषिकाः खलु वात्सीपुत्रा भूतभौतिकसमूहात्पटादपि शब्दादी निच्छन्ति अतस्तेषां मते शब्दादयो ऽपि सञ्चिता एवेत्यर्थः । अपि चास्म न्मते ऽपि शब्दादीनां न मुख्यमेकत्वं सङ्ख्याया गुणस्य गुणेषु शब्दादिष्वभा वात् । अपि तु भाक्तमेवेत्यत आह । शब्दादिषु चैकप्रत्यय इति । शङ्कते सर्वत्रेति । निराकरोति । न द्वे इत्यत्रेति । समुच्चयनिवृत्तिमात्र मेव चेदेकत्वं द्वित्वनिषेधेन समुच्चयो निवर्तत इति तन्निवृत्तिमात्रमेकत्वमे वेति एकमनेकं चेति सत्त्वयो न स्यात् । न च तथोत्तरमेकमेवेति नियमार्थ

। २० मयेदिति । गतौ । प्राप्तो । शङ्कते सर्वत्रेति । निराकरोति । नैकमित्य त्रेति । अयमभिसन्धिः । द्वित्वादीनामभावे समुच्चयमात्रं स्यात् । न तु समु च्चयानामवान्तरभेदः तथा च नैकमित्यसमुच्चयपदितैकत्वसमुच्चयः प्राप्त एवेति न सत्त्वयः स्यात् । इदं त्विह वक्तव्यम् । शब्दादौ द्वित्वाद्यभावे कथं द्वित्वादिप्रयोगाः भाक्त इति चेत् । किं भाक्तनिमित्तं समुच्चयमात्रं चेत् कुतो द्वाविति नियमः । समुच्चयविशेषादिति चेद् सन्त्यस्य नास्त्या

* शुक्तिरजतद्विगति २ प्रत्यक्षवत् इति पु ।

मानतो भेद इत्युक्तम् । न चेह द्वित्वमस्ति यद्विशेष्यात् तथा चाकामे-नापि समुच्चयानामवान्तरभेदः स्वाभाविको वक्तव्यः । तथा च स एवास्तु संशयविषयः कृतं द्रव्ये द्वित्वादिनेति । तस्मात्सेयमिदेव भगवती वस्तूपगमे-नः शरणं समुच्चयादिविलक्षणं द्वित्वाद्यवगाहमाना व्यवस्थापिका द्वित्वा-दीनां तदनुसरणप्रकारश्च युक्तिबहुलतया वार्तिककृता कृत इति मन्त-व्यम् । यः पुनरनुभूयमानमेकत्वं द्वित्वादींश्चानुभूयमानान्न प्रतिपद्यते तस्य वस्त्वनुभवमपह्नुवानस्य निर्मर्यादतयैकत्वाधारो ऽपि नास्तीति कस्य समुच्चयो द्वित्वादिः स्यात् । समुच्चयाभावे ऽपि कस्याभाव एकत्वं स्यादि-त्याह यः पुनरिति । अपि च एकत्वादीन् मुख्याननभ्युपगच्छतो ऽयमपि २४७ भाक्तः प्रयोगो न स्यादित्याह । एकत्वमित्यादींश्चेति । भाष्यमनुभाष्य व्याचष्टे । तेषु चैवमिति । इयत्ताऽनवधारणादिति । प्रत्यक्षपरिमाणवि-षयमियत्तावधारणं परममहतां त्वप्रत्यक्षपरिमाणानां यत्पपीयत्तानवधारणे नापरिमाणता द्रव्यत्वेन व्योमादीनां परिमाणानुमानादिति । यथा मह-त्परिमाण इति । कुवलपरिमाणादामलकपरिमाणं महदिति लौकिका व्यपदिशन्ति । यथा कुवलादामलकं महदिति । न च परिमाणस्य परिमा-णयोगः अनवस्थाप्रसङ्गादिति । तस्माद्भाक्तो ऽयं व्यपदेशो महत्त्वे मह-दिति । तस्मिन् तच्छब्दो भाक्तमहच्छब्दवान् गुणत्वान्महत्त्ववत् गुणत्वं च शब्दस्यानुमानलक्षणे प्रसाधितम् । भाक्तं च मुख्यपूर्वकमिति द्रव्ये चिन्तु-त्वेन महत्त्वेन भवितव्यं तत्प्राप्ततिं बाधकद्रव्ये मुख्यमिति सिद्धम् । न महत्त्वस्यापविपर्ययत्वादिति । न तत्त्वाचाद् अपि त्वयाधितादनन्यथा-सिद्धादिति तदेवाह । अपि त्वित्यादि । अनेनानन्यथासिद्धिर्द्रव्ये मह-त्त्वप्रत्ययस्य दर्शिता । तथैकादिमहत्त्वप्रत्यया इति । समुदायमेकमाश्रित्येति शेषः । समुदायश्च समुदायान्तरप्राप्ताविति । यदा हि भिन्ना अपि समुदायिनः प्राप्त्या एकीकृता यतः समुदायः तदा समुदायान्तरमपि समु-दायान्तरेण प्राप्नमेकः समुदायो न चैकत्वात्मना प्राप्तिरस्ति । न हि रादे-याङ्गुल्ययं तेनैवाङ्गुल्येन प्राप्यते तत्तश्च द्वयोः समुदाययोः प्राप्तिरित्ययुक्त-मित्यर्थः । चोदयति । नैव जातिरस्तीति । अयमभिसंधिः न सामान्यं २५० । १ नाम वस्तुसत् यस्याश्रयो वस्तुभूतो ऽनुमीयते । तथा हि तत्पिण्डे या

वर्तेत सर्वत्र वा यदि सर्वत्र सर्वे एव गावः प्रसज्येरन् यथा हि शाबलेयादी
गोत्वाभिसम्बन्धाद् गाव एव विश्वमेव तत्सम्बद्धमिति गौः प्रसज्येत । अथ वै
पिण्डेषु वर्तते तदा वक्तव्यं ततो यदा क्वचिद्देशे पिण्डो जायते तदा वक्त
कुतस्त्यं पुनरस्य गोत्वमिति । न तावत्तत्रापि पिण्डोत्पादात्पूर्वमासीन्नापि पिण्ड
न्तरादागतं तस्य निष्क्रियत्वात्पिण्डान्तरत्यागप्रसङ्गाच्च । न च पिण्डे जायमा
जायते अनित्यत्वापत्तेः पिण्डान्तरस्य च गोत्वाज्जन्माजन्मस्वरूपविरुद्धधर्मा
ध्यासेन भेदे सत्यसामान्यत्वप्रसङ्गः । तदितो महाव्यसनाद्बिभ्यता बावृतं
१।१२ सामान्यमास्थेयं न पारमार्थिकमिति । परिहरति जातिविशेषस्येति । प्र
त्यानुवृत्तिर्यद्यपि प्रत्यक्षा तथाऽपि विप्रतिपन्नं प्रति सैव लिङ्गमुच्यते । स
हि के चिद्भावा ये सहावस्थाने ऽपि परस्परमसम्बद्धा यथा समानका
गन्धरसरूपस्पर्शा विज्ञानानि च बहूनि परेषां समानकालान्यसंसर्गीणि
दिक्कालाकाशात्मानश्च सहावस्थाना अपि परस्परासंसर्गिणो वैशेषिकाणां त
सामान्यमपि सर्वासम्बद्धमपि सर्वैः सहावतिष्ठते । यास्त्वस्य व्यक्तयस्ता
एव सम्बध्यन्ते तथा च यत्र जायन्ते व्यक्तयस्तत्रासम्बद्धावपि सत् सामान्
समवायान्विति । तासां जन्मैव सामान्यसमवायावच्छेदः । स च स्वकारण
ननुयोज्य इति वस्तुगतिः प्रामाणिकी विद्वांसो नास्मादूषणाद्बिभ्यतीति
बाधकान्तराणि वाक्यावयवव्याख्यानेन प्रत्याख्यातानि । तावदेव त
धिकरणं जातेः प्राप्तमिति । ये ये वृक्षत्वादिजातिमनपेक्ष्य व्यञ्जया
ते ते परस्परं वृक्षादिव्यक्तितया भिद्यन्ते । यथा त्रिगुणाद्योक्तपञ्चकाद
भिन्नाग्रावस्थाया ऽर्वाग्भागमध्यभागपरभागा अपि भिन्नास्तस्य स्युः । अ
वयविनि तु जायमाने नायं दोषः । तस्य सर्वावयवसाधारण्येन प्रत्यभि
ज्ञायमानत्वात् । न चैवमवयविनोऽपि तावन्तः स्युरिति वाच्यम् । त
स्य सर्वावयवसाधारण्येन प्रत्यभिज्ञायमानत्वात् । अवयवान्तरस्य तु न
वयवान्तरे प्रत्यभिज्ञानमिति । तेषां वृक्षव्यक्तिहेतुत्वे वृक्षानेकत्वप्रसङ्ग इ
त्सर्वापकृष्टः संघातश्चेति व्याघातः । संहन्यमानापेक्षया ऽनपकर्षादित्यर्
साध्यमवयवेभ्यो ऽनर्थान्तरमवयविनं मन्यमानं प्रति प्रयोगमाह । अ
३।५ न्तरमिति । प्रावरणसामर्थ्यं पटस्य तन्तूनां तु पटोत्पादनसामर्थ्यं तद्
दरूपे इति । तन्तूनां नीलपीतलोहितादिरूपं पटस्य तु चित्रं तच्च नी

दीनां समवायिकारणं तन्तवः चिपस्य तु पटः । एवं तन्तुपटयोः सारूप्ये ऽपि कश्चिद्विशेष उन्नेयः । विशेषवत्त्वं च वैयधिकरण्येन प्रतीयमानत्वं तेन च भिन्नकारणत्वं भिन्नसमवायिकारणत्वं साध्यतइति न विरुद्धसाधनं नाप्यनैकान्तिकत्वमिति । ये तु पक्षहेतू अन्यथाकारं गृहीत्वा दूषणं बभूवुः तन्मतमुपन्यस्य दूषयति । एके त्विति । अनुमानमिदानीमिति २५२ । भाष्यम् । अथेदानींपदार्थमाह वार्त्तिककारः । अथेदानीमवसरप्राप्तमिति । उद्देशक्रम एव लक्षणपरीक्षयोः संबन्ध इत्यर्थः ॥

रोधो पम् (सू. ३७) ॥ अप्रमाणपदस्य व्याख्यानभाष्यमेकदाऽपीति । प्रतिपादकं निश्चायकम् । लक्ष्यपरत्वाल्लक्षणस्य लक्षणयुक्तस्य लक्ष्यस्य व्यभिचारादप्रमाणत्वेन लक्षणमेव दूषितं भवतीत्यर्थः । वार्त्तिकम् । पूर्ववत्प्रत्येकदाहरणानीति । अत्र च नदीपूरमयूरवाशिते शेषवत उदाहरणे पिपीलिकाण्डसञ्चरणं चाचिरमुत्पत्स्यमानस्य वर्षस्य न कार्यं न ह्यनागतं कारणं भवति पूर्वोत्पन्नस्य । न च नाशावसन्नत्वादयो ऽप्यनागतेन मरणेन क्रियन्ते तथा सति पुत्रो ऽपि पितुः कारणं स्यादिति सर्वमवदातम् । कार्यकारणभावव्यवस्थापनं लौकिकं भवेत् । नियमवान् खलु प्राग्भावः कारणत्वस्य व्यवस्थापको नियमवांश्च पश्चाद्भावः कार्यत्वस्य व्यवस्थापकः नाशावसन्नत्वादयो मरणस्य यत्कारणं तस्य पूर्वकार्यमेवेति प्रत्यासत्त्या ऽनया मरणमनुमापयन्ति । न च पिपीलिकाण्डसञ्चरणं वर्षस्य कारणमनुपलब्धसामर्थ्यात् । असत्यपि तस्मिन्वर्षस्योत्पत्तेः । वर्षमूलकारणस्य तु महाभूतसंक्षोभस्य पिपीलिकाण्डसञ्चरणं पूर्वकार्यं क्षुभ्यमानाः खलु पिपीलिका भौमेनोष्मणा स्वान्यण्डानि भूमिष्ठान्युपरिष्टान्नयन्ति । तस्मात्पिपीलिकाण्डसञ्चारेण वर्षकारणमनुमाय यदि वर्षकारणात्कार्यं वर्षमनुमिमते अनुमातारः तदा पूर्ववदुदाहरणम् । अथ कार्यकारणभावमनुद्दिश्य तदा कार्यकारणभावाभावेन सामान्यतोदृष्टस्योदाहरणमिति मन्तव्यम् । उदाहरणव्यभिचारद्वारकमिति । लक्ष्यदूषणद्वारेण लक्षणस्य दूषणमित्यर्थः । २५ न हि व्यभिचारलक्षणस्यानुमानाप्रामाण्यप्रतिपादकस्यानुमानस्य व्यभिचारे [illegible] चित्प्रमाणमस्तीति । भाष्ये पिपीलिकाप्रायस्येति । प्रायशब्दः प्रकृत्यर्थः । तदेवमनुमानलक्षणपरीक्षाद्वारेणानुमानलक्षणं परीक्ष्य संप्रत्यनु-

मानविषयपरीक्षया ऽनुमानपरीक्षामवतारयति भाष्यकारः । त्रिकालवि-
षयमिति । तत्र वार्तिककारः सत्या कालस्य सिद्धौ वर्तमानस्य परीक्ष्यते
५ स यथापरीक्षितो ऽद्यापि न सिध्यतीति कालस्वरूपं परीक्षते । तत्र ताव-
दिति । विकारणे ऽयमिति कारणान्तरवैकल्यं विषयस्यायोग्यत्वमभावो वा
विषयस्येति चोदयत्यनुपलब्धिकारणानीति । अथ धर्मो ऽपि नास्तीति ।
ऽभावरूपो हि हेतुरभावाधिकरणो न भवति । भावरूपस्य त्वभावाधिकर-
णत्वाविरोध इत्यर्थः । परिहरति । साधनार्थो हीयते । न हि पराभिमतो
ऽभावः सर्वसामर्थ्यरहितः साधनं कस्य चिद्भवति अस्मदभिमतस्त्वभाव
परतन्त्रो ऽभावाधिकरण एव नान्यधिकरणो नाप्यभावाधिकरण इत्यर्थः ।
एवं कालस्य बाधकप्रमाणाभावमुक्त्वा साधकं प्रमाणमाह । परापरादीति ।
स्थिरयोरनियतदिग्देशयोः समानदिक्कयोर्वा देशतः सन्निकृष्टविप्रकृष्ट-
योर्वा विप्रकृष्टसन्निकृष्टयोर्वा युवस्थविरयोरेकस्मिन् शरीरावस्थाभेदानुमिता
तीतसूर्योदयास्तमयरूपक्रियाप्रचयबहुत्वान्तरितजन्मनि स्थविरे युवानं शरी-
रावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयाल्पत्वान्तरितजन्मान-
मवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते तामपेक्ष्य बहुतरसवितृदयास्तमयवि-
शिष्टेन कालप्रदेशेन योगात्स्थविरे परत्वस्योत्पत्तिः, एवं स्थविरमवधिं
कृत्वा यवीयसि सन्निकृष्टा बुद्धिरुत्पद्यते तामपेक्ष्याल्पतरदिनकरोदयास्तम-
याल्पत्वान्तरितजन्मानमवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते तामपेक्ष्य बहु-
तरसवितृदयास्तमयप्रचयविशिष्टेन कालप्रदेशेन योगाद्यवीयस्यपरत्वस्यो-
त्पत्तिः । तयोश्च कालपिण्डसंयोगयोः प्रत्यक्षस्य न लोकसिद्धे ते यते पर-
त्वापरत्वे कालपिण्डसंयोगादुत्पद्यमाने कालकारणविशिष्टमात्मानं कार्यतया
गमयतः. सूर्योदयास्तमयक्रियाप्रचयाल्पत्वबहुत्वविशिष्टात्पिण्डादेव परत्वा-
परत्वे भविष्यतः कृतमत्र द्रव्यान्तरेण कालेनेति चेत् । न सवितृसमवे-
तायाः क्रियायाः पिण्डेनासम्बन्धात् । समुत्कसमवायस्त्वस्याः सम्बन्धः कालेन
सर्वगतेनास्यास्ति न चाकाश सर्वगतमपि परापरव्यतिकरं प्रत्ययकल्पते ।
अस्य स्वरूपेणाभेदात् । अपि चाकाशात्मानो परापरव्यतिकरकारणम्
असाधारणगुणयोगित्वात् पृथिव्यादिवत् । तस्मात्परापरव्यतिकरकारणे
कल्पनीये ते च द्रव्यमपारतन्त्र्यात् आकाशवत्ते दिक्काला उच्येते एव योग-

पद्यायौगपद्यचिरक्षिप्रप्रत्यया अपि काललिङ्गं न ह्येते क्रियायां तत्कारकेषु वा भवितुमर्हन्ति तेषु सत्स्वपि कादाचित्कत्वात् । नन्वयं कालो ऽपि नित्य इति तस्मिन् सत्यप्येते कादाचित्काः कथं कालकारणम्* अपि यदुच्येत । एकसूर्यपरिस्पन्दावच्छिन्नकालसंबन्धिन्यः क्रियाः युगपदनेकसूर्यपरिस्पन्दावच्छिन्नकालसंबन्धिन्यः क्रियाः क्रमवत्यो यौगपद्यप्रत्ययगोचरः । एवं बहुतरानेकसूर्यपरिस्पन्दावच्छिन्नकालसंबन्धिनी क्रिया चिरप्रत्ययगोचरः । अल्पतरानेकसूर्यपरिस्पन्दावच्छिन्नकालसंबन्धिनी क्रिया क्षिप्रप्रत्ययगोचर इति । कृतं तर्हि सूर्यपरिस्पन्दस्य कालावच्छेदेन । नन्वयं स्वत एव क्रियामवच्छेत्स्यतीति तथा च युगपदादिप्रत्यया भविष्यन्तीति तत्र सूर्यपरिस्पन्दस्य क्रियाभिः संबन्धाभावेन तदवच्छेदकत्वानुपपत्तेः न चा ऽऽकाशादिसंबन्धद्वारमस्य तदवच्छेदकत्वम् । तथा हि नाकाशादयः क्रियायौगपद्यादिप्रत्ययनिमित्तम् असाधारणगुणायोगित्वाद् घटवत् । एवं यौगपद्यादिप्रत्यया न दिक्कारणकाः दिग्देशनियमानपेक्षणात् । कालपिण्डसंयोगजपरत्वापरत्ववदिति । तस्मात्सूर्यपरिस्पन्दस्य देवदत्तादिपरिस्पन्दस्य चास्ति कालेन सर्वगतेन संयुक्तसमवायलक्षणः संबन्धः एतया च द्वारा परिस्पन्दयोरप्यस्ति संबन्ध इति । कालसंबन्धानपेक्षमेव च सूर्यपरिस्पन्दावच्छिन्नस्य देवदत्तादिपरिस्पन्दस्य ग्रहणमुपपद्यते । यथा दण्डीति यष्टिदण्डावच्छिन्नं पुरुषं प्रतीत्य तदन्यथानुपपत्त्या पश्चाद्दण्डपुरुषयोः संयोगभेदो ऽवगम्यते न तु संबन्धग्रहणपुरःसरं दण्डिविज्ञानम् एवं परत्वापरत्वे अपि कालपिण्डसंयोगनिबन्धने गृहीत्वा कालो ऽनुमीयते न तु कालग्रहणपुरःसरं तद्ग्रहणं तत्सिद्धमहत्तया कालो ऽप्रत्यक्षः परत्वापरत्वाद्यनुमेयश्चेति । तस्मात्सुष्ठूक्तं परादिप्रत्ययानां चेति । कार्यकारणविशेषापेक्ष इति । कार्यस्य परापरादेः प्रत्ययस्य च यः कारणविशेषो बहुतराल्पतरातीततपनपरिस्पन्दावच्छिन्नकालपिण्डसंयोगस्तदपेक्षः काले यतो ऽपि परापरादिप्रत्ययहेतुः परापरत्वलक्षणगुणोत्पादनद्वारेणेति वर्तते कारकव्यङ्ग्यः कालः तस्य नित्यत्वतया व्यक्तिसाधनत्वोपपत्तेः । न तु क्रियाव्यङ्ग्यः तस्याः साध्यतया अविद्यमानत्वाद्व्यक्तिं प्रति हेतुभावाभावात् । तथा चातीतानागतभावदर्शनाद्वर्तमाना-

---

* कारणमिति ३ पु० पाठः ।

भावेन न त्रैकाल्यविषयमनुमानं तयोश्च पितापुत्रवत्परत्वापरत्ववद् ह्रस्वदीर्घवच्च परस्परापेक्षा सिद्धिरन्तरेणापि वर्तमानं कालमिति पूर्वपक्षः ॥

तयो–स्यात् (सू. ४०)॥ नातीतादिरूपता कालस्य कारकव्यङ्ग्या तयोस्तादवस्थ्यात् । अपि तु क्रियाव्यङ्ग्या तां चाङ्गीकृत्य प्रवर्तमानानामतीतानागतवर्तमानानां प्रतिपद्यते नान्यथा । यदा खल्वयं पुरुषः फलं प्रवर्तमानपतनक्रियाविशिष्टं प्रतिपद्यते तदा व्यपदिशति पतति फलमिति । तन्मूले चास्यातीतानागतत्वे अपतत् फलं पतिष्यतीति । न च वर्तमानपतनमसिद्धं येन न कालं व्यञ्ज्यात् (तद्द्वयोस्तादवस्थ्यात् अपि तु क्रियाव्यङ्ग्यता) तदसत्त्वे कस्येदं कार्यं गुरुत्वं कस्य च फलं कारकं कस्य च फलभूमिसंयोगः कार्यः । न च परत्वापरत्वादीनामपि सिद्धिः परस्परापेक्षा । किं तर्हि सन्निकृष्टबुद्ध्यपेक्षमपरत्वं विप्रकृष्टबुद्ध्यपेक्षं परत्वं पूर्वस्यावच्छिन्नता च संयुक्तसंयोगानां सन्निकर्षः । परस्यावच्छिन्नता च विप्रकर्षः एवं ह्रस्वत्वदीर्घत्वे अपि परिमाणभेदौ न परस्परापेक्षौ पितापुत्रौ च प्रमाणप्रमेयव्याख्यया व्याख्यातौ । तस्मादतीतानागतयोर्वर्तमानापेक्षत्वाद्वर्तमानस्य च तदपेक्षत्वादस्ति त्रैकाल्यमिति सिद्धान्तः । भाष्यम् अथापीति । कस्मादतीतानागतावितरेतरापेक्षौ न भवतः कृतं वर्तमानेनेति शङ्कां सूचयति । तन्निराकरणाय सूत्रम् ॥

नाती–द्धिः (सू. ४१)॥ परस्परापेक्षसिद्धेर्हि वर्तमानाभावः सेव तु नास्तीति सूत्रार्थः । कया युक्त्येति प्रश्नः । उत्तरं केन कल्पेन प्रकारेणातीतः तदनेन वर्तमानाभावे ऽतीतस्वरूपाक्षेपः कृतः । ह्रस्वदीर्घत्वादीनां परस्परापेक्षसिद्धित्वमङ्गीकृत्याह । तत्रोपपद्यते विशेषहेत्वभावादिति । परमार्थतस्तु न चेतरेतरापेक्षा ह्रस्वदीर्घत्वादीनामपि सिद्धिरिति । स्वकीयां युक्तिं
। १५ वार्तिककार आह । न च वर्तमानकालानभ्युपगमे पतत इतीति । वक्ष्यमाणसूत्रावतारपरं भाष्यम् । अर्थसद्भावव्यङ्ग्यश्चायमिति । अस्यार्थः । न केवलं पतनादिक्रियाव्यङ्ग्यो वर्तमानः कालः । अपि त्वर्थसद्भावो ऽर्थस्य सत्ता ऽस्तिक्रियेति यावत् । तया व्यङ्ग्यः कालः, यदुक्तं भवति पत-

( ) एतन्मध्यस्थः पाठो नास्ति ३ पु ।

नाद्यः क्रियाः वर्तमानेऽप्यपयान्त्युपयन्ति च अस्तिक्रिया तु सर्ववर्तमान-
व्यापिनी तदेवमस्तिक्रियाविशिष्टस्य वर्तमानस्याभावे सर्वग्रहणं प्रत्यक्षानुप-
पत्तेः न चाविद्यमानं तस्य विषयत्वमस्तीति । न चायं वर्तमानाभाववादी
विद्यमानं सत् किं चिदनुजानाति । अथ वार्त्तिककारः पृच्छति । कथं पुन- २५६
रिति । न हि सर्वं प्रत्यक्षं वर्तमानविषयमतीतानागतयोरपि योगिप्रत्यक्ष-
स्यादिति भावः । उत्तरं यस्मादिति । नातीतानागतविषयतया प्रत्यक्षानु-
पपत्तिं ब्रूमः अपि त्वतीतानागताधारतयेत्यर्थः । भाष्यमपि वर्तमानाभावे
प्रत्यक्षाद्विनिमित्तसन्निकर्षः अस्मदादिप्रत्यक्षविषयो विद्यमानो घटादिः प्रत्यक्ष
प्रमाणमनाधारं सत्सर्वं नोपपद्यत इति द्रष्टव्यम् । अथ भाष्यमुभयथा
वर्तमानो गृह्यत इति । तदेतदर्थं व्याचष्टे वार्त्तिककारः । उपपन्नश्च सन्
द्वेधा भिद्यत इति । क्व चित् क्रियामात्रव्यङ्ग्यः यथा ऽस्तीति । क्व चित्
क्रियासन्तानव्यङ्ग्यः । पचति छिनत्तीति । अत्र हि पूर्वापरीभावः प्रतीयते
न च प्रतिक्षणमपवर्गवतः कर्मणः एकस्य पाकस्य वा छेदनस्य वा पूर्वाप-
रीभाव इति । कर्मसन्तानस्त्वस्त्येव: सो ऽपि चेदेकमुपसर्गाहकमन्तरेण न
भवत्यत उक्तं भाष्यकृता एकार्था क्रिया संतान इति । एकप्रयोजनाव-
च्छिन्नेत्यर्थः । अथ वाधिश्रयणादयो भवन्तु पच्यर्थाः यथा ऽऽह महाभाष्यकारः
तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा यत्तं तत्सर्वं पच्यर्थ इति । कृपादिपरा-
वृत्तिमात्रार्थस्य चास्य धर्मेराख्यातार्थः सर्वो ऽयमध्येषणादिर्भवतु भावना-
भिधानः नोभयथापि का चिदस्ति दर्शनक्षतिः अनागताद्यवच्छिन्नति
नानारम्भ इति । अनारम्भो ऽननुष्ठानं न विवक्षितं यथा पक्ष्यतीत्यत्रे-
त्यर्थः । अतीताद् व्यवच्छिन्नत्ति । नोपरमो विवक्षित इति । यथा ऽपा-
क्षीदित्यत्रेत्यर्थः । संतानारम्भविवक्षायामिति । आरम्भो ऽत्र चिकीर्षा
ऽभिधीयत इति न विरोधः । तदेव वर्तमानं क्रियाव्याप्त्युपलक्षितं तत्सम्बन्ध-
व्यङ्ग्या कारकस्य वर्तमानतामाह । यच्चेदं ध्रियमाणमिति । न तत्क्रिय-
माण वर्तमानक्रियासम्बन्धेन वर्तमानं न [illegible] स्वरूपत इत्यर्थः । तस्य च
कारकस्य वर्तमानक्रियासंबन्धमतीतानागतानपेक्षमपेक्ष्यातीतानागतत्वे क्रि-
यायाः कारकस्यापि व्यक्तिः तद्व्याप्यव्यक्तिः । तद्धेतुकं च द्वैविध्यमिति प्रति-
पादनपरं सूत्रमवतारयति । तस्मिन् क्रियमाणे ॥ २५७

कृत-णम् (सू. ४३)॥ भाष्यम् । आरब्धाभीष्टफलोत्पादकयोग्यतया क्रियासन्तानः पचतीति वर्त्तमानः । तत्रेति । क्रियासन्तानो न [illegible] विद्यत इत्यथापि पूर्वापरीभावागमादतीतानागताभ्यां संपृक्त एवेत्यत आह वार्त्तिककारः अत्र हि केवल इति । शब्दमात्रास्यात्संपर्को न वास्तवो वास्तव तु वर्त्तमानत्वमत एवाह । केवलः शुद्ध इति । पर्यायाभिधानमात्यन्तिकं संपर्काभावं दर्शयति । यदि क्व चिन्मुख्यं वर्त्तमानत्वं नाभ्युपेयते ततस्तत्पूर्वको भाक्तो ऽपि वर्त्तमानप्रयोगो ऽपि न स्यादित्यत आह । अन्यश्च लोक इति ॥

अत्य-द्धिः (सू. ४४)॥ यथा गौरेवं गवय इत्यतिदेशवाक्यार्थस्मृतिसहकारि सारूप्यदर्शनं वाच्यस्य गवयो ऽयमिति संज्ञासंज्ञिसम्बन्धस्य बोधमुपमानं तद्वेह नोपपद्यते विकल्पानुपपत्तेः । किं यथा गौरेवं गवय इति यथा ऽत्यन्तसाधर्म्यं विवक्षितं तथा सति गवान्तरमेव गवयः स्यात् । तदिदमाह भाष्यकारः । न चैवं भवति यथा गौरेवं गौरिति । चो यस्मादर्थे । तस्माद्यथा गौरेवं गवय इति वाक्यस्यार्थो भवति यथा गौरेवं गौरिति । यथा प्रायसाधर्म्यादपि गवयोपमानं न सिध्यति । महिषस्यापि गवा प्रायसाधर्म्यस्य विद्यमानत्वेन तस्यापि गवयाभिधानप्रसङ्गात् । तदिदमाह न हि भवति यथा ऽनड्वानेवं महिष इतीति । यथा ऽनड्वानेवं गवय इत्यस्य वाक्यस्यार्थो यथानड्वानेवं महिष इति यस्मान्न भवति । एकदेशसामर्थ्यादुपमानं न भवति । एकदेशोपमानस्येवानुपपत्तेरतिप्रसङ्गात् । तदिदमाह न हि सर्वेण सर्वमुपमीयते तथा सति सुमेरोरपि सर्षपेणोपमानप्रसङ्गात् ।

प्रसि-सिः (सू. ४५)॥ प्रकरणाद्यपेक्षं हि वाक्यं स्वार्थं प्रतिपादयति न केवलम् । तद्वशाच्च क्व चिदत्यन्तसाधर्म्यं प्रतीयते [illegible] चिद्भूयः साधर्म्यं क्व चिदेकदेशसाधर्म्यं तदिह प्रतीतमहिषादिकं पुरुषं प्रति यथा गौरेवं गवय इति वाक्यमुच्चार्यते तदा महिषादिपरिहाराय भूयः साधर्म्यं विवक्षितमित्यवगत वाक्यार्थं स्मरन् महिषादिषु वने गोसाधर्म्यं पश्यन्नपि न गवयसंज्ञां निवेशयति । अपि [illegible] साधर्म्यवति गवयपिण्डे तां निवेशयति । यस्त्वप्रतीतमहिषादिस्तं प्रत्येतद्वाक्यमुपमानं न भवत्येवेति परमार्थः । यथा च प्रकरणादिवशादत्यन्तप्रायैकदेशसाधर्म्यमाश्रित्यातिदेशवाक्यानि प्रवर्त्तन्ते तथा चोक्तं वार्त्तिककृता । न सा-

धर्म्यस्येत्यादि । भाष्यं नियमं निषेधति न साधर्म्यस्य कृत्स्नभावमेव वा ऽल्पभावमेव वा आश्रित्यातिदेशवाक्यं प्रवर्तते । किं तर्हि प्रसिद्धसाधर्म्याद्धेतोः साध्यसाधनभावमाश्रित्योद्दिश्येति । एतदुक्तं भवति । न नियमः किं तु क्व चित्कं चित्साधर्म्यमाश्रित्यातिदेशवाक्यं प्रवर्तते तच्च प्रकरणाद्युन्नेयमिति । अनभ्युपगमादिति च वार्तिकं नियमाभिप्रायमेव । तत्क्रिययैव तत्क्रिया- २५९ न्तरमित्यर्थः ॥

प्रत्य-क्षेः (सू. ४६) ॥ यथा गौरेवं गवय इति हि वाक्यं प्रत्यक्षेण गवा गवयप्रत्यक्षं प्रतिपादयति । न खलु श्रुतवाक्यो ऽपि यदा प्रत्यक्षेण गवयं पश्यति तदा वाक्यार्थाधिगमादधिकं किं चित्प्रतिपद्यते । संज्ञासंज्ञिसंबन्धो ऽप्यनेन वाक्यादेवावगतः । तस्मात्प्रत्यक्षेण गवा प्रत्यक्षस्य गवयस्य गवयसंज्ञाविशिष्टस्य प्रतीतिरुपमानस्यानुमानतेति पूर्वः पक्षः । सिद्धान्तस्तु ॥

नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः (सू. ४७) ॥ गवयत्वं हि संज्ञि न च तद्वाक्या गौरेवं गवय इति वाक्यात्प्रतीयते । अपि तु कस्य चिद्गवा सादृश्यं न च वाक्यगतो गवयशब्दस्तस्य वाचकः । तथा तदानीमगृहीतसंगतित्वात् । न च सादृश्यं संज्ञि तस्मात्प्रत्यक्ष एव गवये गवयत्वस्य प्रत्यक्षत्वात्संज्ञासंज्ञिसंबन्धपरिच्छेदः प्रमाणार्थः । उपपादितं चैतदुपमानलक्षणे । तस्मादप्रत्यक्षो गवयः प्रत्यक्षेण गवा प्रतीयत इति सिद्धमित्यर्थः । पूर्वपक्षवाद्याह । परार्थमुपमानमिति चेन्मन्यसे सिद्धान्तवादिन् तन्नास्ति । कुतः स्वयमध्यवसायात् । यदि हि परार्थं स्याद्यथा गौरेवं गवय इति वाक्यं यदि परस्यैवाध्यवसायं जनयेत् यावतोच्चारयितुरप्यध्यवसायं जनयति तस्मात्स्वार्थमपीत्यर्थः । एतदेव दर्शयति भाष्यकारः । भवति भोः स्वयमप्युच्चारयितुर्वाक्यादध्यवसाय इति । सिद्धान्तवाद्याह । नाध्यवसाय उच्चारयितुः प्रतिषिध्यते उपमानम् उच्चारयितारं प्रति न भवति । कुत इत्यत आह प्रसिद्धसाधर्म्यादिति । वार्तिकं [illegible] परार्थत्वेनानुमानादुपमानभेदमाह परार्थत्वाच्चेति । ननु प्रत्यक्षं सादृश्यप्रत्यक्षमुपमानं न चैतत्परार्थमित्यत आह न हि यथार्थेति । अस्तु तर्हि वाक्यमेवेत्यत आह न ह्यागमेति । भिन्नयोरप्यनुमानो- २६० । पमानयोरेतावन्मात्रेण साध्यमित्युपसंहारव्याजेनाह । तस्माद्यथेति ।

र्थान्तरोद्दिष्टमितरत् । अत्र हि सूत्रकारेण प्रथममनुमानान्तर्गतिः परीक्षिता । न चापरीक्षितप्रमाणभावस्य सा युक्तेति वार्त्तिककारः प्रथममस्य प्रमाण
१९ भावमेव परीक्षते । तस्याक्षेपो न शब्दः प्रमाणमिति । यस्मिन्सति प्रमा भवत्येव न च भवति तत् प्रमाणं साधकतमस्य करणत्वात् । सत्यपि तु शब्दे प्रमा न भवतीति तस्य साधकत्वं विघटयति विषयाभावा- च्चेति । प्रामाण्यं हि विषयवत्तया व्याप्तं सा शब्दान्निवर्त्तमाना प्रामाण्यमपि निवर्त्तयति वृक्षतेव निवर्त्तमाना स्वव्याप्यं शिंशपात्वम् । द्विविधश्च विषयः प्रत्यक्षः परोक्षश्च । तत्र पूर्वः प्रत्यक्षस्य प्रमाणस्य विषयः । अप्रत्यक्षस्त्वा- विनाभूताल्लिङ्गादवगन्तव्यः । तदनपेक्षत्वे प्रत्यक्षान्याविशेषात्सर्वं सर्वस्मान्न- म्येत । तथा च सर्वः परोक्षार्थप्रत्ययो ऽनुमानव्याप्तः । न च प्रत्यक्षपरो- क्षाभ्यामन्यो राशिरस्ति तस्माद्विषयाभावादपि न शब्दप्रामाण्यमिति । यता- र्थस्त्वप्रमितेरिति । तत्र असिद्धत्वादिति । न शब्दमात्रं प्रमाणमपि तु गृहीतः स्मर्य्यमाणसम्बन्धश्च । न चेदृशे शब्दे सति प्रमा न भवति । यादृशे तु सति प्रमा न भवति नासौ प्रमाणमित्यर्थः । तन्महत्प्रत्ययक- र्तृत्वादिति । महत्त्वपरिमाणं हि महतो विशेषणं तत्र सति विशेष्ये महति प्रमाणम् । तदेव सिद्धप्रमाणभावस्य शब्दस्यानुमानादभेदं परीक्ष- माणः पूर्वपक्षयति । अनुमानं शब्द इति ।

शब्दो-त्वात् (सू. ४९) ॥ यत् ज्ञानं प्रत्यक्षेणानुपलभ्यमानार्थवि- षयं प्रत्यक्षस्य पश्चादुपजायते तदनुमानं यथाग्निमद्धूमज्ञानं तथा च शब्दज्ञानं तस्मादनुमानमित्यर्थः । वह्निप्रभृतिकस्य प्रकारभेदरहितस्य प्रत्यक्षानुमाने तु परोक्षापरोक्षग्राहितया प्रकारभेदवती इत्यर्थः । सिद्धान्तस्वरूपमुपक्रमते
१० यत्तावदिति । एतेन सव्यभिचारेण ते ऽपि हि त्रिकालविषया इति । अन्वयव्यतिरेकोपपत्तिमात्रं प्रत्यक्षे ऽप्यस्ति । प्रत्यायनाङ्गान्वयव्यतिरे- कज्ञानं तु अन्यादृशं शब्दे अन्यादृशं त्वनुमाने तद्धि पक्षधर्मतापेक्षमनुमाने शाब्दे तु तदनपेक्षमित्यत्र सूत्रं भवति ।

आप्तो पः (सू. ५२) ॥ यो ह्यत्यन्तादृष्टपूर्वः स्वर्गापूर्वदेवतादिः स वाक्यार्थरूपः । तथा हि यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभि- लाषोपनीतं च तत्सुखं स्वःपदास्पदमिति स्वर्गो वाक्यार्थः । एवमपूर्वमपि

सत्यन्तु स्वर्गनरकादिहेतुः पुरुषविशेषगुणः कालान्तरस्थायी स्वकार्यविरो-
धीति वाक्यार्थ एव । एवं देवता ऽपि । सा ऽपि हि सूक्तहविर्भागिनी वज्र-
हस्ताद्युपेतदेहादिमती वाक्यार्थ एव नैवेष शब्दादृते अस्मदादिप्रत्यक्षादि-
गोचरः । न चागृहीतं लिङ्गमस्मिन्नर्थ नेतुमर्हति न चागृहीते सम्बन्धिनि
शक्यग्रहः संबन्धः । एवं [illegible] यद्यपि पदार्थसङ्गतिसंवेदनमपेक्षते यद्यपि
पदार्थ एव पदार्थान्तरविशिष्टो वाक्यार्थः ये ऽपि वाक्यार्थे संवादो पदा-
र्थस्मरणद्वारेण प्रवर्तमानं सङ्गतिग्रहानपेक्षमेव स्वर्गरूपवाक्यार्थं कुर्वन्ति
स्वलोकसिद्धं सुखजातीयमुद्दिश्य लोके सिद्धैरेव दुःखासंभेदविशिष्टं स्वर्ग-
पदवाच्यं प्रतिपादयन्ति नापदार्थं वाक्यार्थं कुर्वन्ति वाक्यार्थं च पदवचनं
स्वर्ग इति यथा श्रोत्रियच्छन्दो ऽधीतवन्ति । यथा चक्षुरादयो रूपादि-
ष्वगृहीतसङ्गतयः प्रवर्तन्ते एवं पदार्थसङ्गतिग्रहापेक्षाण्यपि पदानि
वाक्यार्थबोधने सङ्गतिग्रहमपेक्षन्ते कार्यव्यङ्ग्यत्वात्प्रमाणभावस्य सङ्गतिग्रहा-
पेक्षेभ्यो ऽपि च पदभेदेभ्यो वाक्यार्थावबोधकार्यदर्शनात् । तस्मान्न पदं
तदर्थो वा वाक्यार्थावबोधे लिङ्गं तत्र संबन्धग्रहानपेक्षत्वाद् रूपादिबोधे
चक्षुरादिवत् । स्यादेतत् । मा भूत्प्रत्यक्षतोदृष्टमनुमानं वाक्यार्थे सामा-
न्यतोदृष्टं भविष्यति । यद्यपि च वाक्यार्थे साध्ये पदानामपक्षधर्मत्वं
यद्यपि च पदस्मारिताः पदार्था व्यभिचारिणः तथा ऽप्याकाङ्क्षायोग्य-
तासत्तिविशेषणाः पदार्थाः संसर्गे लिङ्गं भविष्यन्ति । तथा हि यत्र दुःखे-
नेत्यादिभिः पदैः स्मारिताः पदार्थाः गुणप्रधानभावेनावस्थिताः संसर्गवन्तः
आकाङ्क्षायोग्यतासत्तिमत्त्वे सति पदैः स्मारितत्वाद् गामभ्याजेति पदस्मारि-
तपदार्थवत् । संसर्गस्य च संसृज्यमाना एव विशेषो न पुनराज्ञानतो ऽस्ति
कश्चिद्विशेषः । संसृज्यमानाश्च पदैरेव स्मारिता इति संसर्गविशेषप्रति-
लम्भः । स एव च वाक्यार्थ इति लिङ्गानुमानिको वाक्यार्थ इति । गाम-
भ्याजेत्यत्र पदार्थानां संसर्गवत्त्वं च वाक्यश्रवणसमनन्तरप्रयोज्यवृद्धप्रवृत्त्यनु-
मितपदार्थसंसर्गप्रत्ययादवगतम् । तदेतदचतुरस्रम् । पदानामेव पदार्थस्म-
रणावान्तरव्यापाराणां वाक्यार्थप्रमां प्रति करणतया प्रमाणत्वात् । तेषां
चापक्षधर्मतया लिङ्गत्वानुपपत्तेः । यदि तु पदानि पदार्थमात्रपर्यवसितवृत्तीनि
न वाक्यार्थप्रत्ययपराणि स्युः ततो न पदार्थानामाकाङ्क्षा ऽस्तीति वाक्यार्थ-

प्रत्ययो न भवेत् । न खल्वाकाङ्क्षां विना सन्निधियोग्यताभ्यामेव पदार्थौ सम्बध्यन्ते यथा ऽयमेति पुत्रो राज्ञः पुरुषो ऽपसार्यतामित्यत्र पुत्रसम्बन्धेन निराकाङ्क्षो राजा न पुरुषेण सबध्यते । न च पदाना वाक्यार्थप्रत्ययपरत्वम न्तरेण तत्स्मारिताना पदार्थानामाकाङ्क्षास्ति । न हि यद्येन विना न भवति तत्तदाकाङ्क्षति येन कारक क्रियामपेक्षेत द्रव्य वा गुण तथा सति पटो भव तीति वाक्य न निराकाङ्क्ष स्यात् । पटस्य द्रव्यस्य गुणाकाङ्क्षित्वात् । तस्मा द्रक्त पटो भवतीत्यस्यैकदेश पटो भवतीति साकाङ्क्षत्वादप्रमाणमेव पटो भवतीत्यपि वाक्य साकाङ्क्ष स्यात् । न चैवमस्ति पटो भवतीति हि वाक्य य क चिद् गुण गृहीत्वा ऽनाकाङ्क्ष प्रमाणमेव यदा पुना रक्त पटो भव तीत्यस्यैकदेशो य क चिद् गुणमाक्षिप्य निराकाङ्क्ष यत्र विभागे सति निरा काङ्क्षत्वेन वाक्यभेद स्यात् । रक्त इत्यपि च वाक्य य क चिद् गुणिनं क्रिया च का चिदाक्षिप्य निर्वृणुयात् । न च विशेषदर्शने सति नाक्षेप इति युक्तम् । एकवाक्यतायां सत्या विशेषदर्शने अनाक्षेप । अनाक्षेपे च सत्येक वाक्यतेत्यन्योन्याश्रयापत्ते । तस्माद्वाक्यार्थप्रतिपादनपरत्वमभिव्याहृतपद कदम्बस्मारितत्वेनापर्यवसानमेव पदार्थानामाकाङ्क्षेति युक्तमुत्पश्याम । तथा च पटो भवतीत्येतावन्मात्र निराकाङ्क्ष य क चिद् गुणमाक्षिप्य निर्वृणोति रक्त पटो भवतीत्यत्र तु रक्तपदस्यापि समभिव्याहारात् पटादिसंस- र्गपरत्वमिति पटादिसंसर्गमन्तरेण रक्तत्वमपर्यवस्यद् पटादयश्च रक्तत्वसं सर्गं विना ऽपर्यवस्यन्त परस्परमन्था भवन्तीति सिद्ध्यत्येकवाक्यता । तस्मात्पदान्येव पदार्थस्मरणद्वारेण तत्संसर्गे लक्षयन्ति वाक्यार्थे प्रमाणं तेषा चापक्षधर्मतया न लिङ्गत्वम् । स्यादेतत् । अत्र पदकदम्बकविशेष स्मारितपदार्थसंसर्गवान् आकाङ्क्षादिमत्त्वे सति पदकदम्बत्वाद् गामभ्या जेतिपदावलीवदिति नापक्षधर्मता मैवम् । अन्योन्याश्रयापत्ते । कर्मकारकं हि पटादन्यद्वस्तुत किं चिद् ज्ञानलक्षणाय फलाय कल्पते । यथा ऽग्निमता धूमस्य पर्वतस्य वा ऽग्निसंयोग न त्वग्निज्ञानजनकत्य तद्वत्ता । फल व्यङ्ग्य हि तज्ज्ञानुपजाते फले कल्पते । तथा च फलोपजनने सत्यग्निमता तद्वत्तायां तु कर्मणि फलोपजननमित्यन्योन्याश्रयापत्ति । न हि फलकर्म- णोरेवम् । न हि वृक्ष छिद्रा भवति । तदिह संसर्गवत्त्वं पदाना

तज्ज्ञानजनकत्वं नानुमानसाध्यं भवितुमर्हति । न ह्यग्निज्ञानजनकत्वं धूमस्यानुमानसाध्यमित्युक्तम् । स्मृतिजनकत्वमप्येषां वाक्यार्थप्रत्यायनाय कल्पितं न संबन्धान्तरं व्यनक्तीति । तत्सिद्धमेतन्न पदानि वाक्यार्थबोधे लिङ्गमपक्षधर्मत्वान्मनोवदिति । अपि च लौकिका यथार्थैः परीक्षकैरनुगम्यते न तु स्वकृतलक्षणानुरोधेनालौकिकमास्थीयते । न च क्लेशेन कया चित्पक्षाद्या पक्षधर्मता कल्पयित्वा लोकः पदेभ्यो वाक्यार्थमवगच्छति अपि तु स्वतन्त्रेभ्य एव तेभ्य इति सिद्धः शब्दस्य प्रमाणस्यानुमानाद्भेदः । आप्तोक्तत्वं तु स्वर्गादिप्रतिपादकस्यागमस्य प्रामाण्ये लिङ्गमेव न चैतावता तदर्थ आनुमानिको भवति । न हि प्रवृत्तिसामर्थ्यानुमितप्रामाण्यस्य प्रत्यक्षस्य विषयो भवत्यानुमानिकः । अर्थविषयं हि प्रमाणं प्रामाण्यविषये च प्रवृत्तिसामर्थ्याप्तोक्तत्वे इति । एवं व्यवस्थिते अभ्युपगमवादतया भाष्यवार्तिककाराभ्यामाप्तोक्तत्वाभयत्वानाश्रयत्वे शब्दानुमानभेदहेतुतयोपन्यस्ते इति मन्तव्यम् । एतेन प्रवृत्तिभेदकथनेनाद्विप्रवृत्तिकत्वं व्याख्यातम् । निराकाङ्क्षतया संबन्धाप्रतिपत्तेरनुमानं शब्द इति यदुक्तं पूर्वपक्षिणा तदनुभाष्य दूषयति । यत्पुनरेत- २६३ ।
दिति । अस्येदमिति षष्ठीविशिष्टस्येति भाष्यं तस्य व्याख्यानं वाच्यवाचकभाव इति । स्वाभाविको हि शब्दार्थयोः संबन्धस्तथा स्यात् तादात्म्यलक्षणो वा प्रत्याय्यप्रत्यायकभावो वा प्राप्तिलक्षणो वा तत्राव्यपदेश्यपदेन प्रत्यक्षलक्षणस्थेन तादात्म्यमपाकृतम् । शब्दार्थयोः प्राप्तिनिराकरणहेतुना चोपरिष्टादौत्पत्तिकः प्रत्याय्यप्रत्यायकभावो निराकरिष्यते । तेन प्राप्तिं निराकरोति भाष्यकारः प्राप्तिलक्षणस्त्विति । एकेन्द्रियग्राह्ययो ऽप्राप्तिः प्रत्यक्षा यथा ऽङ्गुल्योः न तु शब्दार्थयोरेकेन्द्रियग्राह्यता तस्मात्तानयोः प्राप्तिः प्रत्यक्षगम्या वायुवनस्पत्योरिवेत्यर्थः । ननु शब्दस्यार्थः समानेन्द्रियग्राह्य एव तत्कथं नेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतीतो ऽर्थ इत्यत आह । अस्ति चातीन्द्रियविषयभूतो ऽपीति । शब्दग्राहकेन्द्रियातिपतित इन्द्रियभावमतिपतितश्चातीन्द्रियः स च विषयभूतश्चेति कर्मधारयः । तदेतदस्माच्छब्दस्येति वार्तिकेन व्याख्यातम् । प्राप्तिलक्षणे चेत्यादि भाष्यं व्याचष्टे नानुमानेनापीति । उपपद्यते प्राप्नोति ,, । १२
गच्छतीति यावत् । आगच्छन्नुपलभ्येत मोदकादिः न चोपलभ्यते तस्मा-

नागच्छति शब्ददेशमर्थ । ततस्तस्मिन्पक्षे शब्देन लोकव्यवहार उच्छि-
१९ द्यते । अथ शब्द इति । न तावद् गुणस्य शब्दस्य गतिरुपपद्यते तस्मा-
त्सन्तानवृत्त्या शब्दो ऽर्थदेशमागच्छतीति वाच्य तथा च नित्यत्वव्याहति-
रित्यर्थ । शङ्कते । अथ नागच्छतीति । भवति विद्यत इत्यर्थ । अभूत्वा
भवन भवत्यर्थ इति मत्वा निराकरोति । नित्यश्च भवति चेतीति ।
शङ्कितस्याभिप्रायमाह । अथ नागच्छतीति । निराकरोति न सर्वार्थैरिति ।
न हि समानदेशा समानेन्द्रियग्राह्या प्रतिनियतव्यञ्जकव्यङ्ग्या दृष्टा इत्य-
भिप्राय । सामान्यस्याश्रयोपलब्धिर्व्यक्तिहेतु न पुन शब्दस्याश्रयोपलब्धि-
रस्ति यत शब्दो व्यज्येत । प्रत्युत शब्देनैवाश्रयो व्यञ्जनीय स्यात् ।
तथा चार्थानित शब्दस्तात्वादिविरामे सर्वोऽप्राप्ति व्यक्त इत्युक्तदोषापत्ति-
न च शब्दस्यार्थे प्रवृत्तिरनुभवगोचर इत्याह । न च वाच्ये वृत्तिराग-
मात्प्रतिपत्स्यत इति । निहताद्विरागम ठनार स एवायमिति । निहता-
दीनामर्थसंबन्धे सिद्धे प्रतिपादकत्व भवेत् । स यत्र तु विचार्यत इत्यर्थ ।
पूर्वपक्षवादाह शब्दार्थ त । सिद्धान्तवादाह । न सामयिकत्वादिति ।
अभिधानाभिधेयनियमनियोगा इति । अभिधानाभिधेयनियमो गोश-
ब्दस्य सास्नादिमानेवार्थ वृषभशब्दस्य केसरादिमानेवेति । तस्मिन्नियोगो
बोद्धव्य इति भगवत परमेश्वरस्य वचोदो सो ऽय समय इति वाचनार्थ ।
तस्मिन्नुपयुक्ते ज्ञाने शब्दार्थव्यवस्था भवति । संबन्धवादिनो ऽपि न
वर्जनीय इति । ये ऽपि मीमांसका वैयाकरणा वा स्वाभाविक शब्दार्थयो
संबन्धमास्थिषत तेषामपि नैव सत्तामात्रेण गमका गमयितु शक्ता अनु
विधानि चायमस्य वाचक इति वा ऽस्मादय बोद्धव्य इति वा संकेत एवो-
पाय । वृद्धव्यवहारो ऽपि गवादिशब्दाना देवदत्तादिशब्दवत्संकेतपूर्व एव ।
तद्वरमस्तु संकेत एव कृतमत्र स्वाभाविकेन संबन्धेन सन्ध्यावादेव प्रयोगप्रति-
पत्तिव्यवहारोपपत्तेरित्यर्थ । नन्वय समय केषा चित् पदानामस्ति
स्वाभाविके ऽर्थे संबन्धे न कर्तु शक्य निर्दिश्य ह्यर्थं ब्रूयादयमस्माद्बोद्धव्य
इति । न च निर्देशो ऽस्ति स्वाभाविके संबन्धे केषा चिच्छब्दाना विद्य-
ति । संकेताधीने तु वाचकत्वे सर्वेषामकृतसमयत्वात् किं केन निर्दि-
श्येत । तस्मात्संकेतकरणमेव स्वाभाविकसंबन्धं प्रतिपादयति शब्दानामि-

त्यत आह । प्रयुज्यमानग्रहणाच्चेति । परमेश्वरेण हि यः सृष्ट्यादौ गवादिशब्दानामर्थे सङ्केतः कृतः सोऽधुना वृद्धव्यवहारे प्रयुज्यमानानां शब्दानामविदितसङ्गतिभिरपि बालैः शक्यो ग्रहीतुम् । तथा हि वृद्धवचनानन्तरं तच्छ्रावियो वृद्धान्तरस्य प्रवृत्तिनिवृत्तिभयशोकहर्षादिप्रतिपत्तेस्तद्धेतुं प्रत्ययमनुमिमीते बालः । तस्य च सत्स्वप्यन्येष्वर्थेषु भूतस्य अभूतस्य वा श्रवणसमनन्तरं च भवतो वाक्यश्रवणहेतुतामवगच्छति तदवयवानां च पदानामावापोद्वापभेदेन तदर्थप्रत्ययोपजननापायदर्शनात्तेषु तेष्वर्थेषु तेषां तेषां पदानां वाचकत्वं कल्पयति । एवं पदावयवेषु प्रकृत्यादिष्वपि द्रष्टव्यम् । सोऽयं वृद्धव्यवहारः साम्प्रतिकानां सङ्केतग्रहोपायः स्वर्गादिभुवां च महर्षिदेवतादीनां परमेश्वरानुग्रहाद्धर्मज्ञानवैराग्यैश्वर्यातिशयसंपन्नानां परमेश्वरेण सुकर एव सङ्केतः कर्तुम् । तद्व्यवहाराच्चास्मदादीनामपि सुग्रहः सङ्केतः ( तद्व्यवहारपरम्परागतश्चास्मदादीनामपि ) सङ्केतग्रहो न सम्बन्धस्मृतिमपेक्षते । आद्यपरम्परात एव ततो निःशङ्कव्यवहारोपपत्तेः । अत एवाह भाष्यकारः लौकिकानामिति । स्यादेतत् । यदि शब्दानां साङ्केतिकः संबन्धो न स्वाभाविकः कुत तर्हि साध्वसाधुविभागपरेण व्याकरणेन स्वाभाविके हि यस्य वाचकत्वं स साधुरसाधुश्चेतरः सामयिकत्वे तु सर्व एव साधवो ऽसाधवो वेत्यत आह । समयपरिपालनार्थं वदतीति । पारमेश्वरसमयपरिपालनार्थमित्यर्थः । तथा च येषां पदानां येनार्थेन परमेश्वरेण कृतः समयः तानि तत्र साधूनि असाधूनीतरथेति विभागाय व्याकरणमर्थवदिति सिद्धम् । अर्थरूपस्तु यो लोपो ऽलुपः स नास्ति केवल पदैः प्रातिस्विकः सम्बन्धः कल्पित इत्यर्थः । तथा च स्वाभाविकसंबन्धाभावादनुमानाभेदाद्यभिन्नप्रमाणसिद्धार्थे स्वाभाविकसम्बन्धाभिधानमयुक्तमिति सिद्धम् । क्वचित्के स पुनः समयः कृत इति । यदि के चनापि शब्दाः प्रसिद्धसम्बन्धास्ततो २६६ ऽगत्यप्रतीतिः समय इति भावः । उत्तरं पदज्ञानात् । पदं ज्ञायते व्युत्पाद्यते अनेनेति व्युत्पत्त्या व्याकरणादित्यर्थः । ननु सर्वेषां शब्दानामविदितसङ्गतिः कथं व्याकरणादपि शब्दमात्रात्समयं प्रतिपद्यते इत्यत आह । लोकतश्चेति । वृद्धव्यवहारावधृतसमयो व्याकरणात्साध्वसाधुविभागं च प्रतिपद्यत इत्यर्थः ।

---

( ) एतन्मध्यस्थः पाठो २ पु नास्ति ।

तदेतद्विभजते **तदिदं शास्त्रमिति** । एवं तावद्दृष्टेनैव समयेनोभयसिद्धेन शब्दार्थव्यवस्थापनस्योपपत्तेर्नात्यन्तापरिदृश्यमानस्वाभाविकसंबन्धकल्पना युक्तेत्युक्तं सम्प्रत्यनुपपन्नो ऽप्ययं स्वाभाविकः संबन्ध इत्याह ।

१२ जाति-त् (सू० ५६) ॥ स्वाभाविको हि संबन्धः कस्य चिच्छब्दस्य केन चिदर्थेनास्ति न सर्वस्य सर्वेण । तथा सति शब्दार्थव्यवस्था न स्यात् । एवं च सति न आर्यम्लेच्छानां नियमः स्यात् । तथा हि यवशब्द आर्यैर्दीर्घशूके पदार्थे प्रयुज्यते ते हि यवशब्दाद्दीर्घशूकं पदार्थं प्रतिपद्यन्ते म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते ते हि ततः प्रियङ्गुं प्रतिपद्यन्ते । एवं त्रिवृच्छब्दमप्य.स्तोत्रीयानवके प्रयुञ्जते । आर्यास्तु लताविशेषे सोयमनियमो न स्यात्स्वाभाविके संबन्धे न हि स्वाभाविकसंबद्धं आलोको रूपेण सहस्रेणापि शिल्पिभीरसादिसंबद्धं शक्य. कर्तुम् । यतस्ततो रसादयो गम्येरन् । नापि तत्र संकेतेन स्वाभाविकः संबन्धो व्यज्यते । सदेव हि व्यज्यते नासत् । नो खलु यत्र घटो नास्ति तत्र तं प्रदीपः शक्तो व्यङ्क्तुम् । सो ऽयमनियमः सामयिकत्वे उपपद्यते पुरुषेच्छाधीनत्वात् । तस्याश्चानियमात् । **न तु स्वाभाविकत्व इति** । न च वाच्यं सर्वएव शब्दाः सर्वैरेवार्थैः स्वभावतः संबद्धाः संकेतेन तु नियम्यन्त इति प्रमाणाभावात् । जातिभेदेन चार्थभेदव्यवस्थस्य संकेतभेदादप्युपपत्तेरिति । नन्वार्यदेशवर्तिनां म्लेच्छानामार्यव्यवहारानिश्चितसंकेतानां नानियम इत्यत आह वार्त्तिककारः । **जातिविशेषशब्देनेति** ।

तद-भ्यः (सू० ५७) ॥ अनुमानान्तर्भावे कदा चिदर्थाविनाभावाद्वेदशब्दस्य प्रामाण्यं तद्बहिर्भावे तु सुलभमस्याप्रामाण्यमिति मत्वा ऽनुमानभेदाभिधानानन्तरमप्रामाण्यमाह पूर्वपक्षी तस्येत्यादिभाष्यं तद्वार्त्तिककारो व्याचष्टे । **तदित्यधिकृतशब्दाभिधानादिति** । शास्त्रे ह्यस्मिन् श्रेयसाधिगमपरे तन्त्रान्तरीयकतया वेदप्रामाण्यव्युत्पादनमधिकृतमित्यधिकृतः शब्दो वेद इत्यर्थः । स्यादेतत् । अनृतत्वमप्रामाण्यमिति पर्यायः तथा

४ च प्रतिज्ञार्थ एव हेतुरित्यत आह **अप्रामाण्यमर्थस्याप्रत्यायकत्वम्** । अर्थस्येत्यविपरीतस्येत्यर्थः । पुत्रकामेष्टिकारीर्यादयो हि ऐहिकफला नामुष्मिकफला ऐहिकत्वेनैव तत्फलस्य चेतनेन काम्यमानत्वात् तच्छरीरोपभोगयोग्य-

त्वाद्व विरुद्धार्थोपस्थापकत्वेन सहासम्भवे वाक्ययोर्वा पदयोर्वेति । अथ भाष्यकारोदितहोमादिविधिवाक्यानां निन्दाभिर्व्याघात इत्युक्तमधिकृत्यविवक्षया वार्तिककार आह अग्निहोत्रमिति । होमकालानामुदितादीनां निन्दया प्रतिषेधात् । ननु मध्याह्नापराह्णसायाह्ना भविष्यन्ति होमस्य काला इत्यत आह । न चान्य इति । तेषामपि सर्वेषामुदितकालत्वादित्यर्थः । यस्तूदयानन्तर एव काल उदितकाल इत्युच्यते । तथा चान्यो ऽस्ति काल इत्युक्ते व्याघाते न तुष्यति तं प्रत्यन्यथा व्याघातमाह । उदितानुदितेति । अग्निहोत्रं जुहोतीत्युत्पत्तिवाक्येन विहिते अग्निहोत्रनाम्नि होमे तदनुवादेनैकं वाक्यमुदितं कालं विधत्ते । अन्यथा ऽनुदितकालमपर च समयाध्युषितकाल नचैक एव होमस्तदा तदा यत्तः कर्तुम् । न च कालगुणानुरोधेन प्रधानहोमस्यावृत्तिरिति युक्तम् । न चोदितादिवाक्ये होमस्याभ्यासः श्रूयते । तस्मात्परस्परव्याघातादप्रामाण्यमेव वाक्यीय इति । अन्वेते ऽनृतत्वादयः सर्ववेदवाक्यव्यापिन इति भागासिद्धतया हेत्वाभासा इत्यत आह । दृष्टान्तत्वेनेति । अयमत्र प्रयोगः । पुत्रकामेष्टिहवनाभ्यासवाक्यानि अप्रमाणम् अनृतत्वादिभ्यः लौकिकवाक्यवदिति । एवं येषामपि वेदवाक्यानि अप्रमाणं वेदवाक्यत्वात् पुत्रकामेष्टिवाक्यवदिति । एवंदृष्टान्ते साध्यमुक्त्वा तेनैव हेतुना प्रसज्यप्रतिषेधसाध्यमाह अग्निहोत्रादिवाक्यानां चेति । तदन्यथालयं पुत्रकामेष्ट्यादि । एवं पूर्वपक्षमुक्त्वा सिद्धान्तमुपक्रममाणः प्रथम तावदनृतत्वं दूषयति ।

न क-त् (सू. ५८) ॥ फलादर्शनमन्यथा ऽप्युपपद्यमानं नानृतत्वं साधयति ततस्त्वासिद्धमनृतत्वं हेतुरित्यर्थः । स्यादेतत् । इष्टेरचोदितत्वादन्यथैव साधयति पुत्रकारणमिति किमस्याः कर्मकर्तृवैगुण्यं करिष्यतीत्यत आह । इष्टेः करणसाधनत्वेनेति । दृष्टसहकार्यदृष्टं कारणं न केवलं ततो दृष्टवैगुण्यादुपपन्नमभवन फलस्येत्यर्थः । अपेक्षणीयं कर्तारमाह । पितराविति । करणमाह इष्ट्येति । क्रियामाह संयुज्यमानाविति । इष्ट्याश्रयं तावदिति भाष्यम् । समीहा तदङ्गमिदादिकर्मानुष्ठानं तस्या भ्रेषो भ्रंशो ऽननुष्ठानमिति यावत् । अविद्वान्प्रयोक्तेति । विदुषो ह्यधिकारः सामर्थ्यात् । अत एव स्त्रीशूद्रादिरस्यासमर्थानामनधिकारः विद्वानपि यदि

हिंसाभिकर्मब्रह्महानिहेतु कर्म ब्रह्महत्यादि कृतवान् तत्कृतमपि कर्म फलाय न कल्पते कर्तृत्वे वैगुण्यादिति दर्शयति । कपूयेति । कपूय निन्दित कर्म आचरतीत्याचरण: पुरुष. हविरसंस्कृतमवृतमप्रोक्षितं वा उपहतं श्वमार्जारादिभि **मन्त्रा न्यूना:** क्रमविशेषेण **दक्षिणा दुरागता** द्रोण्यद्रूनोत्कोचादिदुष्टादुपायादागतेत्यर्थ: । अन्वाहार्यमिह दक्षिणा । सा सती न्यूना या दीयते यावत्या पुरुषो न तृप्यति । स च पुरुषाहारो जरत्वरत्वेनावाक्यतया निन्दित: मिथ्याप्रयोग. पुरुषायितादिर्मामपि योनिव्यापदो नानाविधा: पुत्रजन्मप्रतिबन्धहेतव. लोहितरेतसो बीजस्योपघात उपहतत्व यत: पुत्रजन्म न भवति । मिथ्याभिमन्थन यतो नाग्निर्जायते कर्मवैगुण्यकर्तृवै-

८ गुण्ये आह वार्त्तिककार: । **तयेष्टे: साधयितुरिति** । **मन्त्राणामसामर्थ्यादिति** । मन्त्रादिसाधनानां पुत्रकामेष्ट्यादीनां कर्मणामित्यर्थ. । ननु यदि निरपेक्षा नेष्टि: साधन तत्सहकार्यपेक्षमाणो विलम्बेन सम्यक् संप्रयुज्यमाने पुत्रस्य जनको कृतमच पुत्रकामेष्ट्या तत एव स्वेच्छादीनामपि पुत्रजन्मोपपत्ततदत्यन्त आह । **तत्सहकारित्वादिति** । नान्वयव्यतिरेकगम्यमिष्टे सहकारित्वमपि त्वागमगम्य स्वेच्छादीना पुत्रजन्म जन्मान्तरीयादृष्टवशादित्यागमप्रामाण्यादनुसरणीयम् । दृश्यमानकर्मकर्तृवैगुण्ये च फलानुत्पादो ऽदृष्टमपेक्षणीय सूचयति । तदनेन पुत्रकामेष्ट्यादीनामनियतफलत्वमपि सूचित भवति । तथा कर्मान्तरप्रतिबन्धेन कर्मकर्तृसाधनवैगुण्य ऽपि फलानुत्पाद: समर्थितो भवति । ऐहिकफलेषु तु कारीर्यादिषु साधनवैगुण्य परिहार: । **अनृतत्वादप्रमाणमिति चेदिति** । धर्मविशेषणत्वेनोपयुक्तानामपि परस्परविरुद्धाभिधान न दोषावहमिति भाव: । उत्तर **किमिदमिति** । तन्त्वर्थाप्रतिपादकस्य प्रतिज्ञा तद्देवानृतस्य च हेतुरिति

१२ प्रतिज्ञाहेत्वोरर्थाभेद इत्यत आह । **अनृतत्वं चेति** । यत्पुनरुक्तमुदिते होतव्यमित्यादीनामेव परस्परव्याघात इति तत्राह उभयथेति । त्रिषु कालविधिवरेषु वाक्येष्वेकैकेनैव वाक्येनोभयोरप्यर्थप्रतिषेधानभिधानान्नान्यया नाप्रामाण्यमित्यर्थ. । यद्यपि चैको होम' समुच्चयेन तदा न शक्य: कर्तुं तथा ऽपि विकल्पेन करिष्यते बहुलं हि विकल्पो लोके ऽप्युपलभ्यते । वस्तु हि व्यवस्थित ■ विकल्प्यते अनुष्ठाने त्वनागतोत्पादो विधि-

प्रतिषिद्धविकल्पानामविरोधः स्वरूपानिष्पत्तेरिति । वाक्यार्थो न कर्तव्य इति । वाक्यं तन्न कर्तव्यमित्यर्थः । कामतो वा प्रकल्प्येतेति । परस्पर- २७० । व्याहतार्थं प्रकल्प्येतेत्यर्थः । अभिहितत्वेऽपि । यदनेन वाक्येन स्वसामर्थ्येनाभिहितं तद्वा परीक्षकैरवधृत्यानूद्यते इदमनेन वाक्येनाभिहितमिति । निर्द्धारयति । अभिहिते न । विहितानुवादो वेति [illegible] चित्पाठः विहितो होमस्तस्यानुवादः कालविशेषविधानायेति । विहितानुवाद एव न्याय्यः कालविशेषविधानाय न तु कालान्तरनिषेधो ऽर्थः कल्प्यत इत्यर्थः । एकादश सामिधेन्य इत्यतो पठितासु तासां प्रथमोत्तमयोस्त्रिर्वचनं पञ्चदशत्वं मन्त्रस्य प्रयोजनवतः साधयत्सप्रयोजनमिति । तदेवं वेदाप्रामाण्यहेतूनुद्धृत्य प्रामाण्यसम्भवहेतुः सूत्रकारेण वक्तव्य इति पूर्वं यानि चकारः स्वत एव तावत्प्रामाण्यसंभवहेतूनाह । पुत्रकामेष्टीति । तत्र हेतुमवतारयति समस्तानीति ॥ २७१

**विधिर्विधायकः (सू. ६३)** ॥ तस्य व्याख्यानं यद्वाक्यमिति । चोदकं प्रवर्तकम् । यथ आरोग्यकामः पथ्यमश्नीयादित्याद्युपदेशश्रवणानन्तरं पथ्याशने प्रवर्तमानं वृद्धव्यवहारमुपलभ्य बालस्तस्य प्रवृत्तिहेतुं प्रत्ययमनुमिमीते अस्य प्रवृत्तिः प्रवर्तकप्रत्ययपूर्विका स्वतन्त्रप्रवृत्तित्वान्मत्प्रवृत्तिवत् चायमनुमाता व्युत्पित्सुः स्वात्मसिद्धमेव प्रवर्तकज्ञानमनुमिनोति नादृष्टपूर्वं न हि स्वात्मनि पूर्वसिद्धे प्रवृत्तिहेतौ दृष्टे सम्भवत्यदृष्टकल्पना न्याय्या । न चैष शब्दतद्व्यापारपुरुषाशयनिकषाधिप्रवर्तकमात्रापूर्वप्रत्ययवानात्मनि प्रवर्तकानवगतवान् येन तेषु प्रवर्तकत्वशङ्का ऽप्यवतरेत् । इष्टाभ्युपायतादिविषयककार्यप्रत्ययो ऽस्य प्रवर्तक इति चेत् किं पुनरेतत्कार्यमिति । पुरुषप्रयत्नः कृतिस्तद्व्याप्यत्वमिति चेत् । ननु कृतिरिति मानसी प्रवृत्तिः तदुपहितं कार्यं प्रवृत्तिविषयः प्रवृत्तिफलं वा फलोद्देशेन पुरुषप्रवृत्तेः । तदवगमः प्रवृत्तिहेतुः प्रवृत्त्यवगमस्तर्हि प्रवृत्तिहेतुरित्युक्तं भवति । न चानुविधेयो ऽनुष्ठेयः न चानुविधेयनियोगोऽप्यस्माकं व्युत्पन्नानां नास्ति प्रवृत्त्यवगमः न चास्मात्प्रवर्तामहे । अपि चेयं प्रवृत्तिः प्रयत्नापरनामा इच्छाद्वेषयोरिव सति कारणे न तज्ज्ञानमात्राद्धेतुमर्हति । न चेच्छाद्वेषावेव प्रवृत्तिहेतू लिङादिगोचराविति सांप्रतम् । तत्खलु लिङादिगोचरो ऽभ्युपेयः । यथ यत्नेन प्रवर्तयति । न [illegible] स्वगततया शब्दस्य ज्ञापकत्वादनुत्पादकत्वाच्च । न चेच्छाद्वेषौ

द्विजातिकर्महानिहेतुं कर्म ब्रह्महत्यादि कृतवान् तत्कृतमपि कर्म फलाय न कल्पते कर्तृत्वे वैगुण्यादिति दर्शयति । कपूयेति । कपूयं निन्दितं कर्म आचरतीत्याचरणः पुरुषः हविरसंस्कृतमपूतमप्रोक्षितं वा उपहतं श्वमार्जारादिभिः मन्त्रा न्यूनाः क्रमविशेषेण दक्षिणा दुरागता दौष्कुलादुत्कोचादेर्दुष्टादुपायादागतेत्यर्थः । अन्वाहार्यमिह दक्षिणा । सा सती न्यूना वा दीयते याचत्या पुरुषो न तृप्यति । स च पुरुषाहारो जरत्वरत्वेनापत्यतया निन्दितः मिथ्यासंप्रयोगः पुरुषायितादिर्मोनरि योनिव्यापदो नानाविधाः पुत्रजन्मप्रतिबन्धहेतवः लोहितरेतसो बीजस्योपघात उपहतत्वं यतः पुत्रजन्म न भवति । मिथ्याभिमन्थन यतो नाग्निर्जायते कर्मवैगुण्यकर्तृवै-
९ गुण्ये आह वार्तिककारः । तयोरिष्टेः साधयितुरिति । मन्त्राणामसामर्थ्यादिति । मन्त्रादिसाधनानां पुत्रकामेष्ट्यादीनां कर्मणामित्यर्थः । ननु यदि निरपेक्षा नेष्टिः साधनं तास्तद्धनपेक्षमाणौ पितरावेव सम्यक् संयुज्यमानौ पुत्रस्य जनकौ कृतमत्र पुत्रकामेष्ट्या अत एव म्लेच्छादीनामपि पुत्रजन्मोपपद्यत इत्यत आह । तत्सहकारित्वादिति । नान्वयव्यतिरेकगम्यमिष्टेः सहकारित्वमपि त्वागमगम्यं म्लेच्छादीनां पुत्रजन्म जन्मान्तरीयादृष्टप्रभावादित्यागमप्रामाण्यादनुसरणीयम् । दृश्यमानकर्मकर्तृवैगुण्ये च फलानुत्पादो ऽदृष्टमपेक्षणीय सूचयति । तदनेन पुत्रकामेष्ट्यादीनामनियतफलत्वमपि सूचितं भवति । तथा कर्मान्तरप्रतिबन्धेन कर्मकर्तृसाधनावैगुण्य ऽपि फलानुत्पादः समर्थितो भवति । ऐहिकफलेषु तु कारीर्यादिषु साधनवैगुण्यं परिहारः । अनृतत्वादप्रमाणमिति चेदिति । धर्मिविशेषणस्येनोपयुक्तानामपि पश्चान्निष्कृष्याभिधानं न दोषावहमिति भावः । उत्तर किमिदमिति । अन्वर्थाप्रतिपादकत्व प्रतिज्ञा तदेवानृतत्व च हेतुरिति
१२ प्रतिज्ञाहेत्वोरर्थाभेद इत्यत आह । अनृतत्वं चेति । यत्पुनरुक्तमुदिते होतव्यमित्यादीनामेव परस्परव्याघात इति तत्राह उभयोरिति । विषु कालविधिपरेषु वाक्येष्वेकैकेनैव वाक्येनोभयोभयथाख्यार्थप्रतिषेधानभिधानान्न्यया नाप्रामाण्यमित्यर्थः । यद्यपि चैको होमः समुच्चयेन तदा न शक्यः कर्तुं तथा ऽपि विकल्पेन करिष्यते बहुलं हि विकल्पो लोके ऽप्युपलभ्यते । वस्तु हि व्यवस्थितं न विकल्प्यते अनुष्ठाने त्वनागतोत्पाद्ये विधिः

प्रतिषेधविकल्पानामविरोधः स्वरूपानिष्पत्तेरिति । वाक्यार्थो न कर्तव्य इति । वाक्यं तत्र कर्तव्यमित्यर्थः । कामतो वा प्रकल्प्येतेति । परस्पर- २७० । व्याहतार्थं प्रकल्प्येतेत्यर्थः । अभिहितत्वेनेति । यदनेन वाक्येन स्वसामर्थ्येनाभिहितं तद्वा परीक्षकैरवधृत्यानूद्यते इदमनेन वाक्येनाभिहितमिति । निर्द्धारयति । अभिहिते तु । विहितानुवादो वेति क्व चित्पाठः विहितो होमस्तस्यानुवादः कालविशेषविधानायेति । विहितानुवाद एव न्याय्यः कालविशेषविधानाय न तु कालान्तरप्रतिषेधोऽर्थः कल्प्यत इत्यर्थः । एकादश सामिधेन्य इत्यत्र पठितास्तासां प्रथमोत्तमयोस्त्रिर्वचन पञ्चदशत्वं मन्त्रस्य प्रयोजनवतः साधयत्यप्रयोजनमिति । तदेवं वेदाप्रामाण्यहेतूनुद्धृत्य प्रामाण्यसम्भवहेतुं सूत्रकारो वक्ष्यति इति पूर्वं वार्तिककारः स्वत एव तावत्प्रामाण्यसम्भवहेतूनाह । पुत्रकामेष्टीति । सोऽयं हेतुमवतारयति समस्तानीति ॥ २७१ ।

विधिर्विधायकः (सू. ६३) ॥ तस्य व्याख्यानं यद्वाक्यमिति । चोदकं प्रवर्तकम् । अथ आरोग्यकामः पथ्यमश्नीयादित्याद्युपदेशस्य श्रवणमनन्तरं पथ्याशने प्रवर्तमानं प्रयोज्यवृद्धमुपलभ्य बालस्तस्य प्रवृत्तिहेतुं प्रत्ययमनुमिमीते अस्य प्रवृत्तिः प्रवर्तकप्रत्ययपूर्विका स्वतन्त्रप्रवृत्तित्वान्मत्प्रवृत्तिवत् चायमनुमाता व्युत्पित्सुः स्वात्मसिद्धमेव प्रवर्तकत्वमनुमिनोति नादृष्टपूर्वं न हि स्वात्मनि पूर्वसिद्धे प्रवृत्तिहेतौ दृष्टे संभवत्यदृष्टकल्पना न्याय्या । न चैव शब्दतद्व्यापारपुरुषाशयनिरूपणादिप्रवर्तकमात्रापूर्वप्रत्ययात्मनि प्रवर्तकत्वमवगतवान् येन तेषु प्रवर्तकत्वशङ्काऽप्यवतरेत् । स्तन्यपानादिविषयककार्यप्रत्ययोऽस्य प्रवर्तक इति चेत् किं पुनरेतत्कार्यमिति । पुरुषप्रयत्नः कृतिस्तद्व्याप्यमिति चेत् । ननु कृतिरिति मानसी प्रवृत्तिः तदुपहितं कार्यं प्रकृतिविषयः प्रवृत्तिफलं वा फलोद्देशेन पुरुषप्रवृत्तेः । तदवगमः प्रवृत्तिहेतुः प्रवृत्त्यवगतिस्तर्हि प्रवृत्तिहेतुरित्युक्तं भवति । न चानुविधेयोऽनुष्ठेयः स यावदनुविधेयनियोगोऽप्यस्माकं व्युत्पन्नानां नास्ति प्रवृत्त्यवगमः न चास्मात्प्रवर्तेमहि । अपि चेयं प्रवृत्तिः प्रयत्नापरनामा इच्छाद्वेषयोनिरसति कारणे न स्वभावमात्रादुदेतुमर्हति । न चेच्छाद्वेषावेव प्रवृत्तिहेतू लिङ्गादिगोचराविति साम्प्रतम् । तत्खलु लिङ्गादिगोचरोऽभ्युपेयः । यत्र ज्ञानेन प्रवर्तयति । न तु स्वरूपतया शब्दस्य ज्ञापकत्वादनुत्पादकत्वात् । न चेच्छाद्वेषौ

स्वज्ञानेन प्रवर्तयतो यतः प्रवृत्तिं प्रति ज्ञानाय छन्दमपेक्षेयाताम् । अपि तु
ज्ञाततया तस्मात्तदेव लिङादेर्ज्ञाप्यम् । सत्यं ज्ञातमिच्छाद्वेषौ प्रसूते तत्र फलं
निसर्गसुन्दरतया ज्ञातमात्रमनीच्छां प्रसूते एव तदुपायो ऽपि ततया ज्ञातः
फलसंबन्धादात्मनीच्छां तस्माद् द्वयमवशिष्यते फलं तदुपायो वा तत्र
फलस्य यद्यपि स्वत एवेच्छादिविषयत्वं तथा ऽपि तद्विषयेच्छा न तत्र
प्रवर्तयितुमर्हति तस्यायोग्यत्वेन प्रवृत्तिविषयत्वानुपपत्तेः । न च फलगो-
चरेच्छा अन्यत्र तदुपाये स्वकार्ये प्रयत्नं जनयितुमर्हति इति प्रयत्नयोरेक-
विषयतया कार्यकारणयोः सम्प्रतिपत्तेः । न च तत्सम्बन्धात्तदुपायो नेष्यते येन
फलेच्छाया एवोपायविषयप्रयत्नप्रसवहेतुत्वं कल्प्येत । यथा ऽऽहुः अन्यदि-
च्छत्यन्यत्करोतीति विप्रतिषिद्धमिति । तस्मादिष्यमाणमपि फलं प्रवृत्तिवि-
षयत्वाभावान्नात्मनि स्वज्ञानेन प्रवर्तकं तदुपायस्तु प्रवृत्तिविषयत्वादिष्यमाण-
त्वाच्च स्वज्ञानेन प्रवर्तक इति युक्तमुत्पश्यामः । बालानां तु स्तन्यादाव-
पेक्षितोपायताज्ञाने प्राग्भवीयाभ्यासप्रवृत्तज्ञानसंस्कारानुवृत्तितयाद्युत्पन्नव्याप्ति-
स्मरणानां तज्जातीयत्वलिङ्गज्ञानजमनुमानमेव । एतच्च पूर्वाभ्यासस्मृत्यनुब-
न्धादित्यत्रोपपादयिष्यते । अत एव प्रयोजनलक्षणं व्याचक्षाणेनोक्तं वार्त्तिककृता
यद् सुखसाधनमिति बुद्ध्वा सुखावाप्तये यतते इदं दुःखसाधनमिति चावगम्य
दुःखहानायेति । तस्मादपेक्षितोपायता प्रवर्तना स्वात्मनि सिद्धा बुद्धस्यापि
प्रवृत्तिहेतुरित्यवगच्छति व्युत्पित्सुर्बालः । सा च लिङादिश्रवणसमनन्तरमु-
पजायमाना लिङाद्यर्थ इति निश्चिनोति न चापेक्षितोपायत्वमात्रं प्रवृत्ति-
हेतुः भवति हि यत्यमाननिर्वर्तिता कारीरी कृषीवलानामपेक्षितोपायो न
चैते ऽस्याः प्रवर्तन्ते तस्याः सिद्धत्वात् । तस्मात्कर्तुरपेक्षितोपायताप्रवृत्तिहे-
तुरित्यास्थेयं न च सिद्धे कर्तृता ऽस्ति । यथा ऽऽह भगवान् जैमिनिः
शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति । लोके च क्रियेत्यपेक्षितोपायः
यत्नार्थ इति तदनुसारेणाग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादयो ऽपि
वैदिका उपदेशा क्रियामेवापेक्षितोपायमभिदधति । सा चेयमाशुतरविना-
शिन्यप्यवान्तरापूर्वव्यापारा सती चिरभाविने ऽपि फलाय कल्पते । कृषि-
रिव निदाघसमयजन्मा हेमन्तसमयभाविने सस्यायेति । नापूर्वस्यापेक्षि-
तोपायत्वं कल्पयितव्यम् । भवतु वा सदैवापेक्षितोपायः प्रवृत्तिहेतुस्तथा

ऽपि कर्तुरपेक्षितोपायतालक्षणसमानोपाधि*र्विधिशब्दस्तदेकोपाधिसंबन्धाद्वि-
धित्क्रियायां क्व चिदपूर्वे प्रवर्ततइति न क्व चिद्व्यभिचारः। तदेवमुपदेशे
नियोज्यप्रयोजनकर्मणि व्युत्पन्नस्तानेव शब्दान् नियोक्तुं प्रयोजनकर्मण्या-
धादौ प्रयुज्यमानाननुपलभ्याध्येषणानुज्ञावाचकत्वमप्यवगच्छति। अग्निहो-
त्रादिवाक्यानां तु नियोज्यप्रयोजनकर्मवाचिनामुपदेशत्वमेव। तस्मादध्य-
यनाध्येषणामन्त्रणोपदेशाः सर्वे विधयस्तथा ऽपीहोपदेशो विधिरभिमतः
तस्मात्सूक्तं यद्वाक्यं विधायकमिति। कर्त्रपेक्षितोपायताज्ञापकमित्यर्थः।
**विधिस्तु नियोगो ऽनुज्ञा चेति** भाष्यमनुभाष्य व्याचष्टे। **विधिस्त्विति**। २७१।
यदेतदग्निहोत्रं जुहुयात्स्वर्गकाम इति वाक्यमप्रवृत्तप्रवर्तकलक्षणम् कर्त्रपेक्षि-
तोपायतां ज्ञापयद्विधिः तदेव तत्साधनद्रव्याद्यर्जनप्रवृत्तिमनुजानाति।
एतदुक्तं भवति ये हि द्रव्यार्जननियमविधयो ब्राह्मणस्य प्रतिग्रहादिनैवेत्येव-
मादयः ते च रागतो धनार्जने प्रवृत्तानां ब्राह्मणानां लौकिकानेकोपायप्राप्तौ
सत्यां नियमपराः पुरुषार्थाः न क्रत्वर्थाः; क्रतुविधयस्तु धनसाधनास्ते
ऽनूदिताः पर्यवस्यन्तो ऽपि न धनार्जनं तन्नियमं वा प्रयुञ्जते पुरुषार्थत्वे-
नैव तस्य प्रयुक्तत्वात् केवलमनुजानन्ति तस्मात्तदेवाग्निहोत्रादिवाक्यमप्राप्ते
ऽग्निहोत्रादौ विधिरन्यतः प्राप्ते तत्साधने ऽनुज्ञेति सिद्धम्। चमुद्वये
चाशब्दः स्तुतेरुपयोगद्वयं प्रवृत्त्या धर्मे कर्तव्ये विधिना प्रवृत्तेः कर्तव्यायां
च सहकारिता प्रशस्तमिति ज्ञात्वा प्रवर्तमानाः पुमांसः प्रवर्तन्तेतरां सा च
प्रवृत्तिः श्रद्धस्य धर्मे प्रसूते नाश्रद्धस्य तथा च श्रूयते यदेव विद्यया
करोति श्रद्धयोपनिषदा तदेवास्य वीर्यवत्तरं भवतीति। तत्र प्रवृत्तेः कार्ये
सहकारितामाह। **स्तूयमानमिति**। विधेः कार्ये सहकारितामाह।
**प्रवर्तिका चेति**।**कथं परकृतिपुराकल्पावर्थवादाविति**। चरकाध्वर्यु-
पुरुषसंबन्धश्रवणाद्वपाहोमपृषदाज्याभिघारणयोः क्रमभेदस्याप्राप्तस्य पुरुषवि-
शेषधर्मतया विधायकं परकृतिवाक्यम्। तथा बहिष्पवमानसामस्तोममन्त्र-
संबन्धस्य पूर्वकालपुरुषसंबन्धितया ब्रह्मवादिदानींतनपुरुषधर्मतया विधायकं
पुराकल्पवाक्यं कस्मान्न भवतीति भावः। उत्तरम्। **स्तुतिनिन्दावा-
क्येन कस्य चिद्विधेः शेषभूतेन संबन्धादिति**। न तावदेतेषु वाक्येषु

* भवतीति अधिकम् ३ पु॰।

सिद्धाभिधायिषु विधिश्रुतिरस्ति तत्र किमनूयमानो विधिः कल्प्यतामाहो प्रतीतेन विधिनैकवाक्यतेति । तत्र कल्पनालाघवात्प्रतीतेन विधिनैकवाक्यतैव ज्यायसी पूर्वत्र तु विधिकल्पना तदेकवाक्यताकल्पनमिति द्वयं कल्पनीयम् इतरस्मिंस्तु एकवाक्यतामात्रमिति भावः । स्फुटस्तुतिनिन्दाप्रतीत्यभावात्तु परकृतिपुराकल्पयोः स्तुतिनिन्दाभ्यां भेदेनोपन्यास इति ॥

१ । १५ **विधि-वादः (सू. ६५)॥** विहितमधिकृत्य स्तुतिर्वाऽभ्याने निन्दा वेति यथा ऽश्वमेधेन यजेतेति विधेरर्थवादो यो ऽश्वमेधेन यजत इति । किमर्थं स्तोतुं तरति मृत्युं तरति पाप्मानमिति स्तुतिः । उदिते होतव्यमित्यस्य विधेरर्थवादो यदुदिते जुहोतीति । किमर्थं निन्दितुं श्यावो वा ऽस्याहुतिमभ्यवहरतीति निन्दा । प्रयोजनान्तरमाह **विधिशेषो वा ऽभिधीयत** इति । यथा यदाग्नेयो ऽष्टाकपालो भवतीत्यादिभिरुत्पत्तिवाक्यैः षडाग्नेयादयो यागाः पौर्णमास्यमावास्याकालसम्बन्धा विहितास्ते च विधय इष्ट्यामुपायताद्रूप्या स्ववाक्ये चेष्टमनासाद्यन्तः यावेताः । एवमाघाराद्युत्पत्तिविधयो ऽपि कालविशेषासम्बन्धा दृष्टापेक्षा यत्र तत्र च यत्र विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इति कालविशेषसम्बन्धेनोत्पन्नानामाग्नेयादीनामनुवादः किमर्थं यदाग्नेयो ऽष्टाकपाल इत्याद्युत्पत्तिविध्यर्थविहितेष्टसम्बन्धनियमार्थं दर्शपौर्णमासाभ्यां स्वर्गकामो यजेतेति यथामेवाग्नेयादीनां कालविशेषसम्बन्धोत्पन्नानुदितानां फलसम्बन्धो यथा स्याद् मा भूदाघारादीनां कालासम्बन्धेनोत्पन्नानामित्येवमर्थम् । अत आघारादयः फलवत्सन्निधावफलं तदङ्गमिति दर्शपौर्णमासाङ्गतयावतिष्ठन्त इति सिद्धं भवति । सो ऽयं फलसम्बन्धनियमो विधिशेषः तदर्थमनुवाद इत्यर्थः । एवमग्निहोत्रं जुहोतीति विहितो होमो ऽनूद्यते किमर्थं दध्यादिगुणविशेषविधानार्थम् । दध्ना जुहोति पयसा जुहोतीत्यादिषु सो ऽयं गुणविधिर्विधिशेष इति । प्रयोजनान्तरमनुवादस्याह **विहितानन्तरार्थं** इति । यथा सोमो विहितो दर्शपौर्णमासौ च तयोरानन्तर्यं विधातुमुभयानुवादो दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति । यथमाध्वर्युर्गृह्णाति दीक्षयित्वा ब्रह्माणं दीक्षयतीति । विभागे ऽर्थग्रहणात्प्रामाण्यं भवितुमर्हतीति । प्रामाण्यं भवतीत्यर्थः ॥

**नानु-तेः (सू. ६६) ॥** भाष्योक्तमनुवादस्य प्रयोजनमविदुषः पूर्वः पक्षः ॥

शीघ्र–षः (सू. ६७) ॥ वार्त्तिकं पचेति । यथा शीघ्रं गम्यतामित्युक्ते २७
शीघ्रतरं गम्यतामिति न पुनरुक्तम् । तरपः क्रियातिशयप्रतीतेः । एवं शीघ्रं
शीघ्रं गम्यतामित्यभ्यासात्क्रियातिशयप्रतीतेः सकृदुच्चरितान्नावगतेः क्रिया-
तिशयस्य प्रयोजनवानभ्यासः । क्रियाविशेषणातिशयो ऽपि क्रियातिशय एवे-
त्यर्थः । अवगतं तावच्छीघ्रं शीघ्रं गम्यतामित्यथाभ्यासातिशयप्रतीतेरनुवा-
दस्य विशेषः । पचति पचतीत्यादौ को विशेष इत्याह । **कः पुनरसौ
विशेषो** यः पचति पचतीत्यादौ भवतीति । न च वक्तुरन्यथा प्रत्ययः
श्रोतुश्चान्यथा येन विप्रतिपत्तेः श्रोतुः प्रत्ययो भ्रान्त इति कल्प्येतेत्याह ।
यथा च श्रोतुरिति । एवमन्यो ऽपीति । यथा ग्रामो ग्रामो रमणीय
इत्यादिरिति । अनन्तरसूत्रावतारपरं भाष्यं किं पुनः प्रतिषेधेनेति । तद-
नुभाष्य व्याचष्टे । किं पुनरिति । उत्तरं नेति । पृच्छति । **किं कारणम् ।
उत्तरं न साधनमन्तरेणेति** । पुनः पृच्छति । कुतः तर्हीति । उत्तरं
प्रमाणतः । पृच्छति । तत्किं प्रमाणम् । तत्र तावद्वेदप्रामाण्यसंभावनायां
प्रमाणमाह । अर्थविभागवत्त्वम् । न त्वेतद्वेदप्रामाण्ये प्रमाणं बुद्धादि-
प्रणीतेनागमेनार्थविभागवता अनैकान्तिकत्वात् । वेदप्रामाण्यप्रमाणं तु
सूत्रोक्तम् ॥

मन्त्रा–त् (सू. ६८) ॥ चशब्दः पूर्वहेत्वनुकर्षणार्थ इति । पूर्वस्य
प्रामाण्यसंभावनाहेतोरर्थविभागवत्त्वस्यानुकर्षणार्थः । संभावितो हि पक्षो हेतुना
साध्यते न त्वसंभावितः । यथा ऽऽहुः संभावितः प्रतिज्ञायां पक्षः साध्येत
हेतुना । न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हत इति । सूत्रं व्याचष्टे
**यथा मन्त्रायुर्वेदवाक्यानीति** । पुरुषस्य भगवतो वेदकारकस्य विशेषः २७३
प्रत्यक्षीकृतहेयोपादेयता तद्धेतुभूता भूतदया यथार्थचिख्यापयिषा च कर-
णपाटवं चेति । विशिष्यते अनेनैव पुरुषः पुरुषान्तरेभ्यो ऽनाप्तेभ्य इति ।
त्रिविधेन विशेषणेनेत्युपलक्षणं करणपाटवमपि द्रष्टव्यम् । भूतदयाकृतम् ।
अनन्तान्तर्गतिकसूक्ष्मदुःखभेदवन्तः प्राणभृतो दृश्यन्ते न तेषां वैचित्र्यं
स्वाभाविकमिति तृतीये निवेदयिष्यते । न च दृष्टकारणमात्रनिबन्धनं तस्य
दृष्टव्यभिचारत्वात् । तस्माद्दृष्टसहायमदृष्टमस्य वैचित्र्यस्य कार्यं तच्चा-
पूर्वमिति च धर्माधर्माविति चाख्यायते । तत्र कस्य चित्प्रत्यक्षं मन्त्रादे-

तानि । बुद्धादिवाक्यानि तु न लोकयात्रामुद्वहन्ति न च तत्र लौकिकाना-
मविगानं न च विगायतां सांप्रतमित्युक्ता ऽपि तदर्थानुष्ठानम् । तस्माद्वि-
गानात्केषुचिदेव म्लेच्छादिभिर्मनुष्यापसदैः पशुप्रायैः परिग्रहान्नैतेषामाप्तोक्तत्व-
संभवः । न चैतेषां मन्वादिवाक्यवद्वेदमूलकतया प्रामाण्यमिति सांप्रतम्
अध्येत्रध्यापयित्रनुष्ठातृकर्तृसामान्यस्य वेदमूलकत्वानुमाननिबन्धनस्य स्मृतिवेद-
योरिव बुद्धादिवाक्येष्वभावात् । तत्सर्वज्ञत्वसंदेहेन चानुभवमूलकत्वाऽनि-
श्चयात् । मन्वायुर्वेदेषु प्रवृत्तिसामर्थ्यानुमितप्रामाण्येषु वैदिकशान्तिकपौष्टि-
कादिकर्माभ्यनुज्ञानात् । रसायनादिक्रियारम्भे च वेदविहितचान्द्रायणादिप्रा-
यश्चित्तोपदेशादायुर्वेदेनाप्याप्तप्रणीतेन वेदानां प्रामाण्यमभ्युपेयते । तत्सिद्ध-
माप्तप्रणीता वेदाः प्रमाणमिति । अभ्युच्चयमात्रं तु कारीर्यादिषु संवाद इति ।
एतदेवाभिप्रेत्य वार्त्तिककारः प्रयोगमाह । अस्य प्रयोगः प्रमाणं वेद २७३
वाक्यानीति । प्रयोगान्तरमाह । एककर्तृकत्वेनेति । मन्वायुर्वेदवाक्यानि
सर्वज्ञकर्तृकाणि । महाजनपरिग्रहे सति अलौकिकार्थप्रतिपादकत्वात् । यानि
तु न सर्वज्ञपूर्वकाणि तानि नैवंरूपाणि यथा वातुलीयवाक्यानीति व्यति-
रेकी हेतुः यथा च बुद्धादिवाक्यान्यलौकिकान्यपि न महाजनपरिगृहीतानि
तथोक्तमनन्तरमेव । मन्वायुर्वेदवाक्यानां च सत्यपि प्रवृत्तिसामर्थ्ये तासां
तासामोषधीनां तत्संयोगभेदानां च तत्तद्वर्णापोद्धारभेदस्य च नासर्वज्ञः
सहस्रेणापि पुरुषायुषैः शक्तः कर्तुमन्वयव्यतिरेकौ न चानिर्दिश्यमता तत्प-
रिहारः सर्गादौ तदसंभवात् । सृष्टिमहाप्रलयौ चानुमानागमाभ्यामुपपादयिष्येते
इति सर्वं रमणीयम् । तदेवं सर्वज्ञपूर्वकत्वे सति सिद्धमाप्तोक्तत्वेन मन्वायुर्वेदप्रा-
माण्यमोदनार्थो चेदिति लौकिकवाक्यवदिति । यदि न नित्यानि कथं
प्रमाणम् । अनित्यत्वे हि पुरुषाणां विचित्राभिसंधित्वेन भ्रमशङ्का न च
तया ऽपाकृते तस्मादपौरुषेयत्वमेव पुरुषाश्रयान्दोषानपाकुर्वद्वेदप्रामाण्यप्र-
धस्यापकमिति भावः । उत्तरं प्रतिपादकत्वादिति । आप्तोक्तत्वेनानित्य-
स्यापि निश्चायकत्वादित्यर्थः । के चित्त्विति । प्रमालक्षणामर्थक्रियां कुर्व-
त्प्रमाणं न च नित्यस्यार्थक्रिया ऽस्ति तस्मान्न प्रमाणमित्यर्थः । निराक-
रोति । तत्तु न सम्यगिति वक्ष्याम इति । यथा च नित्यस्याप्यर्थक्रिया- २७४
संभवस्तथा तृतीये वक्ष्याम इति भावः । आत्मा चेति प्रमाहेतुगणाभ-

रित्युपपादितम् । तनुभुवनादिलक्षणस्य कार्यस्य कर्त्ता तन्निर्माणसमर्थः समस्तवस्तुतत्त्वज्ञः क्लेशकर्मविपाकाशयापरामृष्टः परमकारुणिकस्तनुभुवनादेरेव कार्यादनुमीयत इति चतुर्थ उपपादयिष्यते । सोऽयमात्मीयहिताहितप्राप्तिपरिहारोपायानविदुषः प्राणिनः पश्यन् प्रत्युतानेकविधदुःखदहनदह्यमानानवलोकयन् कथं न तप्येत तप्यमानो वा हिताहितपरिहारोपायतत्त्वं विद्वान् कथं नोपदिशेत् अन्यथोपदिशेद्वा । तस्मादनेन परमकारुणिकेन पृथिव्यादि सृष्ट्वा प्रजाभ्यस्तद्विधेयाभ्यो हिताहितप्राप्तिपरिहारोपाय उपदेष्टव्यः । न खल्वयमनुपदिश्य स्थातुमर्हति । प्रजानां पितृकल्पस्य चास्योपदेशो देवर्षिमनुष्याणामवश्यानुष्ठेयत्वेन चातुराश्रम्येण चाऽऽदरणीयः । धार्यश्च हिताहितप्राप्तिपरिहारोपायानुष्ठानाय तस्माद्यो वर्णाश्रमाचारव्यवस्थापक आगमो महाजनपरिगृहीतः स तत्प्रणीत आप्तोक्तत्वात्प्रमाणं मन्त्रायुर्वेदवदिति संभाव्यते । कतमोऽसावागम आप्तोक्तः किं शाक्यभिक्षुकदिगम्बरसंसारमोचकादीनामागमाः किं वा वेदा इति । तत्र शाक्याद्यागमानां बुद्धर्षभादयः प्रणेतार इति स्फुटतरमस्ति स्मरणं न तूत्कलवदीश्वरस्तेषां कर्त्तेति । न चैते बौद्धादिप्रभृतयः तनुभुवनादीनां कर्त्तारो येन सर्वज्ञा इति निश्चीयेरन् तदुपायानुष्ठानेन तु संभाव्येतैषां सर्वज्ञता न च संभावनामात्रेण तत्प्रणीतत्वागमेष्वाश्वासः प्रेक्षावतां भवितुमर्हति न चैतेषामागमा वर्णाश्रमाचारव्यवस्थाहेतवः नो खलु निषेकाद्याः क्रियाः श्मशानान्ताः प्रजानामेते विदधति । न हि प्रमाणीकृतबौद्धाद्यागमा अपि लोकयात्रायां श्रुतिस्मृतीतिहासपुराणनिषेधागमप्रमाणेन प्रवर्त्तन्ते । यदि तु केऽपि सांप्रतमेतदिति ब्रूयात् लोकयात्रायां श्रुत्यादीनेवानुसरन्ति । तस्माद्भवतु वेदेषु जगन्निर्मातृकर्तृकत्वस्मृतिः मा वा भूत् तथापि त्वीश्वरप्रणीता इति पश्यामः । न ह्येते चैत्यवन्दनादिवाक्यवदन्यकर्तृकाः स्मर्यन्ते न चान्य आगमो लोकयात्रामुद्वहन् महाजनपरिगृहीत ईश्वरप्रणीततया स्मर्यमाणो दृश्यते न चेश्वरोऽनुपदिश्य स्थातुमर्हतीत्युक्तं तत् पारिशेष्याद्वेदा एव सकललोकयात्रामुद्वहन्तो हिताहितप्राप्तिपरिहारोपायमुपदिशन्त ईश्वरप्रणीता इत्यवगच्छामः । तथा ह्येत एव वेदाभियुक्तैर्यथावत्प्रयत्नेन गृह्यन्ते धार्यन्ते च । तदर्थपालनायां च महर्षिपरंपराभिरङ्गोपाङ्गेतिहासपुराणधर्मशास्त्राणि प्रणी-

**अयथार्थ** इति भाष्यम् । प्रमाणानां विभागोद्देशो यः सो ऽयथार्थः ।
तदेतद्वार्त्तिककारो व्याचष्टे **प्रत्यक्षे**ति । एवं विभ्रान्तस्याक्षेप इति २७६ ।
भाष्यमतेन सूत्रं व्याख्याय प्रकारान्तरेणापि व्याचष्टे । **संशयव्युदासार्थं**
**वा प्रकरणम्** । सूत्रं तु संशयार्थम् । न चतुष्ट्वं निश्चेतुं शक्यं
कस्मात् । **ऐतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्** । परैरभ्युपगमाद-
स्माकं संशयाक्षिप्ति सूत्रार्थः । तात्पर्यान्तरमाह । **विधीति** । विभागोद्देशो
ऽधिकनिषेधपर इति पूर्वपक्षे अयथार्थः प्रमाणोद्देश इति पूर्वं
व्याख्यातं संप्रति तु प्रत्यक्षादिविधिपरो ऽयमारम्भः प्रत्यक्षानुमानोप-
मानशब्दाः प्रमाणानीति । अधिकनिषेधस्त्वर्थलभ्य इति पक्षमभिप्रेत्यो-
क्तमित्यपौनरुक्त्यम् । तात्पर्यान्तरमाह **दोषवतामिति** । तात्पर्यान्तरमाह
**प्रत्यक्षादिष्विति** । अन्तर्भावपरात्प्रकरणादर्थाद्विभागोद्देशस्य यथार्थता विज्ञाय-
तीत्यर्थः । दूषयति **सिद्धत्वादिति** । न हि यावत्सूच्यते सूत्रकारेण ताव-
दवश्यमुपपादनीयं भाष्यकारादिभिरपि तदुपपादनसिद्धेरिति भावः । परि-
हरति **सावधारणप्रयोजनस्य प्रमाणान्तरनिरासस्येति** । यत्सूत्र-
सामर्थ्यादनुक्तमपि लभ्यते तत्सूत्रकारेण नोच्यते । यत्तु सूचितमपि तिरोहि-
तमिव तत्सूत्रकारेणोद्घाटनीयमेव न हि तथास्ति निश्चयो ऽस्मद-
भिमतमेव वदन्ति भाष्यकारादयो नान्यदिति भावः । किमर्थादापद्यत इति
प्रश्नः । उत्तरं **संभवतीति** । **प्रत्यनीकस्य ग्रहणादिति** । अथवा पातप्रत्यनी-
कस्योपात्तस्य ग्रहणात्तद्विरोधिनः पातविरोधिनो वाय्वभ्रसंयोगस्य ग्रहणं तदिदं
किलाभावाख्यं प्रमाणं प्रमीयते मेघोदये ऽपि पतोऽपतनाभावेन वाय्वभ्रसं-
योग इति । सिद्धान्तमाह **तान्येतानीति** । ननु भविष्यत्यसौ विषय
उक्तलक्षणानामगोचरः प्रमाणानाम् । ग्रहीष्यन्ति च तमैतिह्यादीनि प्रमा-
णान्तराणीत्यत आह । **विषयाभावाच्चेति** । चोदयति **अथ प्रयोज-**
**नभेदादिति** । तदेतदतिप्रसङ्गापादनेन दूषयति । **एवं तर्हि पुत्त्व**-
**मिति** । न तावत्सन्ति तादृशः प्रयोजनसामान्यविशेषाः यैः प्रयोजनवन्ति
प्रमाणानि परस्परतो व्यावर्तयेयुः । अपि तु भेदमात्राद्व्यावर्तयन्तीति वक्त-
व्यम् । तथा चातिप्रसङ्गेनाप्रत्यसंख्याव्यावृत्तिरित्यर्थः । **अथ विषयसा**- २७७ ।
**मान्येति** । रूपत्वादिकं विषयसामान्यं तस्य स्वस्वव्यक्तिव्यतिरेकं एकत्वं

१४ । २ विवक्षया न तु करणत्वाभिप्रायम् । प्रमाणशब्दस्येति । अत्रापि न करणत्वविवक्षया किं तु प्रमाहेतुमात्रविवक्षयेति द्रष्टव्यम् । इतरवस्तुसाधकत्वेनेति । इतरस्य परमाणुगतस्यैव मूर्त्तत्वादेः साधकत्वेनेत्यर्थः । तदेवमेकदेशिमतमपाकृत्य स्वमतमाह । तस्मादिति । स च संसारानादित्वादिति । यद्यपि वर्णपदवाक्यानि प्रत्युच्चारणमन्यानि तथाऽपि गत्वादिसामान्यावच्छिन्नानां गकारादीनां तत्समूहानां च वाक्यानां यथा गोत्वादिसामान्यावच्छिन्नाभिः शाबलेयादिव्यक्तिभिरेव सङ्केतो ग्रहीतुमिति भावः । मन्वन्तरेति । महाप्रलये त्वीश्वरेण वेदान् प्रणीय सृष्ट्यादौ सम्प्रदायः प्रवर्त्यत एवेति भावः । शेषं भाष्यं वार्त्तिकं चातिरोहितार्थमिति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां द्वितीयाध्यायस्याद्यमाह्निकम् ।



४।१० विपक्षया न तु करणत्वाभिप्रायम् । प्रमाणशब्दस्येति । यद्यपि न कर्तृत्वविवक्षया किं तु प्रमाहेतुमात्रविवक्षयेति द्रष्टव्यम् । इतरथा तु साधकत्वेनेति । इतरस्य परमाणुगतस्येव मूर्त्तत्वादेः साधकत्वेनेत्यर्थः । तदेतमेकदेशिमतमपाकृत्य स्वमतमाह । तस्मादिति । स च संसारानादित्वादिति । यद्यपि वर्णपदवाक्यानि प्रत्युच्चारणमन्यानि तथाऽपि गत्वादिसामान्यावच्छिन्नानां गकारादीनां तत्समूहानां च वाक्यानां गव्यो गोत्वादिसामान्यावच्छिन्नाभिः शाबलेयादिव्यक्तिभिरेव सङ्केतो ग्रहीतुमिति भावः । मन्वन्तरेति । महाप्रलये त्वीश्वरेण वेदान् प्रणीय सम्प्रदायः प्रवर्त्तितश्चेति भावः । शेषं भाष्यं वार्त्तिकं चातिरोहितार्थमिति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां द्वितीयाध्यायस्याद्यमाह्निकम् ।



अयथार्थ इति भाष्यम् । प्रमाणानां विभागोद्देशो यः सोऽयथार्थः ।
तदेतद्वार्तिककारो व्याचष्टे प्रत्यक्षेति । एवं विभ्रान्तस्याक्षेप इति २१६ ।
भाष्यमतेन सूत्रं व्याख्याय प्रकारान्तरेणापि व्याचष्टे । **संशयव्युदासार्थं
वा प्रकरणम्** । सूत्रं तु यथायथम् । न चतुष्ट्वं निश्चेतुं शक्यं
कस्मात् । **ऐतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्** । परैरभ्युपगताद-
स्माकं संशयादिति सूत्रार्थः । तात्पर्यान्तरमाह । **विधीति** । विभागोद्देशो
ऽधिकनिषेधपर इति पूर्वपक्षे अयथार्थः प्रमाणोद्देश इति पूर्वं
व्याख्यातं संप्रति तु प्रत्यक्षादिविधिपरोऽयमारम्भः **प्रत्यक्षानुमानोप-
मानशब्दाः प्रमाणानीति** । अधिकनिषेधस्त्वर्थलभ्य इति एवमभिप्रेत्यो-
क्तमित्यपौनरुक्त्यम् । तात्पर्यान्तरमाह **दोषवतामिति** । तात्पर्यान्तरमाह
**प्रत्यक्षादिष्विति** । अन्तर्भावपरात्प्रकरणादयो विभागोद्देशस्य यथार्थता सिध्य-
तीत्यर्थः । द्वेधयति **सिद्धत्वादिति** । न हि यावत्सूच्यते सूत्रकारेण ताव-
दवश्यमुपपादनीयं भाष्यकारादिभिरपि तदुपपादनविद्भिरिति भावः । परि-
हरति **भावधारणप्रयोजनस्य प्रमाणान्तरनिरासस्येति** । यत्सूत्र-
प्रमाणादनुक्तमपि लभ्यते तत्सूत्रकारेण नोच्यते । यत्तु सूचितमपि तिरोहित-
मिव तत्सूत्रकारेणोद्घाटनीयमेव न हि तथास्ति निश्चयो ऽस्मद-
भिमतमेव वदन्ति भाष्यकारादयो भ्रान्त्यादिति भावः । किमर्थादापद्यत इति
प्रश्न । उत्तरं **संभवतीति** । **प्रत्यनीकस्य ग्रहणादिति** । यथा वातप्रत्यनी-
कस्योपादानस्य ग्रहणात्तद्विरोधिनः वातविरोधिनो वाय्वभ्रसंयोगस्य ग्रहणं तदिदं
किलाभावाख्यं प्रमाणं प्रमीयते मेघोदये ऽपि यतोऽवपातनाभावेन वाय्वभ्रसं-
योग इति । सिद्धान्तमाह **तान्येतानीति** । ननु भविष्यत्यसौ विषय
एतल्लक्षणानामगोचरः प्रमाणानाम् । प्रवर्त्स्यन्ति च तत्रैतिह्यादीनि प्रमा
णान्तराणीत्यत आह । **विषयाभावाच्चेति** । चोदयति **अथ प्रयोज-
नभेदादिति** । तदेतदतिप्रसङ्गापादनेन दूषयति । **एवं तर्हि पृथक्त्व-
मिति** । न तावत्सन्ति तादृशाः प्रयोजनसामान्यविशेषा ये प्रयोजनयन्ति
प्रमाणानि परस्परतो व्यावर्तयेयुः । अपि तु भेदमात्राद्व्यावर्तयन्तीति वक्त-
व्यम् । तथा चातिप्रसङ्गेनाप्रत्यक्षस्याव्यावृत्तिरित्यर्थः । **अथ विषयसा-** २१७
**मान्येति** । रूपत्वादिकं विषयसामान्यं तस्य स्वस्वव्यक्तिव्यतिरेकं प्रकल्प्य

७ । २२ तस्मादित्यर्थः । निराकरोति न युक्तस्तर्हीति । निरुपाधानस्वरूपमेक
व्यापकत्वान्वितत्वपरिच्छिन्नत्वोपधानास्त्रय इति चत्वारो विषयसामान्यविशेषा
इति चतुष्ट्वप्रतिषेधो न युक्तमित्यर्थः । यद्येतानीति । यद्यैतिह्यादीनि
प्रमाणानि क्व प्रत्यक्षादौ किमैतिह्याद्यन्तर्भवतीति वक्तव्यम् । अप्रमाणस्य
प्रमाणान्तर्भावो न भवतीति प्रमाणानीत्युक्तम् । यत्त्वप्रतिनिर्दिष्टप्रवक्तृकं प्रवा-
दपारम्पर्यमैतिह्यं तस्य वेदाप्त कर्ता नावधारित ततस्तत्प्रमाणमेव न भव-
तीति यदीत्युक्तम् । अथावारपरम्परेत्यवगत तथाप्तोपदेश इति शब्दलक्ष-
णान्नातिरिच्यते तदिदमुक्तम् । सामान्यलक्षणत्वादिति । पृच्छति कथम-
र्थापत्तिरिति । असत्सु मेघेषु वृष्टिर्न भवति सत्सु भवतीति सेयमर्थापत्ति
कथमनुमानेन सगृह्यते । उत्तर द्वयोरिति अर्थोदाहरणमाह । यत्र यत्रेति ।
उदाहरणस्य साध्यविकलत्वमुदाहरति । एके त्विति । यदि दिवैव न
भुङ्क्त इति कालविशेषप्रतिषेधो निश्चीयते ततो रात्रौ भुङ्क्त इति कालान्तर-
विधान गम्यते न तु कालविशेषनिषेधनिश्चयो ऽपि तु दिवा भुङ्क्त एव
नेति । भोजनादिक्रियाया या ऽन्या ऽऽसनादिक्रिया तन्निषेधनिषेधेन
रात्रिभोजनावेधादिति । दिवैव न भुङ्क्त इत्यस्यैकस्य प्राप्तौ भवेद्रात्रौ भुङ्क्ते
इति क्रियान्तरनिषेधात् निषेधस्य च प्राप्तौ न वक्तव्य रात्रौ भुङ्क्त इत्यर्थः ।
तदेतद् दूषयति । एतत्तु न सम्यगिति । प्राप्तिपूर्वका हि प्रतिषेधा
भवन्ति । न चेह भुञ्जानस्याभुञ्जानस्य वा क्रियान्तराभाव प्रसक्तो येनासौ
प्रतिषिध्यते भुङ्क्त एव नेति । न हि कश्चिद्भुङ्क्त एव स भुञ्जानो न पीयते ।
अन्ततो ऽस्त्यादेरपि क्रियाया भावात् । व्यापृत कदा चिन्न व्यापारान्तर
कुर्यादपि किं पुनरव्यापृत स हि व्यापारान्तराण्यव्यापृत करोत्येवेत्यर्थः ।
उपसहरति तस्मादिति । कालप्रतिषेधो दिवैव भुङ्क्त इत्यस्य प्रतिषेध
इत्यर्थः । क्रियान्तरप्रतिषेधनिवृत्तरसम्भवेन निराकृतत्वादप्राप्तत्वान्न प्रतिषेध
। २० इति भाव । क्रियान्तरप्रतिषेध इति । अन्तरशब्दो विशेषवचन तेन
भोजनक्रियाया यदनन्तर विशेष क्रियान्तररहितत्व भुङ्क्त एव तस्य प्रतिषेध
इत्यर्थः । सामान्यतोदृष्टमिति यत्र न कार्यकारणयोर्गम्यगमकभाव । तत्सा
मान्यतोदृष्टमिति । सत्यमेतानीति भाष्यम् । तस्यार्थः । सत्यमेतान्यै
तिह्यादीनि प्रमाणानि न तु प्रमाणान्तर नैव प्रमाणान्तरमनुमानादिभ्य

इत्युक्तम् । न तु प्रमाणत्वमेवामीषां न मृष्यामहइति भावः । वार्तिकम् अर्थापत्तिमात्रस्येति । दिवा न भुङ्क्ते इत्यादेरर्थापत्तेरैकान्तिकत्वादिति । स्वमतेन दूषयित्वा सौत्रं दूषणमाह । यामपि भवानिति । न सत्सु मेघेषु वृष्टिर्भवत्येवेत्यर्थो येन व्यभिचारो दृश्येतापि तु असत्सु न भवतीति तथा च न व्यभिचार इत्यर्थः । यदि तु यत्र विषये ऽर्थापत्तिरैकान्तिकी ततो विषयान्तरं कल्पयित्वा ऽनैकान्तिकं दृश्येत ततो यः प्रतिषेधविषयः प्रामाण्यमर्थापत्तेः ततो विषयान्तरमर्थापत्तेः सत्त्व प्रतिषेधविषयं कल्पयित्वा प्रतिषेधस्याप्रामाण्यं शक्यो वक्तुं तथा च प्रतिषेधाप्रामाण्यान्नार्थापत्तेरप्रामाण्यमित्याह ।

प्रति–स्त (सू. ५) ॥ एवं ह्यनैकान्तिकः प्रतिषेधः स्यात् यद्यर्थापत्तेः प्रामाण्यं सत्ता न प्रतिषेधति । न तु सत्त्वं प्रतिषेद्धुमर्हत्यनैकान्तिकत्वात् । न हि यदनैकान्तिकं तत् सर्वं नास्ति प्रमेयत्वादीनां नित्यत्वसाधने अनैकान्तिकानां सत्त्वात् । यस्मादर्थापत्तेर्विशेष इति । अर्थापत्तेर्विशेषः प्रामाण्यं न ह्यर्थापत्तिमात्र सत्तेति । न चानैकान्तिकत्वं प्रमाणत्वप्रतिषेधे ऽस्तीति यदि मन्यसे पूर्ववदेवं तर्हि ॥

तस्मात्–एवम् (सू. ६) ॥ विप्रतिपत्तिप्रतिपत्तिर्वा निग्रहस्थानमिति वदतः इत्यर्थः । या ऽपि मीमांसामात्यकृता ऽर्थापत्तिरुदाहृता जीवतश्चैत्रस्य गेहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनेति । तदप्यनुमानमेव यदा खलु यत्रैकत्र नास्ति तदा ऽन्यत्रास्ति यदा वा ऽव्यापकमेकत्रास्ति तदा ऽन्यत्र नास्ति सो ऽयं स्वशरीरएव व्याप्तिग्रहः सुकरः तथा च सतो गेहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानं न च तस्य सत्त्वेन गेहाभावः शक्यो ऽपह्नोतुं येनासिद्धो गेहाभावो न हेतुः स्यात् । गेहाभावेन वा सत्त्वमपह्नूयेत येन सत्त्वमेवानुपपद्यमानं न स्यात्मानं बहिरवस्थापयेत् । तथा हि सत्त्वमात्रं वा विरुध्यते चैत्रस्य गेहाभावेन गेहसत्त्वं वा चैत्रस्य न तावदाद्य क्व चन सत्त्वस्यास्ति विरोधो गेहे असत्तया समानविषयत्वाभावात् । देशसामान्येन गृहविशेषाक्षेपो ऽपि पाक्षिक इति समानविषयतया विरोध इति चेत् । न प्रमाणविनिश्चितस्य साशयिकेन प्रतिक्षेपायोगात् । नापि प्रमाणविनिश्चितो ऽमात्र एव पाक्षिक तस्य

गृहसत्त्वं प्रतिषिध्यन्त्वमपि प्रतिषेद्धुं सामर्थ्यविकलत्वं च उपनेतुमर्हतीति
युक्तम् । गृहावच्छिन्नाभावेन गृहसत्त्वं विरुद्धत्वात्प्रतिषिध्यते न तु सत्त्वमात्र
मपि तस्योदासीन्यात् । तस्माद्गृहाभावेन सिद्धेन सतो बहिर्भावोऽनुमीयत
इति युक्तम् । एतेन विरुद्धयोः प्रमाणयोरविरोधापादनं विषयव्यवस्थया अर्था-
पत्तिविषयः परास्तः । अनवच्छिन्नावच्छिन्नयोरविरोधात् । तस्मान्नानुमानात्
प्रमाणात्प्रमाणान्तरमर्थापत्तिरिति स्थितम् ॥

। १८ **नाभा-द्धेः (सू ७)** ॥ नाभावप्रामाण्यं प्रमाणं कस्मात् प्रमेय
स्याभावस्यासिद्धेः । नो खलु सर्वोपाख्यारहितं प्रमाणज्ञानविषयभावमनु-
भवति । केवलं काल्पनिकोऽयमभावव्यवहारो लौकिकानामिति पूर्व-
पक्षः । सिद्धान्तमाह । अभावस्य भूयसीति । सर्वजनीनोऽभावप्रत्ययव्य-
वहारो न काल्पनिको भवितुमर्हति । न च कल्पनाऽपि सर्वोपाख्यारहितं
गोचरयितुमर्हतीत्युक्तं विपरीतख्यातिसाधनावसरे । क्षणभङ्गभङ्गावसरे च
तस्योपाख्येयत्वमुपपादयिष्यते तस्मादस्य प्रामाण्यमुक्तं प्रमाणान्तर्भाव ।
तदेतत्पक्षे वार्त्तिककारो व्याचष्टे नाभावः प्रमाणमिति । यथोक्तं दूष
यति । कस्यैवमाहेति । अभावो हि प्रमेयमुच्यते ॥ तस्य त्वङ्गत्वेन प्रमाणमपि
तु तद्बुद्ध्या प्रतिपत्तिः । सा च प्रत्यक्षफलमुपादानादिबुद्धौ प्रमाणं यथा
ऽपि तथा वक्ष्यते यदाभावप्रत्ययस्तु बाध्यभावयोरनुमानमुक्तम् । प्रति-
पद्य धानयतीति लक्षणाभावेन विशेषणेनानवच्छिन्नान्यानेतव्यत्वेन प्रतिपद्यते-
भवति । एतदुक्तं भवति लक्षणाभावज्ञानं विशिष्टं वाससि प्रत्ययं जनयत्सा-
धकतमत्वात्प्रमाणं भवति ॥

**प्रस-त्तेः (सू. ८)** ॥ भावाधीननिरूपणत्वात्प्रागपूर्वकत्वाच्च प्रध्वंस
एवाभावः । तस्य भावपूर्वकत्वात् । नान्यो ऽस्त्यभाव इति मन्यानस्य
पूर्वपक्षः । नापरिज्ञानादिति । प्रत्यक्षं हि प्रमाणं प्रमेयाभावं व्यवस्थाप-
यति । तच्च प्रध्वंसवत्प्रागभावे ऽपि तुल्यम् । प्रतियन्ति हि लौकिका दधि
क्षीराभावमिव क्षीरे दध्यभावम् । ननु सूत्रमन्येषु भावेषु लक्षणाभावरूपा-
णामुपपत्ति सद्भावमाह । न त्वभावोपलब्धिरूपो तत्कुतो न विरोध इत्यत
२ आह । अत उक्तार्थं सूत्रमिति । व्यतिरेकमुखेन सूत्रस्योक्तोऽर्थः । अत
एवाह भाष्यकारः । नैवमलक्षितेष्विति । लक्षणादर्शनेन हि लक्षणाभावद-

र्थेनानुपलक्षितम् । **यानि तानि लक्षितेष्विति** । न खलु चिह्नितस्य न २८२ सन्ति यानि च सन्ति तेषामभावो व्याहतः । एतदुक्तं भवति यत्र लक्षणानि सन्ति तत्र तेषामभावो व्याहतः यत्र च न सन्ति तत्राप्यभावोऽनुपपन्नः । तस्य भावाधीननिरूपणस्य तदभावेऽशक्यनिरूपणत्वादिति । परिहरति **नापरिज्ञानादिति** । भावज्ञानाधीननिरूपणो भवत्यभावो न तु भावाधीननिरूपणः प्रागभावोऽपि च शक्यो भविष्यद्भावज्ञानेनान्यत्रावस्थितभावज्ञानेन वा निरूपयितुमिति न प्रागभावाभाव इत्यर्थः । **अभावद्वैतमिति** । प्रकृतापेक्षं प्रकृतं प्रध्वंसमाश्रित्याह इदं प्रति प्रागभावप्रतिपादनं परमार्थतस्तु प्रथममभावे द्वैतं तादात्म्याभावः संसर्गाभावश्चेति संसर्गाभावोऽपि प्राक्प्रध्वंसात्यन्ताभावभेदेन त्रिविध इति चतस्रो विधा अभावस्येति । **असत्यर्थे नाभावः । तत्सिद्धेरलक्षितेष्वहेतुरिति चोभे अप्येते छलसूत्रे इति** । यो योऽभावः स सर्वः सत्यर्थे भवति यथा प्रध्वंसः न च तथा लक्षणाभाव इति सामान्यच्छलम् । तत्सिद्धेरिति तु वाक्छलं यानि लक्षणानि भवन्ति कथं तान्येव न भवन्तीति हि तस्यार्थः ।

तदेवं शब्दपरीक्षां प्रस्तुत्य तस्य प्रामाण्यं परीक्ष्य विभागोद्देशः परीक्षितः संप्रति शब्दपरीक्षामेव वर्णयन्नाह । **आप्तोपदेशः शब्द इति** । संशयकारणं विप्रतिपत्तिं दर्शयन् जरन्मीमांसकानां मतमाह । **आकाशगुणः शब्द इति** । अभिघातप्रेरितेन हि वायुना यावद्वेगमभिप्रतिष्ठमानेन कर्णशष्कुल्यवच्छिन्ननभोभागसमवेतः नित्यः शब्दो व्यज्यत इति । तदेतद्वार्तिककारो व्याचष्टे । **एके तावदिति** । अविनश्यदाधारमपि संयोगाद्यनित्यमित्यत आह । **एकद्रव्यमिति** । तथा अपि पार्थिवपरमाणुगते रूपादिभिरनैकान्तिकमत आह । **आकाशगुणश्चेति** । एकद्रव्यत्वे सत्याकाशगुणत्वादित्येतावता ऽभिमतसिद्धेरविनश्यदाधारत्वं स्वरूपप्रदर्शनार्थं वेदितव्यम् । **संयोगविभागनादा इति** । भेरीदण्डसंयोगप्रेरितो वायुः कर्णशष्कुलीमन्तराकाशं प्राप्तः शब्दस्य व्यञ्जकः एवं वंशदलविभागप्रेरितो वायुः शब्दस्य व्यञ्जक इति द्रष्टव्यम् । संयोगविभागौ पारम्पर्येण नादस्तु साक्षादिति । सांख्यीयमतमाह **गन्धादिसहवृत्तिरिति** । पञ्चतन्मात्रोत्पन्नभूतसूक्ष्मसमुदायारब्धपृ- २८३ थिव्यादिविकारो गोघटादिवृत्तिः शब्दो योग्यदेशस्य आहंकारिकतया व्यापकं

१० विषयदेशस्थं श्रोत्रेन्द्रियं विकुर्वन्नवस्थितः शब्द गृह्यते । तदेतदाह । **अपरे**
पुनरिति । भूतविशेषाभिघाता इति । भेरीदण्डाभिघाता इत्यर्थः ।
वैशेषिकमतमाह । आकाशगुण इति । बौद्धराद्धान्तमाह । **महाभूतसं-**
**क्षोभज** इति । **नासंबन्धादिति** । यदा भावो ऽस्ति तदा प्रागप्रध्वंसा-
भावान्नानित्यत्वम् । **अनुत्पन्नविनष्टयोश्च प्रसङ्गादिति** । न तावत्प्राक्-
प्रध्वंसाभावयोः सद्भावो ऽस्ति तस्मात्तयोरुभयोश्च तावन्नित्यत्वं तथा चानु-
त्पन्ने वस्तुनि नष्टे वा ऽनित्यत्वप्रसङ्गः । [illegible] चेद दृष्टमिष्टं वा भावधर्मत्वे-
नानित्यत्वस्य प्रतीतेरनित्यो घट इति न केवलमनित्यत्वस्य भाव इति
परमस्मिन्पक्षे न युज्यते षष्ठ्यर्थस्य नास्ति तस्माद् भावस्याभावो धर्मो न
भवतीत्यत आह । **न च धर्मकाल** इति । चो हेत्वर्थे । यद्भूते ।
**अथेति** । भवन्नेव हि यस्मात्प्राग् न भवति पश्चाच्च तस्मात्तस्याभाव इति
षष्ठ्युपपत्तिरित्यर्थः । **उत्तरम् एवमपीति** । सत्यं भवन्नेव न भवतीति न
त्वेतावता ऽस्याभावसंबन्धो भिन्नकालत्वात् । तस्मान्नास्मदुक्तं किं चित्प्रति-
विद्धमित्यर्थः । **लोकविरोधमुद्भावयति घटस्य प्रागभाव** इति । असंबन्धे
षष्ठीप्रयोगो ऽयं भाक्तः भावाधीननिरूपणत्वं च भक्तिरित्यर्थः । अपि च वर्त-
मानवस्तु नित्यमित्युच्यते तस्य भावो नित्यता भवतु किमेतावता ऽपीत्यत
आह । **वर्त्तमाने चेति** । विनाशो ऽस्यावश्यंतया भविष्यतीति अवश्यंभा-
विनो विनाशस्य सन्निधानेन सम्बन्धमुपचर्य मतुपः प्रयोग इत्यर्थः । उपल-
**ब्धिलक्षणप्राप्तस्येति** । न हि सतो विनाशो ऽस्ति येनासम्बन्धो भावस्य
दृश्येत किं तु यथा सत आविर्भावो जन्म एवं सत एवात्यन्ततिरोभावो
विनाश इति अनित्यमेति व्याख्यायते तिरोभावस्य च सता सह समानका-
लतया संबन्ध उपपद्यत इति भावः । तिरोभावश्च घटादिना ऽपि सम्भवती-
११ त्युपलब्धिलक्षणप्राप्तस्येत्युक्तम् । तदेतत्साङ्ख्यीय मतं दूषयति । **एतत्तु शून्य-**
**मभिधानमिति** । प्रधानविकारत्वाद्विश्वस्य विकारस्य च प्रकृतेरनन्यत्वात्
प्राधानिकस्य कस्य चिदनुपलम्भान्नास्त्येव तद्वस्तु यदत्यन्तं नोपलभ्यत इति
साङ्ख्यसिद्धान्तस्य बाधत इत्यर्थः । अपि च यथा सतो न विनाश एवमसतो
ऽपि जन्म नास्ति तथा चानुपजातविशेषस्य वस्तुनस्तिरोभावो न युक्तः विशे-
षोपजनने च कथं सत उत्पत्तिविशेषस्यैव प्रागसत्त्वात् सत्त्वे वा प्रागप्यनुप-

तद्धितप्रसङ्ग इति । ये पुनरिति । अनित्य एवानित्यता स्वार्थिकस्तलप्रत्यय २८६
इत्यर्थः । दूषयति । एतत्तु न युक्तम् । पाणिनेरपि स्मृतिः प्रमाणाविरोधिनी
सत्यव्यवस्थाहेतुर्न तद्विरोधिन्यपि अस्ति च टगादीनां स्वार्थिकत्वे प्रमाणवि-
रोधः । तथा हि प्रकृतिप्रत्यययोः समभिव्याहारो न स्याद् न चानेकार्थयोः
समभिव्याहारो दृष्टः न हि भवति वृक्षः शिंशपा इतिवद्वृक्षस्तरुरिति प्रयोगः ।
कथं तर्ह्येको द्वौ बहव इति चेत् । न लिङ्गविशेषस्यातदर्थत्वाद्विभक्तिप्रयोगस्य
एवं याचकादिष्वपि विहङ्गमात्यन्तरव्यवच्छेदः प्रत्ययार्थो वेदितव्यः । यथा
च व्याचक्षते शाब्दाः याच एव याचक इति । तदिदमुक्तमनुपलभ्यमानभे-
दानामप्यनुमानतो भेद इति । किमनुमानं षष्ठ्या भेदविषयत्व-
मिति । त्वतलविधायं नित्यत्वानित्यत्वयोः प्रकृतत्वात् । तस्य भावस्त्वतला-
विति त्वतलोः षष्ठीसमर्थादुत्पत्तेः सर्वोऽयं त्वनुमानमुक्तमिति । अवच्छ-
पेक्षानपेक्षेति । सतोऽभयान्तावच्छेदा भवत्यनित्यता सैव च तदनपेक्षा
नित्यता अवधिश्चोपलक्षणं न विशेषणम् तच्च भिन्नकालमपि भवत्येव यथा
मृतायां मातरि देवदत्तायां देवदत्तापुत्रो यज्ञदत्त इति भूतपूर्वगत्या देव-
दत्ता स्वपुत्रमुपलक्षयति यथा च कार्यत्वं समवायस्तदोभयान्तावच्छिन्ना
सत्ता नित्यता । यदा तु पूर्वान्तावच्छिन्ना सतैवोत्पत्तिस्तदा उपरान्ताव-
च्छिन्ना सत्ता अनित्यतेति न हेतुलक्षणव्याप्त्यभावपरोक्षेण विरोध इति ।
कारणमित्यभिधीयत इति । समवायिकारणाभिप्रायम् । समस्तकारण-
व्यापकं तु लक्षणं कार्योत्पादस्य पुरस्तान्नियमेन सद्भाव इति द्रष्टव्यम् ।
कार्यात्मलाभहेतुः समवाय इति । कार्यस्यात्मलाभः स्वकारणसंब-
न्धित्वं तस्य हेतुः समवायः । समवायो हि समवेतत्वं भवति समवायः
कारणविशिष्टकार्यत्वमिति निमित्तकारणभेदानुविधानमुक्त्वा तद्धर्मकत्वं गम्य-
गमकयोरभेदविवक्षया निमित्तकारणानि भेरीदण्डसंयोगादयः । तद्भेदात्खलु
शब्दो भिन्नो भवति । यद्भुते संयोगविभागेति । यथा हि कारणभेदेन
भेदो दृश्यते एवं व्यञ्जकभेदेनापि मणिकृपाणदर्पणादिव्यज्यमानस्य मुखस्य
भेदो दृष्टः तस्मात् संशय इति । श्रोत्रं तावन्न शब्ददेशं गच्छत्यमूर्त- २८७
त्वादिति । कर्णशष्कुल्यवच्छिन्नं हि नभः श्रोत्रं न च कर्णशष्कुली मूर्ता अपि
सती पृथक्कमुपसर्पतीति प्रत्यक्षं हि कर्णशष्कुली श्रोत्रस्था गृह्यते तस्माद्-

१० विषयदेशस्थं श्रोत्रेन्द्रियं विकुर्वदवस्थित एव गृह्यते । तदेतदाह । **अपरे पुनरिति** । **भूतविशेषाभिघाता इति** । भेरीदण्डाभिघाता इत्यर्थः । वैशेषिकमतमाह । **आकाशगुण इति** । बौद्धराद्धान्तमाह । **महाभूतसंक्षोभज इति** । **नासंबन्धादिति** । यदा भावो ऽस्ति तदा प्राक्प्रध्वंसाभावाद्वानित्यत्वम् । **अनुत्पन्नविनष्टयोश्च प्रसङ्गादिति** । न तावत्प्राक्प्रध्वंसाभावयोः सहभावो ऽस्ति तस्मात्तयोरक्रमेण तावदनित्यत्वं तथा चानुत्पन्ने वस्तुनि नष्टे वा ऽनित्यत्वप्रसङ्गः । न चेद दृष्टमिष्टं वा भावधर्मत्वेनानित्यत्वस्य प्रतीतेरनित्यो घट इति न केवलमनित्यत्वस्य भाव इति परमस्मिन्पक्षे न युज्यते षष्ठ्यर्थस्य नास्ति कस्माद् भावस्याभावो धर्मो न भवतीत्यत आह । **न च धर्मकाल इति** । चो हेत्वर्थे । शङ्कते । **यथेति** । भवन्नेव हि यस्मात्प्राग् न भवति पश्चाच्च तस्मात्तस्याभाव इति षष्ठ्युपपत्तिरित्यर्थः । उत्तरम् **एवमपीति** । यस्य भवन्नेव न भवतीति न स्वेनात्मना ऽस्याभावसम्बन्धो भिन्नकालत्वात् । तस्मान्नास्मदुक्तं किं चित्प्रतिषिद्धमित्यर्थः । लोकविरोधमुद्भावयति **घटस्य प्रागभाव इति** । सम्बन्धे षष्ठीप्रयोगो ऽयं भाक्तः भावाधीननिरूपणत्वं च भक्तिरित्यर्थः । अपि च वर्त्तमानवस्तु नित्यमित्युच्यते तस्य भावो नित्यता भवतु किमेतावता ऽपीत्यत आह । **वर्त्तमाने चेति** । विनाशो ऽस्यावश्यन्तया भविष्यतीति अवश्यम्भाविनो विनाशस्य सन्निधानेन सम्बन्धमुपचर्य मतुप् प्रयोग इत्यर्थः । **उपलब्धिलक्षणप्राप्तस्येति** । न हि सतो विनाशो ऽस्ति येनासम्बन्धो भावस्य देश्येत किं तु यथा सत आविर्भावो जन्म एवं सतः यथात्यन्ततिरोभावो विनाश इति अनित्यतेति व्याख्यायते तिरोभावस्य च सता सह समानकालतया सम्बन्ध उपपद्यत इति भावः । तिरोभावस्य घटादिना ऽपि सम्भवती-
१ त्युपलब्धिलक्षणप्राप्तस्येत्युक्तम् । तदेतत्साङ्ख्यीयमतं दूषयति । **एतत्तु शून्यमभिधानमिति** । प्रधानविकारत्वाद्विश्वस्य विकारस्य च प्रकृतेरनन्यत्वात् प्राधानिकस्य कस्य चिदुपलम्भाभावात्स्यैव तद्वस्तु यदत्यन्तं नोपलभ्यत इति साङ्ख्यसिद्धान्तस्य बाधक इत्यर्थः । अपि च यथा सतो न विनाशः एवमसतो ऽपि जन्म नास्ति तथा चानुपजातविशेषस्य वस्तुनस्तिरोभावो न युक्तः विशेषोपजनने च कथं सतः कार्य्यविशेषस्यैव प्रागसत्त्वात् अन्ये वा प्रागप्यनुप-

लब्धिप्रसङ्ग इति । ये पुनरिति । अनित्य एवानित्यता स्वार्थिकस्तलप्रत्यय २८
इत्यर्थः । दूषयति । एतत्तु न युक्तम् । पाणिनेरपि स्मृतिः प्रमाणाविरोधिनी
सत्यव्यवस्थाहेतुर्न तद्विरोधिन्यपि अस्ति च टगादीनां स्वार्थिकत्वे प्रमाणवि-
रोधः । तथा हि प्रकृतिप्रत्यययोः समभिव्याहारो न स्यात् न खल्वेकार्थयोः
समभिव्याहारो दृष्टः न हि भवति वृक्षः शिंशपा इतिवद्वृक्षस्तरुरिति प्रयोगः ।
कथं तर्ह्येको द्वौ बहव इति चेत् । न लिङ्गविशेषव्यत्ययार्थत्वाद्विभक्तिप्रयोगस्य
एवं यावकादिष्वपि विरुद्धत्वात्स्वान्तरव्यवच्छेदः प्रत्ययार्थो वेदितव्यः । यथा
च व्याचक्षते शाब्दाः याव एव यावक इति । तदिदमुक्तमनुपलभ्यमानभे-
दानामप्यनुमानतो भेद इति । किमनुमानं पश्य भेदविषयत्व-
मिति । त्वतलभिप्रायं नित्यत्वानित्यत्वयोः प्रकृतत्वात् । तस्य भावस्त्वतलौ-
विति त्वतलोः षष्ठीसमर्थादुत्पत्तेः सर्वत्रैव त्वनुमानमुक्तमिति । अवध्य-
पेक्षानपेक्षेति । सत्तैवोभयान्तावच्छिन्ना भवत्यनित्यता सैव च तदनपेक्षा
नित्यता अवधिश्चोपलक्षणं न विशेषणम् तत्र भिन्नकालमपि भवत्येव यथा
मृतायां मातरि देवदत्तायां देवदत्तापुत्रो यज्ञदत्त इति भूतपूर्वगत्या देव-
दत्ता स्वपुत्रमुपलक्षयति यदा च कार्यत्वं समवायस्तदोभयान्तानवच्छिन्ना
सत्ता नित्यता । यदा तु पूर्वान्तावच्छिन्ना सत्तैवोत्पत्तिस्तदा अपरान्ताव-
च्छिन्ना सत्ता अनित्यतेति न हेतुलक्षणाव्याप्त्यानायपरोक्तेन विरोध इति ।
**कारणमित्यभिधीयत** इति । समवायिकारणाभिप्रायम् । समस्तकारण-
व्यापकं तु लक्षणं कार्योत्पादस्य पुरस्तान्नियमेन सद्भाव इति द्रष्टव्यम् ।
**कार्यात्मलाभहेतुः समवाय** इति । कार्यस्यात्मलाभः स्वकारणसम्ब-
न्धित्वं तस्य हेतुः समवायः । समवायो हि समवेतत्वं भवति समवायः
कारणविशिष्टकार्यत्वमिति निमित्तकारणभेदानुविधानमुक्त्वा तद्धर्मकत्वं गम्य-
गमकयोरभेदविवक्षया निमित्तकारणानि भेरीदण्डसंयोगादयः । तद्भेदात्खलु
शब्दो भिन्नो भवति । शङ्कते संयोगविभागेति । यथा हि कारणभेदेन
भेदो दृश्यते एवं व्यञ्जकभेदेनापि मणिकृपाणदर्पणादिव्यज्यमानस्य मुखस्य
भेदो दृष्टः तस्मात् संशय इति । श्रोत्रं तावन्न शब्ददेशं गच्छत्यमूर्त- २८७
त्वादिति । कर्णशष्कुल्यवच्छिन्नं हि नभः श्रोत्रं न च कर्णशष्कुली मूर्ता अपि
सती वक्तृवक्त्रमुपसर्पति प्रत्यक्षं हि कर्णशष्कुली श्रोतृस्था गृह्यते तस्माद्-

त्यर्थः । निरूपणमभ्युपेत्याह । न च निरूपितादिति । अवयवस्तर्हि धर्मो २६० ।
व्यज्यतां तन्निरूपणाशक्तौ गम्यत इत्यत आह । एतेनेति । यस्तु मन्यते
न वस्तुतोऽस्त्येकदेशः शब्दस्य किं तु संस्कारस्याव्याप्यवृत्तित्वमेवैकदेशः ।
प्रथमे पक्षे शब्दस्याव्याप्यवृत्तित्वमेव नाम एकदेश इति तं प्रति दोषा-
न्तरमाह कोलाहलश्च स्यादिति । यद्युच्येत कश्चिदेव ध्वनिः कं चिदेव
शब्दं व्यनक्ति ततश्च न कोलाहल इति तत्राह । नियमश्च न स्यादिति ।
समानदेशानामपि रूपरसादीनां व्यञ्जकनियम इत्यत उक्तं समानेन्द्रिय-
ग्राह्याणामिति न तथाऽपि भिन्नदेशानां समानेन्द्रियग्राह्याणामपि न सहसा
सर्वेषां व्यक्तिरित्यत उक्तं समानदेशानामिति । शङ्कते यथास्वं व्यञ्ज-
कमिति । न हि व्यञ्जकानां व्यञ्जकत्वं व्यक्तेरन्यतः प्रतीयते सा च
नियतेति व्यञ्जकानामपि नियमसिद्धिरित्यर्थः । परिहरति तत्राहदृ-
ष्टत्वात् । अन्येषामेव भूतानां व्यञ्जकानां व्यङ्ग्यानां चानियमो दृष्ट इहापि
नियमं विघटयति । कार्याणां तु समानदेशानामपि समानेन्द्रियग्राह्याणामपि
रूपादीनां सुखादीनां च दृष्टः कारणनियम इति शब्दानामपि नियतकार-
णतयोत्पत्तिनियम उपपद्यत इति भावः । समस्तशब्दव्यवधानेन सामा-
न्यानां सर्वसामान्यसमगतं समस्तं वस्त्विति मन्यमानः शङ्कते । सामान्य-
वदिति । सर्वार्थाव्यवधाने ऽपि किं चिदेव वस्तु केन चिदेव सामान्येन
संबद्धं न सर्वं सर्वेणेत्याशयवान्निराकरोति । अनभ्युपगमादिति । यद्य-
प्येकदेशस्थानां समानेन्द्रियग्राह्याणां सत्त्वनरत्वब्राह्मणत्वानां स्वरूपभेद-
संस्थानयोर्व्यङ्ग्यानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वं तथाऽपि समानदेशत्वाभा-
वान्न व्यभिचारः । सत्त्वस्य पदार्थान्तरसमवायादधिकदेशतया नरत्वस्य ब्राह्म-
णवत् क्षत्रियादिषु सद्भावात् ब्राह्मणत्वस्य क्षत्रियादिपरिहारात् कदा चिदेव
भावात् न्यूनाधिकदेशतया न समानदेशत्वमिति । एतेन श्रोत्रसंस्कारे
ऽप्यनियमो वेदितव्यः यथोन्मीलनसंस्कृतमिन्द्रियं समानदेशान्यग्राह्यान्सकृ-
देव दर्शयति न तु किं चिदेवेति सर्वमवदातम् । अपि च सर्वशब्दस्य
तारत्वादिविषयोऽव्यङ्ग्यत्वे तदुपरमे विदूरे शब्देनोपलभ्येत न चोपलभ्यते ।
वायुमतान्यङ्ग्यत्वे तु प्रागुक्तनियमाभाव एव दोष इति शङ्कोत्तराभ्यां
दर्शयति । यदि चेति । अपि चायं नित्यः शब्दः प्रादेशिको वा स्याद्व्यापको वा २६१

१ । १९ वा उभयथा ऽपि दोष इति शङ्कोत्तराभ्यां दर्शयति । **निमित्तसन्निधा वेति ।** स्यादेतत् । मा भूद्वायुसंतानो व्यञ्जकः सन्ति खलु वायुगुणास्ते ऽस्य शब्दस्य व्यञ्जका इत्यत आह । **नादोपलब्धौ वेति ।** तावन्नादो नाम वायुगुणः कश्चिदुपलभ्यते अभ्युपेत्यापि ब्रूमः । नादोलब्धावपि यत्र वायुस्तत्र तद्गुणो ऽङ्गीकर्तव्यः न च विप्रकृष्टेन पुरुषेण शब्दोपलब्धौ तत्र वायुरस्ति तद्गुणो वा नादः वायुसंतानगमनं चास्मिन् प नेष्यते यस्माद्विप्रकृष्टेन पुरुषेण शब्दोपलब्धेर्न व्यञ्जको नाद इति । स्यादेतत् । मा भूद्वायुसंतानो मा च भूत्तद्गुणो नादः शब्दस्य व्यञ्जको वायवीयास्तु संयोगविभागा व्यञ्जका भवन्तीत्यत आह । एतेनेति । यस्तु मन्यते प्रत्यभिज्ञैव भगवती शब्दस्थैर्यसाधिनी तदानुगुण्याय व्यापिनः शब्दस्य गुणस्य द्रव्यस्य वा प्रयत्नप्रेरिता वायवो यावद्वेगं प्रतिष्ठमानाः श्रोत्रं श्रोत्रावच्छिन्नशब्दविशेषं वा संस्कुर्वन्तो व्यञ्जका इति कल्प्यते । न च समानदेशानां समानेन्द्रियग्राह्याणां नियतव्यञ्जकव्यङ्ग्यत्वं न दृष्टमितीमं प्रबन्धं प्रत्यभिज्ञा सूचयति सो ऽयमनया बाधितविषयो विलीयत इति तं प्रत्याह ।

२ । ८ **कृतकवदुपचारात् ।** अत्र चोपचारेण प्रयोगेण तत्कारणं शब्दभेदप्रत्ययमुपलक्षयति । अस्ति हि शुकसारिकामनुष्यनकुलप्रभवेषु गकारादिषु स्फुटतरो रूपभेदप्रत्ययः पुंसाम् । एवं स्त्रीपुंसप्रभवेषु स्त्रीपुंसभेदप्रभवेषु च । न चैवमौपाधिको न तु स्वरूपत इति वाच्यम् । तथा ह्यौपाधिकत्वमानुभाविकं वा स्यात् यथा कुङ्कुमारुणा तरुणीति । उपपत्तिगोचरो वा यथा कृपाणधारायां जले च प्रतिबिम्बितो रोचिष्णुतामा दीर्घश्यामलतायां मुखस्य न तावदानुभाविकं विदितोपाधेः यत्तु तद्भवति यथा विदितकुङ्कुमस्य कुङ्कुमारुणेति । शुकादिभेदमविदुषो ऽपि च काण्डपटाद्यावृते शुकादौ शब्दभेदप्रत्ययो भवति यत एतदुन्नयति शुकोदीरिता मञ्जुतमा गाथेति नाप्यौपाधिकत्वमुपपत्तिगोचरः न हि शब्दस्वरूपसमवायिनो भेदस्यौपाधिकत्वे किंचिदस्ति प्रमाणं मुखस्येव मणिदर्पणकृपाणागतस्य । न खलु विरुद्धपरिमाणेषु दर्पणादिषु विरुद्धपरिमाणानां प्रतिबिम्बानामुत्पादः संभवति । शब्दानां तु संयोगविभागयोनीनां गुणस्तद्भेदेन रूपभेदः । स्यादेतत् । तीव्रमन्दत्वादयो धर्माः परं भिद्यन्ते न तु तदाश्रयः शब्दः न ह्यन्यस्य भेदेनान्यो

भेत्तुमर्हति अतिप्रसङ्गात् । न हि रूपरसादीनां युगपद्भाविनां वा क्रमभाविनां वा संयोगादीनां भेदे द्रव्यं भिद्यते । कथमेकस्यैव शब्दस्यापर्यायेण तीव्रमन्दत्वादिविरुद्धधर्मसंसर्ग इति चेत् । अत्र सोपाधिको ऽस्तु मुखस्येवाभेदिनो ऽपर्यायेण कृपाणादिषु दीर्घपरिमण्डलत्वादिः । अथोच्यते न वयं धर्मभेदमात्रेण धर्मिणो भेदमाचक्ष्महे किं तु धर्मभेदमात्रप्रथा तत्र धर्मिभेदो ऽपि प्रथत इति निपुणं निरूप्यताम् । अस्ति हि गौर्गौरिति प्रत्यनुगमे ऽपि शुक्लकपिलकपोतिकासु गोषु धर्मिभेदावगाहिनी प्रथा । अस्ति च धर्ममात्रभेदावगाहिनी प्रथा धर्मिणमभिन्नमाकलयन्ती यथा बालप्रांशुः पृथुनखविशालवक्षाः प्रलम्बभुजो नीलोत्पलदलश्यामः सिंहास्यो नवाम्भोदध्वनिगम्भीरमधुरघोषश्चकोरेक्षणः रुचिरपुरुषेति। सेयं शुकशारिकामनुष्येषु युगपद्गकारमुच्चारयत्सु तीव्रमन्दानुनासिकादिगकारावगाहिनी प्रथा किमेकमेव धर्मिपुरुषमिव गकारमनेकधर्मवन्तमालम्बते एको गकारो नानाधर्मेति किं वा यथेयं शुक्ला गौरियं कपिला गौरिति तथा तीव्रो ऽयं गकारो मन्दो ऽयं गकारो ऽनुनासिको ऽयमिति भवन्त एव विचारं कुर्वन्तु । सेयं गोत्वमिव कपिलादिषु गोविशेषेषु गत्वं तीव्रमन्दादिशब्दभेदेष्वालम्बमाना प्रत्यभिज्ञा च भेदप्रथा चोपपत्स्यते । अपि च युगपत्तीव्रमन्दत्वादिलक्षणविरुद्धधर्मसंसर्गादपि गकाराणां परस्परतस्तावदवगतवद्भेदमनुमिमीमहे न चायं विरुद्धधर्मसंसर्गो न गकारादिनिष्ठो किं त्वौपाधिकः उपाधयश्च भिद्यन्तामेव न गकार इति सांप्रतम् । गकारसमवायिनः प्रतीयमानस्यासति बाधके चौपाधिकत्वकल्पनाऽयोगात् । प्रत्यभिज्ञानस्य च गत्वसामान्यालम्बनत्वेनोपपत्तेः । अपि चौपाधिकत्वपक्षे ताल्वादिसंयोगधर्मो वा तदभिघातप्रेरितध्वनिधर्मो वा तीव्रानुनासिकत्वादिः शब्दे समारोप्यत इत्याश्रेयम् । न चारोप्यमज्ञातमारोपः संभवति । न च ध्वनीनां ताल्वादिसंयोगविभागानां वा धर्मः श्रोत्रेण शक्यो ग्रहीतुं तदन्यधर्मवत् । न चैते तदानीं प्रमाणान्तरेणोपनीयन्ते स्मृता वा येनारोप्येरन् न च ध्वनिभेदसंस्कारवशाच्छ्रोत्रस्यैव तादृशः सामर्थ्यभेद आविर्भवति । यत आरोपयामहे ऽपि भ्रमो भवति । न च भद्रकशपात्राद्यापातमिश्रानवशात्स्मिन्नगोणायामपि प्रथमतवस्थित्वमात्राद्गोत्वारोपेण इति सांप्रतम् । सर्वासामेव भ्रान्तीनां प्रमाणगृहीतारोप्यारोपविषयप्रत्युपस्थापकत्वनियमात् । तदनुसारेण

मण्डूकवसाञ्जनादीनामपि वंशोरगभ्रमो व्याख्येयः । वंशानां तावदस्ति भूयः साहृप्यमुरगेण तेन दैवे तन्मात्रेण रूपेण शक्नुवन्ति गृहीताः स्मारयितुमु-रगम् । एवमपि तदन्यथा भ्रमो न भवति तत्र सर्पाकारव्यापृतश्च हेतुः हेतुः मण्डूकवसाञ्जनं च वंशाकारविधानमात्रहेतुः । न च भ्रममात्रदर्शिनः सदैव भ्रम इति प्रामाणिकः कार्यभेदस्य दुर्ज्ञानत्वात् । न चागृहीतसर्पस्य भवतीति युक्तं वक्तुम् । तस्मिन् जन्मनि जन्मान्तरे वा सर्पग्रहण भवात् । ध्वनिधर्मस्त्वनुनासिकत्वादिरस्मिन्नेव जन्मनि जन्मान्तरे ऽप्यवश्यं ग्रह एव । तस्माद्वर्णसमवेतो ऽनुनासिकत्वादिः प्रतीयमानो वर्णधर्म एव नौपाधिकः तथा च युगपद्विरुद्धधर्मयोगात्परस्परमन्यत्वं गकारादीनामिति युक्तम् । तदनेनाभिसन्धिनोक्तं कृतकवदुपचारादिति । तदेतद्वार्तिककारो व्याचष्टे । तीव्रं मन्दमिति कृतकमुपचर्यत इति । शब्दविषयत्वेन विरु-द्धधर्ममुपनयति । अतएव शब्दानित्यत्वहेतुनाह । कृतकवदुपचा-रादित्यनेनेति । सामान्यवत इत्येतावतैव जातिनिराकरणे सिद्धे विशेष ग्रहणं साधर्म्यं सामान्यमिति भ्रमनिराकरणार्थम् । तद्धि प्रमेयत्वसत्त्वादिकं गुण इव जात्यादावप्यस्तीति । विशेषपदेन तु जातिग्रहणं क्रियते तेन भवति । उपलभ्यस्येति सूपरिज्ञातस्फुटीभविष्यतीति । शङ्कते तीव्रशब्द-स्येति । तीव्रत्वधर्मान्वयव्यतिरेकानुविधायित्वात्तीव्रशब्दो न शब्दधर्मिय-मभिधातुमर्हतीति यथोक्तमात्रस्याक्षेप इत्यर्थः । निराकरोति न शब्दशब्देन समानाधिकरणस्येति । यतस्तु व्यक्त्याकृतिजातयः पदार्थ इत्यत्र प्रति पादयिष्यते । शङ्कते व्यञ्जकस्येति । स्वकारणात्त्वनु व्यञ्जकाच्छब्दस्थान-मुत्पन्नं तीव्रं मन्दं चेति । तेन तीव्रस्थानीयः शब्दो ऽपि तीव्र इव मन्दस्थानी येव शब्दो मन्द इव भासते न त्वाज्ञानतो ऽस्य तीव्रत्वं मन्दत्वं वा येन भिद्यत इत्यर्थः । निराकरोति नाभिभवेति । अन्यस्त्वतुल्येन समान-जातीयेनाभिभूयते न तु तदेव तेन न हि मध्यन्दिनोल्काप्रकाशवत्यां घटः पटुना सावित्रेण प्रकाशेन प्रकाश्यमानस्तमात्मानमात्मना ऽभिभवति । एवं गकारो ऽपि तीव्रध्वनिप्रकाश्यः गकारमात्मानमभिभवेत् । यदि त्वयं मन्द-ध्वनिप्रकाश्यो गकारस्तीव्रध्वनिप्रकाश्याद्गकारादन्यो भवति । ततो मध्य न्दिनोल्काप्रकाश इव सवितृप्रकाशेन चान्यत्वादभिभूयत इति युज्यते तदिद

शेषं भाष्यउक्तमिति । सत्यमन्यदन्येनाभिभूयते तथा ऽपि न गकारस्य २६३ ।
नानात्वमपि तु तद्ग्रहणानां तेषां चाभिभव्याभिभावकभावो न गकारस्ये-
त्यनेनाभिप्रायेण शङ्कते । ग्रहणमिति । निराकरोति । न ग्रहणभेदस्येति ।
अर्थभेदाधीननिरूपणो ग्रहणभेदो नार्थभेदमन्तरेण शक्यो निरूपयितुं न
च भेदेनानिरूपितः शक्यो ऽभिभाव्याभिभावकभावेन प्रत्येतुमित्यर्थः ।
नित्यं ग्रहणभेदः स्यादिति । ग्रहणभेददर्शनाभ्युपगमे नियतमर्थभेदो ऽभ्यु-
पगन्तव्यः । तथा च सर्वमेव भिद्यतइति नाभिन्नं किं चिद्भवेत् । भेदो
ऽपि न स्यादभेदापेक्षत्वाद्भेदस्येत्यर्थः । अभिभवानुपपत्तिश्चेति ।
यस्मिन्नेव सति गृह्ये ग्राह्यमनुपलब्धियोग्यमभिभवनीयं तदेव तेन विनाश्यते न
घात्यते ऽभिभव इत्यर्थः । सांख्यमते ऽपि नाभिभव इत्याह । अभिभवेति ।
पराजितं सांख्यं दृष्ट्वा नास्माकमयमनुयोग इति मन्यानो मीमांसकः
पुनः शङ्कते । सर्वत्रेति । निराकरोति नेति । भाष्यं चोदयति । यदि
संतानवृत्तिरिति । परिहरति । शब्दसंतानस्य निमित्तभेदाभिमु-
ख्येनादौ प्राप्तेरिति । निमित्तभेदो भेरीशङ्खनादशब्दश्च तदाभिमुख्येन यः
कर्णशष्कुल्यवच्छिन्नस्य नभसः श्रोत्रस्य भागः स्थितस्तस्मिन्नादौ स उत्पन्नः
शब्दस्तस्य प्राप्तिः पूर्वादिदिग्वर्तिस्थितशङ्खादिजन्मा ऽयं शब्द इत्यनुमीयते ।
एतदुक्तं भवति विशिष्टदिग्देशावस्थितशङ्खादिप्रभवशब्दसंतानजन्यस्य तस्य
शब्दस्य को ऽपि धर्मभेदः श्रोत्रगोचरो यस्मात्तस्य विशिष्टदिग्देशावस्थित-
शङ्खादिप्रभवत्वमनुमीयते न चासौ सामान्यविशेषो ऽव्यपदेश्यत्वान्नास्ति ।
न हीक्षुक्षीरगुडादीनां मधुरत्वावान्तरसामान्यभेदाः प्रत्यक्षवेदनीयाः शक्या
अव्यपदेश्यतया प्रत्याख्यातुम् । अनुभवस्य समानः तस्मादानुमानिकः
शब्दे दिग्देशव्यपदेश इति । यः शब्दसंतान इति । सन्तानेऽपीति समानः
न्यायः शब्दो ऽसौ जातो न सन्तनोतीति संबन्धः यस्मान्निमित्तादभिमुखे
नेति योजना । श्रावणशब्देति । तदभिमुखभागयुक्तः शब्द इति । तदेवं
स्वमतमुक्त्वा परमतमाह । एके त्विति । परोक्ते पक्षेऽपीति शेषः । यद्यपि
आत्यन्तिकानामपि कथं चिदभिमुखवृत्तित्वेन शब्दविशेषः संभवति तथा
ऽपि पूर्वापरादिविभागो नास्तीत्यत उक्तं जात्यन्तराणामिति । शब्दमात्रे २६५ ।
नास्तीति न सन्तानसंबन्धो नाभ्यन्तरावच्छिन्नस्येत्यर्थः । ननु यद्यन्य-

व्यापकत्वं नास्ति कथं तर्हि भवद्भिः केषां चिद्व्यापकत्वमव्यापकत्वं च केषां
१२ चिदिष्यत इत्यत आह । **वयं तु व्याप्तिमङ्गुलिरूपस्येति** । यत्र यथा
ऽयोपलब्धिलक्षणप्राप्तस्य यद्वस्तूपलब्धियोग्य सदुपलभ्यते तद्व्यापकं तेन
यथाकाशाव्यापकमपि शौक्ल्यं मन्दमन्दालोके कस्यांचिदवस्थायामुपलभ्यमानायामपि नोप-
लभ्यते योग्यताभावात् । ईदृशं संयोगादीनां व्यापकत्वमशक्यं गुणत्वेन
साधयितुमनुपलब्धिविरोधादित्याह । **न पुनः शब्दादय इति** । उपल-
ब्धियोग्या इति शेषः । सर्वेषामनुविषयं च व्याप्तिमत्त्वं व्यापकत्वाव्यापकत्वं
सविषयमाह । **समुदितस्थानानामिति** । समुदितस्थाना हि घटादयो
गोत्वादयश्च व्यापकाः एकसमुदाय्युपलम्भे ऽप्युपलब्धेः संयोगादयस्तु
समुदितस्थाना अव्यापकाः न ह्येते समुदायिन्येकस्मिन्नुपलभ्यन्ते अपि
तु समुदितेष्वेव एकाश्रयाणां रूपादीनां व्यापकानामव्यापकानां च
शब्दबुद्ध्यादीनामाश्रयोपलब्ध्यानुपलब्ध्यनुपलब्धी व्याप्त्यव्याप्ती इति योजना ।
एकसमुदायीत्येकग्रहणमशेषसमुदायिनिवृत्त्यर्थम् । न त्वेको विवक्षि-
तस्तद्ग्रहणं वा तेन कतिपयाश्रयोपलब्धौ तदनुपलब्धौ चोपलभ्यमानौ
ऽव्यापकौ व्यापकत्वेनोक्तौ भवतः । मूर्त्तिमत्त्वाद्भिन्न इत्यादिग्रहणेन सर्व-
गतत्वाभावित्यादीनि गृह्यन्ते । **कार्य्याकाशसंयोगो विप्रतिपत्तिविषय**
**इति** । यदि कार्य्याकाशसंयोगमात्रं पक्षीक्रियते ततो विनश्यदाधा-
रद्रव्यवर्त्तिना संयोगेनानैकान्त इति यावद्द्रव्यभावित्वमित्यपसिद्धान्तः
स्यादित्यत उक्तं विप्रतिपत्तिविषय इति । तेनैवानैकान्तिकः स्यादत उक्त-
मविनश्यदाधारत्वेनेति । तथा ऽपि घटस्य नीलद्रव्यसंयोगेन यावद्द्र-
व्यभाविना ऽनैकान्तिकः स्यादित्यत उक्तं क्रियावद्द्रव्यवृत्तित्वे इति ।
विवक्षितपरस्परविभागहेतुक्रियावत्त्वमिह ग्राह्यम् । [illegible] विप्रति-
८ **पत्तिविषया विभागिन आकाशादयः क्रियावद्द्रव्यसंयोगि-**
**त्वात्परमाणुवदिति** । अत्र यदाकाशादयो विभागिन इति साध्येत तत
आत्मादिरपि विभागिनः स्युरित्यपसिद्धान्तः स्यादत उक्तं **विप्रतिप-**
**त्तिविषया इति** । ततो मूर्त्तेन विभागो न इत्यभिमतं लभ्यते । संयोगस्य
चाव्याप्यवृत्तित्वमाह । प्रदेशवतोः [illegible] संयोगो ऽव्याप्यवृत्तिता
संयोगस्याकाशादावपि प्रदेशशब्दव्यपदेशात्तेनाकाशादौ प्रदेशोपचार इत्युक्त

संप्रति सामान्यान्तरउपचारबीजमाह एकस्य चेति । यथा घट एको ऽनेक- २९९ ।
मूर्तिमद्द्रव्यसंयोगी प्रदेशवानेवमाकाशमित्यर्थः । कतमस्मिन्नर्थ इति प्रश्नः ।
तस्यार्थः । तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः संतानानुमानविशे-
षणात् कारणद्रव्यस्य प्रदेशशब्देनाभिधानादिति सूत्रैर्यानैकान्तिकत्वपरिहा-
रादस्मिन्नर्थे सूत्रं न सूत्र्यते इत्ययुक्तमिति । उत्तरं निष्प्रदेशमाकाश-
मिति । न हि कारणद्रव्यस्य प्रदेशशब्देनाभिधानादिति सूत्रमाकाशादीनां
निष्प्रदेशत्वं साक्षाद् सूत्रयतीत्यर्थः । एवं स्थिते भाष्यकारीये प्रश्ने वार्तिककारः
स्वमुत्तरमाह । अर्थतो ऽधिगतेरिति । विषयान्तरं प्रश्नोत्तरयोराह
शब्दसंतानेति । भाष्यकारीयमुत्तरमाह द्वौ पक्षौ न व्यवस्थापयतीति ।
भाष्यस्यार्थः निष्प्रदेशत्वमात्मादीनां शब्दसंतानं च साक्षादाचक्षाणः सूत्र-
कारः एवं व्यवस्थापयेन्न तु तेनेदमभिहितमिति अनुमानतरोश्च पक्षाणां
रूपाणां चतुर्णां वा संपदः शाखा बहव इत्यर्थः । सतो ऽनुपलब्धिका-
रणाभाव इति । प्राक्प्रध्वंसाभावाभ्यां व्यभिचारो मा भूदिति सत इत्यु-
क्तम् । अथ जातिवादिनः सूत्रद्वयं तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ।
आवरणानुपलब्धेस्तावदनुपलब्धिर्न संभवति । अनुपलब्धिस्वरूपविरोधात् ।
तस्मादावरणानुपलब्धिरेव वक्तव्या तथा आवरणानुपलब्धेरभावे सत्यावर-
णोपलब्धिस्तया स्यादावरणसद्भावः । ज्ञानस्य निरालम्बनस्यायोगात् । द्वितीयं
सूत्रम् अनुपलम्भादनुपलब्धिसद्भाववन्नावरणानुपपत्तिरनुपलम्भात् । यदि पूर्वो-
क्तदोषभयादनुपलभ्यमाना ऽप्यावरणानुपलब्धिरस्ति तथा सत्यनुपलब्धेरनै-
कान्तिकत्वान्नावरणाभावो ऽनुपलम्भादिति । तदिह द्वाभ्यां सूत्राभ्यामनैका-
न्तिकत्वं दर्शितम् अस्याशयतो भाष्यम् एवं च सति तत्त्वमिति । तदेत-
द्वार्तिककारो व्याचष्टे एवं चेति । सूत्रयोस्तात्पर्यं प्रश्नपूर्वकमेकत्र दर्शयति
को ऽस्य वाक्यस्येति । अथ सिद्धान्ती पृच्छति कथं पुनरिति । जाति-
वाद्याह किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वादिति । सिद्धान्त्याह एवं
सतीति । यद्यावरणानुपलब्धिरुपलभ्यते मानसेन प्रत्यक्षेण तदा नानैकान्ति-
कत्वं न चावरणसद्भावः । उत्तरवाक्यमिति । नास्त्युत्तरवाक्यमित्यर्थः ।
नास्योत्थानमस्तीति । न सूत्रद्वयस्याप्युत्थानमस्तीत्यर्थः । ननु पूर्वेणैव ३०१ ।
सूत्रेणावरणोपपत्तौ दर्शितायां कृतमनुपलम्भादित्यनेन सूत्रेणेत्यत आह ।

१ । ४ अभ्यनुज्ञावादेनेति । पूर्वसूत्रेणानुपलब्धेरनुपलम्भादभाव उक्तः इह त्वनुप-
लम्भादपि यद्यनुपलब्धेरभावादिति तदनेनाभ्यनुज्ञया अनैकान्तिकत्वमु-
च्यत इति नापार्थकमेतत्सूत्रमित्यर्थः । सूत्रगतो ऽपिरभ्युपगमार्थमद्योतयति ।
एतदेवाह भाष्यकारः । यद्यप्यनुजानाति भवानिति । तदनेन सूत्रद्व-
येनानैकान्तिकत्वमुक्तमिति स्थितम् । अस्योत्तरसूत्रम् ॥

अनु–तुः (सू. २१) ॥ जातिवादनुपलब्धेरनुपलब्धिर्नास्ति विरो-
धादिति मन्यते तत्र विधिविषयप्रमाणगोचरता ऽनुपलब्धेः विरुध्येत ।
ननु निषेधगोचरप्रमाणविषयता ऽपि तत्रत्योपलब्धिं निषेधता प्रमाणेन
भवता ऽनुपलब्धिग्रहणे न विरोधमावहतीति तदर्थं सूत्रार्थः । अनुपलब्धे-
रभावत्वानुपलब्धेरनुपलम्भात्मकत्वाद्भावत्वोपलब्धिनिषेधात्मकत्वात् तद-
नुपलब्धेरनुपलम्भादित्यभावत्वोपपत्तौ न हेतुः । अभिद्रुत्वात् निषे-
धविषयेणानुपलब्धेरनुपलम्भादिति तदेतद्भाष्यकारो व्याचष्टे । यदुपलभ्य-
तइति । यदुपलभ्यते विधिविषयेण प्रमाणेन तदस्ति यन्नोपलभ्यते प्रतिषे-
धविषयेण प्रमाणेनोपलभ्यते तन्नास्तीति । तस्मादनुपलम्भात्मकं निषेध-
विषयप्रमाणगम्यमसदिति स्थितम् । ऽउपलब्ध्यभावरूपानुपलब्धिः सेयमभा-
वत्वान्नोपलभ्यते विधिविषयेण प्रमाणेन । शेषं सुगमम् । अस्य वार्त्तिक-
कारः परमतात्पर्यमाह । अतथाजातीयेनेति । अनुत्तरं जात्युत्तरमि-
त्यर्थः । यथाजातीयक इति । उपलब्धस्य हि शब्दस्यास्त्यनुपलब्धिकारणे
प्राङूर्ध्वं चोच्चारणादनुपलभ्यमानस्यानित्यस्य सधर्मा नान्य आत्मादिर्द्रव्यो
ऽनित्य इति । ननु प्राङूर्ध्वं चोच्चारणान्मा भूच्छब्द इति तथापि ऽपि नित्या-
न्तरैर्धर्मैण कस्मान्न नित्यः शब्दः न ह्यात्माकाशादयो नित्याः सर्वथा
सर्वथा सधर्माण मा भूदेषामभेद इत्यत आह । उक्तं चेति । अनित्यत्व-
साधनमाह । अनित्य इति । प्रत्यक्षत्वादित्युच्यमाने गोत्वादिभिर्व्यभिचारः
स्यादत उक्तं व्यापकद्रव्ये समवाये सतीति । तथा ऽप्यात्मसमवायिने-
कत्वेन व्यभिचारः स्यादत उक्तम् । अव्यापकस्यासमवाये सतीति ।
तथा ऽप्यात्मसमवायिन्यस्येति अमूर्तत्वादित्युच्यमाने घटादिभिः प्रदेशवृत्तिः
प्रथमे पक्षे व्यभिचारो ऽत उक्तं सर्वदेति । तथा ऽपि क्रियागुणादिभिर्व्य-
भिचारस्तेषामपि हि समवायिकारणं प्रति इत्यत उक्तम् । द्रव्यस्य सत

इति । तदेवं स्वपक्षसाधनमुक्त्वा विप्रतिपत्तिनिमित्तं परपक्षसाधनमुपन्यस्य निराकरोति । अथ शब्दस्येति । अस्पर्शेन कर्मणोभयतो व्यभिचारे लब्धे ३१ नित्येनाणुना व्यभिचारोद्भावनं कृतकत्वानित्यत्वयोस्तत्त्वमव्याप्तिकत्वनिराकरणार्थं द्रष्टव्यम् । अयं तर्हि हेतुः संप्रदानादिति । संप्रदीयमानत्वादित्यर्थः । दातृप्रतिग्रहीत्रोरन्तराले शब्दो ऽस्ति अध्यापनाद् गुरुणा शिष्याय दीयमानत्वाद् धनुर्वेदविदा ऽऽचार्येण शिष्याय दीयमानेष्वादिवदिति । यद्यन्यन्नाम करोति भवेत् ततो ऽन्यत्वे ऽप्यभ्यासोपचारादित्यनेनानैकान्तिकत्वमुद्भाव्येत तदेव नास्तीति वाक्छलेन प्रत्यवतिष्ठते ।

अन्य-यः (सू. ३०) ॥ तस्य परिहारसूत्रम् ।

तद्-न्वः (सू. ३१) ॥ तयोरन्यानन्ययोर्मध्ये ऽनन्यस्यान्यापेक्षसिद्धेरित्यर्थः । न ह्यन्यस्वरूपातऽनन्यदिति परस्मादप्यनन्यद्भवितुमर्हति । न हि नीलमात्मनो ऽनन्यदिति पीतादप्यनन्यदिति । अन्यदेव हि पीतान्नीलमिति परमार्थः । अयं तावत्प्रत्ययः पुरुषान्तरे निवर्त्तमानो दृष्ट इति । यदा खल्वेकस्य पुरुषस्य तत्प्रत्ययो भवति तदा ऽपि च न पुरुषान्तरस्य तस्मात्प्रत्ययाव्यावृत्तिरसिद्धैवेति । एवमेतदिति । सत्यं विशेषदर्शनं तत्प्रत्ययनिवृत्तिहेतुः तदभावे तु विशेषादर्शनस्य न शक्यं संशयहेतुत्वं निवारयितुमित्यर्थः । यत्पुनरेतद्गोशब्द इति । गोशब्दो गोशब्द इत्येकाकारः प्रत्ययो नैकमन्तरेण भवितुमर्हति । अथ भ्रान्तः कस्मान्न भवतीत्यत आह । न च गोशब्दस्येति । भ्रान्तत्वे हि ततो गोशब्दादर्थप्रत्ययो भ्रान्तः यथा समारोपितधूमभावया मशकवर्त्या धूमध्वजानुमानम् । तस्मादभ्रान्तो गोशब्दैकत्वप्रत्ययः स्थायितामस्य सूचयतीत्यर्थः । दूषयति एतदपीति । युक्ता तु कारणसामान्यात्तत्प्रत्ययस्याव्यावृत्तिरिति ३७५ गोशब्दबुद्धेः कारणमालम्बनं गोशब्दत्वाख्यं सामान्यं सत्यमेकत्वं गोशब्दत्वमिति यावत् । तस्मात्तत्प्रत्ययस्य व्यावृत्तिर्युक्ता गोशब्दो गोशब्द इत्येवंरूपा कथमिति प्रश्नः गोबुद्धौ गोबुद्धिप्रत्ययो न व्यावर्त्तते जात्यभिप्रायमेतद्वचनं गोबुद्धाविति । यथा हि गोबुद्धिषु भिन्नास्वपि परस्परं गोबुद्धिर्गोबुद्धिरित्यनुगताकारभाविनी प्रथा गोबुद्धित्वसामान्योपधाना स्वकारणभूता गोबुद्धीरालम्बते एवं गोशब्दो गोशब्द इति बुद्धिरपि गोशब्दत्वोपधाना

गोशब्दव्यक्तौ पुनर्गोशब्दव्यक्तिमेकामनेकदेशकालव्यापिनीम् । न चास्या
गोशब्दबुद्धिरित्यत्रापि चातात्त्विकवचनम् । गोशब्दो गोशब्द इति बुद्ध्यनु
गति । सामान्यनिबन्धना अनुगतित्वे सति गोशब्दबुद्धिसमन्वितत्वात् ।
गोशब्दबुद्धिर्गोशब्दबुद्धिरित्यनुगतबुद्धिमद्धेति । भिन्नमभेदेन विद्वान् यस्त्वा
नुपलब्धविशेष एव निवर्तते त प्रति तस्य वस्तुनः किं विशेषोऽस्ति
१५ नास्तीति भवन्त एव प्रष्टव्याः उभयत्र दोषमाह यस्त्वस्तीति । आत्मक-
मित्र । भिन्नमभिन्नमित्यर्थः । अशेषपुरुषविषयतयेति । साधारणेनेत्यर्थः ।
कारणद्रव्यविभाग इति । विभागेनासमवायिकारणसंयोगविनाशो लक्षित
स्तत्कार्यत्वात् । अनपदेशो हेतुरित्यर्थः । उभयमितीति । यथा क्रमेलक
विषाणित्वादश्वत्वेन साधयति तदाऽस्य न विषाणं नापि तत्सम्बन्ध
यथा विषाणित्वं क्रमेलकेऽसिद्धं तथाऽनुमानेन विनाशकारणोपलब्धेः तद-
नुपलब्धिरसिद्धेति । अश्वविषाणसंबन्धस्याभावादिति । अश्वत्वविषा
णित्वयोर्न कोऽपि सम्बन्धोऽश्वेषु सिद्धो नास्ति तस्माद्विरोधादनुमानमे
तद्योगमित्यर्थः । तस्मात्तया विरुद्धाद्धेतोरनुमानमपदेशमसिद्धादपी
त्यर्थः । शङ्कते कर्मत्ववदिति चेत् । निराकरोति । तच्च न आश्र-
यस्यानित्यत्वात् । कर्मत्वाश्रय कर्म तस्यानित्यत्वादित्यर्थः । शब्दस्य
नित्यस्याश्रयत्वमनुपपन्नम् असमवायिकारणानुपपत्तेरिति ब्रूमः । तत्राश्रयानित्य-
त्वादिति वक्तव्याश्य विभजते कर्मत्वस्य पुनरिति । प्रतिघातिद्रव्य-
संयोगस्त्वन्त्यस्य शब्दस्य निरोधक इति भाष्यम् । तस्यार्थः । प्रति
घातिद्रव्य कुड्यादि तत्संयोगो नभसः । एतदुक्तं भवति घनतरद्रव्यसंयुक्त
नभो न शब्दसमवायिकारणतां प्रतिपद्यते ततश्च सन्नप्यसमवायिकारण
शब्दो न शब्दान्तरमारभते तस्य च स्वकारणात् तत्कारणस्य तस्माद्विनाशो
भवतीति द्रष्टव्यम् । एवमन्यत्रापीदृश एव शब्दविनाशहेतुरूहनीय इति ।

१ भूतस्य शब्दो नित्य इत्याह । यस्त्वाश्रमभिरन्यभावानापत्तिरिति । यदि
घटादिना व्यञ्जकेनान्यवृत्तिना वाऽव्यक्तेन घटान्यवृत्तिना वा नित्य शब्दो
व्यज्येत तारतारतरतारतममन्दमन्दतरादिश्रुतिभेदो न स्यात् ।
नित्यस्य च शब्दस्य न स्वाभाविको भेदो नाप्यौपाधिक इत्युपपादितम
धस्तात् । यदि तु तारत्वादयस्तावन्त एव शब्दा नित्यास्तावन्तस्त एव

युगपदेव गम्येरन् विशेषाभावाद् एको ह्ययं व्यञ्जकः स्थिर इति । अथ सन्तानवृत्तिस्तथा ऽपि सर्वेषां तत्सन्निपतिताः समर्था इत्यादिनैव सर्वे व्यज्येरन् न तु समानदेशानां समानेन्द्रियग्राह्याणां व्यञ्जकनियमो युक्त इत्युपपादितमधस्तात् । कारणत्वे तु घण्टास्थस्य संतानवृत्तेर्युक्तं यत्तारतमादिभेदेन कारणभेदात्कार्यभेद इति तात्पर्यार्थः । युगपदनेकशब्दोप- ३०६ लब्धिप्रसङ्ग इति । अनेकस्य तारतमादेः शब्दस्योपलब्धिप्रसङ्ग इत्यर्थः । घण्टास्थं चाभिव्यक्तिकारणं कथमन्यत्र वर्त्तमानमिति । श्रोत्रे वर्तमानमित्यर्थः । द्वितीयं कल्पमाशङ्क्य दूषयति । अथान्यगतमिति । घण्टासंबन्ध्येष शब्द इति हि तावल्लौकिकप्रत्ययः सो ऽयमन्यगते शब्दव्यञ्जके यथैकस्यां घण्टायां भवति तथा घण्टान्तरेष्वपि तत्प्रत्यासन्नेषु भवेदविशेषात् । तस्मादेकघण्टास्थत्वे नियमहेतुर्वक्तव्य इति । असति शब्दभेदे श्रुतीनामिति । शब्दज्ञानानामित्यर्थः । नाद इति वायुधर्मो ऽभिधीयतइति शङ्कते व्यामोहमत्यय इति । यथा हि वस्तुतः स्वच्छधवले स्फटिकमणौ लाक्षारसावसेकतिरस्कृतधवलिम्नि लोहितः स्फटिक इति प्रत्ययः एवमभिव्यञ्जकवृत्तिस्तारत्वादिर्भ्रान्त्या शब्दे प्रतीयते इत्यर्थः । निराकरोति न विशेषहेत्वभावादिति । न हि समीचीनात्प्रत्ययात्तारो ऽयं शब्द इति प्रत्ययस्य कश्चिद्विशेषहेतुरस्ति बाधकप्रत्ययो येनैष मिथ्याप्रत्ययः स्यादित्यर्थः । न च निर्बीजा भ्रान्तिरपि संभवितुमर्हति दीर्घत्वादिभ्रमाणां तु शब्दे ऽस्ति बीजमित्याह यदि चायमिति । यानि खलु दीर्घाणि वंशप्रभृतीनि यथावयवो वा ऽपचयः समानजातीयोपचय इहाप्यविरतभूतो शब्दसंताने विप्लुतकारणनिष्पन्ने समस्ति समानजातीयोपचय इति तत्साधर्म्याद् दीर्घत्वभ्रम एवं शब्दसंतान एव तारो महानित्युच्यते तत्राप्यस्ति समानजातीयोपचयो ऽस्ति च स्फुटतरत्वं महानपि स्फुटतरो ऽयमपि तथेति महानित्युच्यते । शङ्कते तुल्यमिति चेत् । यथा ह्यनित्यवादे घण्टास्थमवस्थितं संतानवृत्ति न युगपत्तारमन्दानुत्पादयति किं तु क्रमेणैव एवं नित्यानपि शब्दान् क्रमेण व्यङ्क्तीत्यर्थः । निराकरोति । न तन्निमित्तस्य कदाचिद्भावात् । न तावन्नित्यवादि- ३०७ भिस्तारत्वादिधर्मभेदेन शब्दभेदो ऽभ्युपेयते तथा चैकेनावस्थितेन घण्टा-

स्येन सन्तानवृत्तिना व्यज्यमानेष्वेकस्मिन् शब्दे नित्ये श्रुतिभेदः कादा-
चित्को नोपपद्यते । शब्दे त्वनित्ये ऽन्यस्मिन्नन्यस्मिन् क्रियमाणे संतान-
वृत्तिना कारणेन तद्भेदात्कार्यत्वात्कादाचित्कत्वाच्च श्रुतिभेदोपपत्तिरिति
३१ वैधर्म्यमित्यर्थः । तच्च कारणमिति । निमित्तकारणमित्यर्थः । पाणि-
संश्लेषमपेक्षमाणादिति । सवेगद्रव्यसंयोगाद् घण्टायां कर्म कर्मवद्-
घण्टाकाशसंयोगात्तदृशाच्छब्दश्चेत्यर्थः. कालः तत्कर्म पाण्यभिघातमपेक्ष-
माणं विभागसमकालं संस्कारं वेगाख्यं करोति । सा घण्टा चलन्त्याध्यात्मिकं
वायुमुपगृह्णाति घण्टावयवसंयुक्ता वायुपरमाणवः यद्वाऽऽध्यात्मिको वायुः
तदुपघ्नो घण्टायाः स्ववेगमपेक्षमाणाया वायुसंयोगाद्भूयो क्रियोत्पादकत्व
ततश्चानिलकर्मणो घण्टानिलसंयोगो वायुगतवेगापेक्षो घण्टायां कर्मारभते
तदिदमाह सा च वायुना ऽभिहता पुनः कर्म करोति । तदेवं वायुघण्टा-
संयोगो घण्टावेगापेक्षो घण्टाकाशसंयोगश्च शब्दमारभत इति द्रष्टव्यम् ।
ततश्च कर्मणा संस्कारः संस्काराच्च पुनः कर्म शब्दश्चेत्यपि द्रष्टव्यम् । सुग-
ममन्यत् । देशयति अथ घण्टास्थ इति । न खलु कारणविनाशे कार्यो-
च्छेदो मा भूत्कुलालादिनिवृत्तावपि घटादिनिवृत्तिरित्यर्थः । परिहरति
न ब्रूम इति । यद्यपि निमित्तनिवृत्तावपि कार्यं निवर्तते यथा ऽपेक्षाबुद्धि-
नाशाद् द्वित्वादि तथा ऽपि निमित्तनिवृत्तावपि तदनिवृत्तिमभ्युपगम्यैव
परिहार इति मन्तव्यम् । सिंहावलोकितन्यायेन पूर्वोक्तं हेतुं दूषयति ।
विनाशेति । प्रत्यक्षेण शब्दविनाशकारणानुपलब्धेश्चावस्थाने शब्दस्य शब्दो-
पलब्धेरपि नित्यत्वप्रसङ्गः । न हि तस्या अपि विनाशकारणं प्रत्यक्षेणोप-
लभ्यत इति तदनेन विनाशकारणानुपलब्धिरित्यस्यानैकान्तिकत्वमुद्भावि-
तम् । घण्टेति भाष्यं. प्रत्यर्थिभूते । कम्पसमानाश्रयस्येति । अनुवृत्तो
नादः शब्दो ऽनुनाद इति । वैयधिकरण्ये हीति । द्रव्यप्रश्लेषासमाना-
धिकरणस्येव संस्कारस्योच्छेदः स्याद् न व्यधिकरणस्य शब्दस्य व्यधिक-
रणस्य तूच्छेदाभ्युपगमे ऽतिप्रसङ्गः स्यात् तस्मात् कम्पसमानसंस्कारसमा-
नाश्रयः शब्दो ऽभ्युपगन्तव्यः । तदनेनाकाशाश्रयत्वं शब्दस्य प्रतिषिद्धं
तदेतद्वार्तिककारो व्याचष्टे । व्यधिकरणत्वादयुक्तमिति । चस्योत्तर-
मूलम् ।

**अस्प-घः (सू. ३७) ॥** प्राप्यकारित्वमिन्द्रियाणां व्यवस्थितं प्राक् । घण्टाद्याश्रयः शब्दो न श्रोत्रं प्राप्नोति । एवं हि प्राप्नुयाद् यदि घण्टा कर्णशष्कुलीमागच्छेत् कर्णशष्कुली वा घण्टां न चैतदुभयमस्ति । न चाहंकारिकमिन्द्रियं व्यापीत्युक्तम् । तस्माच्छब्दाधारो निःस्पर्शो व्यापी चाकाशस्तदाधारः शब्दः श्रोत्रमायाति संतानवृत्त्येति युक्तं तथा च श्रवणमस्योपपन्नं नान्यथेति । तदेतद्वार्त्तिककृद्भणति अस्पर्शेति । येन केन ३०९ चिदिति । मन्दतरेण वा मन्दतमेन वा कारणशब्देनेत्यर्थः । अनेकः संस्कार इति सत्यं शब्दभेदादिति । एकस्य हि संस्कारस्य धर्मभेदकल्पनायां कल्पनागौरवप्रसङ्गः संस्कारस्तावदेको धर्मो धर्मभेदाश्चेति । तदिह धर्मभेदस्थाने ऽस्तु संस्कारभेदः कृतमेकेन धर्मिणा । न च संस्कारभेदेषु धर्मभेदाः कल्पनीयाः संस्कारभेदमात्रादेव कारणात्कार्यभेदोपपत्तौ तद्गतधर्मभेदकल्पनावैयर्थ्यादिति भावः । यस्य च वैशेषिकस्यैकः संस्कारस्तस्यैषः पातः प्राप्नोति संस्कारस्य हीयं मूर्तद्रव्यसंयोगो विनाशको ऽविनाशको वा विनाशकश्चेद् आद्येनैव मूर्तद्रव्यसंयोगेन तस्य विनाशाद् गत्वैव यावद्गन्तव्यमिषोः पातप्रसङ्गः । द्वितीये तु कल्पे कृतकस्यापि संस्कारस्य विनाशकारणाभावेनाविनाशान्न कदा चिदपि पातः स्यात् प्रयोगश्च इष्वादिवेगः क्षणिकः वेगत्वात् घटादिगतवेगवदिति ।

**विभ-से (सू. ३८) ॥** सांख्यानां रूपरसगन्धस्पर्शशब्दसमुदायो वीणावेणुशङ्खादिद्रव्यं तत्र समासे समुदाये स्थित एव व्यज्यत इति दर्शने तस्मिन्समुदाये सांख्याभिमते विभक्त्यन्तरोपपत्तेश्च न व्यज्यते शब्दः यदि समुदाये व्यज्येत शब्दः विभक्तिश्च षड्जधैवतगान्धारादिभेदेन विभागान्तरं न षड्जजातीयस्यैव तारमन्द्रादिरूपं नोपपद्यते न हि तद्गतानां गन्धादीनामेकस्मिन्नेव द्रव्ये वीणादौ नानाजातीयानां च प्रतिवर्णं भेदो दृश्यते तस्माद्विभक्त्यन्तरोत्पत्तेर्न समासे व्यज्यते शब्दः अपि त्वाकाशगुणः क्रियत इति सांप्रतम् । सूत्रव्याख्ययैव भाष्यवार्त्तिके व्याख्याते । तदेवं रूपादिसन्निविष्टः शब्दो व्यज्यत इति सांख्यमते दूषिते स एव सांख्यो वर्णेषु प्रकृतिविकारभावश्रुतेर्मृत्सुवर्णादिवत्परिणामिनित्या वर्णा इति यदि प्रत्यवतिष्ठते तत्र परीक्षामारभते द्विविधश्चायं शब्द इति । विकारोपदेशो ऽपि न भा-

ध्वनिमात्रे शब्दे ऽस्तीति न तस्य परिणामिनित्यतामापादयितुमर्हति केवलं
वर्णात्मन्यापादयेद् यद्यसंदेहः स्यात् अस्ति तु तथापि संदेहः । तथा
हि इको यणचि इत्यादिकं विकारोपदेशमाचक्षत एके अन्ये त्वादेशोपदेशं
तत्र व्याख्यातृविप्रतिपत्तेः संशयः । तन्नापरीक्ष्य शक्यमवधारयितुमित्यर्थः ।
तत्र परीक्षायामादेशोपदेशस्तत्त्वमित्यवधारयति । **आदेशोपदेश इति** ।
सुवर्णजातीयाः खल्ववयवा अन्यतमव्यूहपरित्यागेनान्यतम व्यूहमापद्यमाना
रुचक इति वा वर्द्धमान इति वा परिणमन्ते अस्ति हि तेषु सर्वेषु
सुवर्णजातीयानामवयवानामनुगमः न तु यकारे इकारस्य वा तदारम्भ-
कस्य वा अवयवस्यानुगममीक्षामहे । तस्माद्विकाराभावादादेशत्वमस्य
निश्चिनुम इति । उपपत्त्यन्तरं वार्त्तिककारो दर्शयति । **भिन्नकरणयोश्चेति** ।
यदि हीकारविकारो यकारः स्याद् यकारप्रयोगायेकारमुपाददीतास्त्वकारं
विवृतकरणं पूर्वमुपाददीरन् । तन्निरपेक्षास्तु यकारं प्रयोक्ष्यमाणा ईषत्स्पृ-
ष्टकरणमुपाददते तस्मान्नेकारविकारो यकार इत्युत्पश्यामः । उपपत्त्यन्तर-
माह । **अविकारे चेति** । कारकज्ञापकयोर्हेत्वोर्विशेषमाह । **उभयत्रेति** ।
उपपत्त्यन्तरमाह । **प्रयुज्यमानेति** । यथा हि क्षीरं कालविपाकापेक्षं दधि
भवद्दृश्यते न तथेकारो यकारो भवन्नित्यर्थः । यदि न विकारः कथं
तर्हि शब्दान्वाख्यानमिको यणचीत्यत आह । **अविकारे चेति** । इकः
प्रयोगप्रसङ्गे संहितायां यणः प्रयोगमाह तत्सूत्रं न पुनरिग्विकारं यणमि-
त्यर्थः । ननु मा भूद्विकारः परिणामो ऽर्थान्तरं तु भविष्यति ततो नित्या
वर्णा भविष्यन्तीत्यत आह । **एतावच्चैतदिति** । परिणामो वेत्यापाततः
कार्यकारणभावो वेति परमार्थः । न जातु क्षीरं तदवयवा वा दधिरूपेण
परिणमन्ते न ह्यवयवा अवयविस्वभावाः तस्मात्कार्यकारणभाव एव
तात्त्विक इति । स च वर्णेषु नास्ति इगनपेक्षस्य यणो निष्पत्तेः । तस्मा-
दिक्प्रयोगप्रसङ्गे संहितायां यणः प्रयोग इत्यन्वाख्यानार्थं इति । इतश्चा-
यमादेशोपदेश इत्याह । **वर्णसमुदाय इति** । वर्णस्यैकस्य वास्तवत्वात् कदा
चिद्विकार उपपद्यते बुद्धिः समाहारमात्रस्य तु तत्समुदायस्य न विकार-
संभवः । तस्मात्तत्कामेनाप्यादेशोपदेशो वक्तव्यः । स वरं कृभ्वादेके-
स्मिन्नप्यस्तु वर्णे इति इत्यर्थः । इतश्च न प्रकृतिविकारभावः । प्रकृति-

विवृद्धाविति । महद्भिः खलु तूलपिण्डैरारब्धस्स्थूलः पिण्डो ऽल्पैश्चारब्धो महानल्प इति दृष्टं तद्वदिहापि दीर्घकारविकारस्य यकारस्येकारविकारा- द्भवितव्यं विशेषेण न चास्ति विशेषः तस्मान्न प्रकृतिविकारभाव इत्यर्थः । अस्याक्षेपसूत्रम् ।

न्यून-तुः (सू. ४१) ॥ अल्पेन हि न्यग्रोधबीजेनारब्धो न्यग्रो- धस्तरुर्महान् ततो ऽतिमहता वा नारिकेलबीजेनारब्धो नारिकेलतरु- रल्पः नारिकेलबीजैरेव परस्परापेक्षमाणसमैरारब्धः सम इति । अस्य प्रत्या- ख्यानसूत्रम् । द्विविधस्यापि हेतोरिति । यदि च न्यूनसमाधिकोपल- भा- ब्धेरिति साधनं तदा द्विविधस्य हेतोरभावाद् दृष्टान्तमात्रस्य चासाधक- त्वात् प्रतिदृष्टान्तस्य च संभवादित्येतद् दूषणम् । यदि च न्यूनसमा- धिकोपलब्धेरित्यनेनानैकान्तिकोद्भावनं प्रकृत्यनुविधानस्य क्रियते तदा दूष- णपक्षे नातुल्यप्रकृतीनां विकारविकल्पादिति दूषणम् । अनैकान्तिकदोषस्या- संबन्धत्वं नाम न्यूनसमाधिकत्वे तु प्रकृत्यनुविधानं विकाराणामप्रच्युतम् । तथा ह्यतुल्यायाः प्रकृतेर्विकारा विकल्पन्ते प्रकृतिभेदमनुविधीयन्ते न जातु न्यग्रोधबीजाद् नारिकेलपादपो भवति भवति च न्यग्रोधबीजान्न्यग्- रोधपादप इति । एतदुक्तं भवति प्रकृतिभेदानुविधानं विकारभेदानां ब्रूमो न पुनस्तद्वृद्धिह्रासाभ्यां तद्वृद्धिह्रासौ येनानैकान्तिकत्वमुद्भाव्येत तस्मा- दनैकान्तिकोद्भावनमसंबद्धमित्यर्थः । न त्विवर्णमनुविधीयते यकार इति भाष्यं तस्यार्थो न त्विवर्णभेदमनुविधीयत इति । तस्मादनुदाहरणं न्यूनसमाधिकभावे द्रव्यविकार इति । अस्याक्षेपसूत्रम् ।

द्रव्यविकार इति । न प्रकृतिभेदमवश्यमनुविधीयन्ते विकाराः द्रव्य- त्वेन तुल्यत्वे ऽपि प्रकृतीनां विकारवैषम्यदर्शनात् । एवं वर्णत्वेन तुल्यत्वे ऽपि विकारवैषम्ये तथा च दीर्घह्रस्वाभ्यां वैषम्ये विकारवैषम्यं भविष्यति प्रकृतिसाम्य एव विकारवैषम्यम् इति भावः । तत्र प्रत्याख्यानसूत्रम् । न विकारधर्मेति । यद्यपि प्रकृतेर्द्रव्यत्वमभेदस्तथा ऽपि विकारभेदे प्रकृतिभेद एवोपयुज्यते न पुनः प्रकृतेरभेदः तद्विकाराणां च यदभिन्नं रूपं द्रव्यत्वं तत्र तस्योपयोग इति स्थिते परिहारो ऽन्यथ (स्याक्षेपसूत्रं द्रव्यविकार इति ।)*

---

* ( ) एतन्मध्यस्थ पाठः ३ पु नास्ति ।

१ । ८ यदर्थं परिहार उक्तः । इमश्च न सन्ति वर्णविकारा इत्याह । विकारेति । नो खलु क्षीरविकारो दधि पुनः क्षीरं दुग्धमित्यर्थः । अननुमानादिति प्रमाणाभावमुपलक्षयति । प्रत्याक्षेपः **सुवर्णादीनामिति** सूत्रम् । साधनपक्षे दूषणं व्यभिचारादिति । दूषणपक्षे दोषमाह । **सुवर्णादाहरणोपपत्तिश्चेति** । तथा हि । ये सुवर्णजातीया अवयवा रुचकत्वमापन्नास्त एव पूर्वव्यूहपरित्यागेन वर्धमानतामापन्नाः पुना रुचकत्वमापद्यन्ते तदवयवानां तत्र प्रत्यभिज्ञायमानत्वात् । न त्विहेकारो यकारानुगत इकारयकारानुगतो वा ऽन्यः कश्चिद्धर्मो दृश्यते य इत्वं परित्यज्य यत्वमापद्यते वर्णत्वं त्वनुगतमपि न धर्मि किं तु धर्म एव । न च निवर्तमान इकारो यकारस्य धर्मो भवितुमर्हतीति धर्मधर्मिणोः समानकालत्वादित्यर्थः । ननु दध्यत्रेति प्रयोगे कदेकारस्योत्पत्ति निरोधः । तथा दधि अत्रेति प्रयोगे कदा यकारस्योत्पत्ति निरोध इत्यत आह । **तदेतदवग्रहसंधानहानि** । अवग्रहो ऽसंहिता दधि अत्रेत्युच्चार्य दध्यत्रेत्युच्चार्यते दध्यत्रेति वा संधाय दधि अत्रेत्यवगृह्यत इत्यर्थः । जातिवादी प्रत्यवतिष्ठते । **नित्यपक्षे तावदिति** । यथा हि सत्यपि नित्यत्वे के चिदतीन्द्रियाः यथा परमाण्वाकाशादयः के चिदैन्द्रियकाः यथा गोत्वादयः एवं सत्यपि नित्यत्वे परमाण्वाकाशादयो न प्रकृतिविकारभूताः वर्णास्तु प्रकृतिविकारभावमापत्स्यन्ते नित्या अपीत्यर्थः । सेयं विकल्पसमा जातिरित्याह **विरोधादिति** । न खल्वैन्द्रियकत्वानैन्द्रियकत्वाभ्यामस्ति कश्चिन्नित्यत्वस्य विरोधः । प्रकृतिविकारभावेन त्वस्ति न हि सम्भवति कार्यं च नित्यं चेत्यर्थः । अनित्यपक्षे जातिवाद्याह । **अनवस्थायित्वे चेति** । यथा सत्यप्यनवस्थायित्वे वर्णा इन्द्रियेण सम्बध्य स्वविषयं ज्ञानं जनयन्ति एवं विकारमपि करिष्यन्तीत्यर्थः । सेयं साधर्म्यसमा जातिरित्याह । **असंबन्धादिति** । कतिपयक्षणावस्थानेन वर्णानां क्षणिकानामपि स्वविषयज्ञानहेतुभावो युज्यते अवगृह्य चिरं स्थित्वा यदा संधीयते संधाय वा चिरं स्थित्वा यदा विगृह्यते तदा वर्णानामनित्यानां न तावन्तं कालमवस्थानमस्तीति नोपलब्धिहेतुत्वेन विकारकर्तृत्वं वर्णानां तुल्यम् । तस्मादसम्बन्धादसमर्था वर्णोपलब्धिवद्वर्णविकारप्रतिपादन इत्यर्थः । मा

मुख्यवर्णोपलब्धिर्वर्णविकारेण साक्षात्संबद्धा आदेशविरोधितया तु सन्नि-
कृष्य पारिशेष्याद्विकारं साधयिष्यतीत्यत आह न च वर्णोपलब्धिरिति ।
तदेवं जात्युत्तरमुत्थितमेव मारितं कृत्वा भाष्यकारो ऽस्यैवार्थे सूत्रं पठति ।
**विकारधर्मित्वइति** । वार्त्तिकम् उपलभ्यमानस्य चेकारस्य यत्वा- २१३
नुपपत्तेरिति । अवगृह्य चिरं स्थित्वा संधाय यदा यत्वं तदोपलभ्यमा-
नत्वेकारस्य नास्तीत्यर्थः । इतश्च वर्णविकारानुपपत्तिः । **प्रकृत्यनिय-
मादिति** । क्षीरजातीयस्य दधिजातीयो विकारो न पुनः कदाचिदपि
दधिजातीयस्य क्षीरजातीया विकारा उपलभ्यन्ते । इह तु यथेकारजाती-
यस्य यकारजातीयो विकारो दध्यत्रेति दृश्यते एवं यकारजातीयस्यापि
विकार इकारजातीयो दृश्यते यथा इष्टेः सति प्रसारणे यकारस्येकार
इति । तस्मादनियमान्न प्रकृतिविकारभाव इत्यर्थः । अत्र छलवादी
प्रत्यवतिष्ठते । **अनियमे नियमादिति** । तदेतस्य वाक्छलत्वमापादयति
**नियमानियमविरोधादिति** । नियमानियमसामानाधिकरण्यं विरुध्यते
न त्वाधाराधेयभाव इत्यर्थः । तदेवं प्रकृतिविकारभावं निराकृत्य विकार-
वचनव्यक्तिं वैयाकरणानामादेशत्वे समर्थयति । **न चेयं वर्णविकारोपप-
त्तिरिति** । एकस्याप्रयोगे अन्यस्य प्रयोगो विकार इति सामान्यलक्षणं
तस्य विशेषानाह । **स निवृत्तइति** । **उपमर्दो नामेति** । यथा ऽस्ते-
र्भूरिति । लेशः स्त इत्यत्रास्तेरकारलोपे सकारमात्रस्य लेशस्यैकदेशस्य
व्यवस्थापनम् । एव आगमः प्रकृतेः प्रत्ययस्य वा अत्रापि केवलस्याप्रयोगे
विशिष्टस्य प्रयोग इत्येतावता विकारसामान्यलक्षण लक्षणीयम् । एतेन
वार्त्तिकमपि व्याख्यातमेवेति । तदेवमुक्तेन क्रमेण वर्णानामनित्यतां प्रति-
पाद्य शब्दप्रामाण्योपयोगि पदं निरूपयति ।

ते वि-दम् (सू. ५५) ॥ एवं किल के चिन्मन्यन्ते न वर्णाः
प्रतिपादयन्त्यर्थान् ते हि प्रत्येकं वा अन्वयव्यतिरेकाभ्यामादधीरन् नागदन्ता इव
चित्रालम्बनं मिलिता वा वाचका इव पिठरधारकम् । तत्र न तावत्पूर्वः
कल्पः । प्रत्येकमर्थप्रत्ययानुत्पादात् । वर्णान्तरोच्चारणानर्थक्यात् । नापि
संहताः एकवक्तृप्रयोगे क्रमनियमेन संघातानुपपत्तेः । अनेकवक्तृप्रयोगे
ऽपि सत्यपि यौगपद्ये अर्थप्रत्ययानुत्पादनात् । नापि क्रमवत्पूर्ववर्णानुभव-

भावितसंस्कारसहितोऽन्त्यवर्णप्रत्ययोऽर्थप्रत्ययहेतुरिति साम्प्रतम् । भावना-
ख्यस्य संस्कारस्य स्वोत्पादकानुभवविषयस्मृतिजननादन्यत्र सामर्थ्यादर्श-
नात् । न हि गवानुभवजनितः संस्कारः करोति स्मृतिं कुङ्कुमे । अपि
चेयमन्त्यवर्णश्रुतिः स्वार्थसङ्केतस्मृत्यपेक्षा वार्थप्रत्ययमादधीत अनपेक्षा वा
तदपेक्षत्वे तत्काले अन्त्यवर्णश्रुतिक्षणस्य क्षणिकत्वेनेति कथं सङ्केतस्मृति-
मपेक्ष्यते अन्त्यवर्णश्रुतिसमये च सङ्केतस्मृतेरनागतेति किमन्त्यवर्णप्रत्ययो
ऽपेक्षेत । सङ्केतस्मृत्यनपेक्षत्वे अगृहीतसङ्केतस्यापि प्रथमश्राविणोऽर्थप्रत्य-
यप्रसङ्गः । न हि चिरध्वस्तस्यानपेक्षितस्मृतेः सङ्केतग्रहस्यास्ति कश्चिदु-
पयोग इति । न च भावनाख्यसंस्कारसहितोऽन्त्यवर्णः प्रत्यायकोऽर्थस्य ।
नाप्यन्य एव कश्चित्पूर्ववर्णानुभवजनितः संस्कारः गौरवणादिविषय वीडा-
देरन्त्यवर्णप्रत्ययसहकारीति युक्तम् । अनेकादृष्टकल्पनाप्रसङ्गात् । स एव
तावददृष्टः कल्पनीयस्तस्य वाचकत्वमिति चेत् । अत एव वर्णेभ्योऽर्थप्रत्ययो
भवन्ननुपपद्यमानस्तदतिरिक्तं स्फोटाख्यमनुमापयति । अस्ति हि भिन्नेष्वपि
वर्णेषु वाक्यमिदमेकं पदमिति वा सर्वजनीनोऽनुभवः न चासौ भिन्नवर्णा-
लम्बनो भवितुमर्हति एकस्य नानात्वविरोधात् । तस्माद्वर्णातिरिक्तं पदं
वाक्यं वालम्ब्यते । ननु प्रत्येकमेव ध्वनयोऽभिव्यञ्जयन्ति केवलं पूर्वे
ध्वनयः स्फुटरूपमासादयन्ते चरमस्तु व्यक्तं न चेयमर्थे विधा सम्भविनी
प्रत्ययप्रमाणनियतत्वात् । व्यक्ताव्यक्ततावभासितायां पदे प्रत्यये उपपत्ति-
रर्थस्य तु पदगम्यस्याप्रत्यक्षस्य मानान्तरेण ग्रहणमस्तीति । अवयवा वा
न तु स्फुटास्फुटत्वाभ्यां योग । अपि च यस्मिन्ननुवर्तमाने यद्व्यावर्तते
तत्तस्माद्भिद्यते यथा सुवर्णादनुवर्तमानेषु कटकमुकुटादयः । अनुवर्त-
मानेषु तु वर्णेषु व्यावर्तन्ते पदभेदास्तस्मात्तेऽपि वर्णेभ्यो भिन्ना इति
तानप्याह । ते विभक्त्यन्ताः पदम् । तथा वर्णा एव पदं न तु तद-
तिरिक्तं स्फोटाख्यमित्यर्थः । इदमत्राकूतम् । न तावद्वर्णातिरिक्तः पदात्मा
कश्चिदुपलभ्यते प्रत्यक्षेण पदमिति तु व्यपदेशस्तानेव वर्णान् वक्तृ-
प्रत्येकस्मृतिसमारोहितया वा एकार्थधीहेतुतया वा अभिन्नकारकावस्था-
पतया वा ऽवलम्बते मात्र । न चेयमन्योन्याश्रयता वर्णे पदा-
वधारणादर्थाधिगमो न चार्थाधिगममन्तरेण पदावधारणमिति । एव

स्मृतिबुद्धिसमारोहिणां वर्णानामप्यर्थवत्तया ऽर्थबोधे सुज्ञानत्वात् तन्मा-
त्रस्य च स्वार्थेन संकेतग्रहस्यापि सुकरत्वात् तदुत्तरकालत्वाच्च पदमिति
कारकशब्दप्रवृत्तेः । इतरथा सर्वेषु कारकशब्देषु दुर्वारमितरेतराश्रयत्वं
कार्योपहितमर्यादत्वात्कारकाणां तदनुपातित्वाच्च तच्छब्दानां तस्माद्व्यपदे-
शमात्रानुरोधेन नैकैकवर्णमात्रावभासिनीषु श्रोत्रजासु बुद्धिषु तदाहितवा-
सनालब्धजन्मायां चानुभूतवर्णसंकलनात्मिकायां स्मृतिबुद्धावप्रथमानो वर्ण-
विभागोपमर्देन न शक्यः पदात्मा प्रत्यक्ष इति वक्तुं नापि निर्भागस्य
स्फुटास्फुटत्वे वा भागविपर्यासो वा युज्यते नो खलु सर्वथा ऽदृश्यमानो
नाम स्फुटः नापि समारोपविषयः । न हि सामान्यात्मना ऽप्यगृहीता
शुक्तौ रजतत्वसमारोपविषयः न च निर्भागे पदात्मनि गृहीते किं-
चिदस्यागृहीतमवशिष्यते यदग्रहणादव्यक्तत्वं वा समारोपो वा भवेत् ।
न च तदेव तदैव तेन गृहीतमगृहीतं च संभवति । तस्मान्न प्रत्य-
क्षस्य तदाभासस्य वा गोचरः पदात्मा । नाप्यनुमानस्यार्थप्रत्ययलिङ्गज-
न्मनः परस्पराश्रयप्रसङ्गात् । न तावत्सत्तामात्रेण पदात्मा ऽर्थप्रत्ययमाधत्ते
मा व्यापिनित्यत्वेन नित्यमेतत् । तस्मात्स्वज्ञानेन तच्च स्वज्ञानमर्थप्रत्य-
यात् तथा च सत्यर्थप्रत्यये पदप्रत्ययः पदप्रत्यये च सत्यर्थप्रत्यय इति
व्यक्तमन्योन्याश्रयत्वम् । न चैवमर्थधीर्वर्णेभ्यो नोदेतुमर्हति ते हि पूर्व-
मनुभूताः प्रत्येकम् अनुभूतताक्रमोपसृष्टा एकबुद्धिसमारोहिणः शक्नुवन्त्य-
र्थधियमाधातुम् । न चाक्रमानुक्रमविपरीतक्रमाणामविशेषो वर्णानाम् । पूर्वा-
नुभवसन्निवेशानुसारित्वात्स्मृतेः तत्सन्निवेशस्य च विशेषाद्विशेषोपपत्तिः ।
क्रमभेदे ऽपि च वर्णानां न हि हिनेत्यादौ पदभेद उपपत्स्यते विना ऽपि
स्फोटकल्पनाम् । क्रमभेदानुविधायित्वात्पदभेदस्य अर्थप्रत्ययकारकत्वं च न
वर्णमात्राणामपि तु क्रमन्यूनातिरिक्तत्वाद्युपहितानाम् । तदुपधानं च
तुल्यत्वे ऽपि वर्णानामन्यत्रान्यदिति पदभेदसिद्धिः । तस्माद् दृष्टेभ्य एव
वर्णेभ्यो दृष्टप्रकारानुपातिभ्यो ऽर्थप्रत्ययोत्पत्तिरुपपद्यमाना नादृष्टं स्फोटात्मानं
दृश्यमानवर्णभेदापह्नवेन कल्पयितुमर्हतीति सिद्धम् । ते विभक्त्यन्ताः पद-
मिति । यथादर्शनं विकृता इति भाष्यम् । गुणान्तरापत्त्यादिभिरादेशरूपेण
विकृताः यथादर्शनं यथाप्रमाणं न तु प्रकृतिविकारभावेन तस्य प्रमाणबाधि-

३।४ सत्वादित्यर्थः । वार्तिकम् **अर्थप्रत्ययस्तर्हि न प्राप्नोतीति** । स्फोटवा-
दिन उक्तो ऽभिप्रायः । उत्तरम् । **अन्त्यवर्णप्रत्ययादिति** । वर्णेषु प्रत्ययो
वर्णप्रत्ययः । अन्त्यश्चासौ वर्णप्रत्ययश्चेति अन्त्यवर्णप्रत्ययः सकलवर्णा-
वगाहिनी स्मृतिः । सा च प्राचः प्रत्येकवर्णानुभवानपेक्ष्यान्त्या भवति ।
यद्येवमगृहीतसङ्केतानामप्यसावस्तीति तेषामर्थप्रत्ययप्रसङ्गः स्यादित्यत
आह । **पूर्ववर्णप्रतिसंधानप्रत्ययापेक्षादिति** । सङ्केतग्रहणसमये पूर्वः
तद्भाविनो वर्णाः पूर्वं तेषां प्रतिसंधानं यावतां यादृशानां यज्जातीयानां
गृहीतसङ्केतस्तादृशास्तावन्तस्तज्जातीया वर्णास्तस्येममाकारं तदेव प्रत्य-
यस्तदपेक्षात् । न चासावगृहीतसङ्केतानामस्तीति तेष्वप्यन्त्यवर्णप्रत्ययो ना-
र्थस्य प्रत्यायक इत्यर्थः । अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः
शब्दो नाम अन्तरशब्दो विशेषवचनः क्रियाविशेषयोगाद्धेतोरित्यर्थः ।
एतदुक्तं भवति । यस्याभिधेयं क्रियाविशेषसम्बन्धेन विना न पर्यवस्यति
तन्नाम आख्यातार्थस्तु यद्यपि क्वचित् क्रियया ऽपि संबध्यते यथा ऽभि-
क्राम जुहोति भुक्त्वा व्रजतीत्यादिषु तथा ऽपि जुहोति व्रजतीत्यादयो न
क्रियासम्बन्धमन्तरेण न पर्यवस्यन्ति अपि तु तत्समभिव्याहृता अपि संब-
ध्यन्ते । नामार्थस्तु न पूर्वापरीभूतप्रधानक्रियापदार्थमन्तरेण पर्यवस्यति ।
अत एवाहुः यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयोक्तव्यः
तथा च ब्राह्मणे ऽभिक्राम भोक्तुं भुङ्क्ष्वेत्यादयश्च समुच्चयापेक्षाः क्रिया-
विशेषमन्तरेणापर्यवस्यन्तो नामत्वेन संगृहीता भवन्ति । अस्योदाहरणमाह ।
**यथा ब्राह्मण इति** । अस्यार्थमाह **क्रियाकारकसमुदायः कारकसं-
ख्याविशिष्टः** । अत्र हि क्रियाशब्देन ब्राह्मणस्य भावो ब्राह्मणत्वमभिधीयते
भावशब्दस्य क्रियार्थत्वात् । भविता च ब्राह्मणः कारकम् । तयोर्ब्राह्मण-
त्वब्राह्मणयोः समुदायः स च कारकस्य भवितुर्ब्राह्मणस्यैकत्वसंख्यया विशिष्टो
११ ब्राह्मण इत्येतस्मान्नामपदाद्गम्यत इत्यर्थः । आख्यातलक्षणमाह । **क्रिया-
कालयोगाभिधायि क्रियाप्रधानमाख्यातं** क्रियायाः कालयोगः पूर्वा-
परीभावः । कालयोगाद्धि सम्भवति तदभिधायि । तदनेन पाक इत्यादे-
र्नामपदाद् व्यवच्छिनत्ति । एवमपि भुक्त्वा भोक्तुमित्यादावपि नास्ति प्रसङ्गः ।
अस्ति हि तत्रापि कालावधिपूर्वापरीभूतकर्मत्वप्रत्ययप्रत्ययो ऽन्यथा चोदन-

मिति कर्मसंबन्धो न स्यात् अत उक्तं क्रियाप्रधानमिति । त्वनिष्ठा ह्याख्या-
तात् क्रिया प्रतीयते नान्यतन्त्रा । भोक्तुमित्यादौ तु क्रियान्तरमन्तरेण न
पर्यवस्यन्तीति क्रिया गम्यते । व्रजतीत्यादौ तु न तथा तदिदं क्रियाप्रा-
धान्यम् । तदनेन पचति पचेत पच्यते स्थीयतइत्यादि सर्वमाख्यातं संगृ-
हीतं भवति । न च विदधि नाम्नि प्रसङ्गः यद्यप्यस्त्यादि नामाख्यात-
प्रतिरूपकं तथापि सन्निरूप्यस्यार्थे सिद्धरूपे तद्वर्तते न पुनः पूर्वापरीभूतक्रि-
यार्थत्वमिति द्रष्टव्यम् । **यस्मात्साम्ना सर्वं पदं व्याप्यतइति ।** बाहुल्यं ३१६ ।
व्याख्यर्थः । प्रायेण हि वाक्ये बहूनि नामपदानि आख्यातं पुनरेकमेवैक-
स्मिन् वाक्ये आख्यातभेदे वाक्यभेदादिति । अधिकरणमाक्षिपति न पदा-
र्थाधिगतिरिति । पदेन हि विशेषो वा ऽभिधीयते सामान्यं वा तत्र
विशेषाभिधानं तावद् दूषयति । विशेष इति । अनवस्थानमनवधारण-
मिति । सामान्याभिधानमाशङ्क्याह न पदस्येति । दूषयति न सामा-
न्यस्येति । व्यवहाराय हि वाक्यमुच्चारयन्ति वृद्धाः न तु व्यसनितया ।
न चास्ति सामान्यसाध्यः कश्चिद्व्यवहारः किं तु सर्वो व्यवहारो विशेष-
साध्यः । न चास्य पदं वाचकं तद्वाक्यमेव वाक्यार्थस्य वाचकमिति न
पदार्थचिन्तावसर इत्याक्षेपार्थः । समाधत्ते **न सामान्यविषयत्वे सती-
ति** । न तावत्पदातिरिक्तमस्ति वाक्यं नामेत्युक्तमधस्तात् । न च वर्णमालेव
पदार्थप्रतिपादनावान्तरव्यापारानपेक्षा वाक्यार्थबोधिनीति युक्तम् । अनवे-
क्षितसंकेतग्रहायास्तदवबोधने प्रथमश्रावितो ऽविदितसंकेतस्य वाक्यार्थ-
बोधप्रसङ्गः । यतः संकेतग्रहापेक्षत्वे वाक्यार्थेन सहानन्त्यव्यभिचाराभ्यां
वाक्यसंकेतग्रहासंभव इत्यकामेनापि पदानां स्वार्थे संकेतो ऽभ्युपगन्तव्यः ।
तस्मात्पदानां सामान्यमर्थस्तत्प्रतिपादनावान्तरव्यापाराणां च यथा वाक्या-
र्थप्रतिपादकत्वं तथा ऽस्माभिस्तत्त्वबिन्दौ निपुणतरमुपपादितम् । सैयं पदा-
त्सामान्यप्रतीतिर्गौरिति वा अश्व इति वा सर्वगवीषु सर्वाश्वेषु चोपसर्पन्ती
शुक्ल इति कृष्ण इति वा विशेषणतया नियम्यतइत्यर्थः । पृच्छति । कथं-
**पुनरियमिति** । तिष्ठति गच्छतीत्यादयो ऽपि न पदत्वेन विशेषे वर्तितुम-
र्हन्ति संबन्धग्रहणासंभवात् । तस्मादेते ऽपि सामान्यवचना इति भावः ।
**उत्तरं नैवेपमिति** । तदेवं पदस्य सामान्यवाचकत्वनिश्चयादाकृतिश्च २

नयोस्व पदात्प्रतीतेर्वादिनां विप्रतिपत्तेर्भवति संशयः। किं वितयमर्थं आहो अन्यतम इति। एवं तावत्सामान्यावगमाद्वाचकत्वं निश्चित्य विप्रतिपत्त्य-वतारो दर्शितः। सम्प्रति द्वितयावगमात्पदस्य वाचकत्वशङ्कैव नास्ति
११ तस्मादुक्तश्चिन्तान्तरावतार इत्याह भवतु चेति। प्रतीतिसिद्धमनुजानाति क्रिया च तत्साधनं चेति। भविता गौरित्यर्थः। किमन्यतमः पदार्थं उतैतत्सर्वमिति भाष्यम्। तत्रान्यतमार्थमाह वार्तिककारः। किं व्यक्तिरिति। अत्र शब्दादिप्रयोगसामर्थ्याद्व्यक्तिरेव पदार्थ इत्येके मन्यन्ते। स्यादेतत्। व्यक्तिवदाकृतिरपि मिथ्यातद्व्याकृतेरप्यभिधायक कस्मान्न भवतीत्यत आह। आकृतेरपीति। गोत्वं च जातिरुपाधिर्भविष्यति तेन जातिप्रसङ्गः न चोपाधेरभिधानम्। अनभिहितस्यापि तस्यच्छेनोपहितावच्छेदकत्वदर्शनात्। यथा गार्गिकया श्लाघत इत्यत्र श्लाघोपाधिविहितो वुञ् न श्लाघामाहेति भावः। तमिमं व्याप्त्यभिधाननियमवादिनमपाकरोति। नानेनेति। नाप्रतीत उपाधिरुपहितावच्छेदाय प्रभवति। न च गार्गिकयेत्यत्रोपाधिर्वुञाभिहितो ऽपि न प्रतीयते श्लाघत इति पदान्तरेण तस्याभिधानात्। यत्र तु श्लाघत इति न प्रयुज्यते न तत्र वुञो भावाभिधायिनः साधुत्वमस्ति। सेयं व्यधिकरणो ऽनुपाधेो गतिः। समानाधिकरणो तु पदावदावुपाधो प्रत्ययान्तशब्दवाच्यत्वमेव। यथा दृतिहरिः पश्वेति। अत्र हि दृतिहरिरित्येतावतैव पशो लब्धे तद्विशेषनियमार्थं पश्वेति प्रयुज्यते। न च प्रयोगादेवोपाधेरप्यसमानस्यादनभिधान उपपन्नम्। तदुपाध्यनभिधायिनस्तत्र प्रयोगनियमस्य पर्यनुयोज्यत्वात्। अननुयोज्यत्वे अनादिर्लोकप्रयोगस्य सर्वेषामेव शब्दानामनभिधायकत्वप्रसङ्गः। प्रयोगनियमादेव हि तेभ्यो ऽर्थो ऽवगम्यते। अथाप्रतिपादकस्य प्रयोगनियमो नोपपद्यत इति यत्र प्रयोगस्तत्प्रतिपादकत्वमित्यभ्युपेयते तदुपाधावपि समानम्। तथा च स्मरति भगवान्कात्यायनः तदन्तवाच्यः समानशब्दो ऽप्रमिति। समानशब्दः समानाधिकरणशब्दो य उपाधिरसौ प्रत्ययान्तशब्दवाच्य इत्यर्थः। तस्माद्व्यक्तिनियमे अप्रतीता जातिरशक्ता। न च गोशब्दादन्यदस्याः प्रत्यायकमस्तीति सा ऽपि तेन प्रत्यायनीयेति सिद्धं न व्यक्तिमात्रं पदार्थ इति। कटार्थेषु वीरणेषु व्यूहमानेष्विति भाष्यम्।

कटं करोतीति निर्वर्त्यस्य कटस्य कर्मत्वमनुपपन्नं कारकाऽधिकारीयत्वात् । कर्मसंज्ञायाः क्रियानिमित्तस्य च कारकत्वात् । असिद्धस्य च क्रियायाः पूर्वं निमित्तभावायोगात् । तस्मात्तादर्थ्यनिमित्तादेव कटशब्दः कटार्थेषु वीरणेषु व्यूह्यमानेषु वर्तते । वीरणानां च वा रच्यमानानामस्ति कटक्रियापूर्वभावित्वेन निमित्तभाव इति । यदि न जात्या विना व्यक्तिनियम इति जातिरभिधेया हन्त भोः सा ऽप्याकृत्या नियतत्वेत्याकृतिरेवाभिधीयतामित्याह । यदि तर्हीति । एतदपि दूषयति । अत्रापि तदेवोपस्थितं ३१७ । न तदनवस्थानादिति । संस्थानेनापि व्यज्यमाना जातिरेकार्थसमवायाद्व्यज्यते च व्यवस्थाप्यते च । सा तु व्यक्तिसंस्थानाभ्यां व्यावर्तमानाभ्यामनुवर्तमाना ऽभिन्नबुद्ध्या ऽवसीयते । तादृशी च व्यक्तिसंस्थानाभिधानानपेक्षेणापि पदेन शक्या बोधयितुं संस्थानं तु व्यक्तिवच्छिन्नमानन्त्यव्यभिचाराभ्यामशक्यसंकेतग्रहणं जात्यभिधानमनपेक्ष्य न शक्यं पदेन बोधयितुमिति न संस्थानापरनामा ऽऽकृतिः पदार्थ इत्यर्थः । नापि जातिद्वारेण व्यक्तिवदाकृतिः पदार्थो जात्या सहासंबन्धादित्याह । यस्य च जात्या योग इति । अस्तु तर्हि जातिरेव पदार्थः तत्र हि सुकरः संकेतग्रहः व्यभिचाराभावादिति । व्यक्त्याकृत्योस्तु व्यभिचारः जात्यभिधायिनो व्यक्त्याद्याकृतौ चौपचारिकः प्रयोगो भविष्यतीत्यभिप्रायेणाह । अस्तु तर्हीति । शेषमस्यातिरोहितार्थम् । एकमनेकत्र वर्त्ततइति प्रतिजानानो नानुयोक्तव्यः । उभयेन व्याघातादिति । यद्येकमनेकत्र वर्तमानं प्रतिव्यक्ति सर्वात्मना वर्ततइति किं त्वनेकमनेकत्र वर्तत इति प्राप्तम् । एवं चानुयोगाधिकरणव्याघातः । अथैकमनेकत्र वर्तमानं प्रतिव्यक्त्येकदेशेन वर्तते तथा ऽपि नैकमनेकत्र वर्तते किं त्वनेकमनेकत्रेति एकदेशानामनेकत्वादिति । सो ऽयमुभयेन व्याघातः उक्तो ऽवयविवादे तदेवमन्यतमाभिधाननियमं निराकृत्यानियमाभिधानं सिद्धान्तमाह ।

व्यक्त्या–र्थः (सू. ६३) ॥ इदमनाकुलम् । गोशब्दोच्चारणानन्तरं विदितसंगतेरेकपदे व्यक्त्याकृतिजातिनिर्भासः प्रत्यय उदयमापादयति न पुनर्यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गोवाहीक इत्यत्र वा गङ्गात्वगोत्वाद्यवगमोत्तरकालं वाक्यार्थे तत्संबन्धानुपपत्तेस्तदविनाभावेन वा लक्ष्यमाणगुणयोगेन वा

तीर वाहीको न उपगम्यते गवेहावगतिः । प्रयोगप्राचुर्याद्वित्यन्ताभ्यासेनातिशी-
घ्रतया सत्त्रपि प्रत्ययक्रमो न लक्ष्यते । शीघ्रतरत्वाचहेतुकथमत्र प्रत्यक्षप्रति-
भेदवदिति चेत् । न भवति बाधके बलवति प्रत्ययाभेदप्रत्ययस्यामन्यथाकर-
णायोगात् । तथा च सति न क्व चिदप्यभेदो ऽवतिष्ठेत तथा च भेदो
ऽपि न स्यात् अभेदाश्रयत्वाद्भेदस्य । अपि च न रूपशून्या रूपावगतिः
रूपं च द्रव्यस्य जातिः तेन रूपमात्रत्वाद् रूपि द्रव्यम् । न च येन
यदुच्यते तदनवगमे तदवगमः । यथा नार्थमन्तरेण बुद्धेरुपलम्भनं
तस्माज्जात्युपलम्भो द्रव्योपलम्भैकदेशो न द्रव्योपलम्भमन्तरेण केवल. सम-
वति । तस्मादेकोपलम्भगोचरत्वान्न जातिजातिमतोर्लक्ष्यलक्षणभावः स
चोपलम्भः शब्दश्रवणानन्तरं जायमानः शाब्दः न च वाच्यमेकोपलम्भगोच-
रत्वे ऽपि जातिव्यक्त्योर्जातिरेव वाच्या न व्यक्तिः शक्यवाच्यत्वे ऽप्युभयोपल-
म्भोपपत्तावुभयवाच्यत्वकल्पनानुपपत्तेरिति । कार्यव्याहृतं हि कारणानां साम-
र्थ्ये कार्यस्य नाकार्यं । कार्यं चानुभव. स चैक एवेति न सामर्थ्यभेदक-
ल्पना । तद्द्वारेण तु कर्मव्यपदिश्यते पदमर्थं समर्थमिति कार्ये च द्वारमेक-
मिति विषयभेदे ऽपि सामर्थ्यमेकमेवेति । अपि च पुरुषचेता-
पेक्षवृत्तीनां पदानां न हि नित्यसामर्थ्यं नाम प्रमाणगोचरं यदेक-
मनेकं वा स्यात् । एतेन निकृष्टलक्षणाया शब्दस्य जात्यभिधानो-
पक्षीणस्य न व्यक्तिसामर्थ्यं कल्पनीयम् । अन्यथाव्यापृतस्य तथार्थस्यैव
सामर्थ्यमिति यदाहुस्तदपि निरस्तम् । स खल्वर्थः प्रतीतो वा व्यक्ति
गमयेद् अप्रतीतो वा । अप्रतीतस्य गमकत्वे सर्वदैव व्यक्त्यवगतिप्रसङ्गः
कारणस्य नित्यत्वात् । प्रतीतस्य गमकत्वे दुरुत्तरमात्माश्रयत्वं न [illegible]
जातिप्रत्ययादन्यो व्यक्तिप्रत्यय इत्युक्तम् । तस्मात्साधु पारमर्षसूत्र
व्यक्त्याकृतिजातयस्तु पदार्थ इति । जात्यन्यापोहपदार्थवादिनमुत्था-
पयति । न व्यक्त्याकृतिजातयस्तु पदार्थ इति के चिदिति । अथ
द्रव्यादिवृत्तित्वादिति । गवाश्वस्य तु नाम्नार्थवियमाव इति भावः ।
जातिमन्मात्राभिधायको ऽपि सच्छब्दो न भवति । कस्मात्
अस्वतन्त्रत्वादिति । जातिमन्तो घटपटादयः न चैते घटादिशब्दा-
दिव निरपेक्षात्सच्छब्दात्प्रतीयन्ते किं [illegible] सच्छब्दाद् घटादिषु बुद्धिः परि-

प्रवर्तते । घटादिशब्दापेक्षस्तु सच्छब्दो घटादिनिश्चयहेतुः । तस्माद् घटादिशब्दपरतन्त्रत्वान्न सद्वृत्तो वाचक इत्यर्थः । अथ चेति । यदाथ परतन्त्रं ३२४ । वर्तते ततस्य न वाचकं यथा गङ्गागवादिशब्दास्तीरवाहीकादेः । तथा च जातिशब्दा जातिमति । तस्मान्न जातिमद्वाचकाः ते हि जातिमपेक्ष्य जातिमति वर्तन्त इति तादृशं पारतन्त्र्यमित्यर्थः । अथ जात्यनपेक्षं कस्मान्न सद्वृत्ति वर्तत इत्यत आह । उक्तं चात्रेति । अस्तु तर्ह्यौपचारिक एव सद्वृत्ति प्रत्यय इत्यत आह । तद्वदिति चेति । यथा ऽऽधिपत्यलक्षणो गुणः स्वामिनो जितकाशिनि भृत्ये ऽप्यस्तीति तत्र स्वामिशब्दः प्रवर्तते न तथा जातिगुणयोगो व्यक्तेरित्यर्थः । अपि च अन्यशब्दो ऽन्यत्र वर्तमानः प्रथमं तावदन्यधियमुत्पादयति अथान्यत्र वर्तते यथा गोशब्दो गवि बुद्धिमुत्पाद्य वाहीके वर्तते । न चेह जातिशब्दो जातौ तद्बुद्धिक्रमेण प्रवृत्तः । न चौपचारिकस्य वृत्तिर्योगपद्यमित्याह । क्रमवृत्त्यभावात् । युगपदसंभवाच्च । गुणोपरागं दूषयति । अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च । गुणोपरागाद्यथा नीलः स्फटिक इति ज्ञानमेवं सर्वमेव शाब्दं ज्ञानं विना बाधकमयथार्थमेव स्यादित्यर्थः । एकस्वलक्षणाभिधानं दूषयति । असाधारणेति । अशक्यसमयत्वाद्येत्यपि द्रष्टव्यम् । तदेवमन्यापोहवादिनमुत्थाप्य दूषयति । अत्रास्माभिरिति । व्यक्त्याकृ- ३२५ । तिजातयस्तिस्रो ऽस्माकं पदार्थः । गुणप्रधानभावस्तु ■ विदेव कस्य चित् जातिमद्व्यक्त्यभिधाने द्विविधमप्यस्वातन्त्र्यं न संभवति शब्दानाम् । न तावद्व्यक्तिज्ञाने जनयितव्ये तदर्थे जातिज्ञानं पूर्वमपेक्षन्ते शब्दा इति संभवति । द्वयोरप्येकज्ञानवेद्यत्वनियमेन पौर्वापर्यायोगात् । नापि विशेषवाचकं पदं विना जातिशब्दानां बुद्धिपरिप्लवात्तन्निश्चयाय विशेषशब्दापेक्षया स्वातन्त्र्यम् । स्वविषये जातिशब्दाद् बुद्धेरपरिप्लवात् । जातिमद्व्यक्तिमात्रमस्य हि विषयो न चात्र बुद्धिपरिप्लवः । व्यक्तिनियमस्तु विषय इति न तत्र बुद्धिपरिप्लवो दुष्यति । दूराद्धि आरोहपरिणाहवद्द्रव्यमात्रं गोचरः प्रत्ययस्य न तु स्थाणुः पुरुषो वा ■ चात्र बुद्धिपरिप्लुतिः प्रत्यक्षतां कां घनायहन्ति । न चास्मिन् पक्षे जातिशब्दो व्यक्त्याकृत्योः परशब्दो येनौपचारिकः स्यात् । न ■ सामानाधिकरण्यं न कल्पते जातिव्यक्तिपदयोरेकार्थाभिधा-

विनैवैयधिकरण्यायोगात् । तस्मात्सर्वमवदातम् । एवमनेकान्तवादे परोक्त-
२ । ३ दोषपरिहारमभिधाय दूषणान्तरं परोक्तं दूषयन् दोषाभावमाह । न चैते दोषा इति । सत्ताशब्द इति । सत्तायाः शब्द इति वा विग्रहः सत्तारूपः शब्द इति वा तत्र पूर्वस्मिन्कल्पे सत्ताया न वाचकः सत्ताशब्द इति व्याघातः । उत्तरस्मिन्कल्पे न वाचकः सत्ताया इत्यनेन व्याघातः सत्ता इत्यनेन शब्देन सत्तामभिधत्से अथ च तस्य वाचको न सत्ताशब्द इति ब्रूषे तदा व्याघातः सत्ताशब्द इति चोपलक्षणार्थं सत्ताया न वाचक इति द्रष्टव्यम् । शङ्कते भवदभिप्रायेणेति । निराकरोति । नेति । यद्यस्मदभिप्रायार्थं प्रतिपद्यसे अर्थप्रतीत्यधीनो ऽभ्युपगम इति अभ्युपगमं ब्रूषे तत्तथा च न निषेद्धुमर्हसीति भावः । अथ निषेद्धुं प्रत्येमि न पुनरभ्युपैमीत्याशङ्क्याह यच्चेदमिति । दूषयति तदपि नेति । अतथाभूतस्यापुरुषभूतस्य स्वाभिलाषमात्रायिभिः पुरुषैः सामान्ये समध्यारोपितः पुरुषत्वादिधर्मो यस्य स तथेत्युक्तः तस्य प्रधानमर्थः पुरुषः तदाकारा प्रतीतिरित्यर्थः । सत्तायाः प्रधानसाधनवाचिने ते । प्रधानं साधनं व्यञ्जकतया यदि तद्द्रव्य तद्वाची खलु सच्छब्दः सत्ताशब्दस्तु द्रव्योपसर्जनभाववाची न तस्य द्रव्यवाचिना सामानाधिकरण्यमित्यर्थः । सामानाधिकरण्यासिद्धिः सद्द्रव्यशब्दयोरिति । सिद्धिः प्रतीतिः सा भवन्मते न स्यादिति यदुक्तं केनचित्तदप्यनेन सामानाधिकरण्यव्यवस्थापनेन प्रत्युक्तम् । व्याख्यातो निराकार्यत्वेन । स्वयं प्रकृष्टां वाचोयुक्तिमिति । जातिशब्द इति सदादिशब्देषु स्वयं प्रकृष्टा या वचनव्यक्तिस्तां प्रतिषेधसि तत्र चास्माकं सिद्धसाधनमित्यर्थः । सच्छब्दो जातिशब्दस्तस्य भेदवाचकत्वं नास्य सम्मतमिति मन्वानो दर्शयति । यदि तर्हीति । सुगमः परिहारः । तथा ऽपि नान्वयी न व्यतिरेकी चेति । ये ये अनन्ता न ते जातिशब्दवाच्या इति न दृष्टान्तः । सर्वभेदपक्षीकरणात् । नापि यो जातिशब्दवाच्यो न तस्यानन्त्यं यथा गोत्वादिकमिति शक्यं वक्तुं जातेरेव भवन्मते व्योमारविन्दायमानत्वादिति भावः । शङ्कते अथापीति । तथा चान्वयी दृष्टान्तो लभ्यत इति भावः । निराकरोति । अयमपि नेति । विशेषणोपादानविरोधात् । न हि भेदमनारोप्य कि विद-

स्ति वस्तुवद् यतो विशेषणं व्यावर्त्तयेदिति भावः । हेतुभावानभ्युपग- ३२९ ।
मादिति । न शब्दोऽर्थप्रत्यायने लिङ्गं येन व्यभिचारेण दुष्यति । न च प्रत्या-
यकमात्रं व्यभिचारेण दुष्यति चक्षुरादीनामपि नीलादिव्यभिचारेण पीतादौ
वर्त्तमानतया व्यभिचारिणामप्रत्यायकत्वप्रसङ्गात् । संकेतग्रहस्तु सत्यपि भे-
दानां व्यभिचारे चैकैकजातिक्रोडीकृतानां सुकर एवेति भावः । भेदवाचक-
त्वप्रतिषेधादिति । भेदवाचकत्वे निषिद्धे द्रव्यवाचकत्वं निषिद्धं भवति द्रव्य-
स्य भेदत्वात् । तस्माद् द्रव्यशब्द इति व्याघात इत्यर्थः । उक्तोत्तरमे-
तत् सच्छब्दद्रव्यशब्दयोरेकविषयत्वादिति । विशेषमात्रं विषयः सदा-
दिशब्दस्य न पुनर्नैयतो ऽयमेव भाष्य इति भावः* । सत्ताशब्देन द्रव्य-
गुणकर्माण्यपि नाक्षिप्यन्त इति । सामानाधिकरण्ययोग्यतयेत्यर्थः । तद-
न्तरेण तदनुपपत्तेः । आक्षेपमात्रं तु शक्यं वक्तुमित्याह । शक्यं वक्तुमिति ।
पृष्टः सच्छब्दस्य गुणप्रधानभावेन कयो ऽर्थो इति सूत्रकारन्यायेनावधार-
यति । सविति चायमिति । अर्थकृत इति । अर्थः कार्यं तत्कृतः । एत-
दुक्तं भवति यस्य कार्येण संबन्धस्तत्प्राधान्यं यस्य कार्यसंबन्धावच्छेदकत्वं तद-
ङ्गमिति । एतेनेति । अर्थेषणाभिधानेन । न हि स्वामिप्रत्ययो भवति भृत्ये ।
अपि तु तदर्थक्रियाकारितया स्वामिव्यपदेशमात्रमित्यर्थः । नात्र क्रमो
न युगपत्प्रत्यय इति । भेदाधिष्ठाने क्रमयौगपद्ये नैकस्मिन् विशिष्टद्रव्यप्र-
त्यये संभवत इति । एतेनेति । शब्दस्य सत्ताविशिष्टद्रव्यवाचित्वाभिधानेना-
यथार्थज्ञानोत्पत्तिप्रसङ्गादिति प्रत्युक्तम् । परमार्थस्वच्छधवले हि स्फटिके नी-
लीद्रव्योपधानान्नीलप्रत्ययो भवतु भ्रान्तः तस्य परमार्थतो नीलगुणासमवा-
यात् । सत्तासमवायस्तु द्रव्यादीनां पारमार्थिक इति न द्रव्यादिषु सदिति
प्रत्ययस्य मिथ्यात्वमित्यर्थः । न हि कश्चिच्छब्द इति । स्वलक्षणानामशक्य-
समयतया न कश्चिदपि शब्दो भवता तद्वाचकत्वेनाभ्युपेयत इत्यर्थः । न च जा-
तिशब्दस्येति । जातेरभावादिति भावः । जातिशब्दो भेदानां वाचकः कस्य
तर्हीति पूर्वं भेदाप्रधानीकृत्योक्तं संप्रति तु जातिशब्दानित्येतावता अपोहस्व-
रूपम् । नास्ति विवाद इति । अन्यापोहजात्योर्लक्षणमात्रभेदे नास्ति विवाद इत्य- ३३१ ।
र्थः । द्रव्यसच्छब्दयोस्तु सामानाधिकरण्यं न च भेदवाचकाः शब्दा

* विशेषणमात्रेण वार्त्तिके सामानाधिकरण्येन नियम्यते न तु भाष्ये इति ३ पु॰ पाठः ।

येन स्वलक्षणं सर्वसामान्योपकारि तथाऽपि स्वभावाभेदे तदुपकाराधीन-
स्वभावानां सामान्यानां च मध्ये एकसामान्यवतः स्वलक्षणस्य एकेन
शब्देन विकल्पेन वा ग्रहणे सर्वेषां तदेकोपकारनिबद्धस्वभावानां सामान्यानां
ग्रहणात्सद्द्रव्यपार्थिववृक्षशिंशपाविकल्पानां शब्दानां च पर्यायत्वप्रसङ्गः । यथा-
ऽऽह । एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे । दृष्टे तस्मिन्नदृष्टा ये तद्दृष्टे
सकलग्रह इति । तस्मान्न सामान्यभेदगोचरा विकल्पाः । स्वलक्षणभेद-
गोचरत्वनिषेधेन ज्ञानग्राह्याकारगोचरत्वमप्यपास्तम् । स्वाकारमग्राह्यं ग्राह्य-
मध्यवस्यन् विकल्पः स्वाकारग्राह्यविषय इति चेत् । यथाऽऽह स्वप्रति-
भासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तिरिति । अथ कोऽयमध्यवसायः ।
किं ग्रहणमाहोस्वित्करणम् उत योजना अथ समारोपः । तत्र
स्वप्रतिभासमनर्थमर्थं कथं गृह्णीयात् कुर्याद्वा विकल्पः न हि पीतं नीलं
शक्यं ग्रहीतुं कर्तुं वा शिल्पिशतेनापि । नाप्यगृहीतेन स्वलक्षणेन
स्वाकारं योजयितुमर्हति विकल्पः । न च स्वलक्षणं विकल्पगोचर इति
प्रतिपादितम् । न च स्वाकारमनर्थमर्थं आरोपयति । न तावदगृहीतः
स्वाकारः शक्य आरोपयितुमिति तद्ग्रहणमेषितव्यम् । तत्किं गृहीत्वा आरो-
पयति अथ यदैव गृह्णाति तदैवारोपयति । न तावत् पूर्वः पक्षः न हि
विकल्पज्ञानं क्षणिकं क्रमवन्तौ ग्रहणसमारोपौ कर्तुमर्हति । उत्तरस्मिंस्तु
पक्षे विकल्पस्वसंवेदनप्रत्यक्षाद्विकल्पाकारादहङ्कारास्पदादनहङ्कारास्पदं समा-
रोप्यमाणो विकल्पो नान्यगोचरो न शक्योऽभिन्नः प्रतिपत्तुं नापि ग्राह्यस्व-
लक्षणैकत्वेन शक्यः प्रतिपत्तुं विकल्पज्ञानेन स्वलक्षणस्य ग्राह्यस्याप्रतिभा-
सनात् । तस्मादेव विकल्पविषयो न ज्ञानं न ज्ञानाकारो नापि ग्राह्य इत्य-
लीक एवास्थेयः । यथाऽऽह भदन्तधर्मोत्तरः बुद्ध्या कल्पिकया विविक्तम-
परैर्यद्रूपमुल्लिख्यते बुद्धिर्नो न बहिरिति । तथाऽपि विकल्पज्ञानाद्बाह्याभि-
मुखी प्रवृत्तिस्तद्दर्शिनां न स्यात् । तस्मादलीकबाह्यमेव विषयः बाह्यभेदा-
ग्रहस्त्वस्य बाह्यत्वं न पुनर्बाह्याभेदग्रहः । विकल्पगोचरे बाह्ये तदभेदग्र-
हस्याशक्यत्वात् । तस्मान्निर्विकल्पकपृष्ठभाविनो विकल्पाः तदुपनीतबा-
ह्यस्वलक्षणभेदं स्वग्राह्यालीकस्यागृह्णन्तः तदभिमुखं प्रवर्तयन्ति व्यवहर्तृन-
यिनः पारंपर्येण तत्सम्बन्धात् प्राप्तिं विषयादर्शयन्ति लोकम् । तेषां च

विकल्पविषयाणां न तैरेव विकल्पैः परस्परतो भेदो गृह्यते नापि विक-
ल्पान्तरैरिति भेदाग्रहादभेदमभिमन्यते पुरुषः तदभेदाच्चायमर्थानाम्-
अभेदः तदभेदाच्च तद्धेतूनामविकल्पधियामभेदः तदभेदाच्च स्वलक्षणानाम-
विकल्पधीविषयाणामप्यभेदः । यथा ऽऽह । एकप्रत्यवमर्शस्य हेतुत्वाद्धीर-
भेदिनी । एकधीहेतुभावेन व्यक्तीनामप्यभिन्नतेति । तत् सिद्धमलीकं बाह्यं
विषयो विकल्पानां शब्दानां चेति । तच्चेदमन्यव्यावृत्तिरूपं भावाभावसाधा-
रण्यात्त्वात्यन्तविलक्षणानां सालक्षण्यापादनाच्च सारूप्यानुभवाच्च । तथा हि
यद्भावाभावसाधारण्यं तदन्यव्यावृत्तिरूपमेव । यथा ऽमूर्तत्वं तत् खलु
विज्ञाने च शशविषाणे च साधारणम् । तथा च विवादाध्यासिता विकल्पवि-
षयाः घटपटादय इति स्वभावहेतुः । गौरस्ति गौर्नास्तीति हि भावाभावसा-
धारणो गवादिर्विकल्पविषयो विधिरूपस्यलक्षणयद्भावाभावसाधारण्ये नास्तीत्य-
नेन न संबध्येत विरोधात् । अस्तीत्यनेनापि न संबध्येत पौनरुक्त्यात् ।
भावाभावसाधारण्यग्रहणं च नानिमित्तं नाप्यन्यनिमित्तं न हि विधिरूपविष-
यस्य तत्स्वरूपविषयस्य वा त्रिविधधर्मापातिनस्तत्र निमित्तभावः संभवति ।
तस्मान्निमित्तवत्तया साधारण्यग्रहणं व्याप्तं विपक्षान्निमित्तवत्त्वस्य व्यापक-
स्यानुपलब्ध्या निवर्तमानमन्यव्यावृत्तिविषयत्वेन व्याप्यत इति प्रतिबन्ध-
सिद्धिः । अपि चात्यन्तविलक्षणानां सालक्षण्यम् अन्यव्यावृत्तिकृतमेव ।
यथा गवाश्वमहिषमातङ्गानामत्यन्तविलक्षणानामपि सिंहव्यावृत्त्या सालक्ष-
ण्यम् । तथा च बाह्यस्य स्वलक्षणस्य विधिरूपस्य परमार्थसतो ऽपरमार्थ-
सता ऽत्यन्तविलक्षणेन सालक्षण्यमिति स्वभावहेतुः । बाह्यं हि विधिरूप-
मश्वगोव्यावृत्तम् । विकल्पविषयो ऽपि चेद्गोव्यावृत्तस्ततः सालक्षण्यं
नान्यथा तथा च सालक्षण्यमपि निमित्तवत्तया व्याप्तं तदनुपलब्ध्या
विपक्षाद्व्यावर्तमानं स्वसाध्येन व्याप्यत इति प्रतिबन्धसिद्धिः । अपि चानु-
भूयत एव विकल्पविषयो व्यावृत्तिरूपः । तथा हि । तत्प्रतिभासने गां बधा-
नेति देशितो ऽश्वं बध्नीयाद् गोरश्वाद् भेदेनाप्रतिभासनात् । प्रतिभासे
वा कथं नागोव्यावृत्तिप्रतिभासः । तस्मादन्यापोहगोचरा शब्दविकल्पा इति ।
तदेतदुक्तं वार्त्तिककृता । तावेतावसदर्थव्युदासरूपेण प्रवर्तमानावे-
कमर्थमभिधत्त इति । एवं स्वलक्षणमप्यवस्तुतः प्रत्ययप्रसादश्च स्ववि-

पयस्य स्वलक्षणाद्भेदेनाग्रह इत्युक्तम् । अथोच्यते । जातिस्तावद्रूपादिसमद्भावा सत्त एव सद्भूतौ व्यक्तिरपि परमार्थसती । स्वाभाविकश्च संबन्धो व्यक्तेर्जात्या सह नोपकारमपेक्षते । अपि चानित्यस्याप्युपकार्यता क्षणभङ्गभङ्ग उपपादयिष्यते । यथा चैकोपाधिग्रहे ऽपि नोपाध्यन्तरविशिष्टग्रहस्तथोपपादितं प्रत्यक्षलक्षणावसरे । न चात्यन्तासतः केन चिदसद्रूपस्य प्रयोपपदात इति सारूप्यनिमित्तां भ्रान्तिमुपपादयता वार्तिककृतोक्तम् । उपपादितं चास्माभिः । तस्माज्जातिमत्यो व्यक्तयो विकल्पानां शब्दानां च गोचरः तासां सदृशीनां रूपमतज्जातीयव्यावृत्तमित्यर्थः अतस्तदवगतैव गां यथानेति चोदितो ऽश्वादीन् बध्नाति । न च शब्दार्थस्य जातेर्भावाभावसाधारण्यं नोपपद्यते । सा हि स्वरूपतो नित्या ऽपि देशकालविप्रकीर्णानन्तव्यक्त्याश्रयतया भावाभावसाधारणी भवत्यस्तिनास्तिसंबन्धयोग्या । वर्तमानव्यक्तिसंबन्धिता हि जातेरस्तिता अतीतानागतव्यक्तिसंबन्धिता च नास्तितेति । संदिग्धव्यतिरेकित्वादनैकान्तिकं भावाभावसाधारण्यमन्यथासिद्धं चेति । जातिमती व्यक्तिर्विकल्पगोचरो नालीकमिति कस्य वस्तुना सह सादृश्याद्यान्यव्यावृत्तिरूपता ऽऽरोप्यते । अपि चालीकस्य समस्तोपाख्यविरहिणो ऽत्यन्तासद्रूपस्य समर्थेन स्वलक्षणेन विधिरूपेण किं सादृश्यम् । अन्यव्यावृत्तिरिति चेत् । नन्वन्यव्यावृत्तिर्भाविकी स्वलक्षणस्य स्वभावो वा अन्यो वा न तत्स्वभावो विधिरूपेण विरोधात् । अविरोधे वा विधिनिषेधयोरेकत्वाद्विधिरूपतानिषेधेनालीकस्य स्वलक्षणसारूप्याया ऽन्यव्यावृत्तिरूपतोपपादनमनर्थकम् । विधिरूपेणातुच्छेन तुच्छस्य सारूप्यमनुपपन्नमिति चेत् । हन्त भोः स्वलक्षणस्यास्ति किं तुच्छमपि रूपं येनालीकस्य तुच्छस्य सारूप्यं स्यात् । तथा सत्ययमेकस्य स्वलक्षणस्य तुच्छातुच्छविरुद्धस्वभावद्वयसमावेशमभ्युपगच्छन् श्लाघनीयप्रज्ञो देवानांप्रियः । न च स्वलक्षणमन्यव्यावृत्तिरलीकमन्यव्यावृत्तं स्वलक्षणेन सरूपयति तथा सति हस्तिमशकावपि रासभः सरूपयेत् * धर्मो न च स्वलक्षणधर्मो व्यावृत्तिर्भेदवद्भिरभ्युपेयते । स्यादेतत् । अध्यवसीयमानमपि स्वलक्षणं न परमार्थसत् । अपि तु तदपि कल्पितं तस्मात्तस्य विधिनिषेधरूपता न

* धर्मो इति नास्ति ३ पु. ।

विरुद्धेन वस्तुनि हि विरुद्धधर्माध्यासो विरुध्यते नावस्तुनि तेनास्य विधि-
रूपपरित्यागेन निषेधरूपतामुपादायालीकस्य सारूप्यमुपपद्यते । यथा
ऽऽह यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अप्यन्यव्यावृत्ती न वस्तुन इति ।
अथालीकस्य स्वलक्षणस्यालीकसारूप्ये किं सिध्यति । न तावत् तत्र
प्रवृत्तिः, असतः प्रवृत्तिविषयत्वायोगात् । सतस्तु प्रवृत्तिविकल्पस्य न सदृश्य-
मसता सादृश्ये वा वृथा अलीकस्वलक्षणाभ्युपगमः । अथ न वयमलीक-
स्वलक्षणान्तरमातिष्ठामहे किं त्वलीकस्यैव दाहपाकादिकसामर्थ्यारोपम् ।
न तत्स्वलक्षणं तस्य सर्वतो व्यावृत्त्या अभिलापसंसर्गयोग्यत्वेन विकल्प-
ज्ञानप्रतिभासाभावात् । अभिलापसंसर्गयोग्यस्य चान्वयिनो ऽस्वलक्षणत्वात् ।
तस्मात्स्वान्वयिनो ऽन्यव्यावृत्तिरूपस्यासमर्थस्यापि सामर्थ्यं समारोप्य तदर्-
थिनो व्यवहर्तॄन् प्रवर्तयन्तो लोकविकल्पाः पारम्पर्येण सम्बन्धात्समर्थं वस्तु प्राप-
यन्तो न विसंवादयन्ति लोकमिति युक्तमुत्पश्याम । अथास्य अतदर्थक्रियासा-
मर्थ्यारोपः किं दृष्टार्थक्रियास्वलक्षणसादृश्येनाहो स्विदनादिवासनावशात् ।
तत्र स्वलक्षणेन सर्वतो व्यावृत्तेन समर्थेन समस्तसामर्थ्यविरहिणो ऽन्वयिनो
न किं चदस्ति सारूप्यम् अन्यवृत्त्या तु सारूप्ये विधिरूपेणापि प्रसङ्ग ।
तस्मादसतो भेदाभावादित्युक्तम् । अनादिवासनावशात्तु तदारोपे प्रथमदर्शने
ऽपि नालिकेरद्वीपागतस्य वह्नौ दाहपाकादिसामर्थ्यज्ञानप्रसङ्ग । वह्निस्वलक्ष-
णाद्दाहपाकादिकारिणो भेदाग्रहादलीकस्य तद्रूपसमारोप इति चेत् । किं
स्वलक्षणे गृह्यमाणे अथागृह्यमाणे । न तावद्गृह्यमाणे तस्य विकल्पगो-
चरत्वाभावादित्युक्तम् । तत्समयभावि त्वविकल्पकं तस्य गृह्णदपि न विक-
ल्पे स्वविषयं निवेशयति । तस्य ततो ऽन्यत्वेन तद्ग्राहिणामनभिहितत्वात् । यद्
विकल्पज्ञानमपि समनन्तरोत्पन्ननिर्विकल्पकव्यापारपारम्पर्ये ऽपि न स्वलक्षणं
गोचरयितुमर्हति । तस्याभिलापसंसर्गयोग्यप्रतिभासविषयत्वादित्युक्तम् ।
समनन्तरप्रत्ययादविकल्पादुत्पत्तेस्तद्ग्रहणपारम्पर्यादतद्गोचरो ऽपि तद्गोचर
इवाभासत इति चेत् । अनुभववासनाभावेषु भवेदपीयं मतिर्न तु परोक्षा-
भावावगाहिष्वविद्यावासनाप्रभवेषु समस्ति । अपि चानुभववासनाप्रभवस्यापि
तद्गोचरत्वाभिमानस्तस्मिन्गृह्यमाणे तदुत्पत्तिमात्राद्भवितुमर्हति । अगृह्य-
माणे तु वह्निस्वलक्षणे ततो भेदाग्रहेण तद्रूपारोपे त्रैलोक्यरूपारोपप्रसङ्गो । विष-

महेतोरभावात् । न हि तदानीमगृह्यमाणतया चैतन्याद्बहिःस्वलक्षणस्य कश्चिद्विशेषः बहिःस्वलक्षणविषयनिर्विकल्पकप्रभवत्वेन तस्मिन्विषये अविद्या-वासनाप्रभवेषु प्रधानेश्वरादिविकल्पेषु तदभाव इति नियमो न स्यात् । न चापहेय तदारोपसंभव इत्युक्तम् । तस्मादलीकस्य बाह्यत्वं विकल्पगोचर इति रिक्तं वचः । अपि च नानाकारवत्स्वलक्षणशङ्का-ऽलीकबाह्यत्वमपि न विकल्पगोचरो भवितुमर्हति । एतद्धि कल्पनाधीनमुत्पन्नायां कल्पनायामुत्पन्नमिव विनष्टायां नष्टमिव विकल्पनाभेदे भिन्नमिव न शक्यमेकत्वेन प्रतिकर्तुम् । भेदावभासमपोह्येति चेत् । किमन्यापोहरूपमपि तत्त्वम् । ओमिति चेत् । न तर्हि कल्पितम् । ननु नास्य भेदोऽपि स्वाभाविकः स्वाभाविको हि भेदाभेदाभ्यां युज्यते न त्वलीकम् । मा भूद्भेदोऽस्य स्वाभाविकः कल्पनाधीनं तु तदलीकं भिन्नाभिन्नं प्रतिपत्तव्यम् । अन्यथा तदधीनत्वापत्तेः । इदमेव हि तस्य विकल्पितस्य कल्पनाधीनत्वं यत्कल्पनाभेदाभेदानुविधानं नाम तदधीनत्वे तु कल्पितत्वानुपपत्तेरलीकत्वभङ्गात् । तस्मिन्नाम भूतमस्य स्वाभाविके नानात्वैकत्वे न तु भिन्नकल्पनाऽनुपाति शक्यमेकत्वेन प्रतिपत्तुमिति भिन्नं प्रतिपत्तव्यम् । तस्मिद्धं विकल्पगोचरत्वमलीकबाह्यस्य अभिलापसंसर्गयोग्यत्वात्सुखादिस्वलक्षणवदिति । अभिलापसंसर्गयोग्यं हि सत् तेनाप्यन्यममयत्वात् सुखादिलक्षणवदिति । शक्यसमयतया ह्यभिलापसंसर्गयोग्यता व्याप्ता अन्यथा ऽतिप्रसङ्गात् । सालीकबाह्यतायाः प्रतिविकल्पं भिन्नाया व्यावर्तमाना ऽभिलापसंसर्गयोग्यत्वमपि व्यावर्तयतीति प्रतिबन्धसिद्धिः । अपि चेदमलीकमगोव्यावृत्तिरूपं वा तद्धर्मो वा । अगोव्यावृत्तिरूपं चेत् । न तदसिद्धं गवि शक्यं ग्रहीतुम् अगोत्वं गोनिषेधात्मेति गोसिद्धिमपेक्षत इति इतरेतराश्रयत्वं तद्धर्मत्वे वा गोत्वमेवास्तु भाविकं तद्धर्मो विधिरूपः कुसुमनीलेनाविधिरूपेण । तद्धर्मत्वा तद्भाविकत्वसाधनं च निराकृतं तस्य भावाभावसाधारण्यमुपपादितं तद्विस्तराद्बिभ्यतो ऽपि बहुप्रवि-स्तरे पतिताः स्म इत्यास्तामेतन्नास्तिकमानोपमर्दनमिति । उपचारतो न व्याघात इति चेदिति शङ्कायाः परिहारवार्त्तिकम् । मुख्यासंभवादिति । ३३१ सर्वत्र मुख्यपूर्वक उपचारो वा समारोपो वा दृष्टः तत्र तु सिद्धान्तेन विधिविषयः कश्चिदस्ति मुख्यः शब्दो वा विकल्पो वा सर्वस्य निवृत्तिगो-

परत्वात् । न चाध्यवसेयो विधिः संभवतीत्युपपादितमधस्तादिति भावः ।
न चान्यापोहपक्ष उपचारो युक्तः उभयोः प्रधानशब्दत्वादिति । न हि
सिंहत्वं नाम किंचिदस्ति सिंहव्यक्तिषु यन्माणवके न स्यात् । अपि
तु प्रसह्यकारित्वादिव्युदासो माणवके नास्तीति सिंहव्यक्तिष्विव माण-
२।७ वके ऽपि सिंहशब्दो मुख्य एव स्यादित्यर्थः । **किं गौरगौरिति** । अश्वादि-
रित्यर्थः । प्रेक्षाप्रत्ययपूर्विका प्रेक्षा प्रेक्षविषये प्रवृत्तिः संप्रतिपत्तिः अङ्ग-
व्यतिरिक्तस्य चाङ्गिनः सेनावनबहुत्वसंख्यादीनां भवद्भिरभ्युपगमादित्यर्थः ।
**क्रियारूपत्वाच्चापोहस्य विषयो वक्तव्य इति** । कर्म विषयः क्रियाया-
स्तद्वक्तव्यमित्यर्थः । **कथमन्यविषयादिति** । कथमन्यविषयादपोहादगो-
विषयाद् गवि प्रतिपत्तिरिति । **अथागोरिति** । अस्ति हि काचित् क्रिया
या ऽन्यस्यान्यविषया । यथा चिकित्सामात्मनो ऽर्थः विषयं चेत्यर्थः । निरा-
करोति । **केन गोरिति** । क्रिया हि चेतनानां प्रयत्नपूर्वा भवति । अपोह-
लक्षणा च क्रिया निषेधरूपा निषेधश्च प्राप्तिपूर्वकः न हि गोरगोत्वं केन
चित्प्रसक्तं यत्प्रेक्षावता व्यपोह्येतेत्यर्थः । **कथं चागवीति** । अगवीति
पदेन यो ऽयं प्रतिषेधो भावो गोप्रतिपत्तिमन्तरेण भवतीत्यर्थः । अध्याहा-
नुपपत्तेरर्थप्रत्ययो न युक्त इति । अपोहरूपो ऽर्थप्रत्ययो न युक्त इत्यर्थः ।
**किमपोह्यो वाच्यो ऽथावाच्य इति** । अपोह्यादिशब्देनेत्यर्थः । **यदि वा-
च्य इति** । स्वरूपेणैवापोह्यो वाच्यो न चापोह्यापोहेनेत्यर्थः स्यादेतत् ।
यद्यन्यापोहेन शब्दो न वर्तते कथं तर्हि द्व्यादिविशेषेष्वनेकशब्द एकापो-
हेन वर्तते । न ह्यनेकत्वं नाम गोत्वमिव किंचिदस्ति सामान्यमित्यत
आह । **अनेकमिति चास्य पदस्य द्व्यादिविषयत्वात्** । सामान्या-
धिगतावेकत्ववर्जितसंख्यात्वसामान्याधिगतौ विशेष आश्रयितव्यः । संख्या-
त्वसामान्यमेवैकत्ववर्जितं तत्र द्व्यादिविशेषाधिगतिहेतुर्न पुनरन्यापोहमात्र-
मित्यर्थः । न ह्यवति सामान्यशब्दादेकत्ववर्जितसंख्यासामान्यवाचकादने-
कशब्दाद् विशेषाप्रत्ययो अन्यापोहमात्राद्विशेषाधिगतिरिति योजनीयम् ।
अब्राह्मणादिशब्दानामप्येवमेव गतिः । तथापि पुंस्त्वसामान्यमेव ब्राह्मण-
१।६ शब्दार्थ इति । **नीलोत्पलशब्दयोश्च प्रधानत्वादिति** । अनीलानुत्पलव्यु-
दासौ हि प्रधानौ नीलोत्पलशब्दयोराहतुः न ह्येतयोरस्ति विशेषणविशेष्य-

भावः परस्परासंबन्धादिति भावः । एतेन नीलोत्पलशब्दयोरस्मिन्सिद्धान्ते प्रधानार्थत्वेन व्युत्पादनेन राजपुरुषशब्दौ व्याख्यातौ प्रधानत्वेन चाप्यरा-जपुरुषव्यवच्छेदयोर्नावच्छेद्यावच्छेदकभावः नापि स्वस्वामिभाव इत्यर्थः । समानाधिकरणयोश्चेति । शब्दविकल्पयोः परमार्थसद्वस्तुसंस्पर्शासंभवादि-त्यर्थः ॥

व्यक्ति-र्तिः (सू. ६४) ॥ अत्र हि व्यक्त्याकृतिजातीनां समावेशात्रैव व्यक्तिनिर्धारणार्थमेदं लक्षणम् । तेनाकाशाद्यनवरोधे ऽपि न दोषस्त-त्राकृतेरभावादिति भाष्यमतम् । यथा ऽऽह भाष्यकारः न सर्वं द्रव्यं व्यक्तिरिति । यद्यपि गुरुत्वादयः सामान्यगुणास्तथा ऽपि गुणान्तरेभ्यो व्यावर्तमाना गुणविशेषा इत्युच्यन्ते । अव्यापिन इति । सर्वगतस्य द्रव्यस्य परिमाणं व्यवच्छिन्दन्ति । मूर्च्छिताः परस्परं संयुक्ता अवयवा यस्य तन्मूर्च्छि-तावयवम् । कथं पुनरित्यादिभाष्यमाक्षिपति वार्तिककारः । अधिगतत्वादि- ३३४ । ति । स्वरूपावगमपूर्वकत्वाद्वाक्यप्रतिपादनस्य स्वरूपावगमो ऽपि तन्त्रान्त-रीयकत्वात्सिद्ध इत्याक्षेपाभिप्रायः । निराकरोति । न निमित्तत्रैविध्ये सति तद्विशेषविषयज्ञापनार्थत्वात् । प्रश्नस्य शब्दप्रवृत्तिनिमित्तानां त्रैविध्ये सति तद्विशेष एव विषयः तज्ज्ञापनमर्थः प्रयोजनं यस्य स तथोक्तः । एतदुक्तं भवति सिद्धं कृत्वा भेदमभिधेयत्वं त्रयाणां प्रतिपादितम् । संप्रति स एव भेदः प्रतिपाद्यत इति । सूत्रमिति । बहूनामर्थानां सूचनादिति भावः । अथ भाष्यव्याख्यानमुपन्यस्यति । व्यज्यत इति । दूषयति एतत्तु नेति । व्यक्तिः पदार्थ इत्येतत् प्रकृतं तत्र यथा ऽवयविनो व्यक्तेः पदार्थत्व-मेवम् आकाशादीनां चोत्क्षेपणादीनां च तत्तया लक्षणं व्याख्येयं यथा सर्वे संगृह्यन्ते अन्यथा सूत्रकारो ऽकुशलः स्यात् तदर्थमाह । वयं तु ब्रूम इति । अथेदं व्याख्यानम् । व्यक्तिरिति लक्ष्यनिर्देशः शेषं लक्षणम् । गुणविशेषा इति द्वेधा समासः गुणश्च विशेषश्चेति प्रथमो विग्रहः तेनाकृतिर्निराकृता संगृही-ताश्च रूपादयो भवन्ति । तथा ऽप्युत्क्षेपणादिव्यक्तेरसंग्रह इति द्वितीयो विग्रहः । गुणेभ्यो विशेषा गुणविशेषाः गुणेभ्यो व्यावृत्ता उत्क्षेपणादय इति यावत् । तथा ऽपि न द्रव्यं संगृह्यत इत्यत आह । आश्रय इति । तच्छब्दा-ध्याहाराद् गुणविशेषाश्रयो द्रव्यमित्यर्थः । प्रतिपदमिति । गुण इति च ३३५

विशेष इति चाऽऽश्रय इति चेति पदानि । अथ वा गुणविशेषाणामाश्रय इति गुणा रूपादयः विशेषाः कर्माणि गुरुत्वं इत्यर्थात् । तेषामाश्रयश्चेति द्वन्द्वः एव तेव नित्यर्थाद्गम्यते मत मूर्छित इति मूर्च्छनं सम्बन्धः बहु चासौ समवाय इति ।

आकृ-त्या (सू ६५) ॥ जातिश्च जातिलिङ्गानि च तानि जातिलिङ्गानि तान्याख्यायन्ते यया सा आकृतिः । शिरः पादादिव्यूहः आकृतिरिति मनुष्यत्वादिकमाचष्टे । शिरोनासिकाललाटचिबुकादीनां शिरोऽवयवानां व्यूहो मनुष्यत्वजातिलिङ्गं शिरः आचष्टे । शिरसा पादेन गामनुमिन्वन्तीति भाष्यम् । यद्यपि गोत्वं प्रत्यक्षमेव नाकृतिव्यङ्ग्यं तथाऽपि विप्रतिपद्यमानं प्रत्यनुमिन्वन्तीति न पुनः सर्वा जातिराकृत्या निरूप्यत इति । मृत्सुवर्णरजतादिका हि रूपविशेषव्यङ्ग्या जातिर्नाकृतिव्यङ्ग्या ब्राह्मणत्वादिजातिस्तु वेनिव्यङ्ग्या आज्यतैलादीनां जातिस्तु गन्धेन वा रसेन वा व्यज्यते । अत एव न सार्षपादीनां तैलत्वमस्ति तद्व्यञ्जकयोर्गन्धरसयोरभावात् । भातस्तु तैलवद्व्यञ्जके क्षीरजातिरपि रसव्यङ्ग्यैव अत एवामिक्षायां क्षीरत्वं न तु वाजिनस्य तद्व्यञ्जकस्य रसभेदस्य वाजिने ऽभावात् आमिक्षायां च भावादिति ॥

समा-तिः (सू ६६) ॥ प्रसूत इति प्रसव समानबुद्धिर्भिन्नेषु प्रसवो यस्य जातिः सा ऽथवा समानप्रत्ययं प्रसूते न पुनर्या समानप्रत्ययं प्रसूते सा जातिः । पाचकादिषु व्यभिचारादिति । व्यक्त्याकृतिभ्यां भेदकत्वमात्रं चेत् द्वयं न तु सर्वथा वेदितव्यम् । यस्तु वेदात्यात्प्रत्यये ऽपि विप्रतिपद्यते तं प्रत्यनुमानान्याह । गवादिष्वनुवृत्तप्रत्यय इति । व्यपदेश इति सम्बन्धिना सम्बन्धान्तरस्य विशेषणं पुरुषो व्यपदिश्यते दाता इत्यनेनेति । गोर्गोत्वानुवृत्तिप्रत्यया इति । पूर्वमनुवृत्तप्रत्ययमात्रं पक्षीकृतम् इह तु गोर्गोत्वानुवृत्तिप्रत्यय इत्यनेनोक्तम् । कीर्तित इति । यथा* लिङ्गं विवक्षितमनन्तरत्वात् । अन्यत्र यथालिङ्गं प्रत्यय इति । नपुंसकमनपुंसकेनेति नपुंसकत्वं नाशङ्कनीयमिति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां द्वितीयाध्यायस्य द्वितीयमाह्निकम् ।

द्वितीयो ऽध्यायः समाप्तः ॥

---

* यद्यपीति ३ पु पाठ ।

अथ भाष्यं परीक्षितानि प्रमाणानि प्रमेयमिदानीं परीक्ष्यत-
इति। वृत्तानुकीर्तनं प्रमेयपरीक्षां वर्तिष्यमाणां प्रति वृत्तायाः प्रमाणपरीक्षाया
हेतुभावं दर्शयितुम्। प्रमाणेन हि प्रमेयं परीक्ष्यते नान्येन न च तदपरी-
क्षितं प्रमेयपरीक्षायै प्रभवति। तत् प्रमाणपरीक्षा हेतुः हेतुमती प्रमेयपरी-
क्षेति। द्वादशविधं प्रमेयं तत्कस्मात्प्रथमत आत्मैव परीक्ष्यते न प्रमेयान्त-
रमित्यत आह। तत्रात्मादीत्यात्मा विचार्यत इति। आत्मैव हि
प्रमेयेषु प्रथममुद्दिष्टो लक्षितश्चेति तदनुरोधादात्मैव प्रथमं परीक्ष्यते न
प्रमेयान्तराणीति। अथ ■ यद्यपि स्वरूपेणात्मन्येव परीक्षां प्रतिजानीते
तथाऽपि लक्षणपरीक्षाद्वारेण लक्ष्यपरीक्षणात् लक्षणपरीक्षैव द्रष्टव्या। यथा
चेयमात्मलक्षणपरीक्षा तथोपरिष्टाद्दर्शयिष्यते। तदेतद्वार्तिककारो व्याचष्टे।
आनन्तर्यादिति। किं पुनः प्रयोजनं प्रमेयपरीक्षायाः न हि निष्प्रयोजनं ३३८
परीक्षन्ते प्रेक्षावन्त इत्यत आह। यद्विषयोऽहंकार इति। अहंकार
इत्यात्मादिविषयं मिथ्याज्ञानं निर्दिशति। शरीराद्यभेदेनात्मदर्शनं खलु
संसारं प्रवर्तयतीत्युक्तं द्वितीयसूत्रे। अनेन प्रमेयपरीक्षायाः प्रयोजनवत्त्वं दर्शि-
तम्। अत्र भाष्यकारेण विचारपूर्वरूपः संशयो दर्शितः। किं देहेन्द्रिय-
मनोबुद्धिसंघातमात्रमात्मेति। संघातकार्यं चोक्तं व्यपदेशस्येति।
यद्यपि वृक्षप्रासादयोरवयविसमुदाययोरन्ययोरेवावयवेन समुदायिना च व्यप-
देशस्तथाऽप्यवयव्यभावं समुदाये च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदा-
हरणं द्रष्टव्यम्। तदेतद्वार्तिककार आक्षिप्य पृच्छति। किं पुनरस्येति। उत्तरं
किं शरीरेति। आक्षिपति नेति। समानधर्मणो धर्मिणो दर्शनात्संशयो न पुन-
रदर्शनादित्यर्थः। समाधत्ते नेच्छादिसूत्रेणेति। इच्छादयो हि कार्यत्वात्
लिङ्गमात्मन इति दर्शितम्। तान्येव तु लिङ्गानि दर्शयत्यविचारं परीक्षन्ते।
किं देहेन्द्रियव्यतिरिक्तं धर्मिभ्यः सिध्यन्ति आहो स्विदमित्र इति युक्तो
विचारः। अपि चात्मात्मशब्दाभिधेयो धर्मी सर्वतन्त्रसिद्धः केवलमस्य
शरीरेण सह भेदाभेदे वादिनां विवाद इत्याह। अविप्रतिपत्तेश्चेति।
ननु चात्मासत्त्वे परैः प्रमाणान्यजातत्वादीन्युपन्यस्तानि तत्कथं न
तत्सत्त्वे विप्रतिपत्तिरित आह। असत्त्वप्रतिपादकप्रमाणाभावादिति। ३३९
पादेशात्। न भवति यो धर्मिणि विप्रतिपद्यते न हि धर्मिणि विप्रतिपद्य-

मानस्यास्ति किं चित्प्रमाणं सर्वस्य तस्याप्रमाणसिद्धेरप्रमाणत्वात् । अभावस्य
च भावाधीननिरूपणस्यात्यन्तासद्भावानिरूपणेनानिरूपणात् । तस्मादुभयं
भाववादी न लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीय इति भावः । धर्मं
६ । ६ सिद्धेत्यादिना प्रमाणमुपन्यस्यति न नास्तीति । निराकरोति । तत्र
नास्त्यात्मेति । यत्पुनरपरे समादधुः अनादिवासनोद्भूतविकल्पपरिनिष्ठि-
तः । शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः । भावाश्रयो यथा नील
मिति अभावाश्रयो यथा शशविषाणमिति उभयाश्रयो यथा ऽमूर्तमिति ।
अमूर्तं हि भवति विज्ञानं भवति च शशविषाणम् । तस्मिन्बाह्यानुपादाने
साध्ये ऽस्यानुपलम्भनम् । तथा हेतुर्न तस्यैवाभावः शब्दप्रयोगात इति ।
सो ऽयमात्मविकल्पो बाह्योपादानो न भवतीति । यथा नीलविकल्पो
बाह्यनीलोपादानः नैवमात्मविकल्पो बाह्योपादान इत्यर्थः ।

तत्रैव भवाञ्पृष्टो जायते । किमात्मविकल्पस्य बाह्योपादान-
त्वमात्रं प्रतिषिध्यते किं बाह्यात्मोपादानत्वम् । पूर्वस्मिन् सिद्धसाधनं मा
भूदात्मविकल्पो बाह्यनीलाद्युपादानः किं न छिन्नम् । उत्तरस्मिंस्तु कल्पे क्वाय
बाह्यात्मा सिद्धः यदुपादानत्वं विकल्पस्य प्रतिषिध्यते । सिद्धश्चेत् क्वापि
नास्तीत्यत्यन्ताय प्रतिषेधः । असिद्धश्चेत् कथमप्रतीतस्य निषेधः । प्रतीतो
विकल्पे बाह्ये निषिध्यते चैत्र इव गेहे चत्वरतले निषिध्यत इति चेत् ।
वयमपि यत्र प्रतीतस्तत्र न निषिध्यते यथा भवद्भिरेवोक्तं न तस्यैवाभाव
शब्दप्रयोगात इति । बाह्यश्चात्मा विकल्पेन नोपदर्शित इति प्रसक्त्यभावान्न शक्यो
निषेद्धुम् । अप्रदर्शितोऽप्यध्यवसित इति प्रसक्त एवेति चेत् । ननु विकल्पस्य को
ऽयमध्यवसायो नाम यद्व्यावृत्तिरिक्तः बाह्यस्य स्वाकारस्य वा ऽलीकस्य वा
बाह्याध्यारोप इति चेत् । न बाह्याऽविषया विकल्पा बाह्यमारोपयन्तीति
विषमम् । न हि आरोपविषयबोधे अजानन् आरोपयितुमर्हतीत्यसकृदावे
दितम् । अपि च अलीकं प्रतीयमानं यथा न निषेद्धुं शक्यं प्रतीयमानत्वा-
देवमस्य बाह्यत्वमपि । मिथ्यात्वात्प्रतिषिध्यत इति चेत् । तत्किमलीकमपि
सत्यं यतस्तुलद्धा बाह्यत्वं प्रतिषेद्धुमध्यवसितो ऽसि बाह्यभेदग्रहस्तद-
ध्यवसायो न प्रसञ्जक इति न निषेधगोचरः । न च ज्ञानाकार आत्मा
परमार्थसन् बाह्यत्वेनारोप्यमाणः प्रतिषिध्यत इति साम्प्रतम् । विज्ञानमपि

हि सर्वथा बाह्यस्याग्रहे तत्समारोपासंभवात् । अत्यन्तासतश्च बाह्यस्य विज्ञानानात्मनो ग्रहे तथाविधेनासता विज्ञानानात्मना विज्ञानग्राह्येण किमपराद्धं येन तद्ग्राह्यो न स्यादिति विज्ञाननयो दत्तजलाञ्जलिः प्रसज्येत । न चायमात्मा पूर्वापरकालावस्थायी क्षणिकविकल्पाकारो भवितुमर्हति येन तदाकारो बाह्यत्वेन प्रतिषिध्यते तस्मादन्यत्र दृष्टमन्यत्र समारोप्य प्रतिषिध्यतइति युक्तं स च समारोपः क्व चित्स्वकारणप्रभवः क्व चित्प्रतिषिध्यते यथेन्द्रियादिदोषादुत्पन्नरजतज्ञानस्य शुक्तिकायां नेदं रजतमिति । क्व चित्पुनराहार्यो यथा नेह चैत्र इति । तस्मादात्मनो देशकालान्तरे वस्तुनि विकल्पनं विज्ञाने चासंभवादत्यन्तासतो न समारोपः तदभावादात्मन्येव नास्ति यदि चेत्कथमत्यन्ताय निषेधः । तस्मादात्मा नास्तीति पदयोर्व्याघातः । यद्यप्यात्मा नास्तीति पदानि तथा ऽपि नास्तीत्यस्यैकपदं विवक्षित्वा पदे इति द्विवचनोपपत्तिः । पद्यते गम्यते ऽनेनार्थ इति विवक्षित्वा पदसमुदायो ऽपि पदमुच्यते । यद्यपि घटादीनां देशान्तरादौ निषेधस्तथा ऽपि चात्मनोऽत्यन्ताय भविष्यति च [illegible] प्रतिषेधान्तरधर्ममवश्यं प्रतिषेधान्तरमनुबध्नातीत्यत आह । सर्वव्यापमिति । उपपादितमेतदध- ३३९ । स्ताद् यथा नानारोपितप्रतिषेधो यथा चाननुभूतमशक्यमारोपयितुमिति न क्व चिदात्मन्यन्याधारत्वमुक्तं स्वातन्त्र्यादात्मनः सामान्यादयस्तु पिण्डादिपरतन्त्रनिरूपणाः पिण्डाद्याधारा इति । पृच्छति किमयमिति । यत्र क्व चिदस्ति तदत्यन्तमसद् यथा शशविषाणं तथा चायं तस्मादत्यन्तमसन्निति भावः । उत्तरं न नास्तीति । न तावन्न क्व चिदस्तीति वाक्यमात्मानं स्वरूपेण निषेधति देशरूपविशेषप्रतिषेधात् । शङ्किता आह । केयं वाचोयुक्तिरिति । उत्तरवाद्याह । एषा वाचोयुक्तिरिति । यथा वक्ष्यमाणार्था । तदर्थमाह । यद्यथाभूतमिति । न हि पदार्थानां सत्ता देशबलेन व्याप्ता येन देशवत्त्वं निवर्तमानं तां निवर्तयेदिति भावः । न [illegible] ३४० । कालविशेषप्रतिषेधो ऽपीति । कालान्तरप्रतियोगी यत्रैकः कालः कालविशेषः तत्प्रतिषेधो ऽप्यात्मन्ययुक्तः न हि यथा, घटादिष्ववच्छेदार्थः कालः तथा नित्यआत्मनि । प्रध्वंसाभाववान् घटः खल्वासीन्न तथा ऽऽत्मा प्रागभाववान् घटो भविष्यति न तथा आत्मा । अतीतप्रागभावो ऽनागतप्र-

त्वाच घटो वर्त्तमानो न च तथा आत्मा तस्मान्नास्यावच्छेदार्थेन त्रैकाल्यमपाकृतम् । अतीतानागतव्यपदेशवर्त्तमानक्रियाव्यङ्ग्यः कालो ऽस्ति सदा नित्यानां यतो ऽस्त्यात्मा विद्यते व्योमेति तस्मादवच्छेदकत्रैकाल्याभावे न त्रैकाल्यप्रतिषेधः । अतीतानागतव्यपदेशक्रियाव्यङ्ग्यस्य च वर्त्तमानस्याव्यनिषेधत्वाद् नात्मनि कालप्रतिषेध इति स्थितम् । आत्मप्रतिषेधे चेति आत्मेति हि पदं लोकसिद्धं पदार्थे ह्यनेन कश्चिदर्थो येन न कश्चिदर्थः पदार्थः तदर्थकं भवितुमर्हतीति । किमसतः सता साधर्म्यमिति । नहि भवतां सिद्धान्ते शशविषाणादिरूपमसत्किञ्चिदस्तीति भावः । अथ शरीरादयस्तदात्मत्वेनोक्तिमात्रं निषिध्यते शरीरादयो नात्मान इति तत्राह आत्मसामान्यं चेत् । अथ शरीरादीति अहङ्कारस्तावत्परमार्थतः शरीरादिविषयस्तेनो ऽहं गौरो ऽहमिति प्रत्ययात् । तमिममात्मनि कल्पयित्वा विपर्ययानि तदनुरूपं व्यवहरन्ति च । सो ऽयं विपर्ययः प्रतिषिध्यते नास्यात्मेति । निराकरोतीति । एवं शरीरादीति । न ह्यहङ्कारसमारोपविषयत्वमभ्युपगच्छता भवताप्युपपद्यते तस्मात्तन्निषेधो व्याघात इत्यर्थः । चतुर्णामुपादानरूपत्वात् तमस इति । रूपरसगन्धस्पर्शवत्त्वात् घटादिरूपस्य परिणामस्तेषामुपादानरूपं तम इति उपादीयतेऽनुपादानम् उपादेयरूपत्वं त्विति क्वचित्पाठः स तु सुगमः । सो ऽयं पातञ्जलीयानां वैनाशिकानां सिद्धान्तः तेन विरोध इत्यर्थः । सुगममन्यत् । अथ भावप्रतिषेध इति । न जन्ममात्रप्रतिषेधो ऽपि तु आत्मनो भावः सत्ता प्रतिषिध्यत इत्यर्थः । स्वतन्त्रस्य धर्मस्य समवायादन्यस्यादर्शनादिति । निकाया देवमनुष्यतिर्यगादीनामनेकत्वाद्वैचित्र्यावस्थिताः सद्धातृभिरित्यर्थः । कार्यं कारणं चेत् । यदि नित्यानामवयवस्तदा कारणं यदि तु केवलत्रित्वेनानारम्भकत्वान्नावयवस्तदा कार्यं तस्मात्तदभवतीति । उक्तमप्यर्थं पुनर्विकल्पयन् पर्यनुयोगार्थमाह । इदं शशविषाणं नास्तीति ब्रुवाण इति । सामान्यप्रतिषेधो विशेषसम्बन्धमात्रप्रतिषेध इति । विशेषप्रतिषेधः कार्यकारणभावलक्षणसम्बन्धप्रतिषेध इति । विषयस्वभावभेदानुविधायीति । अहमिति विज्ञानं मानस विषयस्यात्मनो य स्वभावभेदः कर्तृत्वभोक्तृत्वलक्षणो जाने ऽहं भुञ्जे इत्या

सत्वमनुपलब्धेरस्य साधयितुमध्यवसितः । तन्नास्य सधर्मेणानुपलब्ध्या न सिध्यति । न चातु स्थाणुधर्मेण कल्पितेन पुरुषे स्थाणुत्वं पारमार्थिकं यस्य
। ३ साधयितुमित्याह । किमर्थं चायमारम्भ इति । रूपादिशब्देभ्योऽन्यत्वे सतीति । यदि हि पदत्वादित्युच्यते रूपादिशब्दैरनैकान्तिकं स्यादत उक्तम् । रूपादिशब्देभ्यो ऽन्यत्वे सतीति । यदीरूपदत्वादित्युच्येत रूपादिशब्दैरनैकान्तिकं स्यादत उक्तं रूपादिशब्देभ्यो ऽन्यत्वे सतीति । तथा ऽपि रूपविज्ञानवेदनाधप्राप्तसंस्कारा इत्यय शब्दो रूपादिवाचको यः शब्दो रूप वेदना सञ्ज्ञा विज्ञानमित्यादिस्ततो ऽन्यो ऽयमस्तादन्यः समस्त इति तेनानैकान्तिकत्वमत उक्तमेकेति । तेन रूपादिवाचकपदव्यतिरिक्तं यदेकपदं तद्रूपादिव्यतिरिक्तस्य वाचकं यथा घटादिपदं तथा चात्मपदं तस्मात्तदपि तथेति । एतेनेति । आत्मशब्दसाध्यत्वेनेत्यादिममेत्येवप्रत्ययो ऽहंप्रत्ययो व्याख्यातः । यदुक्तं असिद्धमिति । घट इति रूपादय एवैकोऽहमाहरणादिविच्छिन्ना उच्यन्ते । न हि रूपादिव्यतिरिक्तो घटो नाम कश्चिदस्तीत्यर्थः । निराकरोतीति । अत्रोक्तमिति । उपादेयरूपत्वात्तमस इति । यथा दायमिति देयमुच्यते यथमुपादायेत्यनेनोपादेयमिति । सविषयत्वं सद्विषयत्वं सिद्धान्तिनोक्तमिति मन्वानश्चोदयति । तमःशब्दस्य सविषयत्वमिति । यद्यप्यमावविषयत्वे ऽपि न निर्विषयत्वं तथा ऽपि देयत्वाभिमानमनुविदधानः परिहरति । न सूत्रार्थ इति पुनर्दृष्टान्तो नास्तीति । पूर्वेणात्मनानुपकारकत्वे साध्ये दृष्टान्ताभाव उक्तः पुनरिहेोच्यत इत्यर्थः । देशयति । अथात्मशब्द इति । यो यो धर्मात्मकः स सर्वो ऽनित्यविषयो यथा घटादिशब्दः तथा चानित्यत्वे सति तद्विधानमेव स्यान्नात्मेति फलत आत्मप्रतिषेध इत्यर्थः । एतदपि दूषयति तथा ऽपीति । नित्यशब्दस्तावन्नित्यमाचष्टे अन्यः स न तत्प्रतिषेध इत्यर्थः । यदुक्तं अथेति । सिद्धसाधननिवृत्यर्थं शरीरादिव्यतिरिक्तविषय इति । निराकरोति तथा ऽपीति । रूपादिस्कन्धपञ्चकातिरिक्तं नास्तीति भवता राद्धान्तस्तदतिरिक्ताभ्युपगमेन विरुध्यतइत्यर्थः । यदि
। ४ विवक्षितार्थव्यतिरेकेणेति । वादिनो हि शरीरेन्द्रियबुद्धिवेदनासङ्घातस्य पारार्थ्यं विवक्षितं परार्थाश्चक्षुरादय इति ब्रुवतो न सङ्घातपरार्थत्वं तत्रेह पक्षधर्मतास्तीत्यिच्छयाभिप्रायेण व्याख्यते न तु साक्षाद्विवक्षितं तद्वि-

हाभिप्रायव्याप्तं विवक्षितमारोप्य यद्यनन्यथाविरोधो दृश्येत ततः सर्वानुमा-
नोच्छेदः तत्त्वेश्वरसिद्धौ निपुणतरमुपपादयिष्यते । अथानुमानेन बाध्यत- ३४९
इति । संघातस्यानुमानमेवाभिप्रेतविपरीतसंघातपरार्थत्वपक्षो व्यवस्थानव-
शान्निग्रहानुग्रहकर्मकमहाप्रयत्नस्य बाधकं प्राणादिमत्त्वानुमानं वेति । एकदेशेन
च एकदेशान्तराणामिति ब्रुवतो वार्तिककारस्य गृहप्रासादादयो नावय-
विनो विजातीयानामनारम्भकत्वादित्यभिमतम् । अकार्यकारणभूतानां
चेति । यथा हि कान्तायां कामिनोऽभिलषतः स्मितवत्यां गतिर्भवति प्रतिसं-
धानं न चैतयोरस्ति कार्यकारणभाव इत्यर्थः । एवं चैतन्यं त्वात्मनः
स्वातन्त्र्ये सत्यव्यवस्थानाच्चक्षुरादिवदिति *हेतुः प्रमाणसंशयविपर्यय-
स्मृतिषु यो ऽनुस्यूत एक उपलभ्यते स चेतनः स्वातन्त्र्ये सत्यव्यवस्थानात् ।
यस्त्वचेतनो नासौ स्वातन्त्र्ये सत्यवस्थितो यथा चक्षुरादिरिति व्यतिरेकी
हेतुः । सत्यव्यवस्थानादित्येतावन्मात्रमुच्येत ततो मनसा ऽनैकान्तिकं स्यादत
उक्तं स्वातन्त्र्ये सतीति । अथ वा कृतमव्यवस्थानेन स्वातन्त्र्यमेव केवल-
मस्तु चैतन्यसाधनमित्याह । नाचेतन आत्मेति । आत्मेति प्रमाणसंशय-
विपर्ययस्मृतिष्वनुस्यूतमनुभूतम् उपनयति । निराकृतमप्यर्थं प्रकारान्तरेण
पुनरुपन्यस्य निराकरोति । पृथिव्यादिनित्यत्वसाधन इति । भाष्यं
भिन्ननिमित्ताविति । भिन्नमिन्द्रियं निमित्तं ययोः अनन्यकर्तृकयोः आत्मैक-
कर्तृकयोः समानविषयौ द्रव्यमेकं विषय इत्यर्थः । पूर्वपक्षसूत्रम् ।

**न वि—त्** ( सू. २ ) ॥ यद्भावाभावानुविधायिनो यस्य भावाभावौ तच्चे-
तनम् । इन्द्रियभावाभावानुविधायिनौ ताविति तदेव चेतनमिति भावः । सिद्धा-
न्ताभावं संदिग्धत्वादहेतुः अनन्यथासिद्धान्वयव्यतिरेकौ कारणत्वमात्रे
प्रमाणं न तु कर्ता न चेतनत्वेनानं करणमित्यपेक्ष्यार्थः । विषयव्यवस्थानं च
सिद्धमिन्द्रियादीनामचैतन्यस्य साधनादित्याह । यथोक्तमिति ।

**तद्व्य—धः** ( सू. ३ ) ॥ सर्वेषु इन्द्रियस्य विषयत्वे सर्वविषयग्राही सर्वे-
षामिन्द्रियाणां च यो विषयान्तरग्राही इन्द्रियान्तराणि प्रमाणान्तराणि च एतदर्थ-
वच्छिन्नविषयाणि नेतुमशक्यानि सर्वेषु इति सिद्धम् । अत्रेदमभिज्ञानमिति ।

---

* व्यतिरेकीत्यधिकः १ पु पाठः ।

असाधारणं चिह्नमभिधानमुच्यते तत्प्रत्याख्येयमनुभवविरुद्धत्वात् । चेतन-
धर्ममभिधानप्रत्याख्येयमुदाह्रियत इति योजना । अनियतपर्यायमनियतक्रममि-
त्यर्थः । **अनेकविषयमर्थजातमिति** । अनेकपदार्थो विषयो यस्यार्थजातस्य
तत्तथोक्तम् । क्वचित्पाठो ऽनेकविषयमर्थजातमिति स सुगम एव । **आकृति-
मात्रं त्विति** । सामान्यमात्रमित्यर्थः । तदेतच्चेतनत्वं देहादिभ्यो व्याव-
र्तमानं तदतिरिक्तं चेतनं साधयतीति स्थितं नेच्छाद्याधारत्वं देहादीना-
मिति । सूत्रान्तरमवतारयति भाष्यकारः **इतश्च देहादिव्यतिरिक्त आत्मा
न देहादिसंघातमात्रमिति** ।

**शरीर-घात् (सू. ४)** ॥ प्राणिनिपाते पातकाभावप्रसङ्गादिति
अर्थं यद्यपि भूतचैतनिकानां नास्तिप्रसङ्गस्तथा ऽपि याज्ञिकान्प्रति द्रष्टव्यः
ते हि प्राणिनिपातकृतं पातकमिच्छन्ति । यत्र च न बुद्धिरात्मेति तन्मते
देहादिवधस्य विधिनानिषेधित्वात्तुल्यं यदि कश्चिद्भूतचैतनिकः प्राणिनिपात-
कृतं पातकं नेच्छेत प्रति दूषणं भवत्वेवमर्थमिति मन्तव्यम् । **धार्मिकम्** ।
१५ **अकृतकृताभ्यागमनाशदोष** इति । येनाकृतं कर्म प्राणिनिपातं तस्य पात-
काभ्यागमो येन च कृतं तस्य नाश इत्यर्थः । शास्त्रचोदितं फलमनुष्ठातरीत्य-
यमुत्सर्गो यत्र पुनः शास्त्रमन्यस्य फलमाह यथा श्राद्धे वैश्वानरीयेष्ट्यादौ
तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृतायां वा जातेष्टौ पुत्रगामि
फलमिति । भावना स्मृतिहेतुः संस्कारः । **यत्काये**ति । येन कायेनोपल-
ब्धं कश्चित्स्मृतवान् स कायान्तरवर्त्यपि फलं भुङ्क्त इत्यर्थः । **एकनिमि-
त्तानां प्रत्ययानां प्रतिसंधानादि**ति । उत्क्षेपवद् यथा नर्तकीभ्रूलताभङ्गे
एकस्मिन् बहूनां प्रतिसंधानमिति । **सर्वावस्थोपलब्धेरि**ति । सर्वावस्थासु
बीजावयवानामुपलब्धेः परमाणववस्थात्वे त्वनुपलम्भः स्यात् । तस्मान्न बीजा-
वयवाः पच्यमानाः अङ्कुरोत्पत्तौ परमाणववस्था भवन्ति । अपि त्ववयविन
एव पच्यन्त इत्यर्थः । परमाणववस्था बीजावयवा न बीजत्वादिजातिविशेषव-
न्तमारब्धुमर्हन्तीत्युक्तं सिद्धान्तिनेति मत्वा दर्शयति । **यदि तर्ही**ति । परि-
हरति **नानेनैवोक्तोत्तरत्वादि**ति । प्रतिसंधानाय बीजत्वजातीयानवयवान्
लब्धुमस्माभिर्बीजावयवानां परमोऽन्तो विभागो निर्दिष्टः कल्पादौ त्वारम्भे
परमाणूनां न प्रतिसंधानमस्ति न हि पूर्वसर्गे ये बीजमारेभिरे साम्प्रतमपि

६ नैयायिकं पृच्छति । अथात्मनो नित्यस्येति । नैयायिक आह । सुखदुःखे इति । नित्यादात्मनो व्यतिरिक्ताभ्यां पुण्यपापाभ्यामात्मधर्माभ्यामनित्याभ्यामात्मधर्मावेव सुखदुःखे जन्येते इत्यर्थः । एतदुक्तं भवति । नित्यस्यानित्यधर्माधानमेवोपकारो न तु नित्यस्वरूपकरणं येन तदनित्यं स्यात् । धर्मश्च धर्मिणो भिन्नो न तु धर्मिस्वभावः । यथा च भेदाविशेषे सत्यपि वह्निधूमयोरेव कार्यकारणभावो न वह्निक्रमेलकयोर्वस्तुस्वभावनियमात् । एवं भेदाविशेषे ऽपि आत्मनः पुण्यपापयोरेव धर्मधर्मिभावो नात्माकाशयोः पुण्याकाशयोर्वेति लेश-

१४ मात्रमत्रोक्तं विस्तरस्तु क्षणभङ्गभङ्गे भविष्यतीति । नानैकान्तादिति । वाद्यभिमतपरमाणुनित्यत्वस्याविप्रमाणकत्वेनानैकान्तिकत्वमुक्तं न तु बौद्धराद्धान्ते नित्यः परमाणुरिति । अत एवापरितोषादन्यथासिद्धिमाह । धर्मपक्षानित्यत्वमिति । गृहाणां चोपलादीनामवस्थानादिति । नाप्यति विनाशप्रत्यये विनाशे ऽस्ति किं प्रमाणम् । उपलादिषु चावयवविभागविनाशाभ्यां प्राग् न विनाशो ऽनुभूयते क्षणभङ्गभङ्गश्च निवेत्स्यत इति भावः । आरब्धकार्याणां द्रव्यान्तरानारम्भका इति । अवयव्यारम्भकत्वस्योपाधेरुक्तः । विक्रियायां च दृष्टान्ताभाव इति । धर्मान्तरोत्पादमन्तरेणापि पश्यतो धर्मिस्वरूपस्य विक्रियाभावमित्यर्थः । शङ्कते यद्येवमिति । यद्येवंभूतो विकारः यादृशो घटादीनां श्यामतानिवृत्तौ लोहितोत्पादे विकारस्तादृशो नात्मन इति यदि शङ्कत इत्यर्थः । निराकरोति । आत्मन्यपीति । न बाह्येन्द्रियग्राह्य एव विकारो ऽपि तु धर्मान्तरोत्पादमात्रं तच्चात्मन्यप्यस्तीति ।

न का–त् (सू. ६) । वैकल्यं वा प्रमापणं वेति । यथा शरीरमुपघ्नन् हिनस्त्येवं चक्षुराद्युत्पाटयन् हिनस्त्येवेति । पृच्छति कुत एतदिति । स्वरूपतो हिंसासम्भवे भवतो हिंसा न युक्तेति वैनाशिकस्याभिसन्धिः । उत्तरं हिंसाफलोपभोगस्येति । वैनाशिकस्यापि क्षणरूपाणां भावानां न स्वरूपहिंसा कारणजन्येति विलक्षणोत्पादो हिंसेति वक्तव्यं तच्च कारणव्यापारसम्भवात् तथा च तवापि हिंसा भवतीति भावत्वस्योभयवाद्यविशेषाद् यस्मिन्पक्षे कृतहानमकृताभ्यागमदोषो नास्ति स पक्षो ऽभ्युपेतव्यः । स च

२० नित्यात्मपक्षः तस्मात्पारिशेष्यात्तत्सिद्धिरिति । ज्ञानचिकीर्षाप्रयत्नानां

समवायः कर्तृत्वमिति । उपायतज्ज्ञानाभ्यामनभिज्ञो हि चिकीर्षन्नपि न कर्ता यथाभिज्ञो ऽप्यचिकीर्षन् तथा चिकीर्षन्नप्यलसतया अप्रयतमानो न कर्तेति । सुखदुःखसंवित्समवाय इति । स्वसुखदुःखेति द्रष्टव्यम् । ३६१
अस्ति हि परकीयसुखदुःखसाक्षात्कारो योगिना न चैते भोगिन इतश्च देहादिव्यतिरिक्त आत्मा कुतः ।

सव्य दृ (सू. ७) ॥ तत्र मानसमनुव्यवसायलक्षणं प्रत्यभिज्ञानं भाष्यकारो दर्शयति । तमेवैतर्हीति । व्यवसायं बाह्येन्द्रियजं प्रत्यभिज्ञानमाह । स एवायमर्थ इति । अस्येव चानुव्यवसायः पूर्वः । तदेतच्चक्षुरैक्येनाक्षिपति ।

नैक-त् (सू. ८) ॥ समाधत्ते ।

एक-त्वम् (सू. ९) ॥ विनाशाविनाशलक्षणविरुद्धधर्माध्यासान्नानात्वमित्यर्थः । आक्षेप्ता ऽऽह ।

अव तुः (सू. १०) ॥ समाधाताऽऽह ।

दृष्टा-घः (सू. ११) ॥ तृतीयं व्याख्यानमाह ।

अथ वा एकविनाशस्यानियमादिति । एकत्वे चक्षुषो विनाशनियमो न स्यात् । सव्यस्यैव चक्षुषो न दक्षिणस्येति । एकत्वात्सव्यविनाशे दक्षिणस्यापि नाशप्रसङ्गात् । दृश्यते चायं नियमः । तस्माद् द्वावर्थौ पृथगावरणौ पृथगुपघातौ चेति । अपि च यदि चक्षुरेकं सव्येन नासावंशेनावपीडितं तरोङ्गुल्या ऽवपीडितं यथैकं भिन्नमिवावभासयति । अवपीडने निवर्तमाने भिन्नावभासौ तावर्थौ सद्धातीति । तथा नासावंशावपीडितं भिन्नमिव दर्शयेत् तन्निवृत्तौ सदध्यादिवेत्याह । अवपीडनायैकस्य चक्षुष इति । रश्मिभेदाद्विषयसन्निकर्षस्य भेद इत्यर्थः । अङ्गुल्यवपीडितेन चक्षुषा दृष्टान्तेन विरोधादित्यर्थः । एकविनाशेनेतरविनाशो वा दृष्टान्तः । तेन विरोधादिति । स खलु दृश्यमानश्चैकान्तावधारणादतश्चेति दृष्टान्त इति सूत्रार्थः । तदेतत्प्रकरणं वार्तिककारो दूषयति । सिद्धत्वादनारम्भ इति । युक्तो ऽन्यः समुच्चयः शास्त्रे । अयमभिसन्धिः । काणस्तथा न पश्यति पिहितैकलोचनो वा यथा ऽविकलेन्द्रियः । तत्र यदि सव्यदक्षिणाधिष्ठानभेदभिन्नं चक्षुर्न चेतद् द्वयमणुना मनसा युगपदधिष्ठातुं शक्य- ३६२ ।

मित्यन्यतरदधिष्ठानम् । तथा च सर्व एवैकैकेन चक्षुषा पश्यतीति पिहितैकलोचनेनातुल्योपलम्भः अविकलाक्षस्य स्यात् । न चैवमस्ति एकत्वे तु तदुभाभ्यामधिष्ठानाभ्यां विनिर्यत्क्व चिदपि मनसा ऽधिष्ठितमेवेत्यविकलाक्षस्य न विकलाक्षवदुपलम्भप्रसङ्गः । तस्मादेकमनेकाधिष्ठानं चक्षुरिति ।
२ प्रकरणविरोधश्चेन्द्रियपञ्चत्वादिति । न चैतदेकस्मिन् शरीरे जात्यभिप्रायं प्राणादीनां व्यक्तीनां चतसृणां व्यक्त्यन्तरेण समभिव्याहारोपपत्तेर्न तु जात्या न हि भवति ब्राह्मणयुधिष्ठिरावागताविति किं तु ब्राह्मणराजन्याविति वा वसिष्ठयुधिष्ठिराविति वा । विनष्टे ऽप्येकस्मिन्नधिष्ठाने यो ऽविनष्टो ऽवशिष्यते तेन प्रत्ययमात्रं कारणस्यैव भवति । न च नासावंशावपीडितेन सर्वेषां सर्वदा सर्वत्र द्विचन्द्रबुद्धिभ्रमप्रसङ्गः । आगन्तुकमवपीडनं भ्रमहेतुर्नौत्पत्तिकमिति कार्यदर्शनात्कल्प्यते । तदेवं प्रतिसन्धानद्वारेणात्मनि प्रत्य प्रमाणयित्वा अनुमानमिदानीं प्रमाणयति । अनुमीयते चायमिति । विप्रतिपन्नं हि प्रति सन्धानमुक्तं परमार्थतस्तु अनुभवानुसारमार्गो ऽयमिति मन्तव्यम् ॥

इन्द्रि-त् (सू. १२) ॥ कस्य चिदम्लविदलिकादेरनुभूतस्य तेन सहचरितं रूपं वा गन्धं वा ऽनुभवति । अथ तत्सहचरितं रसमनुस्मरति स्मृत्वा चेच्छति इच्छातो रसनेन्द्रियविकारो दन्तोदकसम्प्लवलक्षणः प्रवर्तते तद्दर्शनाच्चास्येच्छानुमीयते इच्छया च स्मृतिः सेयं स्मृतिरसत्यात्मनि सर्वेन्द्रियविषयवेदिनि न भवितुमर्हतीति । अत्राक्षेपसूत्रम् ।

न स्मृ-त् (सू. १३) ॥ स्मृतिरात्मानं कारणत्वेनावगमयेत् विषयत्वेन वा । न तावत्कारणत्वेन तस्याः संस्कारकारणत्वात् । न विषयत्वेन स्मर्तव्यविषयत्वात् । स्मृतात्तु तस्मादिन्द्रियान्तरविकारोत्पत्तिरित्यर्थः । समाधत्ते ।

तदा-षः (सू. १४) ॥ असत्यात्मनि स्मृत्यनुत्पत्तिं दर्शयित्वा स्मर्तव्यार्थविषयैव स्मृतिर्नात्मविषयेति पूर्वपक्षिणो ऽवधारणं व्यवच्छेदयति ।

अपरिसंख्यानाच्च स्मृतिविषयस्येति (सू. १५) ॥ ज्ञानवानुव्यवसायजनितसंस्कारकारणासु चतसृष्वपि स्मृतिषु नार्थमात्रं विषयो ऽपि तु ज्ञानवाद्यपेक्षाणि सर्वत्र विषयाः । चतुर्षु वाक्येषु एकत्र ज्ञानं क्रिया

कारकान्निष्कृष्टा यथा अमुष्मिन् मम ज्ञानमभूदिति अगृह्यमाणो ऽप्यर्थः स्मृति-
सन्निधापनादमुष्मिन्नित्युच्यते। कारकादनिष्कृष्टाप्येकत्र पूर्वापरीभूतभावनाप्रधा-
ना ज्ञानक्रिया गम्यते अज्ञासिषमहममुमर्थमिति। अन्यत्र तु ज्ञानभावने कार-
कादनिष्कृष्टे कर्तृप्रधाने यथा ज्ञातवानहममुमर्थमिति। अन्यत्र ज्ञानभावने
कारकादनिष्कृष्टे कर्मप्रधाने यथा ऽसावर्थो मया ज्ञात इति। **समानार्थं भा-**
**मिति**। ज्ञानज्ञेयज्ञातृप्रकाशेन समानमित्यर्थः। एष तावदगृह्यमाणे ऽर्थे
स्मृतिः प्रदर्शिता अथ प्रत्यक्षे ऽर्थे स्मृतिः प्रदर्श्यते। अथ प्रत्यक्षे ऽर्थ-
इति। **स्मृतिरिति** प्रत्यभिज्ञानमाह स्मृतिच्छायावाहित्वात्। **अद्राक्षमि-**
**ति**। पूर्वार्थमर्थदर्शनं परामृशति तेनार्थदर्शनानुभवः कल्प्यतामनुभवकल्पना
तु कुतस्त्येत्यत आह। **न खल्वसंविदिते स्वे दर्शने इति**। अपि त्वर्थद-
र्शनं तद्दर्शनं च संविदिते सतीत्यर्थः। कुत एतदित्यत आह। **एतदद्राक्ष-**
**मिति**। यस्मादनुभवपुरस्सरं यदद्राक्षमिति भवति नूनं तत्रानुभवप्रथा
ऽप्यभूदिति कल्पनीयमित्यर्थः। इतो ऽपि न शरीरगुणः स्मृतिः बाल्ये
अनुभूतस्य वार्धके स्मरणात्। अन्यद्धि बालशरीरमन्यच्च वृद्धशरीरमिति।
आस्तां तावत्प्रत्यभिज्ञानं सादृश्यमपि दुर्विज्ञानम्। न च परमाणूनां चैतन्यं
ते हि प्रत्येकं वा चेतयेरन् मिलिता वा। पूर्वस्मिन् कल्पे अनेकचैतन्ये एक-
स्मिन् शरीरे नैकमत्यनियमो भवेत्। न हि नानाचेतनानामैकमत्यनियमो
दृष्टः मिलितानां [illegible] चैतन्ये परमाणूनामावापोद्वापभेदेन मेलकस्य नानात्वा-
त्स एवान्योपलब्धस्यान्येन स्मृत्यभावप्रसङ्गः। तस्मान्न शरीराधारा चेत-
नेति। परेषां कारिकां दूषयति वार्त्तिककारः। **एतेन न तच्चक्षुषि नो** ३६६
**रूपइति प्रत्युक्तम्**। आत्मनः पारिशेष्यात्सिद्धेः स्मृत्याधारस्याव्याह-
नेनेत्यर्थः। यदधिकरणे तज्ज्ञानं निवृत्तं भवेत् तदधिकरणमस्ति न च
नास्तीति व्याहतम्। स्यादेतत् नायं विशेषप्रतिषेधो न चक्षुषि विज्ञानं न
रूपइति किं तु ये चक्षुराद्याश्रयं विज्ञानं मन्यन्ते तन्मतं प्रतिषिध्यते।
आधारमात्रं तु न प्रतिषेद्धुमप्रस्तुतत्वादित्यत आह कस्य चेति। अपि चैषा
कारिका आत्माभावविवक्षया प्रयुक्ता आत्मसत्त्वमेव प्रतिपादयन्ती विरुद्धि-
सविरुद्धेत्याह। **अयं च विज्ञानस्येति**। तदेव भाष्यमतेनेन्द्रियान्तरवि-
कारादिति सूत्रं व्याख्याय वार्त्तिककारः स्वमतेन व्याचष्टे अथ चैकस्येति। ३६६।

उक्तमेव प्रतिसन्धानं पुनरिन्द्रियान्तरविकारद्वारेण दर्शयति सूत्रं यथा च प्रतिसन्धानं देहेन्द्रियादिव्यतिरिक्तमात्मानं प्रतिपादयति तथा ऽधस्तादेव १० विवृतमित्याह । उक्तन्यायमिति । मतिः स्मृत्यनुमानादिज्ञानम् । यद्यपि चेद् प्रातिस्विकसंस्कारादिकारणकं तथाप्यवश्यमनेनेन्द्रियजेन भवितव्य ज्ञानत्वाद्रूपादिज्ञानवदिति तच्चेन्द्रियमसति चक्षुरादौ भावान्मतेश्चक्षुराद्य तिरिक्तं मन इत्युच्यते । ननु भवतु करणान्तरं मनः तत्तु कथमिन्द्रिया- ा न्तरसहकारि कथं चाणुपरिमाणमित्यत आह । तत्र ज्ञानायौगपद्यं लिङ्ग- मिति । वार्तिकं यदि स्वयं विज्ञानं ससाधनमुच्यते मनस्यपीति । न च तत्र मन एव करणमात्मनि वृत्तिविरोधादिति तदन्यस्य करणत्वे तज्ज्ञानायापीन्द्रियान्तरमुपास्यमित्यनवस्था अनिन्द्रियजत्वे तु मतावपि संस्कारादेव कारणमस्तीति कृतं मनसेति भावः । परिहरति योऽमितीति । यथा कारणसत्तया कार्ये जनितं कारणं ज्ञायते एवं मनः सत्तया मनोलिङ्गज्ञानं जनितं मनो ज्ञापयति । तत्र लिङ्गजं मनोज्ञानं मनःसत्ताहेतुकं न च स्वात्मनि वृत्तिविरोधः न हि मनःसत्तायां मनः करणं मनोज्ञाने वा मनो ज्ञानं करणं येन स्वात्मनि वृत्तिविरोधः स्यात् । केवलं वा मनः स्वज्ञाने करणं येनैकत्र कर्मकरणत्वे स्याताम् । अपि तु मनोज्ञाने लिङ्गज्ञानसहितं मनः करणं तत्स्वरूपं [illegible] लिङ्गज्ञानसाहित्यादिति न स्वात्मनि वृत्तिविरो धः । नाप्येकस्यैव केवलस्य कर्मकरणभाव इति भावः । स्यादेतद् लिङ्ग ज्ञानसहितस्य मनसः करणत्वे मा भूदेकस्यैव कर्मकरणभावः स्वरूपेण कर्मत्वाद् लिङ्गज्ञानसाहित्येन च करणत्वात् । यदा [illegible] योगिना प्रत्यक्षेण मनो गृह्यते तदा कथमेकस्य कर्मकरणभाव इत्यत आह । यस्य तु मनः प्रत्यक्षमिति । शास्त्रार्थभूतान्युद्देश्यानि श्रेयसोपयोगिनः परलोकं परिचिख्यिषु परीक्षाहेतुभूतं संशयमाह । किं पुनरयमिति । अथ वार्तिककारः संशयं दूषयन् प्रकरणान्तरारम्भमाक्षिपति । एतस्मिन्नर्थे इति । देहेन्द्रियबुद्धिभेद- नाभ्यां व्यतिरिक्तमात्मानं दर्शयता बाल्यकौमारयौवनवार्द्धकभेदे ऽपि चैकात्मप्रतिसन्धानमर्थादुपपादयता शरीरनाशाद्ध्यमात्मनाशो दर्शित । तावता च न प्रयोजनं तत्त्विमर्शयते यत्र संशयो यत्कृते च प्रकर- १४ णोत्थानमित्यर्थः । समाधत्ते नानारभ्यमिति । सिद्धे ऽपि देहादिव्यति

रेके बाल्यादिषु चानुगमे स्थिरमयमात्मा आ शरीरोत्पत्तेरा च प्रायणादावर्त्त-
मानसंतानभावी आहो स्विदुपरते ऽपि देहादिसंताने ऽनुवर्तत एवेत्येष
विमर्शो ऽद्यापि न निराकृत इति तन्निरासायेदं प्रकरणमारभ्यत इत्यर्थः ।
भाष्ये **देहभेदादि**ति । ल्यब्लोपे पञ्चमी बाल्यकौमारयौवनवार्धकदेहभेदम-
भिसमीक्ष्य प्रतिसंधानादस्यावस्थानं सिद्धमित्यर्थः । वार्त्तिकम् । **अभिप्रे-
तविषयप्रार्थनाप्राप्तावि**ति । अभिप्रेतविषयप्राप्ताविति वक्तव्ये प्रार्थना- २६
ग्रहणम् इष्यमाणतमत्वं सूचयति । नेष्यमाणप्राप्तौ हर्षो ऽपि त्विष्यमाणत-
मप्राप्तौ तेनाभिप्रेतविषयस्य प्रार्थनायां सत्यां प्राप्तावित्यर्थः । **ज्ञानाद्यस्यते**-
ति विषयेण विषयिणीं बुद्धिमुपलक्षयति । अनिष्टो विषयो मरणादिस्तस्य
साधनमहिव्याघ्रादिस्तस्योपनिपातः सन्निधानं तस्मिन्सति व्याघ्रादिजिहा-
सेरशक्यहानमेतदिति बुद्धिरेव सा हि भयादि जनयति । **इष्टविषयवि-
योगे सति तत्प्राप्त्यशक्यप्रार्थना शोकः** । तस्यैव पुरुषस्य यः प्राप्य-
शक्यःतत्र प्रार्थना शोकः य इष्टो विषयः प्राप्तुमशक्यस्तत्र प्रार्थना पुनः
मे उपपद्यतां भवत्विति इत्थंभूता चेयं प्रार्थना न स्वरूपेण शोक इत्यत
आह । **इष्टविषयवियोगे सती**ति । अनर्हत्वेनेति यावत् तदयमर्थः ।
इष्टवियोगे तत्प्राप्त्यशक्यताज्ञानं शोक इति । अनर्हत्वेन प्राप्त्यशक्यताज्ञानं
शोकतः सूचयति । **प्रत्यक्षबुद्धिनिरोध** इति । प्रत्यक्षपदेन ग्रहणमात्रमु-
पलक्षयति । **तदनुगृहीतः** स्मृत्यनुगृहीतः । **तदनुसंधानविषय** इति ।
अनुसंधीयत इत्यनुसंधानं स्मृतेः यदनुसंधेयं तद्विषय इत्यर्थः । तथा ऽपि
स्मृतिप्रत्यभिज्ञयोरविशेष इत्यत आह । **वर्तमानस्य विषयस्य दृश्यस्य
तद्भावविषय** इति । दृष्टो हि निरालम्बनो बालः स्खलन्मातुरङ्कात्पतन-
स्यानिष्टसाधनत्वमनुस्मृत्येव च पतनमिति परामृश्य तस्यानिष्टसाधनत्वम-
नुमाय रुदन्मातुर्मङ्गल्यसूत्रं विक्षिप्य हस्तौ वेपमान उपाददानः
तस्यानया चेष्टया भयशोकावनुमीयेते इत्यर्थः । **दृष्टेन विशेषितत्वादि-**
ति । दृष्टशब्देन विशेषितो व्यवस्थापितः कार्यकारणभावो न शक्यो व्युद-
सितुमित्यर्थः । **अथात्मन उत्पत्तिनिरोधानुमानमि**ति । यद्विकारि ३००
तदुत्पत्तिनिरोधधर्मकं दृष्टं यथा पद्मं तथा चात्मा तस्मादनित्य इत्यर्थः ।
यदि धर्मोपजननमात्रं विकारः स आकाशादिष्वपीत्यनैकान्तः धर्मधर्मिणोरव

भेदान्न धर्मोपजननापायौ धर्मिणि युज्येते इति नानित्यत्वानुमानं विकारात् । अस्माकं स्यात्त्वनित्यत्वे ऽनुमानमस्तीत्याशयेन नित्यत्वानुमानमाह ।
११ तत्र युक्तमिति । सर्वदा ऽमूर्तत्वादिति । घटादयो ऽप्येकस्मिन् क्षणे भवन्त्यमूर्ताः परिमाणविशेषो हि मूर्तिः न च द्रव्यसमानकालोत्पन्ननिर्गुणानामिति तन्निवृत्त्यर्थं सर्वदेत्युक्तम् । पञ्चात्मकानां पद्मादीनां विकाराः पञ्चात्मकविकारा इति **सामान्यतो ऽधिगतस्य विशेषज्ञापनार्थमिति ।** हर्षादिना सामान्यत इच्छामात्रमवगतं तद्विशेषस्तु स्तन्याभिलाषो रागश्चा-चोक्त इत्यर्थः ।

अय-णम् (सू २३)॥ न पूर्वाभ्यस्तस्मृत्यनुबन्ध एव प्रवृत्तिकारणम् । अयसो ऽयस्कान्तोपसर्पणे तदभावात् । यदि च बालकस्य पूर्वाभ्यस्तस्मृत्यनुबन्धो भवेत् जात्यन्धबधिरादयस्तज्जन्मानुभूतान् गन्धस्पर्शान् जात्यन्तरानुभूतान् रूपस्पर्शादीनपि व्याचक्षीरन्नित्यभिप्रायः । विकल्प्य दूषयति । **किमिदमिति ।** यौवनाद्यवस्थायां चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य तद्धेतुकैव भवितुमर्हति तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसंबन्धावगमाद् वह्निनेव धूमस्य । सर्वं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते नान्यत्र । न च स यत्र स्मरति तेनावश्यमपि स्मर्तव्यमिति कश्चिन्नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादिभेदान् व्याचक्षीरन् अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । अनन्ते ऽपि चानुभूतेषु कस्य चिदेव स्मरत्यात्मा न सर्वस्येति । भाष्यं **न च स्तन्याभिलाषलिङ्गमन्यदिति ।** स्तन्याभिलाषो लिङ्गमस्य निमित्तान्तरस्य तत्तथोक्तम् । अन्यत्र लोष्टादौ लोष्टादेरिति यावत् । षष्ठीसप्तम्योरभेदार्थत्वात् । एतदुक्तं भवति लोष्टादेरन्यस्यायस्कान्तप्रवृत्त्यभावाद् अयसश्च सनिमित्तमुपसर्पणमिति पूर्वं व्याख्यानम् । सम्प्रति त्वन्यथा व्याचष्टे अयसः खल्वपीति । निपातसमुदायः कल्पान्तरं द्योतयति । **पूर्वानुभूतविषयानुचिन्तनमिति ।** एकविषयः स्मृतिप्रवाहो विजातीयप्रत्यया-ऽभिन्नश्चिन्तनं तच्चानुभवस्य पश्चाद्भवतीत्यनुचिन्तनं न च तत्स्मृतिमन्तरेण भवति न हि तत्र प्रवाहः प्रवाहित्वं विना ऽस्ति तदेवानुचिन्तनं पूर्वानुभूतविषय-

प्रार्थनार्थः सङ्कल्पः प्रार्थना सङ्कल्पः स च पूर्वानुभूतविषय इत्यर्थः। यथास्मिन्नेव जन्मनि इन्द्रियजो विषयानुभवो ऽन्वयव्यतिरेकावधारितो रागोत्पत्तौ सहकारी कस्माद् रागहेतुर्न भवतीत्यत आह वार्त्तिककारः। न विषयावगमास- ३९२। मर्थ्यादिति। तदनेन पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनीति भाष्यं व्याख्यातम्। अत्रायमुदितानुवाद इति भाष्यम्। तस्यार्थः उदितमिदं चोद्यम्। अयस्कान्तदृष्टान्तेन चोदेन तथा ऽपि तस्यानुवादो निदर्शनार्थः। पूर्वमयस्कान्तो निदर्शनमिदानीं तु घटादीनामुत्पद्यमानानां रूपादयो निदर्शनमिति तदर्थमित्यर्थः। चोद्यस्योदितानुवादत्वात्परिहारो ऽप्युदितानुवाद एवेति। तन्मयत्वाद्राग इति। अभ्युपेत्यादृष्टकारणत्वं रागादीनां परिहृतं परमार्थतस्तु तन्मयत्वाद्राग इत्यर्थः। स्यादेतद् यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद्रागादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावानामानन्तर्यात्तदनुरूपा एव रागादयो भवेयुर्न करभभावानुरूपाः करभजातेरस्य विजातीयजन्मसहस्रव्यवहितत्वादत आह। जातिविशेषाच्चेति। कर्मणः संस्कारोद्बोधकत्वात्करभजात्यर्थेन कर्मणा जन्मशतसहस्रव्यवहिता ऽपि करभभावनोद्बोध्यते नानन्तरा ऽपि मनुष्यभावना प्रायणाभिभूतेति भावः। ननु सगुणद्रव्योत्पत्तिवदिति साधनपक्षे मा भूदनैकान्तिकतापादनपक्षे तु को दोष इत्यत आह वार्त्तिककारः। अनैकान्तिकपक्षे सूत्रं न कस्मात् नोक्तोत्तरत्वात्। उक्तोत्तर- ३९३। रमेतदत इति। अपि च मनुष्यत्वेन तुल्यत्वे ऽपि प्रज्ञामेधोत्कर्षनिकर्षभेददर्शनात् प्राग्भवीयाभ्यासकल्पना। अद्यत्वे ऽपि हि शास्त्राभ्यासस्तन्नो-पप्रज्ञामभिवर्धयन्नन्वयव्यतिरेकाभ्यामनुभूयते सो ऽयमिह जन्मन्यकृतशास्त्राभ्यासस्य तद्विषयः प्रज्ञामेधातिशयः प्राग्भवीयाभ्यासातिशयं व्यवस्थापयत्यपि जनस्य मिथ्यादृष्टिजनितव्यवधानपरिम्लानप्राग्भवीयसंस्कारस्य प्रज्ञामेधानिकर्ष इति कल्पनीयं तस्मान्नित्यस्यात्मनः कर्माविद्यानियन्त्रो ऽनादिरेषो ऽनेकविधशरीरोपादानपरित्यागप्रवाहो ऽपवर्गान्त इति सिद्धम्॥

आत्मानन्तरमुद्दिष्टं शरीरं परीक्षितव्यमातो ऽनन्तरसङ्गतिमाह भाष्यकारः अनादिश्चेतनस्य शरीरयोग इत्युक्तम्। परीक्षोपयोगिनिर्व-

दसाधनत्वमाह । **स्वकृतकर्मेति** । परीक्षाङ्गत्वेन संशयमाह । **किं घ्राणादिवदिति** । एकद्वित्रिचतुष्पञ्चप्रकृतिकतामाश्रित्य शरीरस्य वादिनां वो ऽयं संख्याविकल्पः । अत्र वार्तिककारः स्वातन्त्र्येण शरीरपरीक्षायां सङ्ग-

९ तिमाह । **आत्मानन्तरमिति** । भाष्यमतेन सङ्गतिमाह । **अथ वेति** । अनन्तरसङ्गतेस्तात्पर्यमाह **तस्मिन् परीक्ष्यमाणइति** । मानुषं शरीरं पार्थिवं गन्धवत्त्वात् पार्थिवपरमाणुवदिति । न कारणं कार्यस्यात्मा तत्कथमेकात्मकमित्यत आह । एकात्मकमित्येकस्वभाव एको भावो भक्तिर्गुणो जातिः समानजातीयसमवायिकारणत्वे हि तदेकजातीयं स्याद् नान्यथेत्यर्थः । परोक्तान् हेतूनन्यथासिद्धयिष्यन् प्रथमं तावत्सुहृद्भावेनाह **नन्विदमपादिभिरिति** । परोक्तसाधनमन्यथासिद्धमुक्त्वा बाधकमुक्तं भाष्यकृता तदनुभाष्य वार्तिककारो व्याचष्टे । **तदिदमनेकप्रकृतीति** । पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात् । अयमभिसन्धिः पृथिव्याप्यपरमाणू तावन्नैकं द्व्यणुकमारब्धुमर्हतः तयोः रूपरसस्पर्शवत्त्वेन सदारम्भसम्भवे ऽपि गन्धवत्त्वाभावप्रसङ्गात् । एकपार्थिवाणुसमवेतस्य गन्धस्यैकत्वेनानारम्भकत्वात् । नापि पार्थिवपरमाणुद्वयमेकश्च पाथसीयः परमाणुरित्यणूनामारम्भकत्वे गन्धवत्त्वोपपत्तिरिति साम्प्रतम् । परमाणूनां बहूनामनारम्भकत्वात् । तथा हि यथा परमाण्वो न कार्यं द्रव्यमारभेते परमाणुत्वे सति बहुत्वसंख्यायुक्तत्वाद् घटोपगृहीतपरमाणुप्रचयवत् । आरम्भकत्वे तेषां घटोपगृहीतानां कपालशर्करापूर्वक्रमो घटनाशे नोपलभ्येत । द्व्यणुके च विजातीयानारम्भकत्वे सिद्धे तेनैव दृष्टान्तेनान्यत्रापि विजातीयेनारम्भो निषेध्यः । एतेन पार्थिवावयवानां महता पाथसीयेनावयवेन शरीरारम्भः प्रत्युक्तः विजातीयानामनारम्भकत्वस्य दृष्टान्तधर्मिणि विनिश्चयादिति । तदनेन वार्तिककृता षड्विधविकल्पा निराकृता इति । यदि पुनरेकैकं कारणं स्यात् तत्र किं भवेदित्यत आह । **एककारणत्वे त्विति** । नित्यं निरपेक्षमेकं कारणमिति सततोत्पत्तिः कार्यस्य स्यात् । कारणविनाशाद्विभागाद्वा द्रव्यं विनश्यति न चैकस्य कारणस्य विनाशो ऽस्ति । न च विभागः तस्य सद्वितीयवस्त्वाश्रयत्वात् । द्वितीयाभावात् । विनाशकारणाभावात्कृतकनित्यत्वप्रसङ्ग इत्यप-

सहायमेकमवयविनि न रूपमारभत इति नोद्भूतो ऽवयवी तथा च रूप-
संस्काराभावेनावयवी नोपलभ्येतेत्यर्थः । स्मृतिरुत्पत्तिरित्यर्थः । न्याय-
सिद्धमर्थे श्रुतिरूपोद्बलयति न पुनरस्य प्रापिका सांख्यराद्धान्तासम्भवेना-
प्यस्याः कथं चिदुपपत्तेः ॥

उद्देशक्रमानुरोधाच्छरीरानन्तरमिन्द्रियाणां परीक्षां प्रतिजानीते भाष्य-
कारः । अथेदानीमिन्द्रियाणि प्रमेयक्रमेणेति । तत्र परीक्षापूर्वाङ्गं संश-
यमाह । किमाव्यक्तिकानि आहो स्विद्भौतिकानीति । उपलक्षणं चैत-
त् । यदा ऽपि भौतिकानि तदापि किं कृष्णसारं यत्तदेतदुपलभ्यते तदेवेन्द्रि-
यम् आहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः । विप्रतिपत्तेः संशयः ।
तत्र पूर्वः सांख्यनैयायिकयोर्विप्रतिपत्तेः । उत्तरस्तु बौद्धनैयायिकयोरिति ।
आव्यक्तिकत्वमाहङ्कारिकत्वं द्रष्टव्यम् । अहङ्काराद्धि बुद्धिविकाराद्वैकारिकादेका-
दशेन्द्रियाणि जायन्त इति हि सांख्याः आव्यक्तिकत्वं त्वव्यक्तस्य मूलकारण-
त्वादुक्तम् । विप्रतिपत्तिबीजं पृच्छति । कुतः संशय इति । विप्रतिपत्तिमाह
कारणे कार्योपचारात् । उत्तर कृष्णसारे सतीति । कृष्णसारे सत्युप-
लम्भात् कृष्णसारमेव चक्षुरिति बौद्धाः । व्यतिरिच्य चोपलम्भात् ।
तदतिरिक्तं तच्चाहङ्कारिकम् । अहङ्कारस्य विभुत्वेनाप्रतिघातात् । भौति-
कत्वे काचाभ्रपटलादिभिर्भौतिकैः प्रतिघातप्रसङ्गादिति सांख्याः । तत्र
स्वयमुत्थाप्य बौद्धपक्षं दूषयति । अभौतिकानीति । कृष्णसाराधिक-
रणे विप्रकृते ऽर्थग्रहणं संवादयति न तु तदेव विषयस्य ग्राह-
कत्वादिति । स्थाना अङ्कुरः । नैयायिकः साङ्ख्यं दूषयति ॥

रश्म्य एम् (सू. ३२)॥ आहङ्कारिकत्वे चक्षुषे प्रतिहन्यते यदि तदा
काचाभ्रपटलान्तरितमप्रकाशयत् कुड्यान्तरितमपि प्रकाशयेत् । न चैवमपि तु
स्मात्कृष्णसाराधिष्ठानं तैजसमेव भौतिकं प्राप्य गृह्णाति कुड्यान्तरितं त्वर्थमप्राप्तं
न गृह्णाति । काचाभ्रपटलान्तरितं तु वक्ष्यति । यानि किमाव्यक्तिकानि
तस्य व्याख्यानमाहङ्कारिकाणीति । न प्रदीपादिभिरनैकान्तादिति । ३०५ ।
धर्मिदेशस्थेन विभुत्वहीनेन तेजसा प्रदीपेनानैकान्तात् । प्रभा हि विसारिणी
समर्थं प्राप्य प्रकाशयति न तु प्रदीप इत्यर्थः । विपर्ययाभावादिति चेदि-
ति । रूपादिविशेषो यत्र स तादृक् चक्षुर्यदवयोर्वर्गो ऽप्राप्योऽपि विषट-

विषयविभावाद्वेद्यवेदकत्वं न चाव्यवहितविप्रकृष्टयोरिति न तयोर्वेद्यवेदक-
६ भाव इत्यर्थः । निराकरोति **नोक्तोत्तरत्वात्** । न यथार्थो विप्रकृष्टो न
विषयः संनिकृष्टश्च विषय इत्येकस्य विषयीभावस्तदभावश्चायुक्तः स्वभावभङ्ग-
श्च निषेत्स्यत इति भावः । **अभौतिकत्वं तु व्यापकत्वादिति** ।
तथाच विज्ञानादभौतिकं महत्त्वाणु च गृह्णातीत्यर्थः । एकदेशिमतेन
दूषणमाह । **न भौतिकेषु प्रदीपादिष्विति** । ननु बुद्धिर्यदि महदणो
प्रकाशनं तत् किमिदानीं व्यवहितयोरप्रकाशनमित्यत आह । **अवधारितस्**
**त्वर्थस्येति** । न च हानोपादानोपेक्षाबुद्धयो ऽन्यतो महत्यो वेति भावः ।
पूर्वपक्ष्याह **नेन्द्रिये ऽपि समानत्वादिति** । तदेवमेकदेशिनो ऽसाधारण-
त्वापादने पूर्वपक्षिणा दूषिते सिद्धान्त्याह । **अभूतात्मकं व्यापकं चेत** ।
साङ्ख्य शङ्कते । **वृत्तिरिति** । इन्द्रियाणां वृत्तयो ज्ञानहेतवः प्रतिविषय
न्त इत्यर्थः । **युगपदनेकग्रहणप्रसङ्गाच्चेति** । यद्यपि साङ्ख्यसिद्धान्ते
दीर्घां शष्कुलीं भक्षयतो युगपदनेकज्ञानोत्पत्तिरभिमता तथा ऽपि क्व चित्
क्रमो ऽपि दृश्यते स न स्याद् वृत्तिमतो ऽवस्थाने तदभिन्ना वृत्तिरप्यवस्थि-
तेति तन्त्राधीनोत्पत्तीनां विज्ञानानां क्रमो न स्यादिति भावः ।
**उभयं नेष्यत इति** । वृत्तिभ्यो ऽन्यत्वं वृत्तिमतो नेष्यते नापि वृत्तीनाम-
नन्यत्वं वृत्तिमत इत्यर्थः । **भूयो ऽवयवसंनिकर्षानुग्रह इति** । इन्द्रि-
यावयवानामर्थावयवैः इन्द्रियावयवानामर्थेन अर्थावयवानामिन्द्रियेण इन्द्रि-
यस्यार्थेनेति । **तदनुपलब्धेरिति** । नोपलब्धिलक्षणप्राप्तमनुपलभ्यमानं
शक्यमनुमातुं नरविषाणादीनामप्यनुमानप्रसङ्गादित्यर्थः । परिहारः **नानु-**
**मीयमानस्येति** । सत्यमनुपलब्धिलक्षणप्राप्तमनुपलभ्यमानं न शक्यमनुमातुं
न तु महत्त्वादावेवोपलक्षणप्राप्तेरपि [illegible] रूपविशेषो ऽपि । न चासौ विशेष
उद्भवसमाख्यातः कृष्णसाराधिष्ठानस्य चक्षुषो ऽस्तीत्यर्थः । आचार्यदेशीयानां
मतमाह । **अपरे त्विति** । दूषयति । **एवं तर्हीदमिति** । यथोपलब्धिस्त-
थैतदिति सूत्रार्थः । अतो महत्त्वादिषु मध्ये यत्किं चिदेकं वक्तव्यं सूत्रका-
रेण यथोपलब्धिस्तथैतदित्येकस्मादेव सिद्धेरनेकोपादानवैयर्थ्यं तस्मात्समा-
धानायोग्यताभिधानपदं सूत्रम् । ननु यथाश्रुत महत्त्वाद्युपलब्धिकारणमस्ति
११ चाक्षुषस्य रश्मेरिति कस्मादयं नोपलभ्यत इत्यत आह । **द्रव्यगुणधर्म-**

ति । अनेकरश्मिसन्निधाने स्पर्शस्योद्भूतौ सत्यां द्रव्यं दहेत रूपोद्भूतौ सत्यां व्यवहितस्यादाहे। निपतितेन चक्षुरन्तरेण द्रव्यस्यानुपलब्ध्या भवितव्यम् । शङ्कते अथानेकेति । नानानयनावयवैरेको ऽसौ नयनावयव्यारभ्यत इत्यर्थः । निराकरोति । एवं सतीति । नानानयनावयवैरारब्ध एको ऽसौ नयनावयवी समयासमयचक्षुःपुरुषसाधारण इत्युपलब्धिस्तुल्या स्यादित्यर्थः । न हि यद्यस्याभिभावकं तत्तस्य व्यञ्जकमिति । रात्रौ यद् लोप्त्रतेजसो ऽभिभावक दिवा कथं तदेवास्य व्यञ्जकं येन तद्भावाद्रात्रौ लोप्त्रतेजो नोपलभ्येत इत्यर्थः । अपिशब्दाद्गम्यत इति । न रात्रावपीति सूत्रगतादित्यर्थः । सो ऽयं चक्षुषो रश्मिः किमभावान्नोपलभ्यते किं वा ऽनुद्भूतेरित्याह भाष्यकारः उपपन्नरूपा चेयमनभिव्यक्तितो ऽनुपलब्धिरिति योजना । अनभिव्यक्तितो ऽनुद्भूतेरित्यर्थः । अथ हेतुर्बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेः विषयस्य स्वरूपमात्मनो ऽन्यत्र । एतदुक्तं भवति यदुपलब्धौ बाह्यप्रकाशमनुग्राहकमपेक्षते तस्यानुद्भूतेरेवानुपलब्धिर्न त्वभिभूतेः यथा हेमन्ते विवक्षावयवस्याप्यस्य द्रव्यस्य । आप्यं हि द्रव्य विवक्षावयवं स्वविषयोपलब्धौ बाह्यप्रकाशानुग्रहमपेक्षमाणं दृष्टं चक्षुरपि न विषयोपलब्धौ बाह्यप्रकाशमपेक्षते निरालोके तस्याप्रवृत्तेः । तस्माद्विषयोपलब्धौ बाह्यप्रकाशापेक्षत्वात्तदनुद्भूत्या न प्रतीयते न पुनरभिभूत्येति सिद्धं प्रकृतम् । तदेतद्वार्तिककारो व्याचष्टे । तस्य विद्यमानत्वेति । तमिमं विशेषं मध्यंदिनोल्काप्रकाशादावविद्वान् पृच्छति । कस्मात्पुनर्नायनस्येति । सर्वोत्तरम् ॥

अभि-त् (सू. ४२)॥ अभिभवनीयस्य रूपमाह । यदुद्भूतरूपमिति । तद्वैधर्म्यमनुद्भूतरूपस्याह । अनुद्भूतरूपश्चेति । अनुद्भूतरूपस्याभिभवाभावे निदर्शनमाह । यदनुद्भूतरूपमिति । बाह्यप्रकाशानुग्रहापेक्षस्य चाभिभवाभावे निदर्शनमाह । यच्च बाह्यप्रकाशानुग्रहापेक्षमिति । कृष्णसाररश्मिमदित्युच्यमाने प्रसन्नान्यस्यापि कृष्णसारं रश्मिमत्साध्येत तथा चापसिद्धान्त इत्यत आह । विप्रतिपत्तिविषय इति । तेन विप्रतिपत्तिविषयः कृष्णसारं रूपं च रश्मिमदिति साध्यनिर्देशः । उपलब्धौ निमित्तत्वादित्युच्यमाने गन्धादिभिरनैकान्तिकं स्यादत उक्तं रूपोपलब्धाविति । ३८४ ।

रूपसाक्षात्कारइत्यर्थः । तथा ऽपि सन्निकर्षादिभिरनैकान्तिकमत उक्त
१ द्रव्यत्वे सतीति तथा ऽपि मनसा ऽनैकान्तिकमत उक्तं नियतस्य
साधनाङ्गस्येति । असाधारणस्य साधनाङ्गत्वे सतीति । मनसस्तु साधा
रणस्य साधनाङ्गस्य रूपोपलब्धौ निमित्तत्वम् । साधन समुदायस्तदङ्गम
वयव । अथ चेति । द्रव्यत्वे सति नियतत्वे चार्थप्रकाशकत्वादित्युच्य
माने घ्राणादिभिरनैकान्तिक स्यादत उक्तं स्फटिकादिव्यवहितेति ।
मानुषं चक्षूरश्मिमदिति । रूपाद्युपलब्धिनिमित्तत्वादिति । साधा
रण रूपादीनामेवेति तेन न मनसा ऽनैकान्त । तथा ऽपि सन्निकर्षेणा-
नैकान्त इत्यत उक्तमप्राप्तिस्वभावत्वइति । इतरथ मौलिकानीन्द्रि
याणि चक्षूरसनत्वग्घ्राणानीत्यर्थः । तथा ऽपि श्रोत्रस्य रूप न ज्ञायते
कीदृश तदित्यत आह । मूर्त श्रोत्रम् । अर्थप्रकाशकत्वादित्युच्यमाने
मनसा ऽनैकान्तिकमत आह प्राप्तेति । न हि रूपादिभि सहास्ति
मनस प्राप्तिस्तथा ऽपि मनस्येवानैकान्त आन्तर हि सुखादि मन प्राप्य
प्रकाशयत्यत आह बाह्येत । तथा ऽपि सन्निकर्षाद्रूपादिभिरनैकान्तो ऽत
आह । द्रव्यत्वे सतीति । शङ्कामाह जातिभेदवदिन्द्रियभेद इति
चेत् । निराकरोति धर्मभेदमात्रं चानुपपन्नम् । वृषदंशनयनस्य रश्मिमत्त्व
मानुषनयनस्य तु न तत्त्वमिति यो ऽय धर्मभेद स एव मात्र तद्वानुप
पन्नम् । चो ऽवधारणे भिन्नक्रम । अनुपपन्नमेवेति योजना । कुतो ऽनुपपन्न
मित्यत हेतुमाह सावरणस्येति । यथा हि धूमवत्त्व पर्वते रवरत्या
चान्यत् तथा ऽप्येव विशेषो ऽस्याग्निमत्त्वानग्नित्वे प्रत्ययप्रयोजक । एव
बिडालत्वमनुष्यत्वे अप्रयोजके इत्यर्थः । सो ऽप्रतिहन्यमान इति । स
रश्मिरप्रतिहन्यमान काचेन काच व्यभिमिद्यायेन सबध्यते काचान्तर्ग
१४ तेन । वार्त्तिकम अव्यूह्यमानावयवद्रव्यानुप्रवेश इति । यस्य द्रव्यस्य
भर्जनकपालादेरवयवा न व्यूह्यन्ते पूर्वोत्पन्नद्रव्यारम्भकसंयोगनाशेन द्रव्या
न्तरजनकसंयोगोत्पादेन व्यूह्य न नियन्ते तस्य द्रव्यस्य भर्जनकपाला-
देरव्यूह्यमानस्यावयवव्यूहनमवयविनो ऽपीति अव्यूह्यमानस्येत्युक्तम् । तस्य
भर्जनकपालादेरन्तरावयवैर्यो ऽभिसम्बन्धो वह्ने सो ऽप्रतिघात । एतदुक्त
भवति सान्तरत्वाद्वयविद्रव्याणा तदविनाशेनाग्नेर्यो ऽनुप्रवेश सो ऽप्रति-

घात इति । प्रवेशे ऽप्रतिघातमुक्त्वा निःसरणे ऽप्यप्रतिघातमाह । अन्तर्व्य- ३८६ ।
वस्थितस्य या द्रव्यस्य मधूदकादेर्बहिरवस्थितहस्तादिप्राप्तिः तस्य कीदृ-
शस्य बहिरित्यत आह । अव्यूह्यमानावयवस्य शलाकादेस्तस्य बहि-
रिति द्रव्यान्तरासंपृक्तद्रव्यसमवायः स्वच्छतेत्यर्थः । प्रसङ्गात्प्रतिबिम्बभ्र-
मोत्पादक्रममाह । आदर्शादिष्विति । यदभिमुखमप्रामिति । द्रष्टुः
पुरुषस्याभिमुखं नयनरश्मेः परावृत्तस्याथ तदभिमुखं मुखादि पश्यति ।
सादृश्यनिबन्धनत्वाद्विभ्रमाणां सादृश्यमिहाप्याह । यथा ऽग्रतो ऽवस्थि-
तस्य पुरुषस्य मुखं लोचनरश्मिविषयसंबन्धमभिमुखमेवमेतदिति । नन्वाद-
र्शप्रतिहतश्चेद् नयनरश्मिः परावृत्तः कथं पश्चादभिमुखविभ्रमहेतुः
हन्त भोः पातमात्रादादर्शस्थानेन भवितव्यं पश्चात्प्रतिबिम्बविभ्रमेण न चैव-
मस्ति यौगपद्यप्रतिभासादित्यत आह । आवृत्तेरिति । कुतस्तर्हि मणिकृपाणा-
देर्दैर्घ्यचलेषु नानाविभागः प्रतिबिम्बावभास इत्यत आह आदर्शरूपा-
नुग्रहादिति । संप्रति तेषामेवेन्द्रियाणामेकानेकत्वे परीक्षिषुः संदिग्धे ।
अथापि खल्विदमस्ति । प्रश्नपूर्वकं सूत्रमवतारयति । कुतः संशयः ॥

**स्थाना–न्यः (सू. ४१) ॥** तत्र के चिदिदं सूत्रं भाष्यमनवेक्ष्य
यथाश्रुति व्याचक्षते । तद्दूषणपुरःसरं भाष्यव्याख्यानं ग्रहीतुं यथाश्रुति व्या-
ख्यानं परेषां सूत्रपाठपूर्वकमुपन्यस्यति । एके त्विति । दूषयति अनुपपन्नरू-
पश्चायमिति । अत्र हि यथाश्रुति स्थानान्यत्वादिति निमित्तसप्तम्या नानात्व-
स्य बीजं स्थानान्यत्वमुक्तं न त्वेकत्वस्येति । एकत्वस्य तु बीजं नानास्थानत्वं
यथोक्तम् । अवयविनानास्थानत्वादिति । अवयवीत्येकत्वमुपलक्षयति ।
स्थानान्यत्वं च स्थानस्यान्यत्वमुच्यते । नानास्थानत्वं च नानास्थानानि यस्ये-
त्यन्यपदार्थः स्थानान्यत्वादन्यः न तु धर्मद्वयं साधारणधर्मकारणमित्येक-
तरस्यैकानेकसाधारण्यं वाच्यम् । तत्र यदि तावदेव क्रियते संशयः स्थाना-
न्यत्वे नानात्वैकत्वदर्शनादिति । तदा सूत्रार्थालोचनेनैकत्वे स्थानान्यत्व-
स्यादर्शनान्न समानधर्मः सूत्र यस्त्वेकत्वे नानास्थानत्वमाह न स्थानान्य-
त्वम् । अनेकत्वमात्रे हि तदुक्तं सूत्रकारेण स्थानान्यत्वे नानात्वादिति ।
अथ नानास्थानत्वे सत्येकत्वानेकत्वदर्शनात्संशय इति तदा दूषयति ।
तदा द्रव्यं नानास्थानमनेकं न किं चिद् दृष्टं सूत्रम् । अवयविनाना- ३८८

स्थानान्यत्वादिति सूत्रं नानास्थानत्वेनैकत्वमाह न तु नानात्वमपि यत्पुनर्घटा-
दानेकं न तन्नानास्थानमुक्तं सूत्रकृता । अपि तु स्थानान्यत्वं सूत्रकृतोक्तं
१२ स्थानान्यत्वे नानात्वादित्यनेन दूषणमुपसंहरति । सोऽयं संशय उभय-
था ऽनुपपन्न इन्द्रियेषु यथाश्रुतसूत्रपरिग्रहेण उभयथा स्थानान्यत्वेन ना-
नास्थानत्वेन चेत्यर्थः । तदेव परव्याख्यानं दूषयित्वा भाष्यकारीयस्य
व्याख्यानस्य युक्तत्वमाह **स्थानेषु तु युक्तः** । स्थानेष्विति निमित्तसप्तमी ना-
नास्थानत्वनिमित्त इन्द्रियेष्वेकत्वानेकत्वसंशयो युक्तः नानास्थानं ह्यनेकमव-
यविद्रव्यं दृष्टमनेकं च भिन्नभाजनगतं फलमिति । इन्द्रियविषयं नानास्थान-
त्वनिमित्तकं संशयमाह । **किं नानास्थानानीन्द्रियाणि उत नानास्थान-
मेकमिन्द्रियमिति** । तदिदमुक्तं भाष्यकारेण **बहूनि द्रव्याणि नाना-
स्थानानि दृश्यन्ते नानास्थानश्च सन्नेको ऽवयवी च । तेनेन्द्रियेषु
भिन्नस्थानेषु संशय** इति । सूत्रे ऽपि स्थानान्यत्वे इत्यनेन नानास्थान-
त्वमेवोपलक्षणीयमित्यभिप्रायः । यथाश्रुतस्तु न सूत्रार्थ इत्याह । **इन्द्रियेषु
तु न स्थाननानात्वं संभवति** । न च नानास्थानत्वादिति । किं त्वि-
न्द्रियविषयो नानास्थानत्वादेव संशयो भाष्यकारीयः साधीयानित्यर्थः ।
तदेव परोक्तं संशयबीजं दूषयित्वा भाष्यकारीयं संशयबीजं दर्शयित्वा वार्त्ति-
ककारः स्वातन्त्र्येण संशयबीजमाह । **शरीरव्यतिरेकित्वात्तस्माच्च
संशय** इति । पूर्ववत् गृह्णाति ।

त्वग-त् (सू ५१) ॥ कः पुनरव्यतिरेक इति । घटादिवच्चक्षु-
स्त्वचो व्यतिरिच्यतएवेति भावः । उत्तरम् । **सर्वाधिष्ठानसंबन्ध** इति ।
सोऽयमव्यतिरेकशब्दस्य व्याख्यानान्तरमाह । **सति भावो वेति** । तदनेन
यस्यां च सत्यामिति भाष्यं व्याख्यातम् । वा विकल्पार्थे । सिद्धान्तभाष्य
**नेन्द्रिये ति** । **लोकविरोध** इति । लोक्यते ज्ञायते ऽनेनेति लोकः प्रमाणं तद्वि-
रोध इत्यर्थः । **अनेकेन चानिन्द्रियेणेति** । शरीरं पार्थिवं भूतान्तरसंपृक्तं
च तदिन्द्रियाधिष्ठानानि शरीरावयवभूतानि पृथिव्यादिना व्याप्तानीत्यनेका-
न्त । न व्याघातादिति । परदोषोद्भावनपरं न पुनस्त्वगवयवत्वमिन्द्रि-
याणामभिमतमिति । अथ भाष्यकारीयसिद्धान्तमुक्त्वा स्वयं सिद्धान्तमाह ।
३ **सूत्रेण चाभिसंबन्धः सिद्धान्तस्य** ।

न यु-द्धेः (सू. ५३) ॥ नैतदस्त्येकमिन्द्रियमिति कस्माद् युगपद-र्थानुपलब्धेरिति । तदेतत्सूत्रं भाष्यदृष्ट्या व्याचष्टे वार्तिककारः । यस्यैकमि- ३९० न्द्रियमिति । तदेतद्व्याख्यानं दूषयति । नैकेन्द्रियग्राह्यत्वादिति । भाष्य-व्याख्याने दूषयित्वा सूत्रमन्यथा व्याख्यातु भूमिरचनां करोति एवं ब्रुवाण एकेन्द्रियवादीति । सामर्थ्यम् । एकमपीन्द्रियमर्थं प्राप्य गृह्णाति अप्राप्तं चार्थमेकदेश इति यावत् । करणधर्ममतिक्रामन्तं प्रति युगपदुपलब्धिप्रसङ्गो दूषणमित्यर्थः । एकत्वप्रतिषेधादेव पारिशेष्यान्नानात्वं चेत्स्यतीत्यत आह नासाधना क्रियेति । एकत्वं च कथमिति । न शक्यः पक्षो दूषयितु-मित्युक्तम् । न च साधननिराकरणमात्रात्साध्यं निवर्तते मा भूद्धूमनिवृत्तौ वह्नि-निवृत्तिरित्यर्थः । पृच्छति कथं तर्हीति । उत्तरम् । प्रतिषेधाच्चानन्त-रमिति । यद्यप्यनन्तरशब्दप्रयोगे पञ्चमी न स्मर्यते तथाऽप्यन्यशब्दस्या-ध्याहारेण पञ्चमी व्याख्येया । अनन्तरं प्रतिषेधादन्यः स्थापनाहेतुरिति यो-जना । अथ चेति । व्यतिरेकी हेतुर्द्वयोर्विरुद्धयोरेकतरनिषेधेनैकतरं व्यव-स्थापयति । यथा नैरात्म्यनिषेधेन जीवच्छरीरस्य सात्मकत्वमिति ।

इन्द्रि-त् (सू. ५५) ॥ सूत्रमाक्षिपति । इदं तु सूत्रमिति । एष न्यायो मया वाचो भङ्ग्या सूचित इत्यर्थः । पूर्वपक्षिणः सूत्रम् ।

न त-त् (सू. ५६) ॥ पूर्वपक्षमाक्षिपति न विरोधादिति । पूर्व-पक्षिणः समाधानं नासाधनादिति । सिद्धान्तः ।

गन्ध-षः (सू. ५७) ॥ यस्याधिष्ठानं भिन्नमिति । भिन्नं निय-तम् । एतदुक्तं भवति रूपव्यञ्जकस्य कृष्णतारमेवाधिष्ठानं न कर्णशष्कु-ल्यादि एवमन्यत्रापि द्रष्टव्यम् । यस्य पुनः सिद्धान्तिनोऽधिष्ठानभेदस्तथा च तदधिष्ठानस्येन्द्रियस्यापि भेदः तस्येन्द्रियाधिष्ठानविनाशेन तद्गतस्येन्द्रियस्य विनाशेऽप्यधिष्ठानान्तराश्रितस्येन्द्रियान्तरस्यावस्थानमिति नैकाधिष्ठाननाशे सर्वाधिष्ठाननाशात्सर्वेन्द्रियनाशलक्षणः तथैकाधिष्ठानावस्थाने सर्वेन्द्रियाव-स्थानलक्षणो दोष इति । इष्टानिष्टोपेक्षणीय इति । उपेक्षणीयस्यापि ३९४ पुरुषार्थत्वं भवति केन चित्प्रकारेण यदि [illegible] तत्र पुरुषः प्रवर्तते ततो निष्फले कर्मणि प्रवृत्तः पुरुषस्तप्येत । दुःखं च मत्यनुभवो लोकस्य उपेक्ष-णीयत्वे तु तन्न तस्य भवति । तत्र पार्थिवं घ्राणं रूपरसगन्धस्पर्शेषु निय-

मेन गन्धस्य व्यञ्जकत्वाद् घ्राणपार्थिवमिति । यथा हि मृगमदगन्धव्यञ्जकाः कुङ्कुमोशीरादयः पार्थिवा इत्यर्थः । न चातपेनानैकान्त । न ह्यातपो गन्धव्यञ्जको ऽपि तु जलाभिभूतो गन्धो द्रव्याणां नोपलभ्यते केवल जलमातपो ऽपनयति न तु गन्धं द्रव्यस्याभिव्यनक्ति तस्मान्नानैकान्तः । एवं रसनमिन्द्रियमाप्यं गन्धादिषु मध्ये नियमेन रसस्य व्यञ्जकत्वाद् दन्तान्तरस्यन्दमानोदकबिन्दुवत् । न खलु विगुण्यदाक्षो मोदकादिरसमनुभवति । एवं तैजसं चक्षुः गन्धादिषु मध्ये नियमेन रूपस्य व्यञ्जकत्वात् प्रदीपादिवत् । एवं वायवीयं त्वगिन्द्रियं गन्धादिषु मध्ये स्पर्शस्यैव व्यञ्जकत्वात् स्वेदोदबिन्दुशीतस्पर्शव्यञ्जकव्यजनपवनवत् । नियमग्रहणं मनोनिवृत्त्यर्थम् । गन्धादिषु मध्य इति चावधारणसिद्ध्यर्थम् । अन्यथा घ्राणादीनां गन्धाद्याद्यभिव्यञ्जकत्वेनावधारणं न स्यात् । तदेत

। ११ दाह । एवं शेषेष्विति । एवं चेन्द्रियपञ्चत्वेन हस्तपादपायूपस्थवागिन्द्रियत्वनिषेधो ऽपि सूचित इन्द्रियलक्षणविरहात् । यच्छरीरसंयुक्तं सत्साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हीन्द्रियलक्षणं न चैतदस्ति हस्तादिषु । ननु ज्ञानेन्द्रियाणां लक्षणमिमानि कर्मेन्द्रियाणीति चेत् । हन्तैषामिन्द्रियत्वलक्षणान्तरं वक्तव्यम् । शरीराश्रितमसाधारणकार्यकारीन्द्रियमिति लक्षणमिति चेत् । वक्तव्यमेषामसाधारणं कार्यम् । वचनादानविहरणोत्सर्गानन्दाः पञ्चानामिति । मन्वादानविहरणोत्सर्गास्तावत्कहस्तादिभिरपि शक्या कर्तुम् । अपि चास्ति कण्ठहृदयामाशयपक्वाशयादीनां गिरणादितदसाधारणं कार्यमिति तान्यपीन्द्रियाणि प्रसज्येरन्निति तस्माद्यत्किञ्चिदेतदपीति । क्रमप्राप्तमर्थलक्षणं परीक्षितुमर्थो ऽर्थलक्षणं स्मारयति । गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टमिति । लक्षितमिति वक्तव्ये समुद्देशाभिधानं सामान्याद्दुद्दिष्टमित्युक्तम् । तत्र परीक्षामुखं संशयमाह । उद्देशश्च नियोगेति । नियोगादीनां रूपमाह तत्र नियोग इति । तदेव निरूप्य नियोगसमुच्चयौ परित्यज्य विकल्पमालम्बते सूत्राभ्यामतो विशेषणार्थमिति ।

गन्ध-व्याः (सू ६१)॥ अप्से-रः (६२)। विशेषणार्थमिति।

। १८ सूत्रयोस्तात्पर्यमुक्तं तदेव स्फुटयति। नियमार्थं इति । उत्तरेष्वपादिष्वेकैको

ऽपकर्षो गन्धादीनां स्पर्शपर्यन्तानाम् । तथा हि चतुर्षु गन्धापकर्षोऽप्स्वपकृष्टस्य गन्धस्य पुनरुद्भवो नास्तीति अद्भ्य उत्तरे तेजसि रसस्यापकर्षः । एवमपकृष्टयोश्च गन्धरसयोः पुनरुद्भवो नास्तीति तेजउत्तरे वायौ रूपापकर्ष इति । एवमपकृष्टानां गन्धरसरूपाणां पुनरुद्भवो नास्तीति वायोरुत्तरस्मिन्नाकाशे स्पर्शस्यापकर्षः । तदिदमुक्तमेकैकश इति । अव्युत्पन्नो ऽयमुत्तरशब्दो ऽनन्तरवचनः, तेन बहूनां निर्द्धारणे ऽप्युपपन्नार्थ इति । अथवा तरप्निर्देशः तथा ऽपि न दोष इत्याह भवस्विति । क्व चित्पाठस्तत्र वेति यथाभाष्यं स्फुटार्थ एव । पूर्वपक्षी नियोगपक्षमुत्थापयति । ३९६ ।

न स-ब्धेः (सू० ६३) ॥ पृथिव्यादिप्रकृतीनां घ्राणादीनां गन्धादिप्रतिव्यक्तिनियम एवमुपपद्यते यदि गन्धमात्रगुणा पृथिवी रसमात्रगुणा आप इत्यादि न त्वन्यथा । अन्यथा तु पार्थिवेन घ्राणेन गन्धवद्रसरूपस्पर्शा अपि गृह्येरन् अविशेषादित्यर्थः ।

विष्टं ह्य (सू० ६४) ॥ धर्मस्य ह्याश्रयत्वे ऽपि न द्वये समानत्वं यथा ऽग्निधूमयोः सम्बन्धो ऽन्यथा ऽग्नौ, न हि व्यापको धूमे धूमध्वजस्य भाव एव भावः । धूमस्तु व्याप्यः तस्य वह्नावेव भावो नान्यत्रेति । एवमपरं पृथिव्यादि परेणाबादिना विष्टं व्याप्तं नाबादिमन्तरेणास्ति पृथिवी । तेन पृथिव्यामबादिगुणानां रसादीनां नियमेनोपलम्भो न त्वबादिषु पृथिवीगुणानाम् एवमप्स्वनलादिगुणो व्याख्यातः । विष्टत्वं संयोगविशेषो व्याप्तिरित्यर्थः । भाष्यं तच्चैतद्भूतसृष्टाविति । भूतसृष्टिप्रतिपादकेषु पुराणेषु । नेतर्हीति । नेदानीमनुभवादित्यर्थः । सिद्धान्ती विकल्पवादेनदूषयति ।

न पा-त् (सू० ६५) ॥ त्रिविधं हि द्रव्यं चाक्षुषमिष्यते पार्थिवमाप्यं तैजसं च । तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्यात् नेतरद् रूपवत्त्वात् । न च रूपविद्द्रव्यसंसर्गाद्वा चाक्षुषत्वमरूपयोरपि पार्थिवाप्ययोरिति वाच्यम् । नभोनभस्वतोरपि चाक्षुषत्वप्रसङ्गात् । अस्ति हि रूपवता तैजसेन तयोः संयोग इति । अथ वा पार्थिवाप्यसम्बन्धिनो रसभेदस्य रूपभेदस्य चैकानेकविधत्वेन प्रत्यक्षत्वादित्याह भाष्यकारः । रसयोरित्यादिनोपपद्यत इत्यन्तेन । पुनरस्यैव व्याख्यानान्तरमाह । स्पर्शयोरिति । पार्थिवाप्ययोरित्यस्योदाहरणमात्रार्थत्वात् पार्थिवतैजसयोरित्यपि व्याख्यानमुक्तम् । व्याख्यानान्तर-

माह अथ चेति । कार्यस्य व्यवस्थितगुणस्य दर्शनात् कारणमपि व्यव-
स्थितगुणमनुमीयते । न च सर्वत्र सर्वो येनान्यस्य गुणोऽन्यत्रोपलभ्येत
विवेकस्यासर्गस्य दर्शनात् । व्याख्यानान्तरमाह दृष्टश्चेति । चो विरु-
ल्पार्थः । नियोगस्तु निरनुमान इत्याह । **निरनुमानं तु विष्टं ह्यपरं
परेणेत्येतदिति** । यच्चोक्तं भूतसृष्टौ वेदितव्य नेतद्दीति तद् दूषयति ।
**नियमकारणाभावादिति** । नियमो गन्ध एव पृथिव्यामित्येवमादि ।
तस्य कारणं प्रमाणं नास्ति तद्बाधकस्यैव प्रमाणस्योक्तत्वात् । तस्माद्भूत-
सृष्टि. कथं विदुषवारितो व्याख्येयेति । विशिष्टत्व संयोग स च द्वयो
समान इति कन्यगुणो यदन्यत्रोपलभ्यते तत्किं संयोगादाहो स्विद्व्याप्ते
यदि व्याप्तेः नायोगोलके वह्निसम्पृक्ते वह्निगुणा गृह्येरन् । तयोर्व्याप्यव्यापक-
भावाभावात् । धूमे च गगनतलावलम्बिनि भूमिष्ठेन वह्निना व्याप्तेरग्नेर्गुणा
गृह्येरन् तयोर्व्याप्यव्यापकभावात् । तस्मादन्यसंयोगो हेतुः स चोभयोरवि-
शिष्ट इति तेनापा संयुक्तस्य वायोरपि द्रवत्वेन चाक्षुषत्वप्रसङ्ग इति ।

**पूर्वं-नम्** (सू. ६८) ॥ प्रधानशब्दार्थं व्याचष्टे भाष्यकार विष-
यग्राहकत्वं गन्धादिविषय । तदेव विषयग्राहकत्व कुतस्तत्राह । **गुणोत्क-
र्षात् अभिव्यक्तिसामर्थ्यात्** । विषयग्राहकत्व चेत्प्राणान्य तत्सर्वेषामेवेन्द्रियाणा
विषयग्राहकत्वादित्यायमयथान् वार्तिककारो भाष्यकारीय व्याख्यानमसूय-
१८ माण, पृच्छति । **का प्रधानता** । स्वमतेनोत्तरमाह । **चतुर्गुणत्वादिति** ।
एतदुक्तं भवति यस्माच्चतुर्गुणत्वेन पार्थिवं घ्राणं रसनादिभ्य आप्यादिभ्य
प्रधानं तस्मादस्यागन्धवत्त्वं नास्ति येन गन्धं न गृह्णीयात् । न त्वेवं रस-
वत्त्वादिकमप्यस्ति घ्राणस्येति रसादिकमपि गृह्णीयादत उक्तं **गुणोत्कर्षा-
दिति** । सर्वेषां समवायाविशेषेऽपि गन्धस्यैव घ्राणउत्कर्ष इति गन्धमेव
गृह्णाति तेनागन्धवत्त्वनिषेधपरं प्राधान्याभिधानं न पुनर्गन्धग्रहणे गन्धवत्त्वं
प्रयोजकमपि तु गन्धस्योत्कर्ष इति सिद्धम् । तत्रोत्कर्षपदार्थं पृच्छति
वार्तिककार. **को गुणोत्कर्षः** । उत्तर **स्वगुणाभिव्यक्तिसामर्थ्यं** स्वो
गुणो घ्राणस्य गन्ध, तज्जातीयश्चन्दनादिसमवेतोऽपि गन्धः स्व इत्यु-
च्यते । न पुनः स्वगुणमेवाभिव्यनक्ति घ्राणं घ्राणसमवेतस्य हि गन्धस्या-
दृश्यमानादृष्टो निर्माणभेदो येन सजातीयं चन्दनादिसमवेतं गन्धमभिव्य-

नास्ति यथा मृगमदादिगन्धं पार्थिवद्रव्यान्तरमत्रेतो गन्ध इति । अत एवाह येन गुणेन यद् द्रव्यमुत्कृष्यते स तज्जातीयाभिव्यञ्जकत्वा- ३९८ । दुत्कृष्टो भवति । तस्मिन् द्रव्याङ्गानि शेषः । यः पुनर्गन्धगुणत्वादिति । गन्धमात्रगुणत्वादेव घ्राणं गन्धस्य व्यञ्जकं न तु गन्धस्योत्कर्षादित्यर्थः । तस्य चाद्भिः रूपेणामेव पार्थिवानां गुणानामुपलब्धिप्रसङ्गः घ्राणग्राह्यत्वप्रसङ्ग इत्यर्थः । ननु भवतो ऽपि कुतो व्यवस्थितिरिति सूत्रमवतारयितुं पृच्छति । कस्मात्पुनरिति ।

तद्व्य-व(सू. ६८) ॥ अर्थनिर्वृत्तीति । अर्थः पुरुषार्थः । प्रविभक्तस्येति । इतरेभ्यो विविक्तस्य । संस्कारकारित इति । अदृष्टकारित इति । शङ्कते । यदि पुनरिन्द्रियस्य गन्ध इति । निराकरोति । तेनैव तस्येति । तदेतद्ग्रहणवाक्यं सोपस्कारं व्याचष्टे । यदिन्द्रियं स्वगन्धं गृह्णीयात्से तय दर्शने नासाविन्द्रियगन्धः अथेन्द्रियं गन्धस्ततो नेन्द्रियग्राह्यः स्यात् । कस्मान्नेन्द्रियग्राह्य इन्द्रियगन्ध इत्यत आह । गन्धं च गृह्णदिति । चो हेत्वर्थे न ग्राह्यग्राहकं करणमस्तीति मनस्तु लिङ्गवदात्मनि करणं न चेयलमित्युक्तम् । तुल्यत्वमापादयितुं सिद्धान्ती पूर्वपक्षिणमनुयुङ्क्ते कस्मात्पुनरिदं न चोद्यत इति । पूर्वपक्ष्याह न चोद्यत इति । सिद्धान्त्याह तुल्यं घ्राणेन स्वस्य गन्धस्याग्रहणमिति । तुल्यतामेवापादयति एतद्व्यपदेशनीयमिति । तद्गुणत्वमेव शब्दगुणत्वमेव दिक्कालयोरिति चेद् नास्ति विवादः दिक्कालयोर्हि शब्दगुणत्वे सत्याधारयोगित्वेन न परापरव्यतिकरकारणत्वं पृथिव्यादिवद्वक्तुमर्हतीति । तथा च शब्दगुणं परापरत्वव्याकारणं आकाशमेवेति नास्ति विवादः । दिक्कालौ तु परापरव्यतिकरकारणे कल्पनीयौ ततो व्यतिरिक्तावित्यर्थः । अपि चाकाशमिच्छत आकाशप्रत्याख्यानं च सामर्थ्यानुपलब्धेरिति । रूपादिसाक्षात्कारे हि इन्द्रियाणामिन्द्रियत्वमेव स्वरूपसामर्थ्ये तच्चक्षुरादिद्रव्यस्य दृष्टं न गुणादीनामित्यर्थः ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां तृतीयाध्यायस्य प्रथममाह्निकं समाप्तम् ॥

---

*परीक्षितानीन्द्रियाण्यर्थाश्च बुद्धेरिदानीं परीक्षाक्रमः । क्रमः स्थान वृत्तयन्तिष्यमाणानुकीर्त्तनं हेतुहेतुमद्भावज्ञापनार्थम् । अर्थेन्द्रियपरीक्षा च बुद्धिपरीक्षया च यथोपयुज्यते तथा बुद्धिपरीक्षायामेव स्फुटीभविष्यति । संशयमाक्षिपति । अनुपपन्नरूप इति । यद्युपलभ्यमानत्वानधिगमः संशयः सो ऽनुपपन्नः साङ्ख्यानामपि तदनित्यत्वस्याभ्युपगमात् । अथ साङ्ख्याभिमतमहत्तत्त्वविषयः तस्य सन्नयत्व विप्रतिपत्तिरिति क्लृप्तत्वद्गतधर्मविचारः सति धर्मिणि धर्माश्चिन्त्यन्ते न सन्दिग्धसत्त्वइति भावः । समाधत्ते दृष्टिप्रवादेति । साङ्ख्यानां हि दर्शने प्रवादो महदन्तःकरणं बुद्धिरिति तदुपालम्भार्थं सूत्रार्थं प्रकरणमिति । अयमभिप्रायः नेह नित्यानित्यविचारो ऽपि त्वनया द्वारा वृत्तेरतिरिक्ता साङ्ख्याभिमता बुद्धिर्निराक्रियते सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण । यदि हि नित्या बुद्धिः स्यात्ततो वृत्तिभ्य उदयव्ययवतीभ्यो ऽतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात् । अथ तु नित्यत्वसाधनानि प्रतिसन्धानादीनि न बुद्धिनित्यत्वस्योपयन्ते ततो वृत्तय एव बुद्धयो न तु तदतिरिक्तं बुद्धितत्त्वं सिध्यतीति सिध्यति बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति बुद्धेर्लक्षणं तथा चास्य लक्षणे सङ्गतिः इतरथा तु प्रधानतो नित्यानित्यत्वविचारो न लक्षणेन सङ्गच्छतइति । साधनं च प्रयच्छते विषयप्रत्यभिज्ञानादिति । वृत्तिमान् किल विषयं प्रत्यभिजानन्नात्मानमपि प्रत्यभिजानाति । न च चेतनो वृत्तिमान् तस्य कूटस्थनित्यत्वात् । अन्यथा पूर्वापरावस्थाभेदवान् न कूटस्थनित्यः स्यात् । परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यतइति भावः । सिद्धान्त्याह साध्यसमत्वादहेतुरिति । वृत्तयो हि वृत्तिमतो भिन्नास्तेन तासां नित्यत्वे ऽपि न वृत्तिमान् कौटस्थ्याच्च्यवते । तथा च प्रत्यभिज्ञाता ऽऽत्मैव प्रत्यभिज्ञानान्नित्यः स्यान्न त्वन्तःकरणं बुद्धिसञ्ज्ञकं न [illegible] तस्य प्रत्यभिज्ञाने प्रकाशतइत्यर्थः । क्रियानाधारत्वाच्च करणस्येति । प्रधानक्रियानाधारः करणं प्रधानक्रिया चेयमुपलब्धिः स्वतो यदाधारा प्रतीयते स कर्त्ता न करणं तथा च प्रत्यभिज्ञानाद्युपलब्ध्या तदाधारः कर्त्ता ऽऽत्मा सिध्यति नित्यो न [illegible] करणमित्यर्थः । क्रियामात्राभिधानेन शङ्कते

* बहुदेशस्थेषितयादिकमासादरीढारा न्यायसूचीनिबन्धे न्यायवार्त्तिके बुद्धिरनित्या तदनुसारेण सूत्राङ्का निर्णीताः । तदुक्तं सूत्राङ्कैरेव निर्णयः कार्यं इति ।

इयक्रियेति । प्रधानक्रियामालम्ब्य निराकरोति **सत्यं भवतीति** । ननु यदि भेदविवक्षया कर्त्रादिशब्दप्रवृत्तिरभेदविवक्षायां च कारकशब्दप्रवृत्तिः कथं तर्हि कर्त्ता कारकं करणं कारकमित्यादिसामानाधिकरण्यं भेदाभेद-विवक्षयोर्विरुद्धार्थत्वादित्यत आह **कारकशब्देनापीति** । नाभेदविवक्षा विशेषाणां किं तु सामान्यविवक्षा भिद्यतइति भेदो न भेदो ऽभेद इति सामान्यस्याभिधानात् । तथा च सामान्यविवक्षया प्रवृत्तः शब्दस्त-द्वदभिधानाद्भेदवाचिना सामानाधिकरण्यं प्रतिपद्यमान इतरेतरव्यावृत्ते विशेषे ऽपादानादौ प्रवर्त्तते अन्यथा कारकविशेषस्य कारकशब्देन सामाना-धिकरण्यासम्भवात् । **पूर्ववदिति** । द्वितीयाध्यायोक्तं कारकविशेषस्य लक्षणं स्मारयति । चोदयति **यद्यन्यकारकेति** । कारकाणामुपादानेन खलु प्रव-र्त्तितः कर्त्ता कारकाण्युपादत्ते । तस्मादितरप्रयोज्यत्वमस्याविरुद्धमित्यर्थः । परिहरति । **न प्रयुज्यते फलस्य प्रयोजकत्वादिति** । नाप्रयुज्यमानं कर्तारं ब्रूमो ऽपि तु कारकाप्रयोज्यं न च फलं कारकमित्यर्थः । **उपेत्य प्रत्यभिज्ञानमन्तःकरणे तस्येति** । प्रत्यक्षं चेत्प्रत्यभिज्ञानं नैकत्वे [illegible]-स्त्यनुमानं ततो यद्यत्प्रत्यभिज्ञायते तत्तदेकमिति न निदर्शनमस्ति न हि तस्यैकत्वमन्यतो निश्चितमतः प्रत्यभिज्ञानात् । नाप्यनेकत्वं दृष्टं तथा चासाधारणतया हेत्वाभास इत्यर्थः । प्रत्यभिज्ञानस्वरूपावधारणे च सति विरुद्धो हेत्वाभासो बुद्ध्यनित्यत्वसाधनादिति । शेषं निगदेनैव व्याख्यातम् । चेतनाध्यवसायभेदो बुद्धिलक्षणे ऽस्माभिर्विचारितः । वृत्तिमतो ऽवस्थाना-द्वृत्त्यवस्थानप्रसङ्ग इति सूत्रार्थः । आक्षेपपूर्वकं **समाप्येवं कस्मान्नेति** समाधानपूर्वकं **न कारणभेदे दृष्टत्वादिति** । कारणभेदे हि सति एकस्य कर्त्तुर्युगपदनेकं कार्यं दृष्टम् । साङ्ख्यानां चान्तःकरणं कर्तृ व्यापकं चेति सर्वव्यापकेनान्तःकरणेनाधिष्ठितानीन्द्रियाणि युगपदेव कार्याणि कुर्युः । अस्माकं त्वन्तःकरणस्य करणत्वादेकेन्द्रियग्राह्ये ऽपि न युगपत्कार्योत्पाद इति विशेषः । **गत्यभावाच्च प्रतिषिद्धं विभुनो ऽन्तःकरणस्यायुगप-द्ग्रहणं न लिङ्गान्तरेणानुमीयतइति** भाष्यस्य गत्यभावाच्च विभुनो ऽन्तःकरणस्येति प्रतीकमनूद्य तस्यार्थमाह **प्राप्त्यर्थस्य गमनस्याभा-वादिति** । न वा युगपत्प्रत्ययोत्पत्तौ प्रमाणमस्ति येन प्रमाणेन प्रतिषिद्धमपि प्रत्यययौगपद्यं प्रतिपद्येत । तस्माद्विभुन्यन्तःकरणे ऽवश्यभावि प्रत्यययौग-

यद्य न चेतद्दृष्टं तस्मादन्तःकरणमपीत्यर्थः । ननु दीर्घां शष्कुलीं भक्षयतः पञ्चानामपि ज्ञानानां युगपदुत्पादो दृष्ट इति को ऽयं प्रसङ्गः अन्तःकरणस्य विभुत्वे युगपदुत्पादः प्रसज्येतेत्यत आह । न च युगपत्प्रत्ययोत्पत्ताविति । अतिशीघ्रतया युगपदुत्पादाभिमानो न तु तत्र यौगपद्यं भाविकमित्यर्थः । पुरुषो जानीते नान्तःकरणमिति स्वमतसमाधानपरं भाष्यं व्याचष्टे । यस्य पुनर्वृत्तिर्वृत्तिमतोरिति । यद्यपि सांख्या भावस्याविषयान्तरव्यासक्ते ऽन्तःकरणे चक्षुरादिसम्बन्धस्याव्यवधानादन्तःकरणवृत्तिर्ज्ञानमिति तन्निराकरणपरं भाष्यम् । एतेन विषयान्तरव्यासङ्ग इति । तदनुभाष्य वार्त्तिककारो व्याचष्टे । एतेनेति । तन्नेति । नैतस्योपजीव्यमाह पुरुषो जानीते नान्तःकरणमिति । हेतुना विषयान्तरव्यासङ्गो ऽन्तःकरणस्य प्रत्युक्तः । व्यासक्तो हि स भवति यो जानीते न चान्तःकरणं जानीते किं तु पुरुष इति तस्यैव व्यासङ्गो नान्तःकरणस्य अव्यापृतस्यान्तःकरणस्य व्यासङ्गो न निषिध्यत इत्यर्थः । चोदकभाष्यम् एकमन्तःकरणं नानावृत्तय इति तद्व्याचष्टे । एकमन्तःकरणं नानावृत्तय इति । नैतदिति । सम्यगाचष्टे जानीते सम्यग्ज्ञायकः सांख्यः सांख्या हि समीचीना बुद्धिस्तया वर्तत इति सांख्यः । एतदुक्तं भवति यद्यपि वृत्तयो नाना प्रतिभान्ति तथा ऽपि भ्रान्तिरियमन्तःकरणादेकस्मादभिन्नानां नानात्वानुपपत्तेः । तस्मात्स्फटिकस्य यथैकस्यापि तापिच्छजपाकर्णिकारादिकुसुमोपधानभेदाद्भेद औपाधिक एवमन्तःकरणस्यैकस्यापि स्वच्छस्येन्द्रियप्रणाडिकया तत्तदर्थोपरक्तस्यौपाधिकं नानात्वं वृत्तिरिति च प्रत्यय इति ज्ञानमिति चाख्यायत इत्यर्थः । तदेतद् दूषयति । नानैकान्तादिति । यो ऽपि वृत्तीनामौपाधिकभेदमाह तेनाप्युपाधयो ऽर्था आजानतो भिन्ना वक्तव्याः । तथा च भेदस्य द्विधा दर्शनादनैकान्तो दृष्टान्तो नैकार्थस्य साधकः । न हेत्वभावादिति भाष्यं व्याचष्टे यथाश्रुतिसूत्रमिति । न केवलं साधनाभावो बाधकं चाप्यस्तीत्याह विकल्पानुपपत्तेश्चेति । न परपक्षस्य प्रतिषेधमात्रेण स्वपक्षसिद्धिरस्तीत्याशयवान् पृच्छति । अथ भवतामिति । उत्तरं ज्ञानानां क्रमेणेति । स्यादेतत् प्रत्ययनानात्वाभिमानो भविष्यति हेतुरेकत्वे वृत्तीनाम् । एकत्वं वृत्तीनां नानात्वाभिमानविषयत्वात् स्फटिकवदिति तस्मान्न हेत्वभाव इति अत आह ।

एकानेकविषयत्वाच्च प्रत्ययनानात्वाभिमानस्य एकानेकविषयाधिगतिः कथमिति । नानात्वाभिमानोऽपि दृष्टान्तवदसाधकं नैकान्तिकत्वात् । तदेवमन्तरा परकीयामाशङ्कां निराकृत्य पुनरपि वृत्तिभेदं साधयति । यश्चायमभिन्न इति । यदर्थोपधानभेदात्प्रत्ययेषु भेदो नाभानतस्तत्र यस्मिन्नर्थे न प्रत्ययभेदः प्रत्ययोपधानभेदाभावादित्यर्थः । कश्चिद्दूषयति । स्फटिक इति । परिहरति न नैरन्तर्यदर्शनादिति । नीलोद्रव्यलेपस्यापि सान्तरस्य नीलं स्फटिक इति साक्षात्कारानुमेयमिति भावः । कुतोऽपि प्रत्ययभेद इत्याह । यस्य च प्रत्ययाभेद इति । प्रमाणस्य भेदः प्रत्ययलक्षणकार्यभेदोन्नेयो नासति प्रत्ययभेदे भवितुमर्हति । यदुक्तं विषयभेदादिति । एतदुक्तं भवति । प्रातिस्विको ऽपि भेदो विषयाणां यदि प्रमाणभेदहेतुः इन्तैतस्यानन्त्येन प्रमाणानामनन्तो भेदः स्यात् न तु त्रित्वं तस्मादवान्तरसामान्यं विषयाणामास्थेयं न च तदपि स्वरूपमात्रनिष्ठं विषयाणां सम्भवति एकस्मिन्नपि प्रमाणानां सम्प्लवात् * । तस्मात्प्रत्ययभेदोपहितसामान्या विषयास्त्रित्वे व्यवतिष्ठमानाः प्रमाणमपि त्रित्वे व्यवस्थापयन्ति । सामग्रीत्रयान्वयव्यतिरेकानुविधायिनश्च प्रत्ययास्त्रयो भवन्ति । तथा च त्रिविषयत्वात्प्रमाणानि त्रीणि तदिदमुक्तं विषयभेदादिति । निराकरोति । तन्नेति । प्रमाणाभेदे सामग्रीत्रयाभेदे तदनुविधायिनां प्रत्ययानामभेदात् । न हि प्रत्ययभेदमन्तरेण सामग्रीभेदं शक्यो विज्ञातुं तस्मात्प्रत्ययसामग्र्यभेदे ऽपि विषयभेदानधिगतेर्न विषयभेदस्त्रित्वाधिगमो वा प्रत्ययभेदमन्तरेणेति । यदुक्तं विषयतादात्म्यादिति चेत् । प्रत्ययप्रत्येतव्ययोरभेदादुपपन्नः प्रत्ययभेद इत्यर्थः । निराकरोति । तन्नेति । अपि प्रत्ययाभेदे प्रकारवत्त्वाभावात् यथा ऽध्यवस्यति बुद्धिस्तथा चेतयते पुरुष इति व्याघातः । कुतो ऽप्रकारवत्त्वात् भिन्नो हि प्रकारवान् भवति नाभिन्न इत्यर्थः । अन्तःकरणस्य बुद्धेः प्रत्ययानामभेदे बुद्धिस्थं प्रत्ययमुपलभते विरोध इति । तदेवं स्वमतेन सांख्यपक्षं दूषयित्वा बौद्धैर्यत्सांख्यराद्धान्ते दूषणमुक्तं तद् दूषयितुं बौद्धमतमुपन्यस्यति । स्फटिकान्यत्वाभिमान इतीदमनूद्यमानः क्षणिकवाद्याहेति ।

* सम्भवादिति ४ । ३ पु पाठः ।

स्फटि–तुः (सू. १०)॥ यत्सत्तत्सर्वं क्षणिकं यथा शरीरं तथा च स्फटिक इति मन्यन्तो बौद्धाः। शरीरस्य च कालपरिपाकवशेन स्थौल्यस्य ह्रासस्य च दर्शनात् प्रतिक्षणं सूक्ष्मः परिणतिभेदोऽनुमीयते स चान्तरा विनाशं नेति। यद्यपि स्फटिकादेस्तादृक् स्थौल्यं ह्रासो वा न दृश्यते तथापि सत्त्वेन शरीरवदेव प्रतिक्षणं विनाशोत्पादावनुमीयेते इति। स्यादेतत् यदैवोपचयापचयौ शरीरस्य दृश्येते तदैवोत्पादविनाशौ भविष्यतः पूर्वे तु तत्प्रबन्धकल्पनायां किं प्रमाणमित्यत आह। यस्य खलु प्रतिक्षणमिति। अत्र प्रयोगः प्रतिक्षणमन्यच्चान्यच्चेति। पटस्य कुङ्कुमादिद्रव्यसंयोगे सत्यन्ते ऽरुणिमलक्षणो विशेषो दृश्यते न चास्यारुणिमा प्रतिक्षणमासीदित्यत उक्तं बाह्यप्रत्ययाभेदे सतीति। अभिन्नो हि शरीरोपचयहेतुः प्रतिदिनमुपयुज्यमानोऽन्नपानप्रत्ययो यथा पाकजोत्पत्तावपेक्षितो वह्निसंयोगो बाह्यः प्रत्ययः कारणं पटे तु रागोत्पत्तौ कुङ्कुमद्रव्यसंयोगः आगन्तुको विशिष्ट इत्यर्थः। सिद्धान्तसूत्रम्।

निय–ज्ञा (सू. ११)॥ तदेतद्व्याचष्टे। तदिदमुपचयापचयेति। न हि धूमदर्शनानुमितो वह्निः क्व चित्पर्वतेऽस्त्यदृश्यमानेऽपि धूमे पर्वतान्तरेष्वपि पर्वतान्तरेऽपि वह्निमनुमिमते ऽनुमातार इत्यर्थः। यत्र यत्रोपलब्धिरिति। क्षणिकत्वं पूर्वापरभागविकलकालकलामात्रावस्थायित्वम्। न च तादृशं क्षणिकत्वं नैयायिकानां क्व चिदपि सम्मतमिति न सिद्धसाधनमित्यर्थः। निराकरोति सत्यमिति। कस्मात्पुनरस्मदभिमतैव क्षणिकता न सिध्यत्युपचयापचयप्रबन्धदर्शनादित्यत आह। उपचयापचयप्रबन्धदर्शनं चान्यथा भवेदिति। चो वेत्यर्थः। यदुक्तं तुल्यमिति। निराकरोति नासाधनादिति। एकान्तनिश्चयं विना न साधनं दूषणं तु सन्देहापादनेनापीति सो ऽयं साधनदूषणयोर्विशेष इत्यर्थः। उत्तरसूत्रमवतारयति। अथावश्यं साधनं वक्तव्यमिति।

नोत्प–ब्धेः (सू. १२)॥ उत्पत्तिविनाशकारणं चापक्रमवयवोपचयापचयौ न क्षणिकपक्षे युज्येते। निरन्वयोत्पादविनाशयोरुपचयापचयप्रत्ययाभावादिति। उपचयापचययोरुत्पत्तिविनाशकारणोपलब्धेरिति। उपचयापचयौ च तावुत्पत्तिविनाशकारणे चेति कर्मधारयः। उत्पत्तिविनाशकारणोपलब्धेरित्यस्य व्याख्यानान्तरमाह। अथ वा कारणमिति। समवायि-

कारणं हि कार्यात्पूर्वं च कार्यकाले चेति लोकसिद्धं तच्चैतत्क्षणिकत्वे ऽनुपपन्न-
मित्यर्थः । **एककालानुभाविनी** अनुभवः प्राप्तिः एककालप्राप्ते इत्यर्थः ।
भिन्नलोकमर्यादः शङ्कते **आधाराधेयभावस्येति** । निराकरोति **नानेका-
न्तात्** । भवतामपि राद्धान्ते रूपं सप्रतिघं कार्यमाधारवच्च । यदि तु रूपमप्य-
नाधारं मनुषे ततस्ते स्वसिद्धान्तव्याकोप इत्याह । **स्पर्शस्तदाश्रय इति च
व्याघात** इति । सर्वं तदेककालानुभावि सिद्धं भवतीति । शङ्कते **सिद्धः
कार्यकारणभावः** क्षणिकेष्वपीति । कार्यस्यानाधारत्वप्रसङ्गेन न हि
क्षणिकत्वे कार्यकारणभावो न सिध्यति । स तु सिद्धः क्षणिकत्वपक्षे ऽपीति
कारणविनाशसमनन्तरत्वे । कार्यं स्यादस्य कार्यकारणयोः समानकालत्वा-
दित्यर्थः । निराकरोति । **न हेत्वर्थापरिज्ञानादिति** । एतावता प्रयासेन
त्वया कार्यकारणभावः क्षणिकानां समर्थ्यते न चायमक्षणिकत्वे हेतुरपि
त्वाधाराधेयभावः स चाशक्यसाधनः को नु खल्वयं कारणविनाशः कार-
णाभावो वा विनाशकारणसान्निध्यं वा । पूर्वस्मिन्पक्षे कार्यकारणयोः कुतः
समानकालता उत्तरस्मिन्नप्युत्पन्नस्य पश्चाद्विनाशकारणसान्निध्ये ऽपि कुतः
ततः क्षणिकता । न चोत्पद्यमानताविनश्यत्तयोस्तुल्यकालत्वमनुभवविरो-
धात् । कार्यस्य च तदैवोत्पद्यमानत्वे कार्यकारणभावाभावः सव्येतरविषा-
णवदिति भावः । अपि च दृष्टान्तो ऽपि साध्यविकल इत्याह । **अनु-
ताधारस्येति** । ये अवयवकर्मणी नामोन्नामौ न तयोः कार्यकारणभावः ।
यत्त्ववयविकर्म न तत्र यौगपद्यं नापि कार्यकारणभाव एकत्वादित्यर्थः ।
**गुरुत्वप्रयत्नसंयोगा उत्पत्तेरिति** । विधारकः प्रयत्नस्तुलाधारस्य तदपेक्षः
संयोगः संयुक्तसंयोगो गुरुत्वं च तत्संयुक्तावयवान्तरवर्तिकारणसूत्रैस्तुला-
वयवस्य अपतनेऽपि द्रव्यं गुरुत्ववत्सुवर्णादि परिमीयमाणं तत्संयोगानुगृ-
हीतो रज्जुतुलासंयोगः कारणम् । चोदयति **न नास्ति शीतोष्णस्पर्श-
भेदस्येति** । परिहरति **स तु निमित्तान्तरादिति** । पुनश्चोदयति ।
**अप्तेजोऽवयवानुप्रवेशो न युक्त** इति । स्वगता महाभूतविशेषास्तदव-
यवाः पृथिव्यादयः ते हि परस्परतो विशिष्यन्त इति विशेषाः । परिहरति
**न युक्तमिति** । यदि प्रतिक्षणमन्यत्वमपेक्ष्य विशेषस्ततः काष्ठघटानामपि
भूम्यश्मलोहवद्विशेषोपलम्भः स्यात् । यथा हि काष्ठघटादश्मलोहव[illegible]

भिद्यन्ते एव काष्ठपाषाणादयोऽपीति । तस्मात्पार्थिवत्वे ऽपि स्थितौ विशेषा
वास्थेयौ यतो भूम्यश्मादिभ्यो व्यावर्त्तन्ते न व्यावर्त्तन्ते च काष्ठपाषाणेभ्य
काष्ठपाषाणा तस्मादेव विशेषाद्वाचित्वे ऽपि काष्ठभूम्यश्मलोहानामुपपन्न
उत्तरोत्तरो विशेष इति वृथा वाचित्वकल्पनेति । असाधनं भूतस्वभाव-
वाचित्वसिद्धावित्यर्थः । दूषणान्तरमाह विरुद्धश्चायं हेतुः उत्तरोत्तर
विशेषदर्शनादिति । भवता किल भूतानामन्योन्यव्यावर्त्तकं लक्षणं खर
स्नेहोष्णेरणात्मकानि भूतानीति । यथा पृथिवी स्नेह उदकम् उष्णं
तेज ईरणं वायुर्गतिमानिति यावत् । तयोत्पादे तु काष्ठभूम्यश्म
लोहानामङ्गीक्रियमाणे एकस्यैव खरोष्णे खरोष्णेरणात्मकं स्यादिति सर्वथै
स्वाद्भूतलक्षणव्याघात इति । कठिनमिति यथा पृथिवीमुपलक्षयति ।
अस्मत्पक्षे तु न व्याघात इत्याह यस्य पुनरिति । न केवलं पृथिव्यादि
लक्षणेन विरुध्यते अपि तु शीतोष्णस्पर्शभेदेन नानात्वस्य साधनेन
पूर्वोक्तेनापीत्याह । विरुद्धश्चायमिति । पृच्छति कथम् । उत्तरम्
एकस्य विशेषाभ्युपगमात् । येनैव विशेषेण पूर्वस्मान्नानात्वमभ्यु
पगतं शीतोष्णादिना भेदेन तेनैव सम्पत्स्यतेऽस्यादित्यर्थः । सिद्धान्त-
मभ्युपेत्येति । पूर्वेण हेतुना यो ऽभ्युपगतो ऽर्थः तद्विरोधितया विरुद्ध
इत्यर्थः । शङ्कते अथ मन्यसे न विशेषमात्रमिति । मा भूद्रूप स्प
र्शविशेषमुपादानमिति रूपस्यैकस्य नानात्वमिति भावः । निराकरोति
नाभिप्रायेति । यस्त्ववयवानुप्रवेशे दर्शयेदुष्णजले वह्निस्पर्शेनदूषयेदो ऽपि
स्यादयोगोलकवदिति तं प्रत्येकदेशिमतेन परिहारमाह । जले ऽग्निरूप-
ग्रहणप्रसङ्गस्त्विति । तद्दूषयति । तन्नेति । युक्तं मध्यन्दिने सवितृप्रका
शेनाल्पत्वेन मन्दं उल्काप्रकाशो ऽभिभूयते सजातीयत्वे सत्युल्बणत्वात् ।
तोयरूपं तु नोल्बणं न च सजातीयमभास्वरत्वात् । तेजस्तु भास्वरं तस्मा
न्नाभिभव इत्यर्थः । परमार्थपरिहारमाह । अपि तु तेजसश्चातुर्विध्यात्
किं चिदुद्भूतरूपस्पर्शं तेजो भवति । यथा सवितृप्रकाशः यदि वा किं चिद्
दनुद्भूतरूपस्पर्शं यथा चाक्षुषं तेजः किं चिदुद्भूतरूपमनुद्भूतस्पर्शं च यथा प्रदीप
प्रभायां तेजः किं चिदनुद्भूतरूपमुद्भूतस्पर्शं यथा तोयगतं तेजः यथा वा

निशीथे निदाघसमये तेजो यतो मेदस्विनः स्विद्यन्तीति । प्रतिज्ञार्थं यथा-
संभवं विकल्प्य दूषयति । या चेयं प्रतिज्ञेति । अथ वर्तमानं स्फटिक-
मभ्युपगम्य यदतीतं स्फटिकान्तरं तत्पक्षीकृत्य वर्तमानात्तदन्यदिति
साध्यते । निराकरोति । एवं सतीति । यदि लिङ्गं स्वसत्तासत्ताभ्यां
गमकं तदा सत्यपि ज्ञाने अतीतधर्मस्य सत्ता नास्तीति न गमकमिति
भावः । यदि पुनः स्वज्ञानमात्रेण गमकं लिङ्गमुच्येत तदा दूषणान्तरमाह ।
वर्तमानार्थे ते । तद्विरोध्याश्रयनाशानुविधानेन विनश्यतीति ।
विरोधीति गुणाभिप्रायम् । गुणो हि विरोधिना गुणान्तरेण नाश्यते आश्रय-
नाशेन चेति सर्वसाधारणम् । आश्रयग्रहणं चोपलक्षणं तेनासमवायिकारणनि-
मित्तकारणविनाशेनापि यथासम्भवमुन्नेतव्यमिति । शङ्कते विनश्यद्द्रव्यस्येति ।
मा भूत्प्रदीपो दृष्टान्तो विनश्यद्द्रव्ये तु द्रव्ये कर्मोत्पन्नमुत्पन्नमनन्तरमेवापवृ-
ज्यते अत ईदृशं कर्म दृष्टान्तो भविष्यतीत्यर्थः । निराकरोति न कर्मण
इति । कर्मोपलापनिबन्धनो ह्ययं क्षणिकवादस्तदभ्युपगमे न भवितुमर्हति ।
स्थिराद् द्रव्यादागन्तुककर्मसहितादेव कार्योत्पादोपपत्तेरिति । निराकर-
णान्तरमाह अनभ्युपगमाच्चेति । तादृशस्यापि कर्मणः क्षणिकत्वस्यास्माभिः
तथा हि द्रव्यस्य विनश्यता कर्मोत्पाद इत्येकः कालः । अथ द्रव्यस्य
विनाशः स च कारणोत्पादसमये कार्योत्पाद इति द्रव्यविनाशानन्तरं
कर्मनाश इति सिद्धं चतुःक्षणावस्थाने कर्मण इति । शङ्कते । विनाशहे-
त्वभावादिति चेत् । अयमभिसन्धिः स्वकारणादयं भावो विनश्वरो जायते
ऽविनश्वरो वा । विनश्वरश्चेद् विनाशं प्रति न हेतुमपेक्षेत न हि नीलं
स्वकारणादुत्पन्नं नीलत्वे हेतुमपेक्षते तस्यैव ताद्रूप्यात् । अविनश्वरश्चे-
त्तथाऽपि नास्य हेतुशतेनापि शक्यो विनाशः कर्तुम् । न हि नीलमुत्पन्नं
पीतं शिल्पिशतेनापि शक्यं कर्तुम् । अपि चायं विनाशो भावस्य कारणैरा-
धीयमानो भावाद्भिन्नोऽभिन्नो वा जायते । अभिन्नत्वे भाव एवासीदिति
विनष्टो भावः प्राग्वदुपलभ्यार्थक्रियां कुर्यात् । न च भावाभावयोः कारणभेदे
सति स्वभावभेदः । तन्तुसंयोगभेदेभ्यो हि पटो जायते तन्तुविभागाद्वा
तन्तुविनाशाद्वा पटाभाव इति कारणभेदः । भावाद्भिन्नत्वे तु तदायत्ताभावो
भावस्य क्रियतां न हि कर्मेऽन्योत्पादने चैत्रो निवर्तते । अभावेन

भावस्तिरोधीयतइति चेत् । न तिरोधानस्यापि भावादभेदे पूर्ववदुप-
लब्ध्यादिप्रसङ्गः । भेदे ऽपि तिरोधानस्यान्यस्योत्पादे अन्यस्य न किं चिदु-
त्पन्नं विनष्टं चेति भावतादवस्थ्यादुपलब्ध्यादिप्रसङ्गः । अपि च येषां ध्रुव-
भावि न तेषां हेत्वन्तरापेक्षा यथा कृपाणस्यायोमयत्वे । ध्रुवभावी च
कृतकानां भावानां नाश इति विरुद्धव्याप्तोपलब्धिः । ध्रुवभाविता हि
प्रतिषिध्यमानहेत्वन्तरापेक्षत्वविरुद्धतन्निरपेक्षत्वव्याप्तोपलब्धा सेह प्रतीयमा-
ना निरपेक्षत्वमुपस्थापयन्ती हेत्वन्तरापेक्षतां प्रतिषेधति । ये हि हेत्वन्तरा-
पेक्षा न ते ध्रुवभाविनो यथा वाससि रागादयः कुसुम्भादिसंयोगसापेक्षा
नावश्यं भाविन इति । तस्मादभावस्य सर्वोपाख्यारहितस्य कल्पितस्य
क्रियानुपपत्तेति । अभावं करोतीति क्रियाया अभावेन संबन्धानुपपत्ते-
र्नञ्संबन्धो भावेन करोतीति । यथा ऽऽह न तस्य किं चिद्भवति न
भवत्येव केवलमिति । तस्माद्विनाशकारणाभावादुत्पन्नः सर्वो भावो विनश्य-
तीति सिद्धः क्षणभङ्ग इति । तदेतन्निराकरोति । न विकल्पानुपपत्तेः ।
अयमभिसन्धिः यत्तावद्विकल्पितं स्वहेतुभ्यो भावा विनश्वरा अविनश्वरा
वा जायन्तइति । तत्र ब्रूमः किं पुनरिदं विनश्वरत्वं भावानामभिमतमा-
युष्मतः किं विनाशस्वभावत्वम् आहो विनाशार्हत्वं नित्येभ्यो व्यावृत्तम् ।
न तावत्पूर्वः कल्पः परस्परपरिहारस्थितयोर्भावतन्नाशयोस्तादात्म्यानुपपत्तेः ।
तादात्म्ये च विनाशवद्भावो ऽपि द्वितीयादिक्षणेषु वर्तेतेति साधु क्षणिकत्व
समर्थितमथवा भावानां नित्यत्वमुपपादयता । भावसमये वा विनाशो
ऽपि भावात्मा ऽस्तीत्यत्यन्ताभावो भावस्य भवेदिति सुष्ठु प्रदत्तं सत्त्वं
भावानाम् । न च भाव एकक्षणस्थितिधर्मा नाशो द्वितीयादिक्षणेष्विति
साम्प्रतम् । प्रथमद्वितीयक्षणावच्छेदलक्षणविरुद्धधर्मसंसर्गेण भेदाद् द्वितीय
तु कल्पमनुमन्यामहे । नन्वेवं विनाशार्हाश्चेद्भावाः स्वकारणादुत्पन्नाः
हन्तोदयानन्तरमेवापवृज्येरन् नापवृज्यन्ते विनाशार्हा अपि पटादयस्तन्तु-
विनाशाद्वा तन्तुविभागाद्वा स्वकारणाधीनजन्मनो विनश्यन्ति । न हि
तण्डुलाः पचेलिमा इति विनैव दहनसलिलसंयोगप्रचयभेदं विक्लिद्यन्ति ।
काष्ठानि वा भिदेलिमानीति कुठाराभिघातमन्तरेण दलन्ति । यो मन्यते
तत्र तण्डुलाः पचेलिमाः ये समर्थदहनोदकपिठरसंभवः तदनन्तरं हि

पुलाकाः प्रादुर्भवन्ति यदनन्तरं न प्रादुर्भवन्ति न ते पचेलिमा इति तस्योत्तरमक्षणिकार्थक्रियामुपपादयन्तो वक्ष्यामः । तस्माद्विमतस्वराणामुत्पत्तेः स्वकारणान्न विनाशकारणापेक्षा भावानामिति युक्तम् । केवलं भावादन्यद-कारणं तुच्छं पर्यनुयोज्यो भवान् । किमकारणत्वान्नाशस्य नास्तित्वं रोच-यसे किं वा नित्यता तथोक्तं साक्षाद्वृत्त्या वार्त्तिककृता । भवतां वाक्यानां पक्षे अकारणं द्विधा नित्यं व्योम शशविषाणादि वा तुच्छम् । अस्माकं तु नित्यमेव ध्वंसदभिमतस्य तस्य तुच्छस्याभावस्यानङ्गीकारादस्मदभि-मतस्य भवद्भिरनङ्गीकृतत्वेन नास्तीत्यध्यारोप्य राशिरेक उक्तः । उत्पन्नस्य विनाश इति सर्वजनीनं तद्विपरीतं भवन्मते प्राप्नोति । नन्वस्तु भावाभावयोः सहावस्थानं को दोष इत्यत आह । ततश्च भावानामिति । यदुक्तं अथाविनाशित्वादिति । प्रयोजनव्यतिरिच्य यदकारणत्वे विनाशस्यैव दोष इति । न तु दोषभयेन स्फुटतरप्रमाणबाधितं कारणान्यविनाशस्य वक्तुम-ङ्गीकर्तुमिति भावः । गूढाभिसन्धिः सिद्धान्ती पृच्छति विनाशो न विनश्य-तीति । कुत एतत् । चोदक आह चिरस्थानामिति । सिद्धान्ती बौद्धमत-मालम्ब्याह । न हि विनाशाभाव इति । यस्य घटाभाव एव तुच्छस्तस्य तदभावे का कथा तस्य तुच्छादपि तुच्छतरत्वादिति भावः । स्वमतमास्था-याह । अपि च विनाशः कारणवांश्चेति । शेषं सुबोधम् । यदप्यकार-णत्वे कारणमुक्तं भावाद्भिन्नश्चेदभावो जन्येत भावस्तादवस्थ्यमिति । तदे-च्यते नाभावस्योत्पादे भावस्यापरा निवृत्तिः किं त्वभावोत्पाद एव तन्नि-वृत्तिः कथमन्यस्योत्पादे ऽन्यस्य निवृत्तिः अथ स्वभावभेदेत्तर वाच्यं ये परस्परपरिहारावस्थितयः स्वहेतुभ्यो जायन्ते । न हि स्वतो ऽन्यस्याङ्कुरस्य वह्निर्न कारणमन्यत्वाविशेषाद्भस्मनो ऽपि न कारणमिति । स्वभावभेदेन तु कार्यकारणभावनियमसमर्थनं परस्परपरिहारस्थितिनियमे ऽपि तुल्यम् । यथा चोत्पादस्य पुरस्तादखिलसामर्थ्यरहितस्याङ्कुरप्रागभावस्योपकारं किंचिदकु-र्वन्तो ऽपि बीजादयो ऽङ्कुरमारभन्ते तदुत्पादस्यैव तत्प्रागभावनिवृत्तिरू-पत्वात् । एवं तदभावहेतवो ऽपि भावरूपे अकिंचित्करा अपि तदभावमा-दधति न चेद्भावरूपे किं चित्कृतं तदभावहेतुभिरप्यभावः प्रागिव स्वाभा-वसमये कस्मान्न स्वरूपोपलम्भार्थक्रिये करोति । अथोत्पादात्प्रागिवोत्पन्नो

ऽप्यङ्कुरः कस्मादुपलभ्यार्थक्रियां करोति। उत्पत्तेः प्रागङ्कुरो नासीत्तेन नाकार्षीदुत्पन्नस्त्वस्ति तस्मात्करोतीति चेत्। हन्त भावो ऽपि यदा ऽऽसीत्तदा ऽकार्षीदिदानीं तु विनष्ट इति नास्ति तेन न करोति। यथा च भावोत्पाद एव तत्प्रागभावस्य नास्तिता एवमभावोत्पाद एव भावस्य नास्तिता। उपजननापायधर्मतया भावाभेदो विनाशस्य सतो न सदसद्रूपतया द्वैराश्यं विरुध्यतेति चेत् को ऽयमुपजनो यदि स्वकारणसमवायः सत्तासमवायो वा सो ऽभावे नास्ति अथ स्वरूपप्रतिलम्भः तथा ऽपि तावन्मात्रस्य साम्ये ऽपि रूपान्तरभेदेन द्वैराश्योपपत्तिः। तस्माद्यथा सत्त्वस्य साम्ये ऽपि द्रव्यगुणकर्माणि तेन तत्त्वेनान्योन्यं भिद्यन्ते एवं प्रमेयत्वाभिधेयत्वकारणत्वेनाविशेषे ऽपि भावाभावानां सत्तात्वादिरूपभेदाद्भेद इति सिद्धम्। या ऽपि ध्रुवभाविता विनाशस्य तत्र क्रमः* ध्रुवभावित्वेन विनाशस्य हेत्वन्तरानपेक्षत्वं प्रयोगो नाहेतुकत्वं वक्तुमर्हति। हेत्वन्तरनिराकरणेन हेतुना निराकरणात्। विशेषनिषेधस्य शेषाभ्यनुज्ञाफलकत्वात्। अपि च ध्रुवभावित्वमसिद्धमनैकान्तिकं वा इदं भवान् पृष्टो व्याचष्टां किं घटसत्तानात्स्वभागात् कपालसन्ततिर्ध्रुवभाविनी न वा। न चेन्न विनाशो ऽपि घटस्य ध्रुवभावी न खलु विभागक्षणोत्पादमन्तरेण घटविनाशमीक्षामहे मांसचक्षुषः तथा सासिद्धा ध्रुवभाविता विनाशस्य। अथ ध्रुवभाविनी तस्यामेव तर्हि विभागसन्ततौ ध्रुवभाविन्यां मुद्गरादिहेत्वपेक्षेत्यनैकान्तिकं ध्रुवभावित्वं नानपेक्षत्वव्याप्तमिति न हेत्वन्तरापेक्षित्वं निषेद्धुमर्हतीति। यदेतद्यच्चाकारणविनाशे दोषः स चापरिहार्य इत्यनेन वार्त्तिकेन सूचितम्। एवं तावदन्यत्वे साध्ये दोष उक्त इति। यद्यपि क्षणिकत्वमपि पूर्वमुक्तं दूषितं च तथा ऽपि क्षणिकाभिधानं तत्रान्यपरमन्यत्वमेव तु तत्र प्रधानम्। इदानीं तु क्षणिकत्वमेव प्रधानतया साध्यमित्येतावता प्रकरणभेद इति विशेषणं सिद्धान्तविरोधीति। यद्यनाशुविनाशिनो ऽपि के चन भावा भवेयुः ततो विशेषणमाशुविनाशिन इति कल्पेत तथा च सिद्धान्तविरोध इत्यर्थः। मत्वर्थीय इति। क्षणिक इति अत इनिठनाविति मत्वर्थीयष्ठन् अन्तरेण विनाशेन क्षिप्यमाण इत्युपपन्नत्वमाह। सर्वान्तकालमिति। पूर्वापरभा-

---

* तत्र क्रम इति ३ पु० पाठः।

गणितकलकालकलेका ज्योतिर्विद्याविद्वा सर्वान्तः कालमिति संज्ञामात्रं न तु
वास्तवं वास्तवी च क्षणिकता ऽभिमतेति । पक्षवचनं दूषयित्वा हेतुं दूष-
यति ये ऽपीति । अत्रादिग्रहणेन सत्त्वकृतकत्वादयः संगृहीता वेदितव्याः ।
तत्र यत्सत्तत्सर्वं क्षणिकं यथा घटः संश्च विवादाध्यासितः शब्दादिरिति स्व-
भावहेतुः सत्तामात्रानुबन्धित्वात्क्षणिकत्वस्य । कथं पुनः सत्तामात्रानुबन्ध-
सिद्धिः क्षणिकतायाः उच्यते सत्त्वं नामार्थक्रियाकारित्वं भावानां नान्यत् ।
न ह्यस्ति संभवः संश्च भावो न चार्थक्रियां करोतीति । तथा हि च सर्व-
ज्ञस्य विज्ञानस्यालम्बनप्रत्ययो भवेन्न वा । न चेद् नास्ति सर्वज्ञो वा न
सर्वज्ञः तस्यैवाज्ञानाद् आलम्बनप्रत्ययश्चेत् कथं नार्थक्रियां करोतीति । न
च सत्तासामान्यं नास्ति किं च न नापि समवायो यतः सदित्युच्यते । तत्त्व-
द्रावे वा न भवतां सामान्यविशेषसमवायाः सन्तो भवेयुः तेषां सामान्या-
द्यान्तरस्यानभ्युपगमात् । प्रमाणग्राह्यता ऽपि प्रमाणविषयता प्रमाणं प्रत्याल-
म्बनप्रत्ययत्वमेव तच्चार्थक्रियाकारित्वान्नान्यदिति सिद्धमर्थक्रियाकारित्वमेव
सत्त्वमिति । तच्च क्रमाक्रमाभ्यां व्याप्तं तृतीयप्रकारविरहात् । तथा हि भावानां
तासु तास्वर्थक्रियासु क्रमाक्रमौ परस्परपरिहारवन्तौ चकास्तः तथा च क्रमा-
क्रमात्मकं प्रकारान्तरमपि यदीदृशाभ्यामेवानुभूताभ्यां क्रमाक्रमाभ्यां
करम्बितमङ्गीक्रियते ततो दृश्यमानयोरपि क्रमाक्रमयोः परस्परसंक-
रप्रसङ्गः । करम्बितावेव हि क्रमाक्रमाविभावयोरिति दृश्यमानः क्रमो ऽक्र-
मात्मकः अक्रमश्च क्रमात्मकः प्रतिभासेत । न च तथा प्रतिभासते । एतेन
प्रत्यक्षमेव परस्परपरिहारवन्तौ क्रमाक्रमौ परिच्छिन्दत्सर्वदैवानयोः संकरं प्रति-
षेधति । यदि तु विद्यमानयोस्तादात्म्यं भवेदिहापि तावेव क्रमाक्रमाविति
संकीर्णौ गृह्येयाताम् । तस्मादनयोरिह संकरानुपलम्भ एव देशान्तरे काला-
न्तरे च संकरं निषेधति । तादात्म्यनिषेधे च दृश्यत्वविशेषणादनुपलब्धेः
दृश्यमानस्तम्भतादात्म्येन स्वयमदृश्यानां पिशाचादीनां दृश्यानां च प्रपञ्चा-
दीनामविशेषेण प्रतिषेधात् । यथा ऽऽह विशेषणं चावाच्यमिति । अने-
वंभूतक्रमयौगपद्यव्यतिरेकवती प्रकारान्तरे क्रमयौगपद्ये यत्र न भवतः न
हि शब्दाभेदेन वस्तुनो ह्यभेदः । मा भूद्गोशब्दसामानाधिकरण्येन वागा-
दीनामपि विषाणित्वप्रसङ्गः । स्यादेतत् । मा भूतां क्रमयौगपद्ये अस्वन्य

एष क्रमाक्रमाभिधानः क्रमयौगपद्याभ्यामन्यः प्रकारो यमास्थाय भावाः स्थिरा अप्यर्थक्रियायामुपयोक्ष्यन्ते । न त्वेषा प्रकारान्तरपदर्थक्रिया ऽपि विधाप्यमानेव तथा चेत् किं नः छिन्नं दृश्यमानास्त्वनुमूलारसिताः परस्परव्यावृत्तक्रमयौगपद्यरूपप्रकारद्वयसमालिङ्गितरूपा अर्थक्रिया न प्रकारान्तरा-द्वयितुमीशते । न च प्रकारान्तरमपि । तथा हि यत्र यत्प्रकारप्रतिषेधेन यदितरप्रकारव्यवस्थानियमस्तत्र न प्रकारान्तरसम्भवः यथा नीलप्रकारप्रतिषेधेनानीलप्रकारव्यवस्थायां पीते अस्ति च तयोरन्यतरप्रकारनिषेधे ऽन्यतरव्यवस्थानियमो निषिध्यमानप्रकारविषयीकृते सर्वत्र कार्यकारणे इति विरुद्धोपलब्धिः । निषिध्यमानप्रकारान्तरसम्भवविरुद्धो हि द्वयोरन्यतरनिषेधेनान्यतरव्यवस्थानियम इति प्रकारान्तरासम्भवाद्व्यापकमर्थक्रिया क्रमाक्रमाभ्यां व्याप्ता सा च स्थिरान्निवर्तमानार्थक्रियामपि व्यावर्तयति वृक्षतेव निवर्तमाना शिंशपात्वमाराद्दृश्यमानादेकशिलामयाद्भूभृत्कटकादिति प्रतिबन्धसिद्धिः । तथा हि न तावदक्षणिकः क्रमेणार्थक्रियां कर्तुमर्हति । स्वेन हि रूपेण भावा अर्थक्रियायामुपयुज्यमाना दृश्यन्ते । यद्वस्तु यत्कार्यान्वयव्यतिरेकानुविधानमायाभाव तद्वस्तु तत्कार्यप्रसवसमर्थं रूपं च तस्य कार्येणानुकृतान्वयव्यतिरेकमिति रूपमेव समर्थं तच्च द्वितीयादिक्षणेष्विव प्रथमे ऽपि क्षणे सदिति द्वितीयादिक्षणकार्य कार्यकलापं प्रथमक्षण एव निष्पादयेत् । समर्थस्य क्षेपायोगादिति नाक्षणिकस्य क्रमवद्व्यापारता प्रकल्पते । स्यादेतत् समर्थो ऽपि क्रमवत्सहकारिसमवधानात् क्रमेण करोतीति तदयुक्तम् । विकल्पासहत्वात् । किमस्य सहकारिणः कं चिदुपकारमादधति न वा आदधाना वा भावाद्भिन्नमभिन्नं वा । तत्र भिन्नोपकाराधाने भावे सत्यनुत्पत्तेरुपकारे च सत्युत्पत्ते वरं कार्यस्योपकार एव जनको न जनको भावः । न चोपकारसहकारी भाव एव कार्यस्य जनको नोपकारमात्रमिति वाच्यम् । उपकारस्योपकारान्तरजनने अनवस्थानात् । अजनने तु सहकारिभावाभावात् । अभिन्नोपकाराधाने च भाव एव जनितः स च प्रागप्यासीदिति सहकारिवैयर्थ्यम् । अनुपकारकत्वे वा सहकारिणो न भावेनापेक्ष्येरन्निष्पन्नमात्र एव भावः कार्यमुत्पादयेत् । समर्थस्य क्षेपायोगात् क्षेपे वा न परस्तादपि कुर्यादविशेषात् । यदि मन्येत अनुपकारका अपि मिलिताः सहकारिणो यतस्तैः सह भावः

कार्यं करोति । न च भावेन नापेक्ष्यन्ते तैर्विना कार्यस्यानुत्पत्तेरिति । ननु स्वरूपेण चेत्कार्यजनको भावः न कस्मात्तेभ्यः पूर्वमानन्तरेण जनयति तेभ्यः प्रागपि स्वरूपसद्भावात् । सहकारिरूपेण वा जनकत्वे सहकारिण एव जनका न जनको भावः । न चोभयभावाभावानुविधानादर्थक्रियाभावाभावयोरेकस्माद्व्यभिचारादुभयाधीनतेति सांप्रतम् । भावे सत्यनुत्पादात्कार्यस्य व्यभिचारेण चरमभाविनिर्निमित्तसहकारिसमवधाने सति भावादेव सहकारिसमवधानस्यैव चरमभाविनो व्यभिचारेण कारणत्वावधारणात् । एतेनैतन्निरस्तं यदाहुरेके स्वहेतोर्विलम्बकारी भावो जात इति नोत्पन्नमात्रः करोतीति । सा हि विलम्बकारिता अस्य स्वभावः सहकारिसमवधानकाले ऽप्यस्ति न वा अस्ति चेत्तदा ऽपि न कुर्यात् । नास्ति चेत् कथं स्वभावनाशे भावो न नष्टः । अथास्य विलम्बकारिता न स्वभावः कथमुत्पन्नमात्रो न कार्यं कुर्यादिति । तस्मान्न क्रमेणार्थक्रिया भावानां नापि यौगपद्येन तस्माद्यावत्कार्यं तेनावधिकेन प्रथमे क्षणे संपादितं तावन्त्येव द्वितीयादिक्षणेषु संपादयेत् । तावत्कार्यसंपादनस्वरूपस्य द्वितीयादिष्वपि क्षणेषु भावात् । न च संपादितं पुनःसंपादनमिति यद् द्वितीयादिक्षणेषु संपादयति तत्प्रथमक्षणे संपादितादन्यदिति क्रमो यावदनन्तरमिति तत्र चोक्तो दोषः । युगपत्कृतकृत्यस्य वा द्वितीयादिषु कर्तव्याभावान्नार्थक्रियासामर्थ्यमस्तीत्यसत्त्वेन क्षणिकस्यापत्तिः । तस्मादक्षणिके सत्त्वे व्यापकयोः क्रमाक्रमयोरनुपलम्भाद्व्यापकानुपलब्ध्या निवर्तमानं सत्त्वमक्षणिकात् क्षणिकत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः । नीलमेव चानुभूताविति समारोपिताक्षणिकभावमक्षणिकं तादृशनीलस्वरूपोपलम्भ एव तथाक्षणिके क्रमयौगपद्यानुपलम्भः । यथा भूतलस्वरूपोपलम्भ एव समारोपितादृश्यत्वस्य घटस्यानुपलम्भः भूतलं च तथोत्पन्नं घटाभावो न स्वभावो नाम कश्चिद्विपक्षवानस्ति यः प्रतिपत्तिगोचरः स्यात् । अपि तु व्यवहर्तव्यः परम् । स्यादेतत् । क्षणिको भावो ऽर्थक्रियाजनकस्वभावो न वा न चेदसत्त्वेन तज्जनकस्वभावश्चेत्किमस्य सहकारिभिः । उत्पन्नमात्रमेव बीजमङ्कुरं जनयेत् । नन्वुत्पन्नो बीजक्षणः समर्थो जनयत्येवाङ्कुरं कुतः समर्थस्योत्पत्तिः पूर्वस्माद्बीजक्षणात् । तर्हि तत्सन्तानवर्तिनां सर्वेषां बीजत्वाविशेषादङ्कुरजननसामर्थ्यमिति कुसुमानन्तरलब्धजन्ममात्रमेव बीजमङ्कुरं जनयेत् । नैवम् । पूर्वपूर्वक्षितिबीज-

पवनादिक्षणसमवधानोत्पन्नातिशयवदुत्तरोत्तरक्षणपरम्परालब्धजन्मा ऽन्त्यो बीजक्षणः समर्थः, समर्थश्चित्यादिलक्षणसहभूरनपेक्ष एवाङ्कुरं जनयति । न चास्य क्षित्यादिसहभुवस्तदनपेक्षस्यापि तैर्विना करणं तदेकसामग्र्यधीनस्य तदभावे ऽभावात् । न वा सहकारिता क्षित्यादीनां तैरेव सहाङ्कुरजननात् । तेषामपि कार्यात्पूर्वभावस्य नियमतो ऽविशेषात् । तन्मात्रत्वादेव च कारणतायाः । न चानपेक्षाणामपि प्रत्येकं कार्यान्तरारम्भणं तन्मात्रस्य तेभ्य उपलब्धेस्तस्यैव सामर्थ्यनियमात् । न च कृतकरणतयैतदेवामक्रिया सहक्रियायां कृतमित्यसम्भवात् । न च स्वकारणलब्धसन्निधयो भावा प्रेक्षावन्तः यत्कार्यमिदमस्माभिरेकेनापि कर्तुं कृतं न सर्वैः सन्निधानेनेत्यालोच्य निवर्तितुमीशते । न च स्वकारणभेदमात्र कार्यभेदहेतु अपि तु सामग्रीभेदः तस्मिन्सति कार्यभेदोपलब्धेः अभिन्ना भेदसामग्रीति न कार्यभेदप्रसङ्गः । परस्परसमवधानं चोपसर्पणप्रत्ययेभ्यः क्षित्यादीनामिति । न च क्षणिकस्यार्थक्रियाविरोधादसाधारणता हेतोः न च साध्यधर्मिणि दृश्यमाने शब्दादौ व्याप्तिसाधनादेव साध्यसिद्धेस्साधनाङ्गं हेतुवचनम् । न खलु सर्वोपसंहारवती व्याप्तिर्दृश्यमानविषया भवितुमर्हति । शक्य हि यद्धि परोक्षाद्दृश्यमानानां सत्त्वमक्षणिकाद् न व्यावर्तितं त्वयेति सत्त्वमनैकान्तिकं क्षणिकत्वसाधनमिति । तस्माद्दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति दर्शनीया व्याप्तिः । नन्वेवमपि शब्दादौ विवादास्पदीभूतस्य व्याप्तिदर्शनबलादेव सिद्धा क्षणिकतेति तदवस्थमेवासाधनाङ्गत्वं हेतुवचनस्य नैवम् । असत्यपि शशविषाणादौ यत्सद्दृश्यमदृश्यं वा तत्सर्वं क्षणिकमिति यथा सर्वोपसंहारवती व्याप्तिः न च शशविषाणादयो ऽपि भवन्ति क्षणिका एव सत्यपि विवादास्पदीभूते शब्दादौ व्याप्तिसिद्धावपि न सिध्यति क्षणिकता तेनावश्य दर्शयितव्यमेतेषां क्षणिकत्वसाधनाय सत्त्वमिति नासाधनाङ्गता हेतुवचनस्येति । अत्रोच्यते । न सत्त्वं क्षणभङ्गसिद्धावङ्गमसाधारणत्वात् अन्वयव्यतिरेकित्वाद्वा । तथा हि क्रमाक्रमाभ्यां व्याप्तं सत्त्वं तदनुपलम्भेनाक्षणिकाद्व्यावर्तमानमेव तदेव सापेक्षत्वानपेक्षत्वाभ्यां व्याप्तं तदनुपलम्भेन क्षणिकादपि व्यावर्तते तस्मादन्वयव्यतिरेकासाधारणं सदसाधनाङ्गम् । तथा अनन्तक्षणप्राप्तानि क्षितिपवनपाथस्तेजोबीजानि समर्थानि प्राग्भावनियतानि

नियतक्रमोत्पादानामवनिसलिलानलाङ्कुराणां कारणं भवद्भिरभ्युपेयन्ते तान्यमूनि परस्परानपेक्षाणि वा जनयेयुः सापेक्षाणि वा । ननु निरपेक्षाण्येवान्त्यक्षणप्राप्तानि क्षित्यादीन्युत्तरस्मिन्क्षणे जनयिष्यन्त्यङ्कुरमित्युक्तम् । तत्किमनभ्युपगमविकल्पेन सापेक्षाणि निरपेक्षाणि चेति । तत्किमिदानीं समर्थबीजक्षणजनको ऽपि बीजक्षणो ऽनपेक्ष एव । बाढमिति चेत् । नन्वेवं सर्वस्य बीजक्षणा निरपेक्षाः स्वकार्योपजनन इति कृतं सहकारिभिः । ननूक्तं नैते प्रेक्षावन्तः किं तु स्वप्रत्ययाधीननियतसंनिधयो न व्यवधीयन्त इति । तत्किमयं कृषीवलो ऽपि न प्रेक्षावान् प्रेक्षावान् यतः प्रयत्नेन कुशूलादवतार्य बीजमावपति भूमौ परिकर्षितायां क्षित्यादिसहभुव एव बीजक्षणस्यातिशयोत्पादपरम्परया अङ्कुरप्रसवसामर्थ्यात् कुशूलस्थात् सहस्रेणापि वर्षैरङ्कुरानुत्पादे तथावपतीति चेत् । अथ किमयं न स्वसंतानमात्रप्रभवः समर्थो बीजक्षणः तथा चेत्कथं संतानान्तरं नापेक्षेत स्वकार्ये । नन्वपेक्षत एव किं तु स्वोत्पादे न पुनः स्वकार्ये तत्र तस्यानपेक्षत्वमभ्युपेयते न तु स्वोत्पादे । ननूत्पत्तावप्यस्य भागिनि स्वसंतानवर्ती पूर्व एव निरपेक्षः क्षणः एवं तस्य पूर्वः पूर्वः क्षणः स्वसंततिपतित एवानपेक्षो ऽङ्कुरोपजनन इति कुशूलनिहितबीज एव स्यात् कृती कृषीवलः कृतमस्य कृषिकर्मणा दुःखबहुलेन । तस्मात्परस्परापेक्षाणामेवान्त्यक्षणप्राप्तानां कार्यजनकत्वमकामेनाप्युपेयम् । अपि चान्त्यक्षणप्राप्तं बीजमनपेक्ष्य अङ्कुरायनिपवनपाथस्तेजांसि जनयेयुः किं येनैव रूपेणाङ्कुरं जनयति तेनैव तदितराण्यपि किं वा रूपान्तरेण । न तावत्तेनैव क्षित्यादीनामङ्कुरस्याभावापत्तेः । न खलु भवतां कारणाभेदे भेदवत्कार्यं भवितुमर्हति । कार्यभेदस्याकस्मिकत्वप्रसङ्गात् । यथोक्तं भवद्भिरेव अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति । नापि सामग्रीभेदः तस्या अप्यभेदात् । अन्यथा सहभावनियमाभावात् । स्वकारणादासादितः कश्चिदेव स्वभावभेद एकस्तादृशो यस्मान्नानाकार्याणि जायन्ते तस्मान्नाकस्मिकत्वं कार्यनानात्वस्य नाप्यतिप्रसङ्गः तादृशस्य तस्यासार्वत्रिकत्वात् । न च कार्यकारणयोरभेदो येन कारणभेदाभेदावनुपतेतां कार्यभेदाभेदौ । तस्माद्यथा येभ्यः कश्चिदेव बहुभ्यः कार्यमेकं जायते तथैकस्मादेव कुतश्चिद्बहूनि जनयिष्यन्ते कार्याणीति चेत् । मुधैव तर्हि नानादेशवृत्तिरेको ऽवयवी सामान्यसंयोगादिरर्थ-

स्तपस्वी भवता ऽऽयासित न हि नानात्वे ऽपि देशानां तदाश्रितं भामा न्यादिरूपं नाना भवितुमर्हति । तस्य तेभ्यो ऽभिन्नत्वात् । रूपान्तरेण बीजमङ्कुरादिरूपेण क्षित्यादीनां जनकम् । तथा हि बीजमङ्कुरस्योपादानं तत्सारभागविक्रियया ऽङ्कुरस्योत्पत्तेः क्षित्यादिषु [illegible] जनयितव्येषु सहकारि पूर्वं तु क्षित्यादय क्षित्यादीनां यथास्वमुपादानानि तद्विक्रियया तदुत्पत्तिरिति चेत् । अथ सहकारित्वोपादानत्वे किमेकं तत्त्वं नाना वा । एकं चेत् कथं रूपान्तरेण जनकं नानात्वे तयोर्बीजाद्भेदो ऽभेदो वा भेदे कथं बीजस्य जनकत्वं ताभ्यामेवाङ्कुरादीनामुत्पत्तेः । अभेदे वा कथं न भेदो बीजस्य भिन्नतादात्म्यात् । तयोरेकरूपत्वमेव तादात्म्यात् । तस्मादङ्कुरादिवत् क्षित्यादौ जनयितव्ये तदुपादानं पूर्वमेव क्षित्यादिसमसमयभावि बीजेनापेक्ष्यते । एवं बीजमपि समसमयभाव्येव सहकारिकारणं क्षित्यादिभिरपेक्ष्यते नान्यथा कार्यभेदसिद्धिरित्यनिच्छता ऽप्यभ्युपेयम् । न चानुपकारकमपेक्षागोचर इति भवद्भिरेवोपपादितम् । न च क्षणिकस्योपकारकत्वसम्भवो ऽन्यस्य जननात् तस्याभेदात्मत्वात् । न च समसमयभाविनोर्जन्यजनकत्वमस्ति सव्येतरविषाणयोरिव । तस्मात्स्वसन्तानमात्रादेव कार्योत्पादप्रसङ्गात्कार्यभेदानुपपत्तेश्चानुपकारिण्यपेक्षानिरहाच्च क्षणिकस्यापि सापेक्षस्यानपेक्षस्य वा नार्थक्रिया सम्भविनीत्यसाधारणस्य न क्षणभङ्गसिद्धावङ्गम् । अथ मा भूदसाधारणता सत्त्वस्येत्यनुपकारकेष्वपि कार्यकरणायापेक्षा ऽभ्युपेयते तेषामपि कार्यानुकृतान्वयव्यतिरेकत्वात् । न त्वनेन क्रमेणार्थक्रियो ऽपि भावो ऽनुपकारकानपि सहकारिणः क्रमवतः क्रमवत्तैव कार्यानुकृतान्वयव्यतिरेकानपेक्षिष्यते । करिष्यते क्रमवत्सहकारिवशात् क्रमेण कार्याणि । समर्थस्याप्यपेक्षणीयासन्निधेः कार्यक्षेपः उपपत्स्यते । न चैतावता सहकारिसमवधानादेवोत्पत्तिमतः कार्यसिद्धेः कृतमेषा रूपेणेति वाच्यम् । तत्सन्निधादेव सतः उत्पत्तिदर्शनात् । रूपे सत्यप्यनुत्पादात् । समवधाने हेतुष्वनुत्पादादेव कार्यस्य समवधानमेव हेतुर्न पुनः रूपमपीति चेत् तत्किमिदानीं रासभादितुल्यता बीजरूपस्य । ओमिति चेत् । अथ कस्मादन्यदेभ्यो दीनन्तरेणैव बीजरूपं विना ऽपि नाङ्कुरो जायते । तत्समवधानस्य तत्कारणत्वादिति चेत् । तत्समवधाने कारणे कथं तद्विशेषि रूपमपि न कार-

णम् । न चावर्जनीयतया सन्निवेशः । समवधानमात्रस्य बीजरूपमन्तरेणापि तत्र तत्र भावात् । विशेषस्तु समवधाने रूपमेव बीजादीनाम् । तस्माद्यथोभयाधीननिरूपणा व्याप्तिरयोगव्यवच्छेदेन व्यापके निरूप्यते व्याप्ये भाव एव व्यापकस्य नाभाव इति व्याप्ये पुनरन्ययोगव्यवच्छेदेन व्यापक एव भावो व्याप्यस्य नान्यत्रेति एवं कार्यकारणभावो ऽप्युभयाधीननिरूपणो ऽपि कारणे ऽयोगव्यवच्छेदेन निरूप्यते । कार्योत्पादस्य पुरस्ताद्भाव एव कारणस्य नाभाव इति । कार्ये पुनरयोगव्यवच्छेदेन । कारणएव सति भावो नान्यस्मिन्निति अनुभयानुसारान्निश्चीयते । तथैव हि लौकिकपरीक्षकाणां प्रतिपत्तेः । न च कारणतैव सत्ता किं तु स्वरूपं नीलादेरनुभूतावसितं तद्धि तेनैव रूपेण स्वाभाजव्यवच्छिन्नं तासु तास्वर्थक्रियासूपयुज्यते न पुनरर्थक्रियाकारितेव स्वरूपं मा भूदनेकार्थक्रियाकारिणो ऽपर्यायेण रूपभेदः । तस्माद्यद्यस्ति सर्ववस्तुनः स्वरूपेणैव सम्भावः तद्धानस्यालम्बनप्रत्ययो भविष्यति । अथ तु नास्ति तथा ऽपि तद्रूपो ऽनित्यो ऽपायतो ऽकिंचित्करो ऽपि पश्चात्कुतश्चिन्निमित्तादासाद्य सहकारिप्रत्ययान् तासु तास्वर्थक्रियासूपयोक्ष्यते । तत्सिद्धमेतत् क्षणिकस्यापि क्रमाक्रमाभ्यां मयायोगमर्थक्रियोपपत्तेर्व्यापकानुपलब्धेरसिद्धेः सन्दिग्धव्यतिरेकमनैकान्तिकं सत्त्वं शाक्यानां क्षणिकत्वे साध्ये भावानाम् । अस्माकं त्वन्यथासिद्धमसिद्धप्रभेद एवेति । न च जनकत्वाजनकत्वलक्षणविरुद्धधर्मसंसर्गो नानात्वे हेतुर्भवितुमर्हति । जनकत्वं नाम न वस्तुस्वभावो ऽपि तु तद्धर्मः । धर्मश्च धर्मिणो वस्तुतो भिद्यते । न चान्यस्य भेदो ऽन्यस्य भेदायालमतिप्रसङ्गात् । अन्यत्वाविशेषे कथं तस्यैव धर्म इति चेत् । अत्र वस्तुस्वभावैरेवोत्तरं वाच्यम् । यथा ऽन्यत्वाविशेषे ऽपि कार्ये धूमो हुतभुज एव न बीजस्येत्युक्तम् । न च कृतकत्वमपि क्षणिकत्वे हेतुरन्यथासिद्धेः । सहेतुके विनाशे तदुपपत्तेश्च । न चोत्पत्तिविनाशयोस्तादात्म्यं भावस्यात्यन्ताभावप्रसङ्गादित्युक्तम् । तदिदमुक्तं वार्त्तिककृता ते ऽप्यसिद्धा अन्यथासिद्धा विरुद्धा वा भवन्तीत्यहेतव इति । अन्त्यक्षणविशेषदर्शनं पूर्वक्षणधर्मत्वेनासिद्धत्वादसिद्धम् । सत्त्वकृतकत्वे अन्यथासिद्धे विरुद्धत्वं च सर्वस्यैव हेतोः क्षणिकत्वे साध्ये । तथा हि सत्त्वं कृतकत्वं वा येनोभयव्यावृत्ततया ऽननुगतं देशतः कालतो वा न साधनं तस्यावश्याविनाभावप्रधान-

तथा सिद्धभावाभावात् । अन्वयमुखेन व्यतिरेकमुखेन वा ऽविनाभावग्रह
स्यैकस्मिन् पक्षे ऽसम्भवात् । तस्माद्देशकालानुगतं सत्त्वं कृतकत्वमन्यद्वा
हेतूकर्तव्यम् । तच्च त्रिविरूपं वा भवत्यन्यथानुपपत्तिरूपं वा नानाकालमेक
मक्षणिकं क्षणिकत्वेन साध्येन विरुध्यत इत्युक्तं विरुद्धा चेति । अन्ते
निश्चयदर्शनादित्यस्य तु विरुद्धत्वमनन्तरं वक्ष्यति । उपेत्य विशेषणत्वे
सिद्धत्वमनैकान्तिकत्वमाह उपेत्य चेत । हेतोरसिद्धत्वविरुद्धत्वे दर्शयि
तुमाह । अन्ते विशेषेति । दर्शनादर्शनलक्षणस्य हेतोरन्यथासिद्धतेत्याह ।
यो ऽप्ययं हेतुरिति । भावाभावयोस्तत्त्वस्यादिति । प्रयोगभावाभावयो
रिक्तबुद्धेर्भावत्वादित्यर्थः । प्रदीपस्य देशान्तरे उत्पाद इत्येतदपि न
बुध्यामहे इति । क्षणिकस्य प्रदीपस्य यदि सन्तानमात्रमभवत्य निन्तु
देशान्तरे कार्योत्पादकत्व तत सर्वत्र प्रदीपक्षणा देशान्तरे प्रदीपमुत्पा-
दयेयुः । न के चन पवनोदरणेनेति । अधोपवर्षण्यप्रत्ययपवनोदरा
दन्यत्रापि कार्यमुत्पादयन्ति । ननूपवर्षयमाणा प्रदीपे किं विद्युपकारमाधत्ते
न वा न तावदाधत्ते क्षणस्याभेद्यत्वेनोपकृतानुपकृतत्वासम्भवात् । अनाधाने
च सहकारिभावाभावात् । अनुपकारकस्य सहकारित्वे ऽतिप्रसङ्गादिति भव
तामेव गिरः । न च क्षिणिकप्रदीपपवनपवनमेवोपकारः सहकारिणा तस्य पूर्व
स्य देशोपादानाद्वुपपन्ने सहकार्यनपेक्षणात् । न खलु तस्यैव सत्कारणस्या
प्युपकारका सहकारिणो भवितुमर्हन्ति । एव पूर्वेषामपि प्रदीपक्षणानां पूर्व
पूर्वप्रदीपमात्रसामर्थ्यभुवा [illegible] सहकारिणा किं चिदाधीयत इति सर्वेषु चैक-
स्मिन् प्रधाने कार्ये कृत देशान्तरे वा । यदि पुनरनुपकारिणो ऽपि कार्यानु-
विहितभावाभावतया क्षणिकेन प्रदीपेन कार्यं तथा प्रत्यपेक्ष्यन्ते तद्वत् पक्षे
ऽपि तुल्यमिति सर्वेषु । निर्वाक्षितं चैतदस्माभिर्ब्रह्मतत्त्वसमीक्षान्यायकणि
काभ्यामित्युपरम्यते । न क्रियाकाले पततो लोष्टादेरिति । लोष्टप्रक्षे-
पादेस्तुल्यगुरुत्वयोर्द्रव्ययोरेकस्य गुरुत्वमप्रत्यक्षेण कारणम् । तथा हि
योधस्योपरिस्थेन पुरुषेण भूमौ पतन्तो पाषाणमुद्दिश्य यदा ऽध श्येन क्षिप्यते
तदा श्येनस्य पाषाणतिरोभावजनित प्रयत्नो गुरुत्वं च लेपरस्यागुरुत्वात्
हेतवः । पाषाणस्य तु गुरुत्वमेवावायुपतनहेतु अप्रयतमानस्य गुरुत्व
मात्र पतनहेतुरिति । चोदूभ्यमते ऽपि न दोष इत्यत आह । एकश्च

**संस्कार** इति । अयुगपत्काला: प्रत्यया एकविषया इत्युच्यमाने घटपटादि-
प्रत्यया: प्रदीपादिप्रत्ययाश्च क्रमवन्त एकविषया: प्रसज्येरन्नित्यत आह ।
**विप्रतिपन्ना** इति । समानशब्दवाच्यत्वादित्यनेकान्त: भवन्ति हि
समानशब्दवाच्या: प्रत्यया: सर्वो ऽयं इति । न च समानविषया:
देवदत्तादीनां तद्विज्ञानानां भेदादत आह **तत्प्रत्ययसामानाधिकरण्ये
सतीति** । तथा ऽपि प्रदीपप्रत्ययैरेवानेकान्त इत्यत आह । **अप्रत्यु-
त्थायीति** । प्रत्युत्थातुं भ्रमितुं शीलमस्येति प्रत्युत्थायि भ्रान्तमिति
यावत् । अभ्रान्तत्वं चास्य क्षणिकत्वसाधननिराकरणेन द्रष्टव्यम् । अप्रत्यु-
त्थायितत्प्रत्ययसामानाधिकरण्येनैव सिद्धे समानशब्दवाच्यत्वं प्रपञ्च: ।
भाष्ये **गुणान्तरप्रादुर्भाव** इति । द्रव्यं तावत्सदेव गुणो ऽपि सन् केवल-
मनुद्भूत आसीत् । एकदेवोद्भूतो गुण: तत्र य उद्भूतस्तिरोभवति पूर्वगुणस्य
निवृत्तो तिरोभूतो गुणान्तरमुद्भवतो तद्भवतीत्यर्थ: । **अत्र तु प्रतिषेध**
इति । क्षीरावयवा एव हि क्षीरविनाशे सत्युत्पन्नपाकजा विलक्षणं द्रव्यमु-
त्पादयन्ति । यदि तु सर्वं कार्यं सदेव कारणव्यापारात्प्रागपि व्यर्थ: कारण-
व्यापार: अभिव्यक्तेरपि कार्याया: सत्त्वात् । असत्त्वे वा यथा सैव न सती
क्रियते एवं कार्यान्तराण्यपीति । विपश्चितं चैतदस्माभिर्न्यायकणिकायाम् ।
**अभ्यनुज्ञाय च निष्कारणमिति** । विनाशोत्पादत्वात्समानधर्मात्संशय:
दधिक्षीरयोर्विनाशोत्पादौ सकारणौ दृष्टौ कुम्भस्य चोत्पादविनाशौ सकार-
णौ तदिह स्फटिके विनाशोत्पादौ सकारणौ निष्कारणौ वेति सन्देह: ।
तद्यदि सकारणावेवेति प्रमाणतो निश्चीयते ततो विनाशकारणानुपलब्धे:
स्फटिकस्य कुम्भवद्विनाशो नास्तीति निश्चीयते । तदिदमुक्तं भाष्यकारेण ।
**न पुनर्यथा विनाशकारणाभावादिति** । **निरधिष्ठानं चेति** । धर्मि-
णमाश्रित्य तत्समानधर्मा दृष्टान्तो भवति स्फटिकोत्पादविनाशौ च धर्मिणौ
तत्समानधर्मतया क्षीरदधिविनाशोत्पादयोर्दृष्टान्तत्वेन भवितव्यम् । न
पुन: स्फटिकोत्पादविनाशौ धर्मिणौ गृह्येते । तस्मान्न तत्समानधर्मतया
दृष्टान्तो भवत इति । यदि तु द्रव्यसमवायादित्युच्येत सत्तादिसामा-
न्यविशेषवत्त्वे रूपादिभिरनैकान्त: स्यादित्यत आह । **व्यापकेनेति** । तथा
ऽप्यात्मत्वसामान्येनानैकान्तो ऽत आह । **गुणत्वे सतीति** । तथा ऽप्या-

त्वपरिमाणेनानैकान्तो ऽत आह । प्रत्यक्षतयेति । अस्मदादीनामिति शेषः । गुणत्वादिविशेषणयोगात्प्रागव्यापकग्रहणस्योपयोगः । अस्मदादिप्रत्यक्षत्वादित्युच्यमाने सामान्यसमवायाभ्यामनैकान्तः स्यादत आह जातिमत्त्वे सतीति । आश्रितत्वादित्यत्रापि जातिमत्त्वे सति प्रत्यक्षत्वे चेत्यनुषञ्जनीयम् । अनित्या बुद्धिः प्रत्यक्षत्वादित्युच्यमाने मनसा व्यभिचारो ऽत आह । अयोगीति । तथा ऽप्यात्मना व्यभिचारो ऽत उक्तं करणाभावे सतीति । ज्ञानादिर्बुद्धौ बुद्धिः करणं भवति । बाह्यस्य प्रत्यये करणम् । अत्र च जातिमत्त्वे सतीत्यनुषञ्जनीयं तेन न गन्धत्वादिभिरनैकान्तः ।

चिन्तान्तरमवतारयति । इदं तु चिन्त्यत इति । नन्वात्मपरीक्षायामात्मगुणत्वं बुद्धेर्व्यवस्थापितं तत्कस्मात्पुनः परीक्ष्यत इत्यत आह भाष्यकारः । प्रसिद्धो ऽपीति । यद्यप्ययमर्थः परीक्षितस्तथा ऽप्यवान्तरविशेषपरिज्ञानार्थं पुनः परीक्ष्यत इत्यर्थः । चोदयति वार्त्तिककारः । न गुणेति । परिहरति । अनित्यत्वे सतीति । विमृश्य सिद्धान्तीयपक्षं गृह्णाति । सन्निकर्षोत्पत्तेरिति । चोदयति अग्राह्यमित्येतन्नेति । परिहरति स्मृतावपीति । दूषयति । अस्तु तर्हीति । परिहरति युगपदिति । यत्करणत्वेनानुमितं* तत्करणत्वमपोह्य न कर्तृ भवितुमर्हतीत्यर्थः । युगपज्ज्ञेयानुपलब्ध्या यत्समधिगतमिति भाष्यमाक्षिपति । विशेषणोपादानादिति । समाधत्ते न सर्वस्येति । पुनराक्षिपति । एवमपीति । विशिष्टस्य करणस्य ज्ञानगुणत्वनिषेधे करणान्तरस्य ज्ञानगुणत्वमापादयति न त्वात्मा करणमित्यर्थः । समाधत्ते अन्यस्योपपत्तेरिति । एतदेव विवृणोति । अनवस्थितत्वादिति । प्रमातैव कदा चित्प्रमाणं कदा चित्प्रमेयमित्यर्थः । पुरुषान्तरेण पुरुषान्तरं परिच्छिनत्तीति । यादृशो ऽयं पुरुषस्तादृशो ऽयमपीति पुरुषान्तरेण प्रसिद्धेन पुरुषान्तरपरिच्छेद इति । पृच्छति यदि न करणस्य कस्य तर्हीति । उत्तरं ज्ञस्य वशित्वात् । कर्तुः स्वातन्त्र्यादित्यर्थः । कर्तृकरणादिसमवधाने हि चैतन्यं कर्तर्येव दृष्टं न करणादौ । यथा मृद्दण्डचक्रसलिलसूत्रकुलालसमवधाने कर्तुरेव कुलालस्य न तु मृदादीनामिति । वशी ज्ञाता वश्यं कर-

* करणत्वेनानुमितमिति क पु पा ।

थमिति भाष्यं तदनुपपन्नं ज्ञातुरपि क्वचिद्व्यस्त्यदर्शनात् । यथा देवदत्तं कटं कारयति यज्ञदत्त इत्यत आह । न चायं ज्ञातरीति । यदि तु कश्चिज्ज्ञानगुणं मन इत्युक्तेः प्रति भाष्यं ज्ञानगुणत्वे चेति । घ्राणादिसाधनस्येति भाष्यं व्याचष्टे । यथा ज्ञातुरिति । तथा च मन्तुर्मतिसाधनं यन्मनः करणम् । अथ तदपि कस्माच्चेतनं न भवतीत्यत आह । उभयोरिति । विभु चान्तःकरणं ज्ञानमन्तःकरणान्तररहितमिति शेषः । अथ मनो ऽन्तःकरणमपर्यवस्थापयति । तदात्मगुणत्वे ऽपीति । परिहरति न प्रसङ्ग इति । विकरणधर्मेति भाष्यं विशिष्टं करणं धर्मो यस्य स विकरणधर्मा अस्मदादिकरणविलक्षणकरणः येन व्यवहितविप्रकृष्टसूक्ष्मादिवेदी भवतीत्यर्थः । यदि पुनरित्यादि भाष्यं पूरयित्वा व्याचष्टे । यदि पुनरिति । नोत्पत्तीति । नात्र प्रमाणमपदिश्यते । प्रत्युत बाधकं प्रमाणमस्तीत्यर्थः । व्याख्यानान्तरमाह । अयुगपदुत्पत्तौ चेति । व्याख्यानान्तरमाह । विदेहे ति । शरीरवृत्तित्वे हि मनसः सर्वं ज्ञानं शरीरायतनत्वात्मनो भवेत् । यदा तु मन एव नास्ति तदेन्द्रियार्थसन्निकर्षस्यात्मनश्च शरीराद्बहिरपि भावाद्विदेहस्याप्युत्पादप्रसङ्ग इति । अन्तःकरणप्रत्याख्याने चेति । यद्यपि सर्वाण्यपि ज्ञानानि न युगपदुपजायन्ते तथा ऽपि स्मृतीनामवश्यं युगपदुत्पादप्रसङ्ग इति पूर्वस्माद्स्य विशेषः । व्याख्यानान्तरमाह । यदा चेन्द्रियमात्मा चार्थेन युगपत्संबद्धा इति । अथ नान्द्रियमनःसन्निकर्षे व्यभिचारिणां कारणान्तराणां विनिगमनाहेतोरभावादिति भावः ।

विना-तु:-(सू. २३)॥ अत्र पूर्वपक्षसूत्रे चकारः पूर्वपूर्वपक्षसूत्रापेक्षयेत्याह । तदात्मगुणत्वइति । अतः परस्य निगद एव व्याख्यानम् । यदनन्तरमपवृज्यते पुरुषः सा ऽन्त्या बुद्धिः । स्थितिहेत्वभावाद्विनश्यतीति । स्थितिहेतू धर्माधर्मौ तयोरभावादिति । अथ तयोरभावः कस्मादित्यत आह । कालात् । अन्त्यसुखदुःखोपभोगकालं प्राप्येत्यर्थः । अथ वा स्वजनितात्संस्कारादेवान्त्याया बुद्धेर्विनाश इत्याह । संस्काराद्वा । संस्कारस्य तु स्थितिहेत्वदृष्टाभावाद्विनाशो भवतीति भावः । पृच्छति । कथं कालात् । उत्तरं प्रायत्तस्य जन्मन इति । चरमस्य देहस्येत्यर्थः । दूषयति यदि कारणस्येति .अत्र तावदेकः परिहार इति । एकः प्रधानः परिहारः परि-

स्थानान्तरं त्वेकदेशिमतेनाप्रधानमित्यर्थः । अपि च न स्मृतयो युगपदुत्पद्यन्ते परिच्छेदत्वाद् गन्धरसरूपस्पर्शशब्दज्ञानवदित्याह **परिच्छेदत्वाच्चेति** । एकदेशिपरिहारमाह **अपरे त्विति** । दूषयति **एतत्तु न सम्यगिति** । **न हि मनः क चिदाश्रितमिति** । न क्व चित्समवेत संयोगमात्रं त्वस्तीत्यर्थः । **नापि वृत्तिः स्वकार्यसामर्थ्यमिति** । शरीरस्थं मनः स्वकार्यं करोति नान्यत्रेति शरीराश्रितं मन इत्युच्यत इत्येतदपि नास्ति । इन्द्रियार्थसन्निकर्षस्य मनःकार्यस्य शरीराद्बहिर्भावादित्यर्थः । तमिममाक्षेपं समाधत्ते । **अत्र ब्रूम इति** । येनात्मना यच्छरीरं धर्मोपार्जितं तत्संयुक्तस्य मनसो ज्ञेयप्रकाशनादिलक्षणकार्यकारित्वं न तदसंयुक्तस्येति शरीराश्रितस्य मनसो नान्यदित्यर्थः । चोदम् ।

**साध्य-तुः (सू. २७)** ॥ परिहारः ।

**स्मर-थः (सू. २८)** ॥ पुनश्चोद्यम् ।

**न त-तः (सू. २९)** ॥ परिहारः ।

**न स्मर-त् (सू. ३०)** ॥ आद्य चिन्ताप्रबन्धः स्मृतिप्रबन्धः कस्य चिदेवार्थस्य लिङ्गभूतस्य लिङ्गभूतस्याधारणास्येति यावत् । चिन्तनं स्मरणम् । आराधितं लिङ्गं लिङ्गवतः स्मृतिहेतुर्भवतीति । इत्यस्य शरीरसंयोगापेक्षमेव मनः स्मृतिहेतुर्नैत्याशयेनाह । **शरीरसंयोगानपेक्ष इति** । शरीराद्बहिर्मन इत्येकदेशिमतमुपन्यस्यति ।

**आत्म-पः (सू. ३१)** ॥ दूषयति ।

**व्यास-नम् (सू. ३२)** ॥ **प्रातिभवदिति** । स्मृत्युत्पादस्य पुरस्तात्प्रणिधानादीनां स्मृतिकारणानामपेक्षणादात्ममनःसंयोगात्संस्कारापेक्षात् स्मृतीनां युगपदुत्पादप्रसङ्गः प्रातिभवदित्याक्षेपः । समाधानमाह । **सतः स्मृतिहेतोरिति** । अदृश्यमानमपि कारणं तत्क्रमस्य कार्योत्पादक्रमेणानुमीयत इति प्रातिभमपि पुरुषकर्मविशेषापेक्षादात्ममनःसन्निकर्षादुपजायमानं नाकारणं न चाक्रमवदिति प्रधानभूतामुपपत्तिमवतारयितुं पृच्छति भाष्यकारः । **प्रातिभमिदानीमिति** । अपेक्षामोचितं दत्वा शङ्कते । हेत्वभावादयुक्तमिति चेत् । उत्तरमाह । **न करणस्येति** । यद्यपि क्व चिद्

त्यपि । पुरुषचैतन्यमेकमेव कूटस्थनित्यं सततदर्याकारपरिणामबुद्धिसत्त्व-प्रतिबिम्बविभ्रमवशाद्भिन्नमिवोपजनापायधर्मकं विज्ञानमिति च वृत्तिरिति चा ख्यायते । इच्छाद्वेषादयस्तु वस्तुत उपजनापायधर्माणो अन्तःकरणस्येति दर्शनं तत्प्रतिषिध्यते ।

ज्ञस्ये-त्योः ( सू. ३५ ) ॥ प्रतिवृत्त्यामुलीति प्रत्यगात्मा तस्मिन् । एतदुक्तं भवति । ज्ञानसामानाधिकरण्येनोपलब्धेरन्यदीयानामिच्छादीनामन्य-स्यात्मत्वस्वीकरणाचन्करणे वा मेचकतानामपि चैत्रेण सहणप्रसङ्गाद् अन्तःक-रणवृत्तीना गुणान्तराणां नित्याप्रत्यक्षत्वाद्वात्माश्रिता एवेच्छादयो नान्तःक-रणाश्रया इति । अथान्तरे लब्धावकाशो भूतचैतनिकः प्रत्यवतिष्ठते ।

तल्लि-घः ( सू. ३६ ) ॥ यदि यस्यारम्भनिवृत्ती तस्येच्छाद्वेषौ यस्य चेतो तस्य चैतन्य इत्यायातमनेन क्रमेण भूतचैतन्यमस्मदभिमतं भूतेष्वेव कायाकारपरिणतेषु आरम्भनिवृत्तिदर्शनादित्यर्थः । परश्वादिष्वित्यस्य तात्प-र्यमाह वार्तिककारः । परश्वादिष्विति । भूतचैतनिकस्तल्लिङ्गत्वादिति हेतुं स्वपक्षसिद्ध्यर्थमन्यथा व्याचष्टे । अथं तर्हीति । शरीरेष्ववयवव्यूहभेददर्श-नाच्च लोष्टादिषु शरीरारम्भकानामणूनां प्रवृत्तिभेदो ऽनुमीयते ततश्चेच्छाद्वेषौ ताभ्यां चैतन्यमिति यत्र जङ्गमं विशरारु अस्थिरं कृमिप्रभृतीनां शरीरं स्थावरं स्थिरं शरीरं देवमनुष्यादीनां तद्धि चिरतरं वा ध्रियते । तदेतद् दूषयति । कुम्भादिमृदवयवानामिति । कुम्भाद्यारम्भिकाणां मृदां व्यूहभेदादारम्भदर्शनाददर्शनाच्च सिकतानामारम्भनिवृत्त्योरनैकान्तत्वम् । तदेवं भूतचैतन्यसाधनं दूषयित्वा तेभ्यो ऽन्यस्य चैतन्ये साधनमाह ।

नियमानियमौ तु तद्विशेषकौ ( सू. ३८ ) ॥ तयोरिच्छाद्वेषयोर्निय-मानियमौ विशेषकौ । अयमेव चेच्छाद्वेषयोर्विशेषो यद्भूताश्रयत्वमनयोर्व्यावर्त्य तदितराश्रयत्वव्यवस्थितिः तत्रानियमं तावदाह । ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्पन्दास्पन्दौ न स्वाश्रये नेच्छाद्वेषयोराश्रये किन्तर्हि प्रयो-ज्ये परश्वादावाश्रये दृष्टे तत्र प्रयुज्यमानेष्वेव भूतेषु प्रवृत्तिनिवृत्ती स्यातां न सर्वेषु प्रयोजकेष्वपि शरीरादिष्विति । सेयमनियमोपपत्तिः सार्वत्रिकत्वमनियम इति । एतदुक्तं भवति न शरीरमिच्छाप्रयत्नद्वेषाधारः इच्छादिजनितस्पन्दाधारत्वात्

परस्थादिवदिति । तदेवमनियम भेदक व्याख्याय नियमं व्याचष्टे । यस्य तु चार्वाकस्य दर्शने ज्ञानात्मनामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये शरीरादौ तस्य चार्वाकस्य यथाभूताना गुरुत्वादिगुणान्तरनिमित्ता प्रवृत्तिः पतनादिलक्षणा तस्यैव गुरुत्वादेर्गुणान्तरस्य प्रतिबन्ध आधारद्रव्यसंयोगेन । तस्मान्निवृत्तिरपतनादिका सा भूतमात्रे भवति नियमेन व्याप्ता न तु शरीरापगृहीतेषु भूतेषु यत्र भूतमात्रे ज्ञानेच्छाद्वेषनमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्यातास् । एतदुक्त भवति ये ये पृथिव्यादिधर्मास्ते ते यावत्पृथिव्यादिभाविनो दृष्टा, यथा गुरुत्वादय ज्ञानेच्छादयो ऽपि चेत्पृथिव्यादिधर्मास्तेऽप्येवमेव यावत्पृथिव्यादिभाविभिर्भवितव्य न तु घटादौ दृश्यन्ते तस्मान्न पृथिव्यादिधर्मा ज्ञानादय इति । अत्र च भाष्यकृता चार्वाकरुत्यप्रसङ्गविषयता नियमशब्द. प्रयुक्त अचार्वाकत्वविषयतया त्वनियमशब्द. । वार्तिककृता प्रयोज्य प्रयोज्यप्रधारव विवक्षित्या प्रादेशिके नियमशब्दः प्रयुक्त । चार्वाके भूतनियमकृतावधारणाभावादनियमशब्द इति विवक्षाभेदाश्रयादविरोध इति । यस्तु नियम मद्यशक्त्या व्यभिचारयेद् यथा किल किण्वादय. परिणामविशेषवन्तो मदिराभावमापन्ना मदयन्ति एव कायाकारेण परिणतानि पृथिव्यादीनि चेतयन्ते नान्यथा तेन घटादिष्वप्रसङ्ग इति त प्रत्याह एकशरीरे चेति । यथा मदिरावयवेषु प्रत्येकमेव मदशक्तिरस्ति न पुन. समुदायमात्रसमवायिनी एव शरीरावयवेष्वपि प्रत्येकमेव चैतन्येन भवितव्य न च चैवात्मा कायसमुदायावयवमेव चैतन्य नावयवाश्रयमिति शक्यमास्थातु छिन्नकरावयवच्छेदे ऽपि चैतन्योपलम्भात् । तस्मादवयवाना प्रत्येक चैतन्ये शरीरकल्पितबहुचेतना स्यु. । भवन्तु कि नो बाध्यत इति चेत् । न विरुद्धाभिप्रायत्वेन स्वातन्त्र्यात् न क्वचिदपि कार्ये जायेत । न च बहूनामेकाभिप्रायनियमो दृष्ट. काकतालीयन्यायेन स्यादेकाभिप्रायस्य न पुनरस्य नियमो दृष्टचर इति प्रतिष्टत्वाद् दूषणमेतदुपेत्य प्रत्ययव्यवस्था न भवेदिति दूषणमुक्तम् । एकस्मिन् शरीरे प्रत्ययानां परस्परप्रतिसधान यथा नो न शरीरान्तरइति व्यवस्था । नैव यदेकस्मिन् शरीरे एक एव चेतनो न बहवो शरीरान्तरे तथो मयैवान्यथेत्यर्थः । क्वचित्पाठ प्रत्यक्षव्यवस्थानानुमान स्यादिति स सुगम एव । नियमा-

**नियमादिति** यदुक्तं तत्रानुमानमेव सूचयति भाष्यकारः । **इष्टानिष्टगु-
णनिमित्तः प्रवृत्तिविशेष** इति । हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः
प्रवृत्तिविशेषः सो ऽत्र प्रयोगः । चसस्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरि-
क्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात् । परशरादिगतप्रवृत्तिविशेषवदिति न
केवल शरीरस्य प्रवृत्तिविशेषो ऽन्यगुणनिमित्तः भूतानामपि तदारम्भकाणां
प्रवृत्तिविशेषो ऽन्यगुणनिमित्त एवेत्याह । **तदवयवव्यूहलिङ्ग** इति ।
नेन्द्रियार्थयोर्विनाशे ऽपि ज्ञानावस्थानादिति च समान इति । यथा हीन्द्रि-
यार्थयोर्विनाशे ऽपि ज्ञानावस्थानान्नेन्द्रियार्थयोर्गुणो ज्ञानमेवं बाल्यकौमारयौ-
वनादिष्वपि शरीरविनाशे ऽपि ज्ञानावस्थानान्न शरीरगुणो ज्ञानमित्यर्थः ।
अपि च यस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योरित्यत्रारम्भनिवृत्तिशब्देन न
प्रवृत्तिनिमित्तमात्रमभिमतमस्माकमपि तु हिताहितप्राप्तिपरिहारार्थस्पन्दवि-
शेषः । तमिम प्रवृत्तिविशेषमजानाना त्वया प्रवृत्तिसामान्येन प्रत्यवस्थानमि-
त्यप्रतिपत्तिस्ते निग्रहस्थानमित्याह भाष्यकारः । **क्रियामात्रमिति** ।
तद्वार्त्तिककारो व्याचष्टे । **अन्यथा ऽभिधानाच्चायुक्तमिति** शेषः । स्यादे-
तत् । यथोक्तहेत्वर्थादित्यादयो वक्ष्यमाणसूत्रगता हेतवो भूतेन्द्रियचै-
तन्यप्रतिषेधे ऽपि समाना इति तस्मान्मनोमात्रे चैतन्यं प्रतिषिध्यते न
मनस इत्यत आह । **भूतेन्द्रियमनसामिति** ॥

**यथो—क्तः (सू. ४०)** ॥ यथोक्तहेतुत्वादिति व्याचष्टे । इच्छाद्वेषप्र-
यत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमित्यत आत्मलक्षणात्प्रभृति तल्लक्षणपरीक्षा-
पर्यवसानं यावदुक्तं तत्सर्वं गृह्यते । अत्र च हेतुशब्देनेच्छादिरूपं सुगृहीत भाव-
प्रत्ययेन हेतुत्वविषया परीक्षोपलक्षिता । वार्त्तिके **यथोक्तहेतुत्वादिति** ।
दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनां हेतूनामुक्तहेतुत्वं तस्मादिति
योजना । तदनेन भाष्यगतप्रभृतिपदार्थो विवृतः । नन्वेते यथोक्ता हेतवः
परैः प्रतिषिद्धा इत्यत आह । **अप्रतिषेधात्** । बाहुल्येन प्रतिषिद्धा न
वस्तुत इत्यर्थः । धारणप्रेरणव्यूहनक्रियासु यथायोगं शरीरेन्द्रियाणि परत-
न्त्राणि भौतिकत्वाद् घटादिवदिति । मनश्च परतन्त्रं करणत्वाद्वास्यादि-
वदिति कस्य चित्प्रयत्नवशात्प्रवर्तन्ते चैतन्ये पुनः स्वतन्त्राणि स्युः । तथा
च पारतन्त्र्यप्रसाधकानुमानविरोध इत्यर्थः । यस्तु कश्चिदभ्युपेतवेदप्रामाण्यः

पुरुषमचेतनं फलभागिनमभ्युपगम्य शरीरादीनां चैतन्यं रोचयते तं प्रति तेषामचैतन्ये हेतुमाह । **अकृताभ्यागमाच्च** । उपदेशफलं हि कर्तरि कर्त्रपेक्षितोपायताभिधानलक्षणत्वादुपदेशस्य । यथा ऽऽह स्माह भगवान् जैमिनिः । शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वादिति । उपपादितं चैतदस्माभिर्विधिविधायक इत्यत्रान्तरे । स्वर्गकामो यजेतेति च कर्त्रभिप्रायफलावगमाद् अत्रैवात्मनेपदस्मरणात् । य एव कर्मणः कर्ता स एव तत्फलस्य भोक्तेति सर्वैरास्तिकपथानुसारिभिरभ्युपेयम् । शरीरादीनां चैतन्ये चेतनस्य स्वातन्त्र्यात्तएव कर्मणः कर्तारः न तेषां भस्मसाद्भूतानामामुष्मिकफलशालितासम्भव इत्यात्मनो ऽचेतनस्य तद्भागिता ऽभ्युपगन्तव्या तथा च तैः शरीरादिभिः कर्म कृतं पुरुषेण भुज्यत इति शास्त्रार्थविप्रकृताभ्यागमकृतनाशदोषप्रसङ्गः । अचैतन्ये तु शरीरादीनां देहाद्यतिरिक्तस्य च पुरुषस्य चैतन्ये पुरुषः स्वातन्त्र्यात्कर्ता तत्प्रयोज्यतया शरीरादीनि तत्साधनानीति तत्साधनस्य स्वकृतकर्मफलोपभोग इति न शास्त्रव्याकोपः नापि प्रेक्षावत्प्रवृत्तिविरोध इति भावः । **अथायं सिद्धोपसंग्रहः** उपसंहार इत्यर्थः । उपपत्तिपदार्थव्याख्यानमप्रतिषेधादिति । भाष्यं **कायस्य भेदाद्भिन्नत्वादिति** । **अप्रतिसंहितमिति** । पूर्वैरुद्दिष्टकृतानामपरैः परिसमापना दृष्टा मया ऽऽरब्धं मयैव परिसमापनीयमिति प्रतिसन्धाने अप्रतिसन्धाने तु न परिसमापयेयुः । परिसमापने वा चैत्रारब्धमपि मैत्रः परिसमापयेद् यतः स्वयमारब्धात् परारब्धमव्यावृत्तमविशिष्टं स्वस्यापि परत्वादपरिनिष्ठं च कर्मजातं स्यात् । तथा हि वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ एवं राजसूये राजैव न ब्राह्मणवैश्यौ । एवं सोमसाधनके यागे ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ शूद्रश्चानधिकृत एवेति परिनिष्ठा सा बुद्धिसंततिमात्रे न स्यात् कुतः तल्लक्षणानां सर्वेषामेव त्रैलोक्यवैलक्षण्येन भेदात् । अन्यापोहसामान्यस्य च निवर्तितत्वादित्यर्थः । अप्रतिसंहितत्वे हेतुमाह । **स्मरणाभावादिति** । त्रिकालव्यापिनो ज्ञानशक्तिरेव च स्वाभाव्यं तच्चाकाशादिभ्यो व्यावृत्तं त्रिकालव्यापि स्वरूपमेवात्मनः स्मृतिहेतूनामयौगपद्यादित्येतत्सिंहावलोकितन्यायेन पृच्छत्यनन्तरसूत्रमवतारयितुं **स्मृतिहेतूनामिति** । तात्पर्याभिधानपुरःसरं सूत्रमवतारयति । **स्मृतिकारणानामिति** ॥

**प्रणि-भ्यः (सू ४३)॥ भाष्ये सुस्मूर्षया मनसो धारणमिति।** तेषु तेषु विषयेषु प्रवृत्तस्य मनसस्ततो निवारणमित्यर्थः । सुस्मूर्षितलिङ्गानुचिन्तनं वा साक्षाद्वा तत्र धारणलिङ्गं वा प्रयत्न इत्यर्थः । **निबन्धः खल्विति ।** यथा अत्रैव प्रमाणादयोऽर्था एकग्रन्थोपात्ता अन्योन्यस्मृतिहेतवः । आनुपूर्व्या वा । यथा प्रमाणपदार्थं स्मृत्वा प्रमेयं स्मरति । इतरथा वा । यथा निग्रहस्थानानां प्रमाणानां स्मृत्वा स्मरति । निबन्धस्य व्याख्यानान्तरमाह । **धारणेति ।** धारणाशास्त्रे जैगीषव्यादिप्रोक्ते तत्कृतो ध्यातव्येषु वस्तुषु नाडीचक्रहृत्पुण्डरीककण्ठकूपनासाग्रतालुललाटब्रह्मरन्ध्रादिषु स्मर्तव्यानां वीतरूपवस्थानास्त्राभरणभूतानां च देवतानामुपनिक्षेपः समारोपः तथा च तत्र देवता समारोपितास्तास्तदवयवग्रहणात् स्मर्यन्त इत्यर्थः । अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते । तेन आदरप्रत्ययोऽपि संगृहीतो भवति । तयोरप्यभ्यासवत्संस्काराधानद्वारेणैव स्मृतिहेतुत्वात् । अपि च स्मृतिकारणानां नाऽसमावेशो विवक्षितः तेन संस्कारेण स्मृतिहेतूनां सर्वेषामेव प्रणिधानादीनां समावेश एव । निबन्धादिभिस्तु यथायोगं समावेशासमावेशावूहनीयाविति । अवगत उपलब्धं लिङ्गं पुनरिति संयोगिन उदाहरणं धूमोऽग्नेरिति । समवायिन उदाहरणं कुड्याद्व्यवहिताया गोरव्यवहितप्रत्यक्षं विषाणं गवा समस्ति विषाणसमवाय इति समवायि विषाणमुक्तम् । न तु तद्वपि समवायि गोरेव स्वावयवे विषाणादौ समवायात् । एकार्थसमवायीत्यस्य एकार्थस्य समवाय एकार्थसमवायः ■ यस्यास्ति स एकार्थसमवायीत्यर्थः । तदेतदुदाहरणं यथा **पाणिः पादस्येति ।** एकस्य खल्ववयविनः समवायः पादे च पाणौ च तौ पाणिपादावेकार्थसमवायवन्तौ तथैकनैकार्थसमवायवता प्रत्यक्षेणाप्रत्यक्ष एकः स्मर्यतइति । यदा त्वेकस्मिन्नर्थे समवाय इत्यर्थस्तदा रूपं स्पर्शस्येत्युदाहरणम् । स्वाभाविकाविनाभावयुक्तं लिङ्गं साङ्केतिकं तु चिह्नमिति विवेकः । यामणीनीयकं । यद्यपि सर्वेष प्रणिधानादौ सम्बन्ध उपपद्यते तथाऽपि प्रणिधानादिपरिहारेण सम्बन्धान्तरे गोबलीवर्दन्यायेन सम्बन्धशब्दो वर्तते । न च सम्बन्धशब्देन सर्वग्रहादनर्थकमितरपदोपादानमिति वाच्यम् । उक्तमेव भाष्यकृताऽन्यत्र **वाक्यलाघवं नाद्रियते सूत्रकार इति ।** विष-

धीप्रमादश्चैवं भवति विशेष्याभिधानादिति । **आनन्तर्यादिति** । ब्राह्मे हि मुहूर्ते प्रबोधानन्तरमुत्थानं ततो मूत्रं ततः शौचं ततो मुखप्रक्षालनदन्तधावनादीनि । **वियोगादिति** शोकमुपलक्षयति । ततो ऽपि शोकविषयस्य स्मरति । **एककार्यादिति** । यथा सप्तदशावराणामृद्धिकामानामेकं सत्रं कार्यम् । तत्रैकं यजमानं दृष्ट्वा यजमानान्तरं स्मरति । **अतिशयात्** । यथा ब्रह्मचारी उपनयनविद्याजन्यातिशयोत्पादकमाचार्यं स्मरति । प्राप्तेस्तु यथा प्रार्थको यतो ऽनेन किंचिदत्र प्राप्तं प्राप्यं वा तमभीक्ष्णं स्मरति इच्छा स्नेहः । स [illegible] भार्यादिषु द्वेषः प्रतिकूले दायादौ ताभ्यामपि च तद्विषयं स्मरति । क्रियया कार्येणेत्यर्थः । धर्माद् वेदाभ्यासजनितेन धर्मेण जातिं स्मरति इति पूर्विकाम् । एवं जातमात्रस्य सुखादिसाधनस्मरणं धर्माधर्माभ्यां द्रष्टव्यम् । ननून्मादादयो ऽपि स्मृतिहेतवो लोकसिद्धास्तत्किं ते ऽपि नोक्ता इत्यत आह । **निदर्शनमात्रं चेदं स्मृतिहेतूनामिति** । तदेव सिंहावलोकितं समर्थ्य प्रकृतायामेव बुद्धौ विचारान्तरमारभते । **अनित्यायां च बुद्धाविति** । द्रव्याश्रितत्वादित्युच्यमाने ऽपि चक्षुरादिगते रूपादिभिर्व्यभिचारो ऽत आह । **अव्यापकद्रव्याश्रितत्वादिति** । तथा ऽप्यात्मत्वादिभिरनैकान्तो ऽत आह । **जातिमत्त्वे सतीति** । तथा ऽपि विभुत्वेन परिमाणेनानैकान्तो ऽत आह । **अस्मदादिप्रत्यक्षत्वे सतीति** । कर्मादिसन्तानविषया बुद्धय अर्थान्तरविनाशिन्यः अथ यदि प्रकाशकत्वादित्युच्येत तत आत्मना ऽनैकान्त इत्यत आह । **करणत्वे सतीति** । तथा ऽपि मनःश्रोत्रादिभिरनैकान्तो ऽत आह । **प्रत्यर्थमिति** । एका बुद्धिरेकविषया न विषयान्तरविषया एवमन्या अपि बुद्धयः स्वविषयमात्रे पर्यवसिताः न मनःश्रोत्रादि तथा नानाविषयत्वात्तस्येति । ननु प्रत्यर्थनियतत्वमव्यापकं युगपदनेकार्थसन्निकर्षे सति नानाविषया ह्येका बुद्धिरुत्पद्यते ऽत आह । **प्रतिक्षणं कर्मणो** ऽर्थस्यापूर्वस्योत्पत्तौ सत्यां तत्कार्याया बुद्धेरयुगपदुत्पत्तौ कारणक्रमानुविधानात्कार्यक्रमस्य प्रत्यक्षबुद्धिविषयकारणत्वात् । एकैकस्यार्थो विषयः क्रमोत्पादवान्कारणमिति क्रमवर्तीनां सर्वासामेव सिद्धं प्रत्यर्थनियतत्वम् । नियमश्च तज्जातीयकर्मान्तरापेक्षया न [illegible] द्रव्यापेक्षया तेन कर्मबुद्धेर्द्रव्यादिविषयत्वे ऽपि प्रत्यर्थनियमाविरोधः । प्रत्यक्षे नियतत्वविशेषणयो-

गाच्च प्रागात्मना ऽनैकान्तिकत्वशङ्कायां करणत्वं विशेषणमिति । प्रयोगान्त-
रमाह । अथ चेति । गुणत्वादिभिरनैकान्तिकत्वं मा भूदत उक्तं गुणत्वे
सतीति रूपादिभिर्व्यभिचारनिवृत्त्यर्थमुक्तमवाहेति । अवस्थितग्रहणे ऽपि
प्रत्यभिज्ञानिवृत्तेर्ध्वंसिनीति यद्यपि शक्यं वक्तुं स्पर्शादिबुद्धिरेकैव तावन्तं
कालमवस्थिता व्यवधानादिना ऽर्थसन्निकर्षविनाशाद्विनश्यति निमित्तकारण-
विनाशो ऽपि कार्यविनाशहेतुर्दृष्टो ऽपेक्षाबुद्धिविनाशाद् द्वित्वविनाशवदिति
तथा ऽपि क्षणिकत्वे हेत्वन्तरादेव सिद्धे बुद्धीनामभ्युपगमांशतयैतद् द्रष्ट-
व्यम् । तथा हि क्षणविध्वंसिवस्तुविषयबुद्धिक्षणिकत्वसमर्थनेनैव स्थायिव-
स्तुविषयबुद्धिक्षणिकत्वसमर्थनमपि सूचितम् । स्थिरगोचरा बुद्धयः [illegible]क्षणिकाः
बुद्धित्वात्कर्मादिबुद्धिवदिति । बुद्धिरेव स्मर्त्री ग्रहीत्री चेत्यात्माभावं बुद्धा-
वारोप्य शङ्कते । स्मृतेरयातटलइति चेदिति । निराकरोति । नात
एवेति । न हि बुद्धिः स्मर्त्री येन तदभावे स्मृतिर्नोत्पद्येत अपि
त्वात्मा स च नित्यः बुद्धिसद्भावस्तु स्मृतिविरोधीत्यर्थः । अथ यदि बुद्धि-
र्नास्ति कुतस्तर्हि स्मृतिरुत्पद्यते न ह्यकारणं कार्यं भवति । न चात्ममात्र
कारणं मा भूदात्मनो नित्यत्वेन स्मृत्युत्पादो ऽपि नित्यः तस्मात्स्मृत्युत्पादो
ऽपि लिङ्गं बुद्ध्यवस्थानस्येत्यत आह । अन्यतश्च तद्भावादिति । स्यादेतत् ।
बुद्धिजः संस्कारश्चेत्स्मृतिहेतुरथ यावत्संस्कारस्मृति स्यादत आह । ततः
प्रणिधानादिति । न संस्कारो ऽस्तीत्येतावता स्मृतिरपि तु तत्प्रबोधात् ।
प्रबोधश्च कादाचित्कः कादाचित्कत्वात् प्रणिधानादेरित्यर्थः । बुद्धिस्थैर्य-
वादाह नावस्थायिनीति । दूषयति । न विरोधादिति । बुद्धिमा-
त्रस्य स्थायित्वं प्रतिज्ञाय विद्युत्संपातज्ञानाया घटादिबुद्धेरनवस्थायित्वाभि-
धानं विरुद्धमित्यर्थः । अव्यक्तग्रहणस्यान्यथासिद्धत्वमाह । अव्य-
क्तग्रहणस्येति । धर्मग्रहणहेतोर्भेदात् । अव्यक्तस्य यो धर्मिग्रहणे हेतुः
सामान्यमात्रवत्त्वं धर्मेण गृह्णाति तद्वशादव्यक्तग्रहणं यस्तु सामान्य-
विशेषवत्त्वं तद्वशाद्व्यक्तग्रहणमित्यर्थः । धर्मिणं त्वनाश्रित्य स्वे विषये
ग्रहणानां तदसंभवाच्च व्यक्तत्वादित्यर्थः । धर्मिणमनाश्रित्येत्यविद्वान्
शङ्कते लोकविरोध इति चेदिति । धर्मिग्रहणमाश्रित्य निराकरोति ।
नान्यथेति । दोषान्तरमाह । अनैकान्तिकत्वाच्चेति । वार्त्तिकव्याख्यानेनैव

भाष्यव्याख्या । पूर्वं हि शरीरेति । भूतेन्द्रियमनसां चैतन्यं साक्षान्निराकृत-मुपक्षेपात् शरीरस्य संप्रति तु शरीरस्यैव साक्षाच्चैतन्यं निरस्यत इति नात्य-र्थभेदादपुनरुक्तम् । वस्तुतस्तु पौनरुक्त्यपरिहारं भाष्यकारः प्रकारान्तरेण वक्ष्यति तद्गुणत्वं तत्रोपलब्ध्या सिध्यति । अबाधितयेति शेषः । न कारणानुच्छेदाच्चेतनायाः शरीरमस्याः कारणं तच्चानुच्छिन्नं संस्कारस्य तु कारणस्योच्छेद इति द्रष्टव्यम् । तच्च न पाकजगुणान्तरोत्पत्तेरिति । आत्यन्तिकः परमाणौ वा पिठरे वा रूपाभाव इत्यर्थः । तदेवमात्यन्तिका-नात्यन्तिकत्व वैधर्म्यमुक्त्वा सप्रतिद्वन्द्वित्वाप्रतिद्वन्द्वित्वं वैधर्म्यान्तरमाह । इतरश्च प्रतिद्वन्द्विसिद्धेः पाकजानाम् । तद्व्यभिचारोद्भावनेन चैतन्यस्य यावच्छरीरभावित्वप्रतिषेधः प्रत्ययव्यवस्थाप्रसङ्गात् । यथ देवदत्तस्य ज्ञानं न यज्ञदत्तः प्रतिसंधत्ते किं तु देवदत्त एवेति व्यवस्था एवमेकस्मिन् शरीरे अवयवान्तरज्ञानमवयविनो वा ज्ञानं न प्रतिसंधत्ते इत्यर्थः । दृष्टान्त-सूत्रमिति । न करचरणादयश्चेतनाः शरीरावयवत्वात् केशनखादिवदिति दृष्टान्तार्थं सूत्रमित्यर्थः । त्वक्पर्यन्तत्वादिति । शरीरावयवत्वं केशनखा-दीनां हेतुरसिद्धः इन्द्रियाश्रयत्वं शरीरलक्षणं तच्च शरीरसमवेत तेनेन्द्रि-याश्रयेणावयवेन भवितव्यम् । त्वक्पर्यन्तश्चावयवसमूहस्तथा न तु केशनखा-दयस्तस्मादन्या इति न शरीरावयवा इत्यर्थः । रूपादीनां त्वितरेतरवैधर्म्यम-ननुसंहितं च शरीरगुणत्वेनानन्वितमित्यर्थः । न हि येषां चाक्षुषत्वरासन-त्वादिरूपवैधर्म्ययोगस्ते न शरीरगुणा इति दृष्टम् । अव्यापृत च शरीरगु-णानां तादृशवैधर्म्यदर्शनात् । तस्मादशरीरगुणत्वान्वयव्यतिरेकाभावाद्वैध-र्म्यमात्रमेतत् । बाह्यकरणप्रत्यक्षाप्रत्यक्षशरीरगुणवैधर्म्ये मानसप्रत्यक्षत्वम-न्वयव्यतिरेकि न चेतनायाः शरीरगुणत्वसाधनं न भवति । अपि तु तद-न्यगुणत्वसाधनमित्यर्थः । विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाहेतुत्वादि-ति । ये हेतव इति वक्तुवचनं हेत्वेकदेशविषयम् न शरीरगुणश्चेतना अयावद्द्रव्यभावित्वादित्युच्यमाने संस्कारेणानैकान्त इत्यत उक्तं निमि-त्तान्तराभाव इति । तथाऽपि पाकजेन गुणेनानैकान्त इत्यत उक्तं वि-रोधिगुणादर्शने चेति । शरीरव्यापित्वादिति । न साधनमिति । प्रसङ्गो हि न साधनं हेतोरभावात् । यथा ऽऽहुरसि प्रसङ्गो न प्रसङ्गसाधनमिति ।

बाह्यकरणाप्रत्यक्षत्वादिति । न च गुरुत्वादिभिरनेकान्तः । तेषां खल्वप्रत्यक्षत्वमेव । न तु बाह्यकरणप्रत्यक्षत्वमिति भावः । मनःस्वरूपपरीक्षाया भाष्यवार्त्तिके निगदेनैव व्याख्याते । संस्थापनं स्थापनम् । मनसि त्विचार्यमाणे कः सम्बन्धः शरीरोत्पत्तिनिमित्तविचारस्येत्यत आह । **मनसः खल्विति** । मन एवाधिकरणविचारेणापि परीक्ष्यत इति नासम्बन्धः शरीरोत्पत्तिनिमित्तविचारस्य परित इयं परीक्षा सा च स्वरूपतश्च सम्बन्धितश्च शरीरं च मनःसम्बन्धि तदधिकरणत्वान्मनसः तस्मान्मनस एव परीक्षा या शरीरस्येत्यर्थः । उत्पत्तिसमकालमिति । सममिव समम् । उत्पत्त्यनन्तरमित्यर्थः । **क एवमाह न ददातीति** । यदि समयं भवति तत उत्पत्त्यनन्तरं दास्यत्येवेत्यर्थः । **विपच्यमानः कर्माशय इति** । स्वफलं भोजयन्नित्यर्थः । **यानि वा प्राप्त्यन्तराणि तस्य कर्मणः समानोपभोगानीति** । तद्यथा किं नरत्वनिर्वर्तनीयं कर्म स्त्रीपुंसभोग्यं स्त्रीपुंसयोरन्यतरकर्मप्रतिबन्धे फलं न ददातीति । यानि प्राप्त्यन्तराणि लोकविषयाभावादयस्तस्य कर्मणो भोगानीति । कर्मफलानामन्नाद्याश्वग्रामादीनां भागित्वात्कर्मभोगानीत्युच्यन्ते तेषां प्राणिनां कर्मभिरभाग्यादिशब्दवाच्यैः प्रतिबन्धादिति । **तस्य वा कर्मणः सहकारिधर्माधर्मलक्षणं निमित्तं नास्तीति** । अयमर्थः । दृष्टानां सेवादिकर्मणां व्यभिचाराद्ग्रामादिलाभे ऽदृष्टं कारणं कल्पनीयम् । यथा ऽऽहुः तत्रैव तत्र कारणं शब्दयन्ति दृष्टं सेवादि कारणं शब्दयन्तीति । विपर्यये तद्विषयमदृष्टमुपलक्षयन्ति ते च ग्रामादयस्तस्माददृष्टादुपजायमाना अन्तरा विघ्नघाताय देवतानमस्कारादिजनितमपि धर्ममपेक्षन्ते तस्मात् प्राभवीयेन धर्मेण स्वफलनिर्वर्तनाय धर्मान्तरं सहकार्यपेक्ष्यते सहकारिणा च केनचित्प्रतिबन्धापगमहेतोरपि सहकारित्वाविरोधः । तेन कर्मणा सहकारिनिमित्ताभावात्प्रतिबद्धमदृष्टं फलं न जनयतीत्यर्थः । तस्य वा कर्मणः सहकारिणः कारणस्य गरीयसा कर्मान्तरेण प्रतिबन्धात्फलस्यानारम्भः । एवं स्वकर्मणां सहकारिनिमित्ताभावप्रतिबन्धावुक्त्वा समानोपभोगसत्त्वान्तरकर्मणामपि सहकारिनिमित्ताभावप्रतिबन्धौ दर्शयति । **सत्त्वान्तरकर्मणां चेति** । रूपादिमत्त्वादित्युच्यमाने परमाणुभिरनेकान्तः स्यादत आह । **बाह्यकरणप्रत्यक्षत्वे सतीति** । इन्द्रियग्रा-

ग्राह्यत्वे सतीत्येतावतैव सिद्धे इन्द्रियग्राह्यशेषोऽह करणग्राह्य इत्यन्तरमि-त्येतावन्मात्रविवक्षया बाह्यकरणग्राह्यत्वे सतीत्युक्तम् । सिकतादिदृष्टा-न्तस्य साध्यसमतयैव पुरुषार्थक्रियासामान्यादित्यस्य हेतोरनैकान्तिकत्वो-द्भावनमपि प्रत्युक्तम् । सिकतादीनामपि कथं चित्पुरुषार्थहेतुत्वात्तत्सर्गः पुरुषगुणपूर्वक इत्युक्तम् । मा भूद्वा पुरुषगुणपूर्वकत्वं सिकतादिसर्गस्य तथाऽपि शरीरस्योत्पत्त्यादि परिभावयन्तः सिकतादिभ्यो वैषम्यं वीक्षमाणास्त-द्विलक्षणकारणत्वमेव प्रतिपद्यामहे तथा च सिध्यति पुरुषगुणनिमित्तत्वे-त्याह । विषमश्चायमुपन्यास इति । ननु मातापितरौ न साक्षात् शरी-रोत्पत्तौ कारणमित्यत आह मातापितृशब्देन लोहितरेतसी इति । अनु-भवनीये इति । भव्यगेयादिपाठात्कर्तरि कृत्यः इतोऽपि वैषम्यमि-त्याह ।

**तथाऽऽहारस्य** (सू. ६७) ॥ पूर्वसूत्रप्रतीकेन पूरयति । उत्प-त्तिनिमित्तत्वादिति प्रकृतम् । कललकलरमांसपेश्यादयो लोहितरेतसोः शरीरारम्भकयोः परिणामभेदाः ।

**प्राप्तौ—त** (सू. ६८) ॥ द्वयात्मनोः संयोगः प्राप्तिः तस्यामनियमः शरीरोत्पादस्य तस्माद् दृष्टस्य व्यभिचारादस्ति तददृष्टं यत. शरीरसर्ग इत्यर्थः । पार्श्वस्थः शङ्कते **सर्वात्मभिरिति** । ननु यदीयेनादृष्टेन यच्छरीरमुपात्तं तत्तस्यैव भोगायतनं नान्यस्येति नानियम इत्यत आह । **न च पुरुषगत** इति । आत्ममनःसन्निकर्षजौ हि धर्माधर्मौ सन्निकर्षश्च मनसः सर्वात्मभिः साधारण इति सर्वेषामेव धर्माधर्मौ न पुनः कस्य चिदेवासाधारणावित्यर्थः । अस्योत्तरं **शरीरेति** । उक्तेनैवाभिप्रायेण शङ्कते तत्स्थता एकपुरुषस्थता **कुत इति चेत्** । उत्तरम् । **न स्वसंयोगेति** । पुन. पृच्छति । **संयोगे कुतो नियम** इति । यथैवैकेनात्मना मनःसंयुक्तमेवमात्मान्तरैरपि । नात्ममन एव यथैकेन मनसा स आत्मा संयुक्त एवं मनोन्तरैरपीति । नात्ममनःसन्निकर्षे अस्ति विशेष इत्यर्थः । उत्तरं **न मनोनियमहेतु-त्वादिति** । अदृष्टनियमनिबन्धनो हि मनोनियमः मनोनियमनिबन्धन-श्चादृष्टनियमः । अनादित्वाच्च बीजाङ्कुरवदन्योन्याश्रयो न क्षतिमावहती-

त्यर्थः । तदेवमात्मगुणनिबन्धने शरीरसर्गे व्यवस्था दर्शिता । ये तु मेनिरे न कर्मनिबन्धनः शरीरसर्गो ऽपि तु प्रकृत्यादिनिबन्धनः । प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षाः सत्वरजस्तमस्तया प्रवृत्तिशीलाः स्व स्वं विकारमारभन्ते प्रतिबन्धापगममात्रे तु धर्माधर्मावपेक्षन्ते तद्यथा कृषीवलः केदारादपां पूर्णात्केदारान्तरमपूर्णमाप्लावयिषुरपां सेतुमात्रं भिनत्ति । तास्तु निम्नाभिसर्पणस्वभावा अपहृतसेतवः स्वयमेव केदारमाप्लावयन्ति । एवमाप्लावयन्ति प्रकृतयो ऽपि विकारानिति । यथा ऽऽहुर्निमित्तमप्रयोजकं प्रकृतीनामावरणभेदस्तु ततः क्षेत्रिकवदिति । तान् प्रत्याह ।

**एतेनानियमः प्रत्युक्तः (सू ७०)।** एतेन कर्मसापेक्षाणां भूतानां शरीरसर्गे अनियमाभिधानेन तन्निरपेक्षाणां व्यतिरेकमुखेनानियमः प्रत्युक्तः नियमो व्याप्तिः साधारणविग्रहवत्त्वं सर्वात्मनाम् । अनियमस्त्वव्याप्तिः कस्य चिदात्मनः किं चिच्छरीरं कस्य चित्किं चिदिति । प्रकृतिनिबन्धने हि शरीरसर्गे तस्या प्रकृत्यात्मसर्वात्मसाधारण्यान्न शरीराणामसाधारण्यहेतुः । भूतग्रहणं तु प्रकृत्युपलक्षणार्थं न केवलमेकनिमित्ते शरीरसर्गे साधारणविग्रहवत्त्व दोषः अपि तु मोक्षो ऽपि न स्यादिति दर्शयितुं स्वपक्षे मोक्षमुपपादयति उपपन्नश्चेति । सांख्यपक्षे तु न मोक्ष स्यादिति दर्शयति । **कर्मनिरपेक्षेष्विति।** शङ्कते । तददृष्टकारितमिति चेदिति । उपभोगशब्दादिदर्शनं प्रकृतिपुरुषभेदादर्शनं वा ऽदृष्टमुच्यते । तत्कारितमित्यर्थः । निराकरोति एतस्मिन्निति । यथा प्रागदर्शनमेव निरोधसमाप्तेः पश्चाददर्शनमित्यपवृक्तो ऽपि पुनः संसरेदित्यर्थः । शङ्कामुत्थाप्य दूषयति । चरितार्थेति । ननु न शब्दाद्युपभोगं पुरुषार्थं ब्रूमो येन चरितार्थता स्यात् । अपि तु पुरुषभेददर्शनं तच्चाद्यापि न भवतीत्यारभते शरीरमिति शेषयति । पुरुषार्थत्वेन च हेतुनेति । चो ऽवधारणे पुरुषार्थत्वेनैवेत्यर्थः । परिहरति । तस्य वा करणादिति । चस्त्वर्थे । देशयति वृत्तौ यदर्थं शरीराण्यारभन्ते तन्न कृतमन्यत्तु कृतमिति किं केन सङ्गतमित्यर्थः । शङ्कते दिदृक्षाविशेष इति । दर्शनं हि नजा पर्युदस्तमतस्तन्मूला दिदृक्षा प्रूते सा चापवर्गे नास्ति तस्मान्नापवृक्तः संसरतीत्यर्थः । निराकरोति न प्रागिति । एतदुक्तं भवति । दिदृक्षा हि बुद्ध्याश्रया नापवर्गे बुद्धावस्ति प्रकृति·

परिणामश्च बुद्धिस्तथा च सत्यां दिदृक्षायां बुद्धिः बुद्धौ सत्यां दिदृक्षेति परस्पराश्रयप्रसङ्गः । न चानादिता परिहारः । सृष्ट्यादौ द्वयोरभावात् । अस्माकं तु प्रलयसमये धर्माधर्मसम्पृक्तो ऽस्त्यात्मा मनश्चेति विशेषः । सत्कार्यमादाय शङ्कते । **सर्वशक्तिमत्त्वादिति** । निराकरोति । **नापवर्गाभावप्रसङ्गादिति** । चिट्ट विभजते **दिदृक्षावन्नानात्वदर्शनमप्यस्तीति** । तदर्थं प्रकृतेः प्रवृत्तिः तथा च संसारस्तत्प्रध्वंसश्चापवर्गाभावान्नास्तीत्यपवर्गाभाव इत्यर्थः । एतदेव स्फुटयति । **विद्यमाने च नानात्वदर्शने** तदर्थे प्रधानस्य प्रवृत्तिरयुक्ता ततः संसाराभावात्तत्प्रध्वंसो ऽपवर्गो न स्यादिति भावः । तमेवापवर्गाभावं तद्विरोधिसंसारसत्त्वेन दर्शयति । **यदा च नानात्वदर्शनमिति** । निदानानुच्छेदे निदानिनो नोच्छेद इत्यर्थः । पुनर्विकल्पं दर्शयति । **अज्ञानमदर्शनमिति चेदिति** । विवेकज्ञानाभावस्य तुल्यत्वादित्यर्थः । **दोषमतिरोहितार्थमिति** । अपरे त्वार्हता अदृष्टं परमाणुगुणं वर्णयन्ति । पार्थिवानामणूनां मनसश्च गुणो ऽदृष्टं तौ पार्थिवाद्या अणवः स्वादृष्टप्रयुक्ताः शरीरमारभन्ते मनश्च स्वगुणप्रयुक्तं तच्छरीरमाविशतीति । तच्च स्वकादेवादृष्टात्पुद्गलस्य सुखदुःखोपभोगं साधयति । न तु पुद्गलस्य धर्मो ऽदृष्टमिति साध्यवत्तेषामपि पुनस्तत्प्रसङ्गो ऽपवर्गे । एतदुपपादयति । **परमाणुगुणस्येति** । अपि चास्मिन् दर्शने प्रायणं न स्यादित्याह । **मनः कर्मनिमित्तत्वादिति** । अस्मद्दर्शने तूपपद्यते प्रायणमित्याह । **वर्तमानशरीरारम्भककर्माशयक्षये तु भविष्यद्देहान्तरारम्भककर्माशयान्तरादुपसर्पणं मनस इति युक्तं प्रायणम् ।** **उभयहेतुरिति** । उपसर्पणापसर्पणहेतुरित्यर्थः । ननु भवतु संयोगाद्युच्छेदः किं नो बाध्यत इत्यत आह । **शरीरस्य नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः** संयोगाद्युच्छेदादित्यर्थः । ननु यदकारणं नित्यमिति कथं सकारणं शरीरं नित्यं भवेदित्यत आह । **नित्यत्वप्रसङ्ग इति प्रायणानुपपत्तिं ब्रूमः ।** विनाशानुपपत्तेरित्यर्थः । यादृच्छिके अकारणके प्रायणभेदो न स्यात् । दृष्टश्च प्रायणभेदः कश्चिद्गर्भस्थ एव प्रैति कश्चिज्जातमात्रः कश्चित्कुमारक इत्यादिरिति । अकारणस्य नित्यं सत्त्वमसत्त्वं वा स्यात् । गगनवत्तत्कुसुमवदित्यर्थः । **अकारणत्वादित्यस्य** हेतोरनैकान्तिकत्वेन

प्रत्यवतिष्ठते । **अणुश्यामतावदिति** । निराकरोति । **तच्च नेति** । प्रमाणे-
नाविषयीकृतमकृतं प्रत्युत प्रत्यक्षागमविरुद्धमिति यावत् । तस्याभ्यागमो
ऽभ्युपगमस्तत्प्रसङ्गादित्यर्थः । न च परमाणुश्यामता ऽप्यकारणा पार्थिव-
रूपत्वात् लोहितादिरूपवदित्यनुमानेन तस्यापि पाकजत्वाभ्युपगमादिति
भावः । **यथाश्रुति वा सूत्रार्थः** । अकृतस्य कर्मणः फलोपभोगप्रसङ्गा-
दिति । यदा खलु परमाणुगुण एव नित्यः शरीराद्यारम्भकस्तदा ऽसौ
नित्यत्वान्न केन चित् क्रियते । तस्याकृतस्यैव फलं पुरुषैरुपभुज्यते तत-
श्चायमाम्नायानां विहितनिषिद्धप्रवृत्तिनिवृत्तिविषयो ऽनर्थकः शास्त्रप्रणयन-
ञ्चाप्यनर्थकं भवेदिति भावः । एतच्चातिविस्तृतं भाष्ये तस्यार्थो निगदव्या-
ख्यातः ॥

इति वाचस्पतिमिश्रविरचितायां न्यायवार्त्तिकतात्पर्य-
टीकायां तृतीयो ऽध्यायः समाप्तः ॥ शुभम् ।



अथ मनःपरीक्षानन्तरमुद्देशलक्षणक्रमानुरोधेन प्रवृत्तिः परीक्षितुं युक्ता सा कस्मान्न परीक्ष्यत इति शङ्कानिराकरणाय सूत्रमित्याह । मनसो ऽनन्तरमिति ।

**प्रवृत्तिर्यथोक्ता (सू. १)** ॥ अस्य शेषस्तथा परीक्षिता यथा लक्षिता तथा परीक्षितेत्यर्थः । पृच्छति । **किं पुनरिति** । प्रमेयमात्मादिमनोऽन्तं परीक्षितं न पुनः प्रवृत्तेः स्वरूपं वा कार्यं वा परीक्षितमिति भावः । उत्तरम् । **यावद्धर्माधर्माश्रयमिति** । एकद्रव्येष्वेकस्मिन्नेवात्मनि वर्तत इत्यर्थः । **अवस्थिता** न तु बुद्ध्यादिवदाशुतरविनाशिनीत्यर्थः । **आत्मसमवायादिति** । कार्यत्वे सतीति द्रष्टव्यं विशेषणम् । तेन न सामान्यविशेषाभ्यां व्यभिचारः । प्राणादीत्यादिशब्देन सुखादिविषयो ऽपवर्गश्च गृह्यते । संसारापवर्गहेतुभूतात्मसद्भावासद्भावाभ्यामिति शेषः । **एवमाद्युक्तमिति** । आदिशब्देनात्मसमवेता प्रवृत्तिर्न तु पृथिव्याद्याश्रयेति दर्शयति । प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह ।

**तथा दोषाः (सू. २)** ॥ उक्ता इति शेषः । प्रवृत्तितुल्यतया प्रवृत्तिपरीक्षयैव तावद्दोषाणां स्वरूपं* परीक्षितमित्यर्थः । कार्यरूपप्रवृत्तितुल्यतामाह **बुद्धिसमानाश्रयत्वादिति** । अभीष्टविषयानुचिन्तनप्रभवाः खल्वमी दोषा नार्थचिन्तनबुद्धिव्यधिकरणा भवितुमर्हन्ति तथा सति चैत्रस्याभीष्टविषयानुचिन्तने मैत्रस्य रागः प्रवर्तेत । तस्माद्बुद्धिसमानाश्रयत्वादात्मगुणा आत्मगुणत्वाच्च कार्यप्रवृत्तितुल्यतया प्रवृत्तिपरीक्षयैव तावद्दोषाः परीक्षिता इत्यर्थः । इदं च प्रवृत्तितुल्यत्वमपरं दोषाणामित्याह । **संसारस्यानादित्वादिति** । यदप्युक्तं वीतरागजन्मादर्शनादित्यनेन तथोद्देशपरीक्षापरेण द्वितीयसूत्रेण यत्ते दोषाणां परीक्षितं तदाह । **सम्यग्ज्ञानाच्चेति** । स्यादेतत् । गुणत्वेन ह्यात्मा गुणा इति सिध्यति तदेव तु कुत इत्यत आह । **कार्यत्वे सतीति** । इन्द्रियान्तरं मन इति मानसप्रत्यक्षत्वात्सुखत्वादिभिरनैकान्तिकत्वं मा भूदत उक्तं कार्यत्वे सतीति विशेषणम् । अचाक्षुषप्रत्यक्षत्वादित्यत्रापि कार्यत्वे सतीति विशेषणमनुषञ्जनीयम् । तदेव यद्गु परीक्षित

---

* स्वरूपपरीक्षितमिति पाठः क. पु. ।

दोषाणां यत्तु किं चिद्दोषाणामपरीक्षितमस्ति तत्परीक्षितुमुपक्रमते । **प्रवर्तनालक्षणा इत्युक्तं तथा च मानादय इति** । रागद्वेषमोहा एव दोषा न च मानादयस्तेष्वन्तर्भवन्ति बुद्धिव्यपदेशभेदात् । प्रवर्तनालक्षणत्वं तु तेषामप्यस्ति तस्मादतिव्यापकत्वान्न लक्षणमेतद्युक्तं युक्तत्वे वा लक्षणसूत्रे मानादयोऽपि दोषत्वेन पठनीया इति पूर्वपक्षः । सिद्धान्तयत्याह **नोपसंख्यायन्ते संगृहीतत्वादिति** । रागद्वेषमोहानां सामान्यरूपाणां कामादयो विशेषास्तथा चोपपन्नो बुद्धिव्यपदेशभेदः सप्रकारश्चेति भावः । अस्ववस्त्वादानेच्छा स्यादिदानपूर्विका स्पृहा पुनर्भवप्रार्थना तृष्णाहेतुभूता प्रवृत्तिद्वारेण पुनर्भवप्रतिसंधानस्येति । **प्रमाणविरुद्धेति** । अन्यायेनेत्यर्थः । परस्य ख्यातिर्ममाप्येतदस्तीति बुद्धिरभिनिवेशः तत्प्रतिषेधाभिप्रायो ज्ञानिषिधाचस्येर्ष्येत्युच्यते **अमर्षलक्षणो द्वेष इति** । ननु कृतापकारस्य या असहिष्णुता सोऽमर्ष इति द्वेषस्यैव विशेष इत्युक्तं कथं द्वेषसामान्यमुच्यत इत्यत आह । **असहिष्णुता दुःखस्य दुःखसाधनानां चेति** । **मिथ्याप्रतिपत्तिलक्षणो मोह इति** । संशयो हि यथावस्थिते पदार्थे अयथाभावप्रतिपत्तिर्भवति । व्यवस्थितं हि वस्तु अव्यवस्थिततया गृह्णाति संशयः एवं पण्डितमानिनो मीमांसककुटुम्बस्याभिमान इति । एकयोनयो हि रूपादयो न चैषामेकत्वं यदि पुनस्तत्र रूपादीनां परस्परभेदसिद्धये कश्चित्कारणभेद आस्थीयते स रागादिष्वपि समान इति भावः । **आर्यप्रज्ञेति भाष्यम्** । आरात्तत्त्वाद्याता आर्या । आर्या चासौ प्रज्ञा चेति आर्यप्रज्ञा सम्यग्बोधः संबोधे भवति निदानोच्छेदे निदानिनामुच्छेद इति । रागद्वेषयोर्निदानिनोरुच्छेदाय तन्निदानत्वं मोहस्य दर्शयति सति चार्थान्तरत्व इति ।

**तेषां मोहः पापीयान् कुतः नामूढस्येतरोत्पत्तेः** । अमूढस्येतरोत्पत्तिर्न भवति यत इत्यर्थो नामूढस्येतरोत्पत्तेरित्युक्तम् । मोहाद्विषयस्य सुखसाधनत्वानुस्मृतिः दुःखसाधनत्वानुस्मृतिश्च सङ्कल्पः रञ्जनीयाः कोपनीया इति कर्मणि कृत्यो भव्यगेयादिपाठात् । वार्तिकं मूढो मुह्यतीति । मूढ इति मोहवानभ्यासात् । भवतु निदानोच्छेदादुच्छेदो निदानिनः निदानस्य कुत उच्छेद इत्यत आह । **तत्त्वज्ञानाच्चेति** । प्रतिपक्षाभ्यासान्निदानोच्छेद इत्यर्थः । दोषनिमित्तत्वादिति हेतोरप्रयोजकत्वमाह ।

**नदोषपक्षत्वयथावरोधादिति** । तथाभावस्तज्जातीयत्वमतथाभावोऽत-ज्जातीयत्वम् । अनैकान्तिकत्वमाह । **निमित्तनैमित्तिकोपपत्तेश्चेति** । उत्पादोच्छेदौ प्रेत्यभावो न चात्मनो नित्यस्य तौ स्तः तस्मादस्मिन् दर्शने न युक्तः प्रेत्यभावः । वैनाशिकानां तु सत्त्वोत्पादनिरोधाभ्यां युक्तः प्रेत्य-भावः । प्रेत्येति ल्यप् मुखं व्यादाय स्वपितीतिवद् द्रष्टव्यः तथा च भूत्वा प्रायणमिति भवनप्रायणयोः समानकर्तृकत्वमप्युपपन्नमिति पूर्वपक्षः । पूर्वाभ्य-स्तसूत्रे चात्मनित्यत्वव्यवस्थापनात् । सत्त्वोत्पादोच्छेदे च कृतहानाकृता-भ्यागमदोषेणाभ्युदयनिःश्रेयसार्थप्रवृत्तिः व्यपदेशानर्थक्यप्रसङ्गाच्च स्वदेहे-न्द्रियबुद्धिसंवेदनासन्तानोत्पादविनाशौ नित्यस्यात्मनो जन्मप्रायणे तथा चोपपन्नः प्रेत्यभाव इति सिद्धान्तः । प्रेत्यभावविचारप्रस्तावेनेदमपरं विचा-रयति । **येयं प्रेत्योत्पत्तिर्नाम सा कथमिति चेत्** । अत्र हि प्रावादु-कानां नानाविधा विप्रतिपत्तयः सन्ति तासामिमां तावदेव गृह्णाति । **व्यक्तादिति** । अत्र विप्रतिपत्तीर्निवारयिष्यति **शरीरेन्द्रियविषयोपकरणा-धारमिति** । एकवद्भावेन नपुंसकत्वम् । प्रत्यक्षगृहीतसम्बन्धप्रभवमनुमानं प्रत्यक्षेऽप्युपदिशति **प्रत्यक्षमूलकत्वादिति** । ननु भवतु शरीरं पृथिव्यादि च व्यक्तं महत्त्वानेकद्रव्यवत्त्वरूपविशेषेभ्यः तन्मूलकारणं परमाणवः कथं व्यक्ता इत्यत आह । **तत्सामान्यादिति** । रूपादिमत्त्वसामग्रीपूर्वकं शरी-रमित्यर्थः । अतः परं **प्रावादुकानां तैर्थिकानां च दर्शनान्युप-न्यस्तानि कानिचित्प्रतिषिध्यन्ते तत्र कानिचिदभ्यनुज्ञायन्त** इति । तत्र तावदेके प्रादुर्भावाद्भावोत्पत्तिः कुतः नानुपमृद्य प्रादु-र्भावो यतः तस्मादित्यर्थः । विश्वं हि शून्यताया एव जायते । एवं किल श्रूयते असदेवेदमग्र आसीदिति । अत्र प्रध्वंसाभावत एव जन्म दृश्यते न सतः तत्कस्य हेतोः अभावस्तस्य कारणमिति । उपलक्षणं चेदं नानुप-मृद्य प्रादुर्भावादिति असत उत्पादादित्यपि द्रष्टव्यम् । तस्मादसदुपा-दानं विश्वमिति सिद्धम् । तत्र सिद्धान्ती गूढाभिसन्धिराह । उपमृद्य **प्रादुर्भवतीति व्याघात** इति । तदभिसन्धिमविद्वान् पूर्वपक्षी दूषयति । **अतीतानागतयोः कारकशब्दप्रयोगादिति** । उपमृद्य प्रादुर्भवतीति भाक्त एव प्रयोगो न मुख्य इत्यर्थः । भिन्नस्य कुम्भस्य कपालानीति

यद्यपि च साक्षात्कारकशब्दस्तथाऽपि षष्ठ्या सम्बन्धाभिधानात् तस्य क्रियाग-
र्भत्वात्क्रियायाश्च कारकनान्तरीयकत्वात्सामर्थ्येन कारकशब्दता द्रष्टव्या ।
पृच्छति **कः पुनरङ्कुरेण बीजोपमर्दार्थः** । **का पुनर्भक्तिः** यया योगा-
दुपगृह्णाति बीजमङ्कुर इति भवति प्रयोग इत्यर्थः । उत्तरम् । **अनन्त-
रोत्पत्त्यर्थः** उपमर्द्योपमर्दकयोरप्यानन्तर्यमनयोरपीति एतत्सामान्यमित्य-
र्थः । पुनरपि गूढाभिसन्धिरेव सिद्धान्ती उक्तं स्मारयति । **अत्रोक्तमि**ति ।
अभिप्रायमुद्घाटयति । **यदपीदमुच्यत** इति । नौपचारिकं प्रयोगं ब्रूमो व-
यम्: कारकशब्देन किं तु यथा भविष्यन्नङ्कुरः सम्प्रति भवन् बीजमुपमृ-
द्नाति एवं बीजाभावो ऽभवन्नङ्कुरं करोतीति ब्रूमः । तदिदमाह **अपि
त्वसतः कारणादुत्पत्तिर्न युक्ते**ति । ननूक्तमुपमृद्य प्रादुर्भावादित्यनेना-
नन्तर्यं बीजविनाशाङ्कुरोत्पादयोः सूचितं बीजविनाशानन्तर्याच्चाङ्कुरोत्पा-
दस्य बीजविनाशकार्यत्वमित्यत आह । **यत्पुनरेतदानन्तर्यसामर्थ्यादि-**
ति । अनन्यप्रयुक्तमानन्तर्यं कार्यकारणभावसाधनम् इदं तत्तु व्यूहानन्तर्यप्रयु-
क्तमिति नाभावस्य कारणत्वं गमयितुमर्हतीत्यर्थः । यदि व्यूहान्तरकार्यो
ऽङ्कुरो ऽथ कस्मादविनष्टे पूर्वव्यूहे न भवतीत्यत आह । **न चाविनष्ट**
इति । ननु यदि बीजावयवव्यूहान्तरमङ्कुरोत्पादहेतुर्न बीजं कस्मादङ्कुरा-
र्थिनः कृषीवला बीजमुपाददत इत्यत आह । **एवं चे**ति । बीजारम्भकोपा-
दाने अवर्जनीयतया बीजमागच्छदवयवप्रत्यासत्तिमित्यर्थः । तदेवमर्थं
परिशोध्याक्षेपार्थं सूत्रं योजयति । **अस्य चार्थस्ये**ति । **न विनष्टेभ्यो
बीजेभ्यो ऽङ्कुरस्यानिष्पत्तेः** बीजविनाशश्चेदङ्कुरोत्पादहेतुरथ विनष्टे बीजे
तदवयवेषु परस्परविश्लिष्टेष्ववस्थितेषु तेषां व्यूहान्तरे कस्मादङ्कुरो न भवति
भवति तु सति तेषां व्यूहे तस्माद्विनष्टेभ्यो ऽङ्कुरानुत्पत्तेरस्ति व्यूहे न
बीजनाशः कारणमिति सूत्रार्थः । क्रमनिर्देशादित्यस्य हेतोरस्मत्पक्षे ऽप्य-
प्रतिषेधः । तथाप्यानन्तर्यस्य तुल्यत्वात् । तथा ऽपि विनिगमनाया
को हेतुरित्यत आह । **अभावश्चेदङ्कुरोत्पादकारणं स्यात्** । अनुपा-
ख्येय इति शेषः । न ह्यनन्यविनष्टयोः शालियवबीजयोः कश्चिद्विशेषो
ऽस्ति येनैकस्माच्छाल्यङ्कुरो नान्यस्मादिति । को नु खल्वभावानामस्या-
ख्यानतो भेद इति । अपि च कारणानां शक्तिभेदात्कार्याणि भिन्नशक्तियुक्ता-

नि । यदा तु कारणानामभेदस्तदा कुतस्तच्छक्तीनां भेदः तथा च कार्याणि भिन्नशक्तीनि न स्युरित्याह । अनन्वितं च कार्यं सर्वाभिरिति । यदप्युक्तम् उत्पादादभावस्योपादानत्वं तदपि कार्याणां भिन्नत्वेन भिन्नशक्तिकत्वेन च प्रत्युक्तम् । तत्प्रागभावानां स्वाभाविकभेदविरहात् । अपि च प्रागभावानामनादित्वेन कार्योत्पादस्याप्यनादित्वप्रसङ्गः भावरूपकारणसहकारित्वं स्वभावस्य न निषिध्यते अस्मदभिमतस्योपादानस्यैव । अत एव पाकजादीनां रूपादीनां पूर्वरूपादिध्वंसनिमित्तत्वमभ्युपेयते । श्रुतिस्तु पूर्वपक्षाभिप्राया तथा च सिद्धान्तश्रुत्यन्तरं सदेव सोम्येदमग्र आसीदिति कथमसतः सज्जायेतेति । शून्यताविवर्तो विश्वप्रपञ्च इति तु दर्शनमपरख्यात्यनिर्वचनीयख्यातिनिराकरणेनापाकृतम् । अपि च सर्वशून्यत्वे ख्यातुरभावात्ख्यातेरभावः । तस्मान्न शून्यतोपादानस्तद्विवर्तो वा विश्वप्रपञ्च इति सिद्धम् । अथापर आह ॥

**ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् (सू. १९)** ॥ मा भूदयं नामरूपप्रपञ्चः शून्यतोपादानो ऽपि तु ब्रह्मोपादानो भविष्यति । ब्रह्मैव हि प्रपञ्चरूपेण परिणमते मृत्तिकेव घटशरावोदञ्चनादिभावेन । न चैवं नित्यत्वव्याघातः । परिणामे ऽपि सत्त्वाविघातात् तल्लक्षणत्वाच्च नित्यतायाः । यदाह यस्मिंस्तत्त्वं न विहन्यते तदपि नित्यमित्येकं दर्शनम् । अपरं च ब्रह्मैवानिर्वचनीयानाद्यविद्योपधानान्नामरूपप्रपञ्चभेदेन विवर्तते मुखमिवैकमनेकमणिकृपाणादिभेदादनेकविधप्रतिबिम्बभेदेनेति तदेतद्दर्शनद्वयमनेन सूचितम् । ईश्वरो ब्रह्म ईशनायोगात् । चेतनाशक्तिः क्रियाशक्तिश्चेशना । सा चास्ति ब्रह्मणीति ब्रह्मेश्वरः कारणं जगतः । श्रूयते हि तदैक्षत बहु स्यां प्रजायेयेत्यादि सा चेयं श्रुतिश्चेतनस्य जगत्कारणतामाह । न चाभावो वा प्रधानं वा परमाणवो वा चेतयन्ते । ननु जीवा एव चेतनास्तत्कर्मनिमित्तो नामरूपप्रपञ्चो भविष्यति कृतमत्र भगवतेश्वरेणेत्यत उक्तं पुरुषकर्माफल्यदर्शनादिति । पुरुषश्चेच्चेतयेन्नैव निष्फलं कर्मारभेत निष्फलं विद्वान् प्रवर्तमानः कथं चेतनो नाम तस्मात्पुरुषकर्माफल्यदर्शनादीश्वरः कारणमित्यर्थः । एतद्दर्शनद्वयमपाकरोति ।

**न पुरुषकर्माभावे फलानिष्पत्तेः (सू. २०)** ॥ इदमपाकृतम् । न तावन्मृत्तिकेव नामरूपप्रपञ्चरूपेण ब्रह्म परिणमते । तद्धि सर्वा-

त्मना वा परिणमते एकदेशेन वा । तत्र सर्वात्मना परिणामे तत्त्वविघा-
तादनित्यत्वम् । एकदेशेन परिणामे सावयवत्वात्तदेवानित्यत्वम् । अथ
तत्त्वेनानुगतस्य परिणामः तन्न ब्रह्म । न तर्हि ब्रह्मणः परिणामः । न
च निर्भागस्यैकस्य स्वसंवेदनप्रत्यक्षस्य विपरीतज्ञानगोचरत्वसम्भवः ।
सामान्यतो ग्रहे रूपविशेषाग्रहे च तदन्यरूपारोपेण विभ्रमो दृष्टः शुक्तिकादौ
न तु जातु शुक्तिरूपं विद्वान् रजतमिति विपर्य्यस्यति । न च निरंशे स्वसं-
वेदनप्रत्यक्षे ब्रह्मणि तत्स्वरूपाग्रहः सामान्यग्रहो वा भवति । तस्मादीश्वरो
जगद्रूपेण विवर्त्तत इत्ययुक्तम् । निमित्तं तु स्यादीश्वरो जगतः स चेद-
नपेक्ष एव जगत्कार्य्यमित्युच्यते तथेदमुपनिप्रुते न पुरुषकर्माभावे फलानिष्प-
त्तेरिति । अस्य व्यतिरेकमाह वार्त्तिककार । ईश्वरश्चेत्कारणं भवेदिति ।
एकरूपं कार्य्यं स्यादित्याह ईश्वरस्यैति । कर्मणीश्वरो ऽनीश्वरः स्यात् ।
तथा च तत्कारणानि नेश्वरेण प्रयुज्यन्त इत्यनैकान्तो वक्ष्यमाणो हेतुरि-
त्यर्थः । तदेवमीश्वरोपादानत्वं च ब्रह्मविवर्त्तत्वं च निरपेक्षेश्वरनिमित्तत्वं
इच निराकृत्याभिमत पक्ष गृह्णाति ।

तत्कारितत्वादहेतुः ( सू. २१ ) ॥ परमाण्वादानस्य जगतः
पुरुषकर्मापेक्ष ईश्वरो निमित्तकारणं यद्व तेनापेक्षणीय पुरुषकर्म तदपीश्वरनि-
मित्तकमेव । न च यदपेक्ष्यते तस्यानिमित्तत्वमित्युपरिष्टात्प्रवेदयिष्यामः ।
तस्मादीश्वरकारितत्वात्पुरुषकारस्य तत्सहाय ईश्वरो निमित्तकारणं जगत
इत्यस्य पक्षस्य निराकरणे पुरुषकर्माभावे फलानिष्पत्तेरित्यहेतुः । निरपेक्षेश्वर-
निमित्तकत्वनिराकरणे हेतुरेवेत्यर्थः । भाष्य गुणविशिष्टमात्मान्तरमिति ।
गुणानीश्वरस्य ज्ञानादीनुपपादयिष्यति वार्त्तिककारः । आत्मकल्पादि-
त्यथात्मप्रकारादात्मजातीयादिति यावत् । तस्यात्मभ्यो विशेष-
माह । अधर्मेति । ननु धर्मानुष्ठानाभावात् कुतो धर्मः तया चाणिमा-
दिकमैश्वर्य्यं कार्य्यरूपं तिनैव कर्मणैत्यकृताभ्यागमप्रसङ्ग इत्यत आह । संक-
ल्पानुविधायी चास्य धर्म इति । प्रवर्त्तयतु किमेतावतेत्यत आह एवं च
स्वकृताभ्यागमस्यालोपेनेति । मा भूद्धर्मानुष्ठानं सङ्कल्पलक्षणानुष्ठानज-
नितधर्मफलमस्यैश्वर्य्यं जगन्निर्माणफलमिति नाकृताभ्यागमप्रसङ्ग इत्यर्थः ।
स्यादेतत् । प्रयोजनं विना न प्रेक्षावतां प्रवृत्तिः न च प्राप्तसकलप्राप्तव्यस्यास्ति

प्रापणीयं किं चिद्धीश्वरस्य । तस्मात् कृतमस्य जगन्निर्माणेनेत्यत आह । आप्तकल्पश्चेति । मा भूदस्य भगवतः स्वार्थः परानुग्रहार्थं जगन्निर्माणे प्रवर्त्स्यतीत्यर्थः । अत्रैव दृष्टान्तमाह । अयं यथा पितुरपत्यानाम् । अयं पिता स्वापत्यानां यथा पितेत्यर्थः । दार्ष्टान्तिके योजयति तथा पितृभूत ईश्वर इति । अन्यात्मान्तराण्यनित्यज्ञानयोगीनि दृष्टानि तद्वैलक्षण्यादीश्वरो नात्मजातीयो भवितुमर्हतीत्यत आह । न चात्मकल्पादिति । यद्यप्यात्मान्तराण्यनित्यज्ञानयोगीनि अयं च नित्यज्ञानादियुक्तः तथा ऽप्यात्मजातीय एव बुद्ध्यादिगुणयोगित्वात् । अन्यथा तोयादिपरमाणूनामतोयत्वादिप्रसङ्गो नित्यरूपादियोगात् । करकादिगतानां रूपादीनामनित्यत्वोपलब्धेरिति । यदि चायं बुद्ध्यादिगुणैर्नाख्यायेत प्रमाणाभावादनुपपन्न एव स्यादित्याह बुद्ध्यादिभिश्चेति । स्यादेतद् यदि कारुण्यादीश्वरो जगन्निर्माणे प्रवर्तेत हन्त भोः सुखिनमेव सृजेन्न तु दुःखिनम् । न च चेतनगतधर्माधर्मसहकारितया निर्माणवैचित्र्यं वाच्यं धर्मस्य तदनधिष्ठितस्य स्वकार्याकरणेन कारुणिकेन तदधिष्ठानायोगात् । तस्मात्सुखिदुःख्यादिभेदेन जगद्वैचित्र्यदर्शनान्नानुकम्पाप्रयुक्त ईश्वरः करोतीत्यत आह । स्वकृताभ्यागमालोपेन प्रवर्तमानस्येति । अयमभिसंधिः । कारुणिको ऽप्ययमात्मान्तरातिशयितमहिमा ऽपि न वस्तूनां सामर्थ्यमन्यथा कर्तुं पारयति । तस्मादधर्मोत्पनिमित्तापि नेश्वरप्रभावादपि नित्येन भवितुं युक्तम् । न च फलविरोधिना फलमप्रदाय निवृत्तमपि वाच्यम् । अतः चेतनानां नियतिमलङ्घयता ईश्वरेण नाधर्मः शक्यो ऽनधिष्ठातुं तस्मात्कारुणिको ऽप्ययं वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्यं विधत्ते तदिदमुक्तं स्वकृताभ्यागमालोपेन प्रवर्तमानस्येति । पुरुषेण कर्मणि कृते तत्फलाभ्यागमालोपेन प्रवर्तमानस्येत्यर्थः । वार्तिकमीश्वरप्रतिषेधेति । प्रक्रिया प्रकरणमीश्वरनिमित्तत्वविचारस्यार्थः । अथ विद्यमानाः प्रतिबन्धाय प्रवर्तयतीति । सुखाय पुरुषार्थेन प्रधाने प्रवर्तयितव्ये अधर्मः पुरुषार्थस्य प्रतिबन्धकः । एवं दुःखाय पुरुषार्थेन प्रधाने प्रवर्तयितव्ये धर्म इत्यर्थः । न चायं हेतुस्तस्माद्विपर्यस्तइति । अयमेवाधिगमनव्यवहारो हेतुः योऽत्र नियमकारणमित्यर्थः । परिस्पन्दः क्रिया सा च मूर्त्यनुविधायिनी नामूर्ते सर्वगतेश्वरे संभविनी इति मन्यानः

शङ्कते । **क्रियानावेशादकारणमिति चेदिति** । अपरिस्पन्दा अपि ज्ञानचिकीर्षाप्रयत्ना आख्यातपदवाच्यतया भवन्ति क्रिया ईश्वरस्येत्यभिसंधिना परिहारः । **न विकल्पानुपपत्तेः ।** यदा च युगपदनेकानि द्रव्याणि संहन्यन्ते तदा **साधारणकार्यव्यावृत्तेभ्यः संयोगेभ्य इति** । असाधारणं कार्यम् । एकैकस्य तन्तुद्वयसंयोगस्य द्वितन्तुकं तस्माद्व्यावृत्तेभ्यः संयोगेभ्यः सह साधारणस्यैव कार्यस्य पटलक्षणस्योत्पादादित्यर्थः । न केवलमुत्पन्नक्रियेषु क्रियोपरतौ द्रव्योत्पादः क्व चिदनुत्पन्नक्रियेष्वपि द्रव्येष्ववस्थितसंयोगेभ्यः पूर्वद्रव्योपरतौ द्रव्यान्तरोत्पाद इत्याह **एकावयवविभागे त्विति** । तुशब्देन पूर्वस्मादुत्पन्नोपरतक्रियाविशेषो दर्शितः । किमक्रियाणामेवारम्भो नेत्याह **कानि चित्पुनरिति** । अन्यतरकर्मजान्नोदनात्संयोगान्निवृत्ते कर्मणि इतरस्मिन् द्रव्ये कर्मनिवृत्तिसमकालमेव द्रव्यं चोत्पद्यत इति तस्याभावात्प्रसक्तेरित्यदुष्टमिति । चेतनो ऽप्ययं परानुग्रहस्वभावो ऽपि वस्तुस्वभावमनुरुध्यमानः कर्माशयानुरोधेन जगद्वैचित्र्यं विधत्ते । न चावश्यं दुष्कृते पुंसां प्रकृतिं विहन्तीत्यर्थः । अद्यत्वे ऽपि चेतनानां विचित्रस्वभावस्य दृष्टं सदसन्मध्यमाना जनानाम् । **अथ नित्यमैश्वर्यं धर्मवैयर्थ्यं न तद्धर्मात्प्रवृत्तीति** । तत्तयेश्वरस्यैश्वर्यं स्वकृतकर्मफलं वेदितव्यमित्ययुक्तं भाष्यमिति भावः । परिहरति **नित्यमिति ब्रूमः** । तस्य हि ज्ञानक्रियाशक्ती नित्ये इति ऐश्वर्यं नित्यम् । अणिमादिकं त्वनित्यं तदभिप्रायं च भाष्यकारस्य धर्मफलत्वाभिधानम् । प्रत्यात्मवृत्तिधर्माधर्मसंचयाधिष्ठानं भूत्यात्मवृत्तिसंकल्पानुविधायिन ईश्वरस्य धर्मस्य प्रयोजनमिति । अभ्युपेत्येश्वरधर्ममेतदुक्तं भाष्यकृता । परमार्थतस्तु नेश्वरस्य धर्मसद्भावे प्रमाणमस्ति नित्याभ्यामेव ज्ञानक्रियाशक्तिभ्यां सकलकार्योत्पादसिद्धेरित्याशयवानाह । **न चेश्वरे धर्मो ऽस्तीति** । **बुद्धिमत्त्वात्त्वात्मान्तरमिति** । आत्मान्तरं शरीरान्तरमभिप्रेतमिति । स च शरीरसम्बन्धो वर्तमानः केषां चिदयं संसारिणां केषां चिदतीतो यथा मुक्तानां शुकप्रह्लादादीनाम् । तदनेनेश्वरेण बुद्धिमता सता ऽवश्यं भाव्यं शरीरिणेति देश्यार्थः । **नात्मान्तरं** शरीरान्तरमित्यर्थः । कुतो **गुणभेदात्** । नित्यावेदस्य बुद्ध्यादयः कृत शरीरग्रहणेन तदुत्पादार्थेनेति भावः ।

नन्विदमेव बुद्धिमत्कारणाधिष्ठिताः परमाणवः प्रवर्तन्त इति पक्षधर्मताब-
लात्तर्कसहायान्नित्यबुद्धिमत्त्वमस्य सिध्यतीत्यर्थः । **प्रत्यर्थनियमासंभ-
वादि**त्यादिना तर्कः प्रमाणसहायो दर्शितः । एवं तावद्धर्मभेदेनाशरीरित्व-
मीश्वरस्य दर्शितं न चैतस्य शरीरयोगो विकल्पमपि सहत इत्याह ।
**अथ बुद्धिमत्तये**ति । अतीतानागतवर्तमानविषया प्रत्यक्षे ऽस्ति साक्षा-
त्कारवतीत्यर्थः । न पुनरक्षमाश्रिता नित्यत्वात् । उपलक्षणं चैतत् ।
नानुमानिकी चेति नेन्द्रियजा नौपमानिकीत्यपि द्रष्टव्यम् । **अक्लिष्टे**ति ।
क्लेशो ऽविद्या तददूषितेत्यर्थः । **मूर्त्तिमद्द्रव्यसंबन्धित्वादि**ति ।
संयोगित्वादित्यर्थः । तथा च न रूपादिभिर्व्यभिचारः । एतावदभिप्रेतमा-
चार्यस्य *येयं हि खलु भावा जगति भवन्ति प्रसिद्धचेतनकर्तृकाः यथा*
प्रासादाट्टालगोपुरतोरणादयः । प्रसिद्धतद्विपर्ययाः यथा परमाण्वाकाशा-
दयः । संदिग्धचेतनकर्तृका यथा तनुतरुमहीधरादयः । तत्र प्रमेयत्वाद्वा-
विप्रतिपत्तेर्वा साधकबाधकप्रमाणाभावे चेतनकर्तृत्वे संशयः । न च प्रत्य-
क्षानुपलब्धिमात्रमत्र बाधकं भवितुमर्हति । स्वभावविप्रकर्षिणां सतामपि
प्रत्यक्षानुपलब्धेः परमाण्वादीनाम् । तथा च विवादाध्यासितास्तरुमहीध-
रादय उपादानाभिज्ञकर्तृका उत्पत्तिमत्त्वात् अचेतनोपादानत्वाद्वा यदु-
त्पत्तिमदचेतनोपादानकं वा तत्सर्वमुपादानाभिज्ञपूर्वकं यथा प्रासादादि
तथा च विवादाध्यासितास्तनुतरुमहीधरादयस्तस्मात्तथेति । न चैषामुत्पत्ति-
मत्त्वमसिद्धम् । सावयवत्वेन वा महत्त्वे सति क्रियावत्त्वेन वस्त्रादिवत्तत्सिद्धेः
न चैतावता वैनाशिकानां कर्मणा चेतनेन मीमांसकानां क्षेत्रज्ञेन चेतनेन
चेतनकर्तृत्वसिद्धेः पृथिव्यादीनां सिद्धसाधनं चेतनत्वे ऽपि तेषामुपादानान-
भिज्ञत्वात् । तज्ज्ञत्वे वा स एवास्माकमीश्वरः ईदृशमस्तु सिद्धसाधनं को
हि क्लेशं विना न वाञ्छितसिद्धिमिच्छेत् । न च साध्यहीनो दृष्टान्तः ।
पटादीनामप्युपादानाभिज्ञकुविन्दादिकर्तृकत्वात् । अत एव न विरुद्धता
हेतोः एवं हि सा भवेत् । यद्युपादानानभिज्ञकर्तृकाः पटादयो भवेयुः न
चैतत्परेषामपि संमतम् । स्यादेतद् धर्म्यविशिष्टस्य विशेषस्य शरीरादिमत्त्वादेः
प्रमाणविरोधाद्विरुद्धता । यथा तृणादिविकारकारित्वादग्निमद्भूमिमित्यत्र वह्नि-
मत्त्वाविप्रतृणादिविकारोपयुक्तवह्निगतोद्भूतोष्णस्पर्शविरुद्धशीतस्पर्शस्य प्रत्यक्षे-

योपलम्भाद्व्यभिचारितो विरुद्धो हेतुः । तथा ह्यस्य नित्यादृष्टोपादानविषयं ज्ञानमात्ममनःसन्निकर्षादिकारणक नासति तस्मिन् भवतीति तद्दर्शनाच्चित्र तद्भावे प्रमाणबाधित सन्निवृत्तौ च ज्ञानमस्य निवर्त्तेत उष्णत्वोद्भूतिनिवृत्ताविव दाहको वह्निरवश्यायइति । न व्यापकनिवृत्ताव्याप्यनिवृत्तेर्योगात् । कारणं चेद्व्यापकं कार्यस्य हन्त हता तर्हि व्याप्यव्यापकसङ्गया । भवेदेतदपि नित्यादृष्टोपादानज्ञानमप्यस्य कार्यं स्यान्नित्यं तु तदप्युपपन्नर्हति न शरीरादिनिवृत्तावपि निवर्त्तितुमर्हति । व्यापकनिवृत्तेर्व्याप्यस्यानिवृत्तेरिति । अन्यथा नाशवान् मेव इति गोमानपि न स्यात् । न च बुद्ध्यादीनामनित्यानां बहुलमुपलब्धेर्नित्या बुद्धिरसमाविनीति साम्प्रतम् । न हि प्रत्यक्षा पार्थिवा हिमकरकादयस्तद्गता रूपादयो ऽनित्या इति तदारम्भकैः परमाणुभिस्तद्गतैर्वा रूपादिभिस्तथा भवितव्यम् । सदकारणतया तु नित्यतोभयत्रापि तुल्या । न च शरीरादिसहभावेन ज्ञानस्य सर्व तत्रोपलम्भाच्छरीरादीनां ज्ञानं व्याप्यमिति युक्तम् । स्वाभाविकसम्बन्धशालिता हि व्याप्यता सा चोपाधिविरहे भवति अस्ति च शरीरादिसहभावे ज्ञानस्योपाधिः कार्यत्वम् । कार्यं ज्ञानं स्वकारणं शरीरादिना निवर्त्तते नित्यं तु तदतिवर्त्तमानमपि साहित्योपलम्भं न विरुणद्धि तस्माद्यथा ऽनित्यः शब्दः उत्पत्तिमत्त्वात् घटवदिति प्रयुक्ते कश्चित्साध्यदृष्टान्तयोर्धर्मभेदविचारात्प्रत्यवतिष्ठेत यदि घटसाधर्म्यादुत्पत्तिमत्त्वादनित्यः शब्दः हन्त तस्मादेव रूपादिमत्ता तेन भाव्यं न चेदयं घटसाधर्म्येण रूपादिमान् भवमनित्यो ऽपि मा भूदित्येवं च प्रत्यवतिष्ठमान उत्कर्षसमजातिवादी पराजीयते एवमेव वादुत्कर्षसमजातिवादितया पराजेतव्यः साधर्म्यमात्रेणाप्रयोजकेन प्रत्यवस्थानात् । तस्य च सर्वानुमानेषु सुलभतया सर्वानुमानोच्छेदापादकत्वात् ।

स्यादेतत् । उत्पत्तिमत्त्वमुपादानादभिज्ञकर्तृपूर्वकत्वमात्रव्याप्त घटादिषु दृष्टं तावन्मात्रमेव पृथिव्यादीनां गमयेद् नित्यसर्वविषयज्ञानवत्कर्तृत्वं तु कुतस्त्यम् । न हि तद्दृष्टान्तधर्मिणि दृष्टम् । अथ रूपाद्युपलब्धेः क्रियात्वेन चक्षुरादानुमानमपि कथं न हि छिदादयः क्रिया इन्द्रियादिसाधनाः तासां कुठारादिसाधनत्वात् । अथ दृष्टान्तधर्मिण्यदृष्टमपीन्द्रियसाधनत्वं पक्षधर्मताबलात्सिध्यति । रूपाद्युपलब्धिगतं हि क्रियात्वं तदेव करण

गमयेद् यदुपलब्धिनिर्वर्तनसमर्थं न च कुठारादयः समर्था इति पक्षधर्मताबलात्कुठारादिविलक्षणमदृष्टचरमपि चक्षुराद्युपस्थापयतीति तदितरत्रापि समानम् । न ह्यपरिमेयानियतदिग्देशेन्द्रियज्ञानेन्द्रियकृतस्थावरादिलक्षणकार्योत्पादयौगपद्यमस्ति, सर्वविषयज्ञाने तन्नित्यत्वे वा सेद्धुमर्हतीति नो खल्वीदृशं परमेश्वरविधानं कार्यशरीरादिकार्ये संभवति । शरीराद्युत्पत्तेः प्रागस्याचैतन्येन तत्प्राक्कालकार्यान्तरोत्पादायेश्वरान्तरकल्पनाप्रसङ्गात् । एवं तस्मात्तत्प्रागित्यनेककालिककल्पनया वरं बुद्धिनित्यत्वं कल्पितम् । एतेन शरीरेन्द्रियनित्यत्वकल्पना ऽपि प्रत्युक्ता । एतेन यदेके ब्रुवते सन्निवेशविमत्स्वर्थं बुद्धिमद्धेतु यद्यपि प्रसिद्धेऽन्यसन्निवेशादेरेककारणता कुत इति तदपि परिहृतम् । तेषां प्रसिद्धेत्सर्वचेतनिराक्रियामनोरथो यदि विविक्तचक्षुषः परमाणून् पश्यन्तु तत्समवेतान्वा कर्मादीन् द्रष्टुमीयते न चैतदस्ति । तस्मादतीन्द्रियार्थदर्शिनो ऽस्मदादिविलक्षणा बहवः कल्पनीयाः तद्वरमेक एव तादृशः कल्पनालाघवायेति । न च कादाचित्कपरिपाकादृष्टवदात्मपरमाणुसंयोगादेव तनुभुवनादिकार्योपपत्तेः कृतं चेतनकर्तृकत्वेनेति वाच्यम् । उत्पत्तिमत्त्वस्योपादानाद्यभिज्ञकर्तृकत्वेनोपाधिविरहितः स्वाभाविकप्रतिबन्धसिद्धेः । न च निर्ज्ञानानामिन्द्रियमनसां ज्ञानोत्पादसाधनानामनधिष्ठानस्य च वत्सवृद्धिनिमित्तस्याप्यचेतनस्य क्षीरस्य स्वातन्त्र्येण प्रवृत्तेः वने विटपादीनां च विना प्रयत्नमुत्पादस्य दर्शनाद्व्यभिचार इति सांप्रतम् । सर्वेषामेव तेषां विवादास्पदीभूतत्वेन पक्षनिक्षेपात् । न च यथागृह्यास्तितायदनुपलब्धिविरोधादपक्षधर्मता । धर्मिणो दर्शनानर्हतया भगवतस्तद्विरोधानुपपत्तेः । अन्यथा सर्वानुमानोच्छेदप्रसङ्गात् । युक्तस्य तु यथाशिरोधर्मिणो बुद्ध्यादिगतस्येव दर्शनार्हस्यानुपलब्धिनिराकृतस्य साधनानर्हत्वात् ।

स्यादेतत् । नोत्पत्तिमात्रं स्वभावप्रतिबद्धं बुद्धिमद्धेतुत्वेन किं तु तद्विशेषः यद्दृष्टेरक्रियादर्शिनो ऽपि कृतबुद्धिरुत्पद्यते तस्य च दृष्टेः सोपजायते । यद्वि बुद्धिमद्भावाभावं दृष्टं घटादि च तथा न तूत्पत्तिमत्त्वात्तनुभुवनाद्यपि तस्य सद्भावासद्भावानुविधानादर्शनात् । तदेतेन विशेषेणोपाधिना प्रयुक्तां बुद्धिमद्धेतुकत्वव्याप्तिमुपजीवदुत्पत्तिसामान्यं न तेन स्वभावप्रतिबद्धमिति न तद्गमयितुमर्हतीति । अन्यथा धूमप्रयुक्तां धूमध्वजव्याप्तिमुप-

धौम्य पाण्डुतादेः कुमुदकपोतकादिगतादपि धूमकेतुनानुमानप्रसङ्गादिति । अत्रोच्यते । इदमत्र निपुणतरं भवन्तो निरूपयन्तु किं बुद्धिमदन्वयव्यतिरेकानुविधानं विशेष आहो तद्दर्शनम् । यदि पूर्वपक्षः स बुद्धिमद्धेतुकत्व तनुभुवनादीनामातिष्ठमानैरभ्युपेयतएव । न हि कारणं कार्यानुविहितभावाभावमन्यो वक्तुमर्हत्यसमीकात् । अथ दर्शनं न तर्हि क्रियादर्शनेन. कृतबुद्धिसम्भवः । स एव हि घटो ऽनेन बुद्धिमद्धेत्वन्वयव्यतिरेकानुविधायी दृष्टः स एव तत्कार्यो न तु विपणिवर्ती । तज्जातीयस्य तदन्वयव्यतिरेकानुविधानदर्शनाददृष्टान्वयव्यतिरेकानुविधानमपि तज्जातीयं तथेति चेत् । हन्तोत्पत्तिमद् घटादि बुद्धिमदन्वयव्यतिरेकानुविधायीत्यन्यदपि तज्जातीयं तनुभुवनादि तथा भवद्गृहेण न पराणुद्यते । घटजातीयमुत्पत्तिमद् बुद्धिमत्पूर्वमिति चेत् । ननु प्रासादादि न तद्धेतुकं भवेत् । अघटजातीयत्वात् । अथ यज्जातीयं बुद्धिमदन्वयव्यतिरेकानुविधायि दृष्टं तज्जातीयमेवादृष्टान्वयव्यतिरेकमपि बुद्धिमद्धेतुकम् । तत्किमिदानीं कार्यजातीयं प्रासादादि बुद्धिमद्धेतुकं न दृष्टं येनोत्पत्तिमत्तनुभुवनादि तथा न स्यात् । न खलु तज्जातीयत्वे कश्चिद्विशेष इति । यत्तु मृद्विकारत्वेन वल्मीकस्य घटादिवत्कुलालकार्यत्वं न भवति तत्कुम्भकारस्य प्रत्यक्षानुपलम्भविरोधात् । अदृश्यचेतनपूर्वकत्वं तु तस्योपेयतएव ।

स्यादेतत् । नोत्पत्तिमात्रमुपादानाभिज्ञकर्तृकत्वेन व्याप्तम् । अपि तु यदस्मदादिप्रत्यक्षोपादानादि न च तथा तनुभुवनाद्युत्पत्तिमदपि तस्माद् व्याप्तिविरहान्न तत्पूर्वकमिति । तदयुक्तम् । उत्पत्तिमत्त्वतदुपादानाद्यभिज्ञकर्तृकत्वयोः प्रथममन्वयव्यतिरेकाभ्यां व्याप्तौ सिद्धायां तदुपादानादिप्रत्यक्षज्ञानत्वकल्पनाया. कार्यज्ञानविषये व्यवस्थापनात् । व्याप्तिबलेन सामान्यसिद्धौ पक्षधर्मताबलेन तन्नित्यत्वसिद्धिरित्युक्तम् । तेनोपाधेरन्विष्यमाणस्यानुपलब्धेः स्वभावप्रतिबद्धमुत्पत्तिमत्त्वं बुद्धिमद्धेतुकत्वेन । न च स्वभावप्रतिबद्धमुत्पत्तिमत्त्वं स्वसम्बन्धिनमतीत्यापि वर्तेतेति शक्यं शङ्कितुम् । तथा सति स्वभावहानिप्रसङ्गः ।

स्यादेतत् । न सर्वज्ञपूर्वकाः क्षित्यादयः प्रमेयत्वसत्त्वादिभ्यः घटादिवदित्यनुमानानि सन्ति प्रतिपक्षसाधनानीति सत्प्रतिपक्षतया प्रकृतमनुमा-

नाभासम् । अत्रोच्यते । किमनेन सर्वज्ञपूर्वकत्वं निषिध्यते उत ज्ञातृमा-
त्रपूर्वकत्वं सर्वग्रहणमुपलक्षणार्थम् । यदि पूर्वः पक्षः तदेकदेशदर्शिपूर्वकत्वं
साधितं स्यात् । तथा चापसिद्धान्तः न च शक्यमपि न ह्यस्मदादिना ऽर्वा-
ग्दर्शिना शक्याः पृथिव्यादयः कर्तुं ज्ञातृमात्रपूर्वकत्वे तु निषेध्ये घटादिभि-
र्व्यभिचारः । यच्चेश्वरो नाधिष्ठाता परमाण्वादीनामशरीरित्वाद् मुक्तात्मवत्
ऐश्वरं ज्ञानं न सर्वविषयम् अनित्यं च ज्ञानत्वाद् अस्मदादिज्ञानवदि-
त्यनुमानं तत्पक्षधर्मतासिद्ध्यर्थमीश्वरसिद्धिं तद्बुद्धिमत्त्वं चापेक्षमाणं तत्सा-
धकप्रमाणविरुद्धमात्मानमेव तावन्नासादयितुमर्हति प्रागेव तद्विरोद्धुम् । न
ह्यागमानुमाने जगत्कर्तृत्वनित्यसर्वविषयबुद्धिमत्त्वव्यतिरेकेण केवलमीश्वरं
साधयतः तथा च ताभ्यां विरुद्धं सदनुमानं नोत्पत्तुमर्हतीति सिद्धम् । बुद्धि-
वदिच्छाप्रयत्नावपि तस्य नित्यौ सकर्तृकत्वसाधनान्तर्गतौ वेदितव्यौ । ज्ञा-
नचिकीर्षाप्रयत्नसमवायलक्षणत्वात् कर्तृत्वस्य तेषां च परस्पराविनाभावादन्य-
तरसिद्धावितरयोः सिद्धेः । तदेवमुत्पत्तिमत्त्वादेव पक्षधर्मतासहायादीश्व-
रसिद्धिरित्युक्तम् । भवतु वा तस्मादुपादानाद्यभिज्ञकर्तृकत्वमात्रसिद्धिः परि-
शेषानुमानात् व्यतिरेकसिद्धेर्विशेषसिद्धिः । तथा हि तनुभुवनाद्यभिज्ञः कर्ता
नानित्यासर्वविषयबुद्धिमान् तत्कर्तुस्तदुपादानाद्यभिज्ञत्वप्रसङ्गात् । न
ह्येवंविधस्तदुपादानाद्यभिज्ञो दृष्टः यथा ऽस्मदादिः तदुपादानाद्यभिज्ञ-
श्चायं तस्मात्तथेति । नो खलु परमाणुभेदान् प्रतिनियतसमवायिनश्च कर्मा-
शयानन्यः शक्तो ज्ञातुमृते तादृशादीश्वरादिति प्रसिद्धमधस्तात् । परपु-
रुषसमवेतावपि धर्माधर्मावधिष्ठातुं शक्नोति संबन्धात् न हि साक्षात्संयोग-
समवायावेव संबन्धौ संयुक्तसंयोगिसमवायस्यापि तद्भावात् । संयुक्ताः ख-
ल्वीश्वरेण परमाण्वादयः तेषु चेतनाः तत्समवेतौ धर्माधर्माविति संयुक्त-
समवायो वा चेतनेनेश्वरस्य संयोगात् अजसंयोगस्याप्युपपादितत्वात् । धर्मा-
धर्मौ परमाणून्वा स्वधर्मोपग्रहमन्तरेणापि चेश्वरः स्वकार्याभिमुखान् करि-
ष्यति विपश्चिदविद्विव विषयकर्म क्रियारम्भाभिमुखम् । अनेन चेतनोपा-
दानत्वमपि व्याख्यातम् । शास्तिकृता तूक्तलक्षणया चेतनत्वं हेतुरुक्तः ।
उत्पत्तिमत्त्वादयो ऽपि हेतव ऊहनीयाः इयं च [illegible]
एतस्य वा ऽपरस्य प्रयासेन [illegible] । व्याख्यातृ-

थिवी जनयन् देव एकः तदैक्षत बहु स्यां प्रजायेयेत्यादिः । स्मृतिश्च भवति । अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा । अकारणत्वेन चेश्वरस्यानित्यतां दर्शयति श्रुतिः अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः स वेत्ति विश्वं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं पुराणमित्यादिका । एतयैवाशरीरत्वं दर्शितं भवति । परिशिष्टं तु वार्त्तिककृता स्वयमेव प्रपञ्चितमित्युपरम्यते । कण्टकादीनां संस्थानविशेषवतां निमित्तादर्शनेनानिमित्ततां मन्वानस्तेनैव दृष्टान्तेन शरीरादीनामपि संस्थानभेदवतामनिमित्ततां मन्वानः पूर्वपक्षयति ।

**अनिमित्तत** इति । अदृश्यमाननिमित्तानां शरीरकण्टकादीनां पक्षनिक्षेपात् पक्षेण व्यभिचारानुद्भावनात् । उद्भावने वा सर्वानुमानोच्छेदप्रसङ्गात् सर्वत्र तस्य सुलभत्वात् । उभयसिद्धेन निमित्तवत्पटादिदृष्टान्तेन संस्थानभेदवत्त्वात्कण्टकशरीरादीनामपि निमित्तवत्त्वमिति सिद्धान्तः । सिद्धान्त्येकदेशिमतमुद्भाव्य दूषयति । **अपरं त्विति** । स्वयं वार्त्तिककारः कण्टकादीनामनिमित्ततां निकृत्य दूषयति । कण्टकादीनामनिमित्तं जन्मेति । **प्रतिपाद्यप्रतिपादकन्यायस्येति** । प्रतिपाद्यः पुरुषः कर्मप्रतिपादकश्च पुरुषः कर्ता कर्तृकर्मणी च कारके कारकं च क्रियाया निमित्तमिति प्रतिपाद्यप्रतिपादकविषयो न्यायः स चायमनिमित्तं शरीरादीनां जन्मेति प्रतिज्ञावतानेनाभ्युपेयते । अन्यथा ते मूकतैव स्यादिति । तदिदमुक्तं **सर्वं चानिमित्तं प्रतिपादयसि चेति व्याहतम्** । केवलं प्रतिपाद्यप्रतिपादकन्यायाभ्युपगमादितो दोषमित्याह । **वाक्योपादानाच्चेति** । प्रतिपादननिमित्तं वाक्यमुपाददत्से अभिधत्से चानिमित्तं सर्वमिति व्याघात इत्यर्थः । **तथाप्यन्यतरधर्मासिद्ध** इति । अन्यतरेण साध्यधर्मेणाऽनिमित्तत्वाख्येनासिद्धोऽनिमित्तत्वस्यैवासिद्धेः । ननु प्रतिवादिनो वाद्यपेक्षया न सिद्धमसिद्धं भवत्यतिप्रसङ्गादित्यत आह । **संस्थानविशेषवत्त्वस्य भावात्** । पटादिदृष्टान्तेन कण्टकादीनां सनिमित्तकत्वस्य प्रामाणिकत्वेन वाद्यपेक्षया सिद्धेरिति । कस्मात्पुनः पूर्वःपक्षः स्वयं सूत्रकारेण न निराकृत इत्यत आह भाष्यकारः **स खल्वयं वादोऽकर्मनिमित्त** इति । अन्ये तु मन्यन्ते ।

**सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वादिति** । हेतोर्गमकत्वं दर्शयितुं पृच्छति । **किमनित्यमिति** । उत्तरं **यस्य कदाचिद्भावः** । हेत्वर्थं विवृणोति उत्पत्तीति । यद् उत्पत्तिधर्मकमनुत्पन्नं नास्ति तद् उत्पन्नं चास्ति विनाशधर्मकं च विनष्टं नास्ति अविनष्टं चास्ति तस्मात्पूर्वापरयोः कालयोरभावान्मध्ये च भावात्सिद्धं कदाचिद्भावलक्षणमनित्यत्वमुत्पत्तिविनाशधर्मकत्वादित्यर्थः । भाष्यार्थमिदं पृच्छति । किं पुनरिति । उत्तरं **भौतिकं चेति** । अत्र तावत्स्वयं वार्तिककार उत्तरमाह । **सर्वमनित्यमिति** । **सूत्रस्य दृष्टान्तार्थत्वादिति** । अर्थशब्दो निमित्तवचनः दृष्टान्तनिमित्तत्वात् सूत्रस्य प्रतिज्ञासूत्रन्यासपरस्य । न दृष्टान्तं विना हेतुः प्रतिज्ञातार्थस्य गमको भवति इत्यर्थः । तदेव विभजते **सर्वमनित्यमिति** । निराकरणान्तरमाह **उत्पत्तिविनाशधर्मकत्वादिति चायमिति** । सिद्धान्त्येकदेशिमतमुपन्यस्य दूषयति ।

**नानित्यतानित्यत्वादिति** । परमसिद्धान्तं सूत्रेणाह अयं स्वसिध-ति । यद्योच्यते न वयं सर्वमनित्यं साधयामोऽपि तु यस्य यस्यानित्यता नामास्ति धर्मस्तत्सर्वमनित्यमिति । तत्र चाकाशादीनां नित्यत्वेऽपि नानित्यत्वप्रसक्तिरिति तदेतत्सिद्धसाधनेन दूषयति । **अनित्यताभावाच्च सर्वमनित्यमिति न दोष इति** । यस्य तु धर्मी स्यात्तद्योगादनित्यः स्यात्स एव कदाचिन्नास्तीत्यत आह । **अनित्यत्वं नाम धर्मः सोऽसति धर्मिण्यपि न भवतीति** । स्यादेतद् उत्पत्तिविनाशधर्मकत्वावगतानित्यतायोगाद् घटादि भवत्वनित्यं तेनैव दृष्टान्तेन सत्त्वादाकाशादयोऽपि भविष्यन्त्यनित्या इति देशयति । अथ पुनरिति । परिहरति । **तस्याप्युत्तरपदसिद्धौ तत्पदार्थस्य नित्यत्वस्य सिद्धेरिति** । अयमपरः एकान्तः ।

**सर्वं नित्यं कस्मात्पञ्चभूतनित्यत्वात्** । पञ्चभूतात्मकं खल्वेतद् गोघटादिकार्यमुपलभ्यते व्यपदिशन्ति हि मृद् घटो मृच्छरीरमिति । भूतानि च नित्यानि तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात् । तेन भूतानां गोघटादीनां नित्यतेति पूर्वः पक्षः । भूतेभ्यो भौतिकानि भिन्नानि न हि परमसूक्ष्माः परमाणवो गोघटादयः । परमाणुवत्तेषामतीन्द्रियत्वे सर्वा-

पक्षप्रसङ्गादित्युक्तं द्वितीयेऽध्याये । तस्माद्बुद्ध्याद्यवयविरुद्धधर्माध्यासयोगा-दन्ये भौतिका भूतेभ्यः । तथा च तेषामुत्पत्तिविनाशकारणोपलब्धेर्न नित्यत्वं भूतनित्यत्वेऽपीति सिद्धान्तमाह ।

**नोत्पत्तिविनाशकारणोपलब्धेरिति** । भूतसादृश्येन तादात्म्यं मन्यमानः पुनरपि पूर्वपक्षवाद्याह ।

**तल्लक्षणावरोधाद्**गोघटादीनां भूतनित्यत्वेन **नित्यत्वाप्रतिषेधः** । भूतसाम्यं गोघटादीनां भूतकार्यत्वेऽप्युपपद्यमानं न भूतात्मकत्वमवगमय-तीत्याशयवानाह ।

**नोत्पत्तितत्कारणोपलब्धेरिति** । अपि च यद्युत्पत्तिविनाशौ न भावानां वस्तुसन्तौ कथं प्रेक्षावतामभिमतोत्पत्तिकारणेऽभिमतविनाशकारणे च तदर्थिनां प्रवृत्तिरित्याह । **उत्पत्तिविनाशकारणेति** । अपि चाव्यापको हेतुरित्याह । **शब्दकर्मबुद्ध्यादीनां चाव्याप्तेः अव्यापकश्चानैकान्त उक्तः पक्षो हि सर्वं नित्यमिति** । तस्मिन्सत्त्वासत्त्वाभ्यामनैकान्तः नैकः सत्त्वासत्त्वलक्षणोऽन्तोऽस्येत्यनैकान्त इति । तदेतद्वार्तिककारो व्यत्य-स्यार्थदृष्ट्या **पक्षस्यान्तद्वयेऽवस्थानादिति** । हेतोरन्तद्वये सत्त्वासत्त्व-रूपे पक्षस्यावस्थानादिति योजना । अथैतं बाधके मिथ्यात्वकल्पनायामति-प्रसङ्ग इत्यमुमर्थं शङ्कानिराकरणाभ्यामाह **स्वप्नविषयेत्यादि** । भाष्योक्तमर्थ-मुक्त्वा स्वयं वार्तिककार आह । **सर्वस्य चेति** । **यावद्येन प्रतिपाद्यत** इति । प्रतिपादनेन क्रियत इत्यर्थः । शेषमतिरोहितार्थम् ।

तदेवं व्याख्याय मतमपास्य स्वायम्भुवानां मतमपाकर्तुमुपन्यस्यति । अपरे सर्वं नित्यमित्यन्यथा वर्णयन्ति । त्रिविधः खल्वयं धर्मिणः परिणामो धर्मलक्षणावस्थारूपः तद्यथा सुवर्णं धर्मि तस्य परिणामो वर्धमानरुचकादि धर्मस्य तु लक्षणपरिणामोऽनागतादि । यदा खल्वयं सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकं रचयति तदा वर्धमानको वर्तमानलक्षणं हित्वाऽतीतलक्षणमापद्यते रुचकस्त्वनागतलक्षणं हित्वा वर्तमानतामापद्यते वर्तमानतापन्न एव तु रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणामवान् भवति । नवपुराणावस्थाश्च वर्तमानलक्षणाश्रया लक्षणपरिणामाः सोऽयं त्रिविधः परिणामो धर्मिणः धर्मलक्षणावस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च ।

तथा च ते धर्म्मभेदान्नित्याः भेदाच्चोत्पत्तिविनाशविषयत्वमित्युभयमुपपन्नम् । ननु यद्युपजननापायधर्मकत्वं धर्मिणो हन्तोत्पत्तेः प्राक्तेषामसत्त्वाद् विनाशाच्चोर्द्ध्वमसत्त्वात्कथं सर्वनित्यत्वसिद्धिरित्यत आह । यदोपजायते तत्प्रागप्युपजननादस्ति । धर्मिरूपेणेति शेषः । तन्निवृत्तमप्यस्तीति । अत्रापि धर्मिरूपेणेति शेषः । निराकरोति ।

न व्यवस्थानुपपत्तेः (सू० ३३) ॥ उपजननापाययोः स्वरूपतः कालतो विशेषतः संबन्धितो ऽनागतत्वादिव्यवस्थानुपपत्तिरित्यर्थः । एतदुक्तं भवति न तावद्भेदाभेदौ परस्परपरीहारव्यवस्थितधर्मावेकत्र समाविशतः । तस्मादुपजननापायव्यवस्थायै भेदं धर्मलक्षणावस्थानां धर्मिण इच्छता तेषामनित्यत्वमभ्युपेतव्यं सांख्यतन्त्रकारोऽभ्युपगमेन तु नित्यत्वव्यवस्थापने वार्त्तिककार आह । यच्च निवर्त्तते तन्निवृत्तमप्यस्तीति ब्रुवाण इति । सुगमम् । अयमपरस्य एकान्तो बौद्धानां सर्वं पृथक् कस्माद् भावलक्षणपृथक्त्वात् । न रूपादिव्यतिरिक्तं द्रव्यं नाम किं चिदस्ति नाप्यवयवातिरिक्तः कश्चिदवयवीति सौत्रान्तिका वैभाषिकाश्च प्रतिपेदिरे तान्निराकरोति ।

नानेकलक्षणैरेकभावनिष्पत्तेः (सू० ३६) ॥ अनेकविधैर्लक्षणैः संवद्धस्यैकस्य भावस्य घटादेरवयविनो निष्पत्तेरिति । अथापीति । अपि चेत्यर्थः । अणुसमूहे चागृह्यमाण इति । परमसूक्ष्मत्वेनातीन्द्रियत्वादित्यर्थः । अथाप्येतदनूक्तमिति । अपि च भावलक्षणपृथक्त्वादिति हेतुमुक्त्वा बौद्धेन यद्वादेनदुक्तं किं तदुक्तमित्यत आह । नास्त्येको भावो यस्मात्समुदाय इति । एतदनूक्तं दूषयति । एकानुपपत्तेर्नास्त्येव समूहः । अनूक्तं विमृशति । नास्त्येको भावो यस्मात् समूहे भावशब्दप्रयोगः । अस्य दूषणं विमृशति । एकस्यानुपपत्तेरिति । एतत्प्रपञ्चयति एकसमुच्चयो हीति । नास्त्येको भाव इति यस्य भावस्यैकत्वप्रतिषेधः प्रतिज्ञायते समूहे भावशब्दप्रयोग इति ब्रुवता स एवाभ्यनुज्ञायते । ननु समूहो ऽभ्यनुज्ञायते न त्वेको भाव इत्यत आह । एकसमुच्चयो हि समूह इति । तदनेन प्रतिज्ञाया हेतोर्व्याघात उक्तः संप्रति प्रतिज्ञाया हेतुना व्याघात इत्याह समूहे भावशब्दप्रयोगादिति चेत् । वार्त्तिकम् । अस्य प्रयोग इति । कुम्भशब्दो ऽनेकविषय इति पारमार्थि-

कानेकविषयः काल्पनिक [illegible] कुम्भस्यैकत्वं न बाध्यते तथा चैकपदमित्येक-पदेन व्यभिचारः तस्यापि पारमार्थिकानेकविषयत्वादित्यर्थः । स्यादेतद् घटादिशब्देभ्यो रूपादीनां बुध्नादीनां च बहूनामवगमात् कथमेकार्थतेत्यत आह । **आधाराधेयभावे**ति । यदि नानार्थता ऽपि भवति घटादि-शब्दानां तथा ऽपि प्रत्येकमेकत्वं तदर्थानामशक्यापह्नवमिति न पूर्वपक्षिणो ऽभिमतसिद्धिरिति । उपेत्य सूच्यते **अनेकार्थत्वमप्यत्र न संभवतीति । समूहे भेदस्य चानवस्थानादि**ति । यदि समूहमात्रमेवं न त्वेकं कि-ञ्चिदस्ति तदा सति घटलक्षणे समूहे भिद्यमाने नाल्पतरत्वादिभेदः प्रती-येत घटादिकपालशर्कराचूर्णपरमाणूनां समूहत्वेनानवस्थायित्वादयं महा-नयमल्पो ऽल्पतर इति विभागो न स्यात् । तस्मादनेन तारतम्यं समर्थ्य-मानेन क्व चित् समूहनिवृत्तिर्वाच्या न चासावसमूहमेकमन्तरेणेत्येको ऽभ्यु-पेयतव्य इत्यर्थः । उक्तमर्थमविद्वान् शङ्कते । **अथ मन्यस** इति । **रूपा-दीनां समुदाय** इति **चत्वारि वा द्रव्याणी**ति वाद्यान्तरदर्शनभेदविव-क्षया द्रष्टव्यम् । उक्तार्थदर्शनेनोत्तरम् । **एतस्मिन् वै दर्शन** इति । **अथा-नन्तं समुदायं प्रतिपद्यस** इति निराकृतस्यापि पुनराशङ्का आगमविरो-धभावाद्बोद्धुम् । **एकानुपपत्तौ नानेकोपपत्तिरि**ति । यत्तदनेकमुक्तमेत-न्यायार्थमिति । शेषं भाष्यव्याख्यया व्याख्यातम् । सम्प्रति शून्यतावादिन-मुत्थापयति । अयमपर एकान्तः ।

**सर्वमभाव** इति प्रतिज्ञा । अत्र हेतुः **भावेष्वितरेतराभावसि-द्धेरि**ति । सर्वमिदं प्रमाणप्रमेयप्रमातृप्रमितिलक्षणमभावस्तुच्छम् । भावेष्वितरे-तराभावसिद्धेरिति । वार्त्तिककारो व्याचष्टे **असत्प्रत्ययभावप्रतिषेधाभ्यां भावशब्दसामानाधिकरण्यात्** । प्रमाणादयः खल्वमी परस्परानात्मक-तया असदिति प्रत्ययस्य नञश्च गोचरा इत्यनुभूयन्ते अतस्तद्वाचिना शब्देन तत्सामानाधिकरण्यं ततः प्रमाणादयो ऽसन्तः अनुत्पन्नप्रध्वस्तघट-वत् । अपि चामी भावा नित्या अनित्या वा नित्यत्वे सर्वेषामर्थक्रियारहित-त्वादसत्त्वम् । न हि नित्यं क्व चित् कार्यमुपयुज्यते क्रमाक्रमानुपपत्तेरित्युक्तम् । अनित्यत्वे तु विनाशस्वभावाश्चेद् द्वितीयादिक्षणवद् प्रथमक्षणे ऽपि न स्युः । सत्त्वे वा नामी विनाशस्वभावाः । अतत्स्वभावत्वे वा क्षणान्तरे

ऽपि न विनश्येयुः । नो खलु नीलं स्वकारणादुपजातं चातु कारणशतैरपि यस्य पीतं कर्तुमिति विनाशस्वभावकल्पनमकामेनापि अनित्यानामेषितव्यम् । तस्माद्भावानां शून्यतेव पारमार्थिकी कल्पनया त्ववस्तुसत्या सन्तः स्वभावमासन्नाइति सूक्तमुत्पश्यामः । **तथा च सर्वे भावा इति ।** सर्वे भावशब्दा इत्यर्थः । प्रयोगस्तु सर्वे भावशब्दा असद्विषयाः असत्प्रत्ययप्रतिषेधाभ्यां सामानाधिकरण्यात् । अनुत्पन्नप्रध्वस्तघटशब्दवत् । अथ तावदुत्सूत्रं भाष्योक्तं दूषणं वार्त्तिककार आह । **प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्च व्याघात** इति । अभिन्नविभक्तिकत्वमभिन्नार्थकविभक्तिकत्वं न त्वभिन्नविभक्तिकत्वमेव भिन्नविभक्तिकानामपि सामानाधिकरण्यात् । यथा चैत्रः पठतीति । यथा च ■ त्वा तृणाय मन्यइति । **नासति तत्प्रत्यये न भवितुमिति ।** न ह्यत्यन्तासन्निरुपाख्यं सर्वमिति वा भाव इति वा ऽभिधानस्य गोचरः उपपादितं हि द्वितीयसूत्रेण यथा ऽसद्वा ऽनिर्वचनीयं वा न ख्यातिगोचरो ऽपि तु सदेव सदन्तरात्मना तथा च कुतो ऽत्यन्तासतः कल्पनागोचरत्वमपीति । शेषं भाष्यइति । प्रतिज्ञाहेतोर्व्याघातो भाष्ये प्रपञ्चित इति । उत्सूत्रमुक्त्वा भाष्यकारः सैव दूषणं वक्तुमाह । **सूत्रेण चाभिसंबन्धो** दूषणस्य ।

**न स्वभावसिद्धेर्भावानाम् । ( सू. ३८ ) ॥** सर्वमभाव इति नास्ति । कस्मात्स्वभावसिद्धेर्भावानां स्वभावो धर्मो द्रव्यादीनां सदादिः । अथ वा स्वभावः स्वरूपं भावानां येनामी भावाः स्वभावाद्व्यावर्त्तन्ते । यद्वा भवन्तीति प्रत्ययस्य गव्यश्वात्मनेति विशेषणात् । अगौरित्यस्य गां परिहृत्याश्वादिभिः सम्बन्धाद्गोभावसिद्धेरश्वादिष्वपीति स्वभावसिद्धेर्भावानां नाभाव इत्यर्थः । न स्वभावसिद्धेरिति सूत्रमनूद्य वार्त्तिककारः स्वरूपमात्रेण व्याख्याय प्रश्नपूर्वकं तात्पर्यमस्य दर्शय■ति पूर्वसूत्रस्येति । **कश्च स्वभाव** इत्यादिना **सिद्धो भाव** इत्यन्तेन । सूत्रस्य व्याख्यानत्रयं भाष्यकारीयं वार्त्तिककारो दर्शयति । **सामान्यो धर्मः समानो** नित्यत्वादिरित्यर्थः । प्रश्नपूर्वकमसत्प्रत्ययप्रतिषेधसामानाधिकरण्यं भावस्योपपादयति । कथं तर्हीति । असच्छब्दः सत्त्वमात्रविशेषणं सदेवाभिधत्ते एवमसत्प्रत्ययो ऽप्यभावविशेषणं सदेवालम्बते यथा शुक्लशब्दः शुक्लगुणविशिष्टे पटे वर्त्तते तथा चासत्प्रत्य-

याभिधानयोरुपपन्न भावशब्देन पदेन सामानाधिकरण्यमित्यर्थः । भावश्च कश्चिन्नित्यः कश्चिदनित्यः तत्र नित्यस्यार्थक्रियाकारित्वमुपपादितं क्षणभङ्गभङ्गप्रसङ्गे । अनित्यो ऽपि न विनाशस्वभावो भावः किं तु स्वकारणादयं सत्स्वभावो जातः कारणान्तरात्तु विनश्यति । यदुक्तं नीलं शक्यं न पीतं कर्तुमिति । तत्र ब्रूमः शक्यं एव नीलः घटः पीतः कर्तुम् श्यामश्यामो घटो वह्निसंयोगाद्रक्तः । अथ नीलत्वं न पीतत्वं शक्यं कर्तुं ननु भावो ऽपि नाभावः कर्तुं शक्य इति । यथैव कुम्भाधिकरणे श्यामरक्तत्वे पर्यायेण भवतः एवं कपालाधिकरणौ कुम्भभावाभावावित्यदोषः । स्वभावसिद्धेरिति यदुक्तं तदाक्षिपति शून्यतावादी ।

न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ( सू. ३९ ) ॥ सर्वत्र हि भावा भिन्नस्वभावा भिन्नत्वं च तेषामन्यापेक्षम् । तथा हि नीलं भिन्नं पीतापेक्षया न तु स्वभावत एव ह्रस्वत्वदीर्घत्वपरत्वापरत्वपितापुत्रत्वादयः परस्परापेक्षा द्रष्टव्याः । यच्च परापेक्षं तन्न स्वाभाविकं यथा जपाकुसुमापेक्षं स्फटिकस्य रक्तत्वमित्याक्षेपार्थः । समाधत्ते ।

व्याहतत्वादयुक्तम् ॥ ( सू. ४० ॥ तद्व्याचष्टे यदीति । ननु यद्यनेन क्रमेणोभयाभावो भवति भवतु सिद्धमेव नः समीहितमित्यत आह । अपेक्षायामनपेक्षायां चेति । परिमाणभेदो हि दीर्घत्वं ह्रस्वत्वं च स च भावानामौत्पत्तिकः केवलं तस्यातिशयानतिशयौ परस्परग्रहणाधीनौ । तथा ह्यीषत्प्रवृद्धेर्वेणुयष्टितो ह्रस्वत्वं पूर्वसंख्यायोगिहस्तपरिमितत्वमनतिशयः वेणुयष्टेर्दीर्घत्वमतिशयः परसंख्यायोगिहस्तपरिमितत्वं तच्चेदं प्रतियोगिनिरूपणाधीननिरूपणम् । न तु प्रतियोग्यधीनोत्पत्तीति न वस्तुधर्मो ऽप्य परापेक्ष । भिन्नत्वं च भेदः स च वस्तुविशेषणं नोत्पत्तौ वस्त्वन्तरमपेक्षते किं तु स्वनिरूपणे । एवं पितृत्वमपि व्यवस्थितः जनकव्यक्तिरेव सा जन्यनिरूपणाधीननिरूपणा न तु तदधीनोत्पत्ति । विपश्चित चैतदस्माभिर्ब्रह्मतत्त्वपरीक्षायाम् । परत्वापरत्वादयस्त्वपेक्षाबुद्धिनिमित्ततया परापेक्षोत्पत्तिका अपि लोकबाधा वहन्तो न शक्या प्रत्याख्यातुम् । न चैतावता तदधिकरणं भावो न निरपेक्ष इति सर्वमवदातम् । स्यादेतत् । अपेक्षामात्रमेव दीर्घत्वादयो भविष्यन्ति कृतमेषां वस्तुत्वभावेनेत्यत आह ।

**स्वभावसिद्धौ चासत्यामिति** । अपेक्षासामर्थ्यमपेक्षाप्रयोजनयोगः । स्वयं वार्तिककारो दूषणान्याह **सर्वथा चायं व्याहत** इति । निगदव्याख्यातम् । उत्तरसूत्रावतारणं भाष्यम् । **अथैते संख्यैकान्तवादाः** संख्या एकान्तो येषु वादेषु ते तथोक्ताः । अथ शून्यतावादानन्तरं ते परीक्ष्यन्त इत्यर्थः । तत्र प्रथमं ब्रह्माद्वैतमुत्थापयति । **सर्वमेकं** कुतः **सदविशेषात्** । इदमप्याकूतम् । न तावदयं नामरूपप्रपञ्चः प्रकाशाद्भिन्नः सन् प्रकाशितुमर्हति । जडस्य स्वयंप्रकाशासंभवात् । न च प्रकाशयोगात्प्रकाशत इति युक्तम् । न वस्त्वन्तरेण प्रकाशेनास्य कश्चिद्योगः संभवति । विषयविषयिभावः संबन्ध इति चेन्न । तदकिंचित्करस्य विषयित्वासंभवात् । न चार्थे ज्ञानं फलं जनयतीति सांप्रतम् । अतीतानागतयोरर्थयोस्तदसंभवात् । न च न तयोर्विषयभावः । तस्माज्ज्ञानाद्भिन्नस्य नामरूपप्रपञ्चस्य न प्रकाशसंभव इति ज्ञानस्यैवायं विवर्त इति युक्तमुत्पश्यामः । न च प्रकाशात्मानो घटादय उदयव्ययधर्माणः परस्परव्यावृत्ताः सन्त्विति सांप्रतम् । तद्व्यावृत्तिग्रहे प्रमाणाभावात् । स हि यतो व्यावर्तते तदुभयग्रहे गृह्यते न च विज्ञानानि विलक्षणानि स्वरूपमात्रावस्थितानि परस्परवार्तानभिज्ञानि ज्ञानान्तरमेवि ग्रहीतुमुत्सहन्ते प्रागेव स्वस्माद्व्यावर्तयितुम् । न च निषेध्यनिषेधाधिकरणग्रहणकारणको व्यावृत्तिग्रहः स्वकारणेन समसमयोत्पादो भवितुमर्हति । तादृशोः सव्येतरविषाणवत्कार्यकारणभावाभावात् । न चैकं विज्ञानं क्षणिकं निषेध्यनिषेधाधिकरणे गृहीत्वा पश्चान्निषेधं गृह्णातीति युक्तम् । क्षणिकस्याक्रमस्य क्रमवद्व्यापारायोगात् । न चैकं विज्ञानं निषेध्यनिषेधाधिकरणे गृह्णाति अथ ज्ञानान्तरं निषेधमिति युक्तम् । तेष्वगृहीतेऽपि तस्मिन्नेतस्य निषेधज्ञानाप्रसङ्गात् । न च ज्ञानस्वरूपग्रह एवास्य निषेधग्रह इति सांप्रतम् । एवं हि स भवेदपि स्वरूपादन्यव्यावृत्त्योरेकत्वं भवेत् । तत्र व्यावृत्तिरभावो वा भावो भावस्वभावो वा व्यावृत्तिः । तत्र पूर्वस्मिन्कल्पे व्यावृत्तेस्तुच्छत्वात्तत्स्वभावा भावास्तुच्छाः स्युः । तथा च पर्यायान्तरेण शून्यवादप्रसङ्गः । उत्तरस्मिंस्तु कल्पे विधिरूपो भाव एव व्यावृत्तिरिति विधिरूपतया च ते न व्यावर्तन्त इति न व्यावृत्ता भावाः परस्परं परमार्थतः तदिदमुक्तं सदविशेषादिति । अनाद्यनिर्वचनीयाविद्या-

निबन्धनं तु भावानां भेदं न व्यासेधामः । न च ज्ञातुरपि ज्ञानेन्द्रियं ग्राहकमस्ति प्रमाणमुखादेव विशेषात् । तस्मान्न ज्ञेयानां परस्परतश्च ज्ञानाच्च भेदः । नापि ज्ञातुर्ज्ञानादस्ति भेदः नापि ज्ञानानामन्योन्यस्य तस्मात्प्रकाश एव स्वयं प्रकाशः कूटस्थनित्य आनन्दघनोऽनाद्यविद्योपदर्शितविविधविचित्रनामरूपप्रपञ्चो ब्रह्मेत्यद्वैतसिद्धिः । अत एव श्रुतयो भवन्ति । एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति इत्येवमादिकाः । तदेवमेकान्तिकमेकत्वमुपन्यस्य द्वित्वमेकान्तिकमाह सर्वं द्वेधा कुतः **नित्यानित्यभेदात्** । न हि नित्यानित्याभ्यामन्यो राशिरस्ति यमाश्रित्य पदार्थोऽस्तीत्यादिके व्यवतिष्ठेरन्निति । मतान्तरमाह **सर्वं त्रेधा** तदेव दर्शयति । **ज्ञाता ज्ञेयं ज्ञानमिति** । ज्ञातुरपि ज्ञायमानत्वात् ज्ञेयान्नातिरिच्यत इति भावः । मतान्तरमाह । **सर्वं चतुर्धा** दर्शयति । **प्रमाता प्रमाणं प्रमेयं प्रमितिरिति** । यदि प्रमितिर्नाम तत्त्वं प्रमाणादिभिन्नं नाभ्युपेयते प्रमायाः प्रधानक्रियाया अभावात्कथं प्रमाणादयः । कथं च प्रधानक्रियामन्तरेणैकवाक्यता स्यात् कारकवैचित्र्यं वा । प्रमायाः फलस्थावस्थाया उपरि प्रमेयव्यपदेशं न वारयामः । न चैतावता तत्त्वान्तरं न भवति । एवं यथासंभवमन्येऽपीति । प्रकृतिपुरुषाविति वा पञ्चस्कन्धा इति वा पशुपाशतदुच्छेदेश्वरा इति वेत्यादयः । तत्र परीक्षां पर्येकान्तानिराकरणरूपाणां दर्शयति सूत्रेण ।

**संख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम् (सू. ४१)॥**

अनयावयवेन सर्वं चैदेकं द्वेधा त्रेधा चतुर्धा चेति प्रतिज्ञार्थः, तदतिरिक्तं साधनं वाच्यम् । न हि साध्यमेव साधनं भवति । तथा च साधनस्य तदतिरेकान्न संख्यैकान्तसिद्धिः । न च किंचिदपि स्वसंवेद्यमस्ति ज्ञानप्रदीपादीनामपि परसंवेद्यत्वात् । यथा च ज्ञानातिरिक्तोऽर्थो विषयस्तथा विज्ञानवादनिराकरणावसरे वक्ष्यते । न च विज्ञानादर्थस्य भेदोऽप्रत्यक्षः । तथा हि नीलमुत्पलमवस्त्यनहङ्कारास्पदमहमित्येतादृक्रूपं नील प्रत्यात्ममनुभवगोचरः एवं नीलादीनामपि परस्परम् । अन्यथा घटमानयेति देशितो नयने निमील्य यायात् याया इति देशिते तोयमाहरेत् । कस्य चित् कुतश्चित्कथं चिद्विवेचकाभावात् । न चानिर्वचनीयानाद्यविद्यानिबन्धनोऽयं

भेदव्यवहार इति सांप्रतम् । अनिर्वचनीयख्यातेः पूर्वमेव निराकृतत्वात् । तस्मात्सर्वजनसंवेदनसिद्धोऽयं भेदप्रत्ययो न कारणमुखनिरीक्षणेन युक्तो निराकर्तुम् । अपि तु स्वपुष्कलात्कारणाद्भेदप्रत्ययलक्षणात्तादृशं तत्कारणं कल्पनीयं यादृशेन तत्कारणेन प्रपञ्चप्रत्ययोऽप्रत्यूहमुत्पद्येत । तच्च प्रत्यक्षमेव । तथा हि तन्नीलं परिच्छिन्दत्पीतादिभ्योऽस्य भेदं परिच्छिनत्ति संयुक्तविशेषणतालक्षणादिन्द्रियार्थसन्निकर्षात् । नीलं हि नीलमित्यनुभवन् पीतादिकं च पीतादिकमित्यनुभवन्स्मरन्वा शक्नोति निषेध्यनिषेधाधिकरणतया समाकलयितुं रूपमात्रेणागृहीतयस्यापभेदमपि । न हि तत्र भेदेन प्रथमइत्यभेदेन प्रथेत । येनानयोर्नीलपीतयोर्गृहीतस्वरूपयोरव्यवधिमत्त्वं न स्यात् । तथा च तौ गृहीत्वा प्रत्यक्षेण शक्यो ऽनयोर्भेदो ग्रहीतुमित्यसांप्रतमेतत् । अन्योन्यसंश्रयाद्भेदो न प्रमाणान्तरसाधनः । तस्मिन्निदं नायमयमिति भेदं विना न धीः । एतेन प्रमातुरपि प्रमाणा भेदो व्याख्यातः । प्रमातारश्चानेकविधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धकाणादिकोविदबालसंसारिमुक्तविभागोपपत्तेश्च भेदवन्तोऽनुमीयन्ते । एकस्मिन्नर्थे विरुद्धधर्मसंसर्गासंभवात् । कल्पनया कथं चित्संभाव्यमानोऽप्ययं गोमयपायसीयन्यायमावहति । तदेवं प्रत्यक्षविरोधादनुपपन्नार्थाः सुनय एकमेवाद्वितीयमित्याद्याः प्रथमां श्रुतिमुल्लङ्घ्य जघन्यामुपलम्यन्ते यजमानः प्रस्तर आदित्यो वै यूप इत्यादिवदिति । यदाह भगवान् जैमिनिः । गुणवादस्त्विति । तत्सिद्धिरिति चेति । तस्मादद्वैतमिति । साध्यात्साधनस्य भेदेन च संख्यान्तरैकान्ता अप्यपकृष्टार्थाः* इत्युक्तम् । अत्र पूर्वपक्षवाद्याह ॥

न कारणावयवभावात् (सू. ४२) ॥ तद्व्याचष्टे कारणस्य साध्यावयवभावात् । एकस्य द्व्यादीनां वा कश्चिदेकदेशः साधनं तथा च न संख्यान्तरं न ■ साधनभाव इत्यर्थः । निराकरोति ॥

निरवयवत्वादहेतुः (सू. ४३) ॥ अवयवभावादिति यदि साध्यस्य कश्चिदवयवो भवेत्त सर्वैकान्तः स्यादिति सर्वमेकमित्येतस्मिन्प्रतिज्ञार्थे न किं चिदपवृज्यते व्यावर्तेत यतस्तत्साधनं न स्यादित्यर्थः । अथ कस्मान्न साध्यमेव हेतुरित्यत आह । आत्मनि चेति । चो हेतौ अपि

* अपाकृता इति ३ । ३ पु० पा० ।

चैते संख्यैकान्ताः प्रत्यक्षादिप्रमाणविरोधान्मिथ्यावादा इत्याह । ते ख-
ल्विमे संख्यैकान्ता इति । खलुशब्दः समुच्चये यक्षकोटरपाल्यादिविशे-
षकारितो यो ऽर्थभेदः स्थाणुपुरुषादिः तत्प्रत्याख्यानेनेत्यर्थः । अथ विशेष-
कारितार्थभेदाभ्यनुज्ञानेन वर्तते तथा ऽप्यैकान्तत्वं जहाति एकत्वादिसंख्याया
अनैकान्तिकत्वमित्यर्थः । अथ सामान्यकारित इति संख्यामात्रमङ्गीक्रियते
न पुनरस्या ऐकान्तिकत्वमित्यर्थः । तदस्माकमभिमतमेवेत्याह तथा ऽपि
न किं चिद्बाध्यत इति । ये ऽप्याहुः सत्तासामान्यमेव तत्त्वं भेदास्
काल्पनिका इति तान् प्रत्याह । न च भेदमन्तरेणेति । यदाहुः निर्विशेषं
न सामान्यं भवेच्छशविषाणवदिति । स्यादेतत् प्रेत्यभावपरीक्षायां क प्रस्ता-
वसरो यदेते एकान्तवादाः परीक्ष्यन्त इत्यत आह । सदिति । अद्वैतादि-
ष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेदपि तु काल्पनिकः न केवलं प्रेत्य-
भावो ऽपि तु षोडशापि पदार्थाः । तस्मादेतेषां प्रसक्तवचनं तस्य प्रविवे-
कार्थं चैषप्रविवेकेन तस्याप्रविवेक इति तदर्थमेते परीक्षिता इति । तदने-
न प्रबन्धेन प्रेत्यभावः परीक्षितः । यथोद्देशक्रमानुरोधात्फलमिदानीं परीक्ष्य-
ते । तत्राग्निहोत्रादीनां फलमनन्तरभावि कालान्तरभावि वेति संशयः ।
एतदुक्तं भवति । कर्मानन्तरं दुःखं च लोकपङ्क्त्यादि चोपलभ्यते प्रवदन्ति हि
लौकिका धार्मिको ऽयं साधुतम इति तत्किमेतावदेवास्य फलमस्तु यथा-
मुष्मिकं स्वर्गादीति । किं प्राप्तं स्वर्गादिफलत्वे कर्मणः स्वरूपेणाकारक-
त्वात् चिरनिवृत्ते तस्मिंस्तदुत्पत्तेः अपूर्वकल्पनायां च प्रधानाङ्गापूर्वाणि
भूयांसि कल्पनीयानि न च तान्युत्पन्नमात्राणि जनयन्ति फलमिति तत्स-
हकार्यन्तराणि कल्पनीयानीत्यदृष्टकल्पनागौरवात् तदनन्तरदृष्टफलावाप्त्या
नामुष्मिकं फलं स्वर्गादि अपि त्वनन्तरदृश्यमानमेव । तत्रापि दुःख-
फलत्वे उपदेशव्याघातात् लोकपङ्क्तिलाभख्यात्यादिकमेव फलं तच्च सुखहे-
तुतया कथं चित्स्वर्गादिपदेनो*च्यते । दृष्टो हि सुखहेतौ स्वर्गपदप्रयोगो लोके
यथा चन्दनं स्वर्गः सूक्ष्माणि वासांसि स्वर्ग इति प्राप्तम् । वयं प्राप्ते ब्रूमः ।
स्वर्गपदस्य तावदर्थवादतो यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति सुखं प्रति वाचकत्वमवधा-

---

* स्वर्गादिकमर्थेनेति त ३ ३ पु॰ पा॰ ।

रितम् । न च तद्वाचकत्वेनैव चन्दनादौ तत्प्रयोगोपपत्तावनेकार्थत्वकल्पना युक्ता । यदाहुरन्याय्यश्चानेकार्थत्वमिति । तस्मान्मुख्यो ऽयं स्वर्गशब्द उक्तभेदे सुखे । तथा च स्वर्गकाम इत्यत्र मुख्यार्थसंभवे नोपचरितार्थता युक्ता । न चानेकादृष्टकल्पनाभयान्मुख्यार्थपरित्यागो न्याय्यः प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तेः । यथा ऽऽहुः श्रुतसिद्ध्यर्थमश्रुतोपलब्धौ यत्नवता भवितव्यं न तु श्रुतवैचित्र्यमादरणीयमिति । तथा प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि । न चानन्तरदृश्यमानं लोकपङ्क्त्यादि होमाद्यनुष्ठानफलमपि तु तदुपलम्भफलम् । अदाम्भिकानां प्रच्छन्नमनुतिष्ठतामपि लोकपङ्क्त्यादेरभावात् । तस्मात्सूक्तं न सद्यः कालान्तरोपभोग्यत्वादिति भाष्यम् । तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यत इति । नैव पुरुषसंस्कारः स्नानादिजन्य इव बोद्धव्यो ऽपि तु पुरुषधर्मतामात्रेण संस्कार इत्युच्यते परमार्थतस्त्वयं धर्मः पुरुषाश्रयो ऽपि कर्मणा फले जनयितव्ये तस्यावान्तरव्यापार इति । वार्तिकं सद्यस्तापादिफलेति । अतद्गुणसंविज्ञानो ऽयं बहुव्रीहिस्तापादीति । तेन लोकपङ्क्त्यादिकमुच्यते स्वर्गफलं श्रूयते इत्युक्तम् । स्वर्गकाम इति स्वर्गस्य पुरुषविशेषणत्वेन प्रधानादसाध्यत्वादत आह । देशितया च क्रियया नानर्थिकया भवितव्यम् । आप्तोपदेशः अवश्यमुपदेश्यस्य कर्मणो ऽभिमतोपायतामाह तच्च कर्मणो ऽभिमतावेवाया पुरुषविशेषणस्याप्यपेक्षितत्वात्साध्यत्वमिति सिद्धम् । एवं च लोकपङ्क्त्यादिरग्निहोत्राद्यनुष्ठानसाध्यो भवेद् यदि तत्कामस्य स्वर्गकामस्येवाग्निहोत्राद्यनुष्ठानं देश्येत न चैतदस्तीत्याह न च तापादिकाम इति । लोकपङ्क्त्यादिकाम इत्यर्थः । शेषमतिरोहितार्थम् । इदमिदानीं चिन्त्यते किमेतत्फलमुत्पत्तेः प्रागसद्वा सद्वा सदसद्वा ऽनुभयं वेति । अत्र समस्तपक्षाक्षेपेण फलाभावमभिधित्सुः पूर्वपक्षयति । तदिदं फलं निष्पत्तेः प्राक् ।

नासन्न सन्न सदसत् सदसत् कस्मान्न भवतीत्यत आह सदसतोर्वैधर्म्यात् परस्परविरुद्धधर्मत्वाद् धर्मः स्वभावः विरोधादित्यर्थः । अथानुभयं कस्मान्न भवतीत्यत आह । नाप्युभयविपरीतमिति । सिद्धान्त्याह ।

प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा । ननु नासदुत्पद्यते न सन्निरुध्यत इत्याचक्षते सांख्याः तत्कथमेतदित्यत आह ।

उत्पादव्ययदर्शनात् (सू. ४९) ॥ यथा नित्यस्वरूपापरिवर्ति-
शक्तेर्नोत्पादो न च व्यय एवं फलस्यापि नित्यस्य तौ न स्यातामित्यर्थः ।
न हि सत्पद्यतइति । सत्कार्यपक्षइत्यर्थः । न किं चिज्जायतइति । न
प्रतिज्ञावाक्यात्किं चिनत्वज्ञानं संभवति । किं चिन्न संदेहादि न विनश्यतीति
अज्ञानतिरोभावः संशयविपर्ययतिरोभावः । कारणस्य हि प्रधानस्य लक्षणं
महान् लक्ष्यते हि महता प्रधानमिति । एवं तस्याप्यहङ्कारस्तस्य पुष्टिः स्थून-
तेत्यर्थः । परत्वाद्भवतीति केवलकारणावस्थायाः परत्वादिति । यत्तोक्तमुपा-
दाननियमादिति । तत्र यदि पुरुषस्योपादाननियमः पटार्थान् तन्तूनेवो-
पादत्ते न वीरणकटार्थी वीरणमिति ततस्तदुपादानानां तत्र तत्र कार्ये साम-
र्थ्यपरिज्ञानात् तच्च सामर्थ्यमानुमानिकं तदिदमुच्यते ।

बुद्धिसिद्धं तु तदसदिति । तदसद्भावि कार्यमनेनैव कारणेन
जन्यते नान्येनेत्यनुमानाद् बुद्धिसिद्धमेवेत्यर्थः । अथासत्कार्यपक्षे तन्तव
एव पटस्योपादानं न वीरणादीत्ययं नियमो न स्यादिति शूये तदयुक्तम् ।
असत्त्वाविशेषे ऽपि स्वकारणादुत्पन्नं किं चिदेव किं चित्कार्यं जनयितुं स-
मर्थं नान्यदित्ययं स्वभावविशेषादुपपद्यतइति । अपि च सत्कार्यपक्षे प्रधा-
नोपादानत्वाद्विश्वस्य तस्य चाभेदात्कारणात्मकत्वाच्च कार्यजातस्य सर्वं
सर्वात्मकमितीदमिद नेदमिदानीं नेदमिति नियमो न स्यात् कस्य
चित्कुतश्चिद्विवेकहेतोरभावात् । तस्मादस्ति रासभे ऽपि विषाणमिति
तत्र तस्यासत्त्वं ग्राह्यः स्वसिद्धान्तं बाधतइत्याह । असत्त्वाच्च खरवि-
षाणं नोत्पद्यतइति ग्रन्थाय इति । सत्त्वे चासत्त्वे च समाने यस्य कार-
णत्वमस्ति तदुत्पद्यत इति गुडजिह्विका । परमार्थेनसत्त्वसत्त्वे कारणसामर्थ्य-
नियमादुत्पत्तिनियमः कल्प्यते सर्वात्मना सर्वेष्य सत्त्वे तु न नियमहेतुरस्ती-
त्युक्तप्रायम् । देशयति अथासत्कार्ये किं प्रमाणं न ह्यनुमानम-
स्मिन्नर्थे प्रमाणं भवितुमर्हति व्याप्त्यसिद्धेः । नापि प्रत्यक्षं तेनाप्यसतः
स्वातन्त्र्येणानिरूपणादिति भावः । विदितमभिप्राय उत्तरमाह नासत्त्वे न
सत्त्वे ऽनुमानमस्ति । यथा ऽस्माकमाश्रयासिद्धिदोषादसत्त्वे कार्यस्य नानु-
मानम् । एवं भवते ऽपि कार्यस्य सत्त्वे नानुमानमाश्रयासिद्धेरेव । कुतस्तर्ह्यनु-
मानमित्यत आह धर्मिण्यविप्रतिपत्तेरनुमानमस्तीति योजना । तथा च:

स्याश्रयो ऽस्य सिद्धातीत्यर्थः । पुनः पृच्छति क्वेति । यदि धर्मिण्यविप्रति-
पत्तिः क्व तर्हि विवादः । उत्तरं यद्धर्मयोरिति । धर्म्यधिकरणात् सत्कार्यवा-
दिनामेव यद्धर्मान्विभजते तान्प्रतीति । तन्तुमात्रं पट इति तन्तुभ्यो ऽभि-
न्न इत्यर्थः । कार्यात्मनेति । कार्यं कारणाद्भिन्नमभिन्नमित्यर्थः । असत्का-
र्यपक्षस्तु स्वाभिमतः स्फुटत्वादवान्तरप्रतिबन्ध्याभावाच्च नोपन्यस्तः । उप-
पादित इति द्वितीयाध्याये । प्रागुपलब्धिकारणादिति । कारणव्यापारात्
प्रागित्यर्थः । संस्थानविशेषशून्यतामात्रविवक्षया तुर्यादिदृष्टान्तो न तु प्राग-
भावो विवक्षितः । शक्तिविशेषावस्थिता इति । कारणव्यापारात् प्रागिति
शेषः । अत्र सिद्धसाधनं वयमपि ब्रूमहे स्वव्यापारात्पटोत्पत्तिनिमित्तात्प्राक्
तन्तवः शक्तिविशेषावच्छिन्ना एवेति परेषां सत्कार्यसाधनमुपन्यस्यति । विद्य-
मानाभिव्यक्त्यर्थास्तन्तवस्तदर्थिना नियमेनोपादानात् खनित्रादि-
वत् । यथा हि खनित्रं विद्यमानमेवोदकं मृदपनयनेन व्यनक्तीति । तदेतद्
दूषयति । विद्यमानस्याभिव्यक्तिरसतीति व्यक्तिवत्कार्ये ऽपि प्रसङ्गः । यथा
व्यक्तेर्व्यक्त्या यत्नोत्पादस्तथा कार्यस्याप्यनन्तयत्नोत्पाद इत्यर्थः । खनित्रा-
दिवदिति दृष्टान्तः साध्यविकल इत्याह यदपीति । सा ऽप्राप्तिः कुतो भव-
तीति वक्तव्यमिति । प्राप्तिः खलु संयोगः स च गुणः गुणश्च द्रव्यविना-
शाद्वा नश्येद् विरोधिगुणान्तराद्वा । तत्र तावदाश्रयद्रव्यमात्रिममाद्यं वोदकं
न विनष्टं येन तयोः संयोगो विनश्येत् ततस्तद्विरोधिगुणान्तरोत्पादो वक्तव्यः
स एव च संयोगविरोधी गुणो विभाग इत्युच्यत इत्यर्थः । प्राप्तेरभावो ऽप्रा-
प्तिरिति पक्षं दूषयित्वा पर्युदासपक्षमाशङ्क्य दूषयति अथ प्राप्तेरिति । पुनः
शङ्कते अथ भिन्नदेशोत्पत्तिमिति । न च वयं संयोगं विभागं वा गुणमु-
पेमः । किं तु भिन्नदेशोत्पन्नमेव द्रव्यं विभागो निरन्तरोत्पन्नमेव संयोग
इत्यर्थः । निराकरोति भिन्नदेश इति । विशेषणोपादानाच्च भिन्नदेशोत्पत्ति-
र्विभागः कस्माद् ऽउत्पन्ने ऽउत्पन्नमिति भिन्नदेशतया भिन्नमिति विशेषणं हि
स्वानुरक्तं प्रत्ययं विशेष्ये जनयति न त्वन्यानुरक्तम् । न खलु नीलं विशेष-
णमुत्पले रक्तप्रत्ययं जनयत्यभ्रान्तस्येत्यर्थः । अपि च यथाभङ्ग भावानां व्या-
वेधद्भिरस्माभिर्भिन्नदेशोत्पत्तेः प्रतिषेधाच्च भिन्नदेशोत्पत्तिर्विभागः । शङ्कते
क्षणिकत्वाद्विभागस्येति । उत्पद्य हीन्द्रियसन्निकर्षाद्विभागेन स्वविषयं

ज्ञानं जनयितव्यम् । न चैतावन्तं कालमवावस्ति क्षणिकत्वेनोत्पन्नापवर्गि-त्वादित्यर्थः । निराकरोति **न सामान्याभिव्यक्तीति** । एतद्विभजते । **पूर्वं तावदुत्पन्नो विभागः सामान्यं व्यनक्तीति** । स्वकारणसमवायः सत्तासमवायो वा उत्पत्तिः । तद्विशिष्ट उत्पन्न इत्युच्यते । येषां सामान्य-ज्ञपुरःसरं विशेषज्ञानं सम्मतं न सामान्यं व्यनक्ति तदुत्तरकालं च स्वप्रत्ययं जनयतीत्युक्तम् । एतदुक्तं भवति न वयं बौद्धा इव पूर्वापरकालाभावा-वच्छिन्नलक्षणां क्षणिकतां विभागादीनामाचक्ष्महे किं त्वाशुतरविनाशलक्षणां सा च द्वित्रादिक्षणस्थायिनां चिरस्थायिभ्यो घटादिभ्यो व्यावृत्तात्मा शक्या वक्तुमिति । देहाद्यतिरिक्तमात्मानं नित्यं पारलौकिकमभवन्तं मन्यमान आह ।

**आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः (सू. ५१)॥** मूल-सेकफलोत्पादयोरेकवृक्षाश्रयत्वम् । कर्मणस्तु होमादेराश्रयः शरीरम् । न चामुष्मिकस्य स्वर्गादेः शरीरमाश्रयः तस्मिन्नष्टेऽस्य भावात् । तस्मा-दाश्रयव्यतिरेकात्स्वर्गादेर्वृक्षफलोत्पत्तिवदित्ययं दृष्टान्तः स्वर्गफलत्वे होम-स्याहेतुरित्यर्थः । अस्त्यात्मा स्वर्गोपभोगसमर्थः शरीरादिव्यतिरिक्तः फलो-त्युपपादितमित्याशयवानाह ।

**प्रीतेरात्माश्रयत्वादप्रतिषेधः (सू. ५२)॥** अस्तु स्वर्गाद्यात्मा-श्रयं तथाऽप्यव्यापको हेतुः पुत्रादिफलेभ्यो निवृत्तेरिति । दूषयति ।

**न पुत्रपशुस्त्रीपरिच्छेदहिरण्यान्नादिफलनिर्देशात् (सू. ५३)॥** परिहरति ।

**तत्संबन्धात्फलनिष्पत्तेस्तेषु फलवदुपचारः (सू. ५४)॥** स्वर्गोऽपि नात्मस्वर्गतया न काम्यते किं तु भोग्यतया एवं चेति केव कथा पुत्रादिषु । तेऽपि भोग्यतयैव काम्यन्ते न तु स्वरूपं भोग्यमिति तत्त्वतस्तु सुखं भोग्यम् । तस्मात्पुत्रादिसम्बन्धात्तदुत्पत्तेः सुखोत्पत्तेः तेषु यथा फलशब्दप्रयोगस्तथा तेषु पुत्रादिष्वित्यर्थः । सूत्रार्थकथनेनैव भाष्यवा-र्त्तिके व्याख्याते । फलानन्तरं दुःखपरीक्षणं तत्र परीक्षा भवतु दुःखं बाधनालक्षणमनुभूयमानं यत्पुनरिदं सुखं प्रत्यात्ममनुकूलवेदनीयं तत्कथं दुःखमनुभवविरोधात् । शरीरेन्द्रियबुद्धयश्च यदि दुःखहेतुतया दुःखं कस्मात्सुखहेतुतया सुखमेव न भवन्ति । सेयमतिमोहिता सकललोकयात्रा-

विरोधिनी । यथाऽऽहुः न हि मृगाः सन्तीति शालयो नोप्यन्ते । न हि भिक्षवः सन्तीति स्थाल्यो नाधिश्रीयन्त इति । तस्मान्मांसार्थीव कण्टकानुद्धृत्य मांसमश्नन्नानर्थं कण्टकजन्यमाप्नोतीत्येवं प्रेक्षावान् दुःखमुद्धृत्येन्द्रियादिसाधनं सुखं भोक्ष्यते सन्ति च विविधदुःखपरिवर्जनहेतवो दृष्टाः परिदृष्टसामर्थ्या अन्वयव्यतिरेकाभ्यामित्यभिप्रायवान् पूर्वपक्षी गुडजिह्विकया संयमान इव पृच्छति । **तत्किमिदमिति** । सिद्धान्तिन उत्तरम् **अन्य** इत्याह सूत्रकार इति । तेनैवाभिप्रायेण पूर्वपक्षी पृच्छति **कथम्** । उत्तरं **न वै सर्वलोकसाक्षिकमिति** । अयं तु दुःखभावनोपदेशः किमर्थमित्यत आह भाष्यकारः । **दुःखहानार्थः** । किंपुनरस्य दुःखहानमित्यत आह । **जन्ममरणप्रबन्धस्यानुभवः** प्राप्तिः तन्निमित्ताद् दुःखोपदेशपरिशीलनेन निर्विण्णस्यालम्प्रत्ययवतः अत एव दुःखं जिहासत इति योजनीयम् । अस्याभिप्रायेण पूर्वपक्षी पृच्छति । **कया युक्त्या** । उत्तरम् । **सर्वे खलु सत्त्वनिकाया** इति । उत्पत्तिः सुखदुःखहेतुभूता विषयसंपत्तिः तस्याः संस्थानानि भुवनानि । आ सत्यलोकादा चावीचेरिति । एतदुक्तं भवति । यदि दुःखवर्जनेन शक्यते सुखमुपादातुं ततस्तादृशं सुखमनुकूलवेदनीयं कः प्रमाणात् प्रजह्यात् । न च तादृशमस्ति सुखं क्वचिदपि सर्वस्य दुःखाविनाभाविनः केवलस्योपादातुमशक्यत्वात् । न हि मधुविषसंपृक्तमन्नं विषमपहृत्य शक्यं मधुमात्रमुपादातुमिति । तस्मान्नेदं सुखस्य प्रत्याख्यानमपि तु सुखमेव दुःखभावनमुपदिश्यते । **अत्र हेतुरुपादीयते** [illegible] ।

**विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः (सू. ५५) ॥**

जन्मन उत्पत्तिः सा दुःखमेव भावयितव्या विविधबाधनायोगादिति । कस्मात्पुनर्दुःखमेव जन्मोत्पत्तिर्न भवतीत्यत आह ।

**न सुखस्यान्तरालनिष्पत्तेः (सू. ५५) ॥** न खल्वयं दुःखोद्देशो दुःखकथनं सुखस्य प्रत्याख्यानम् । कुतश्च दुःखकथाभावेन न सुखस्य प्रत्याख्यानं दुःखोद्देशेनेत्याह ।

**बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः (सू. ५७) ॥** यस्मादिदं मे सुखसाधनमिति वेदयन् प्रार्थयते सुखसाधनम् । तच्च उक्तादृष्टप्रकाराद्बाधनाहेतुरिति दुःखभावनोपदेशनमिति । काम कामस्य कामयमानस्य यदा कामः समृध्यति संपन्नो भवति । अथानन्तरमेव पुरुषमपरः काम

इच्छा विघ्नं बाधते स्वर्गादिप्राप्तावपि स्वाराज्यादि कामयते । एवं तत्प्राप्तौ प्राजापत्यादीति अस्येच्छा तदुपायप्रार्थनादिना दुःखेन प्रबाधतइत्यर्थः । समन्तादुदनेमि यथा भवति तथा भूमिं लभतइति योजना । नन्वयं यद्यप्यन्तराले सुखान्यनुभवति तथाऽपि दुःखसंभेदमाकलयन् अनुपदिष्टोऽपि स्वयमेव निवर्त्स्यतीति कृतमस्य दुःखभावनोपदेशेनेत्यत आह ॥

**दुःखविकल्पे सुखाभिमानाच्च ( सू. ५८ )** ॥ शास्त्रशिष्टानां विवेकिनां खलु विविधबाधनानुषङ्गाद् अनवयवेन सुखमात्रं दुःखमेवेति विनिश्चयोऽक्षिपात्रकल्पा हि ते । तद्यथोर्णातूलपक्ष्मोऽप्यक्षिपात्रं दूयते न गात्रावयवान्तराणि तथा मृदुचित्ततया विवेकिनो दूयन्ते अविवेकिनस्तु प्रणयकलहकुपितकुरङ्गशावलोचनाङ्गनाऽलक्तकरसार्द्रपादपल्लवताडनमपि चिरविरहसि सुखमभिमन्यमाना घनपुलककञ्चुकाञ्चिततनवः सान्द्रानन्दाम्बुमुदितनयना निर्वृण्वन्तीति तान् प्रत्ययमुपदेशोऽर्थवानित्यर्थः । **जायस्व म्रियस्व चेति संधावतीति** । पुनर्वा जायते पुनर्म्रियते जनित्वा म्रियते मृत्वा जायते तदिदं धावनव्यापारप्रचय इत्यर्थः । चोदयति । कस्माद् **दुःखं जन्मेति नोच्यतइति** । यदि दुःखभावनोपदेशो जन्मनि एव सत्येवकारः किमर्थं इत्यर्थः । परिहरति । **जन्मविनिग्रहार्थीय** इति । विनिग्रहो विनिवृत्तिः स यदर्थः प्रवर्ततइति जन्मविनिग्रहार्थीयः । यथा च मत्वर्थीय इति । एतदुक्तं भवति । जन्म दुःखमेवेति भावयितव्यं नात्र मनागपि सुखबुद्धिः कर्तव्या अनेकानर्थपरंपराया*मपवर्गप्रत्यूहप्रसङ्गादिति । **दुःखोद्देशानन्तरमपवर्ग उद्दिष्टो** लक्षितश्चेति शेषः । स प्रत्याख्यायते ।

**ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः (सू. ५९)** ॥ तद्व्याचष्टे भाष्यकारः । **ऋणानुबन्धादिति** । अस्ति हि ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेद् अनपाकृत्य मोहेन मोक्षमिच्छन् व्रजत्यधः । ऋणत्रयापाकरणेनैव वयःसमाप्तेर्मोक्षनिवेशनयो नास्तीत्यपवर्गाभाव इत्यर्थः । **क्लेशानुबन्धान्नास्त्यपवर्गः** । नानुच्छिन्ननिदानः संसारः शक्य उच्छेत्तुमित्यर्थः । प्रवृत्त्यनुबन्धादित्यस्यापीयमेव व्याख्या । एवं पूर्वपक्षयित्वा सिद्धा-

---

* परम्परायातेनेति ३ पु॰ पाठः ।

न्नामुपक्रमते । अत्राभिधीयते । यत्तावदृणानुबन्धादिति । जाय-
मान इत्यस्य प्रधानार्थतानुपपत्त्या गुणशब्दत्वं साधयितुं दृष्टान्तलाभाय
ऋणशब्दस्य प्रथमं गुणशब्दत्वमाह । प्रधानशब्दानुपपत्तेरिति । तद्व्या-
चष्टे । ऋणैरिति । नायं प्रधानशब्द इति । ऋणवानिवास्वतन्त्रस्तेषु
तेषु कर्मसु नाधिकारीति निन्दा । तदभावे तु स्वतन्त्र इति प्रशंसा । एवं
जायमान इति गुणशब्दो न मुख्य इति । कस्मात् पुनर्न मुख्य इत्यत
आह मातृतो जातमात्रस्यैवानधिकारात् । कस्मादनधिकार इत्यत
आह । अर्थिनः शक्तस्य चाधिकारात् कस्मादर्थिन इत्यत आह ।
कर्मविधावग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादौ कामसंयोगश्रुतेः । न च
बालकः सुखदुःखप्राप्तिपरिहारकामो ऽपि विवेकेन स्वर्गपुत्रपश्वादि काम-
यत इति । शक्तस्य च प्रवृत्तेरिति । न ह्यशकनीयमर्थमशक्तं प्रति वेद
आप्तोपदेशरूपो विधातुमर्हति । न च बालकः शक्तो ऽविद्वत्त्वादिना । अत
एव तिर्यग्देवर्षिपङ्गुशूद्रव्याधितानामनधिकारः सामर्थ्याभावात् । न केवल
वैदिको ऽयमीदृशो व्यवहारो ऽपि तु लौकिको ऽपीत्याह । न भिद्यते
चायं लौकिकात् । तद्व्याचष्टे लौकिकस्तावदिति । उपपन्नानवद्या-
र्थेति । उपपन्नं प्रमाणेन अनवद्यं पुनरुक्तदोषेण अनपेक्षितमुपदेष्टव्यं यत्र
भवति तद्वित्यर्थः । न्यायप्राप्तमिममर्थं लिङ्गदर्शनमुपोद्बलयतीत्याह । गार्ह-
स्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदतीति । गार्हस्थ्यस्य लिङ्गं पत्नी
यस्मिन्कर्मणि तत्तथोक्तम् । पत्न्यवेक्षितमाज्यं भवति । पत्न्य उद्गायन्ति ।
सोमे यजमानाग्नी आदधीयातामित्येवमादि तदनेन गार्हस्थ्यात्पूर्वावस्था
तावदृणानुबद्धा न भवतीत्युक्तं संप्रत्युत्तरावस्थापि न ऋणानुबद्धेत्याह ।
यदा चार्थिनो ऽधिकारस्तदा ऽर्थित्वस्याविपरिणामे जरामर्यवादो-
पपत्तिः । तेन यदुक्तमृणापाकरणेन वयःपर्यवसानान्नास्ति मोक्षावसरस्तद-
पाकृतं भवति । अविपरिणामपदार्थव्याख्यानं न निवर्तत इति । तुरीयस्ये-
त्यस्य व्याख्यानं चतुर्थस्येति । प्रायेण चतुःसप्ततिवर्षव्यतिवाहितेषु अर्थतृष्णा
तनूभवति । अत्यन्तवियोगे तु जरया ह्येत्यनर्थकम् । मृत्युना चेत्यनेनैव
सिद्धेरिति शेषः । यदुच्यते अशक्तोपलक्षणमेतज्जरया ह्या मृत्युना चेति ।
तेन कस्यानर्थक्यमित्यत आह । अशक्तो विमुच्यत इत्येतदपि नोप-

**पचत** इति । स्यादेतत् । यद्यपि गृहस्थस्य यज्ञादिविधानान्तराणि सन्ति तथा ऽपि जायमानस्त्रिभिर्ऋणैरिति वाक्यं बालस्यापि यज्ञादि विधास्यतीत्येतां शङ्कां विमर्शपूर्वमपाकरोति । **अथापि विहितं वा ऽनूद्येत कामाद्वा ऽर्थः प्रकल्पेतेति** । न तावज्जायमानो ह वै इति वाक्ये विधिविभक्तिरस्ति तेन सिद्धानुवादः स्वरसतः प्रतीयते यदि तु तस्यार्थस्य सिद्धिर्वाक्यान्तराद्वा प्रमाणान्तराद्वा कथमपि न कल्पेत ततो वचनानि त्वपूर्वत्वादिति न्यायाद्विधिस्वमस्य कल्प्येत सन्ति तु यजयस्तदर्थविधायकानि वाक्यानि निमित्तमन्तीति को वाक्यस्य स्वेच्छामात्रेण विधित्वं कल्पयेत् । तस्माद्विहितानुवचनमेव न्याय्यमिति जायमानशब्दो जघन्यवृत्तिरिति युक्तमुत्पश्यामः । स्यादेतत् । जायमानशब्दो ऽनुपचरितार्थः स्वभावतो मातुरुदराद्विनिर्गमाह । स कथं सिद्धानुवादानुरोधेन जघन्यवृत्तिः कल्पनीयः । तद्वरं मुख्यार्थानुरोधेन विधानमेव कल्प्यताम् । एवं सति श्रुतिरनुरोधिता भवति । अस्ति च बालकस्यापि फलोत्पादनयोग्यता तदात्मनः फलं प्रति समवायिकारणत्वात् । तेन यद्यपि जातमात्रस्य फलसाधनानुष्ठानयोग्यता नास्ति तथा ऽपि फलोत्पादं प्रति योग्यता ऽस्ति फलेन च प्रयोजनं न तत्साधनेनेत्यत आह **फलस्य साधनानि हि प्रयत्नविषयो न फलमिति** । अयमभिसंधिः । विधिर्हि स्वव्यापारे कर्तृतया पुरुषं नियुङ्क्ते प्रयत्नश्चास्य व्यापारः संभवति विषये न शक्यो निवर्तयितुमिति स्वविषयमपेक्षते न चास्य साक्षात्फलं विषयो भवितुमर्हति । तदुद्देश्यतामात्रेण तु भवेत् । नैतावता प्रयत्नो ऽस्य निर्वृणोति यावदस्य साक्षादभिनिर्वर्तनीयं न प्राप्नोति । तदुपायस्य साक्षादभिनिर्वर्तनीय इति फलोद्देशप्रवृत्तस्य पुरुषप्रयत्नस्य निर्वृणोति यावदुपायो विषयः । न च बालकस्य तदुपायमविदुषस्तत्र सामर्थ्यमस्ति । असमर्थश्चाकर्ता कथमात्मानं प्रयत्नेन व्यापृयात् । अव्यापृतश्च कथमधिकारीति जायमानशब्दो जघन्यवृत्तिरेव न्याय्य इति सिद्धम् । **विहितं च जायमानमिति** ब्रह्मचर्याश्रमात्प्रविधीयते च ब्रह्मचर्यादूर्ध्वमित्यर्थः । यदुक्तं तत्र हि प्रव्रज्या विधीयत इति तदनूद्यमाह **प्रत्यक्षविधानाभावादिति चेत्** । शङ्कां निराकरोति । **न प्रतिषेधस्यापि विधानाभावात्** । शङ्कां विभजते प्रत्यक्षत इति । परमार्थो हि भगवानीश्वरो ऽनुकम्पया भूतो-

पदेशाय प्रवृत्तो यद्गार्हस्थ्यमेवाश्रममुपदिशति ततोऽवगच्छामो न सन्त्या-
श्रमान्तराणि श्रुतिभ्यो हितानीत्यर्थः । अत एवाहुः ऐकाश्रम्यं त्वाचार्याः
प्रत्यक्षविधानाद्गार्हस्थ्यस्येति । निराकरणं विभजते न प्रतिषेधस्येति । स्मृती-
तिहासपुराणानि तावदयथार्थं विदधति चातुराश्रम्यमुपलभ्यन्ते यदि प्रत्यक्षया
श्रुत्या प्रतिषिध्यन्ते ततस्तद्विरोधेनौदुम्बरीसर्ववेष्टनवत् अप्रमाणानि स्युः ।
न च तत्प्रतिषेधः श्रुतेः साक्षादवगम्यते । तस्मात्स्मृत्यादिविहितं चातुरा-
श्रम्यमप्रतिषिद्धं श्रुत्या न शक्यं परित्यक्तुमित्यर्थः । न चाविधानेन तत्प्र-
तिषेधानुमानमित्याह । अधिकाराच्चेति । गार्हस्थ्योपदेशस्याधिकारात्तस्यैव
विधानं नाश्रमान्तरस्य न त्वाश्रमान्तराभावात् । न हि व्याकरणं शब्द व्यु-
त्पादयत्प्रमाणाद्यभावमाक्षिपति । अपि च सा श्रुत्यन्तरविधाने श्रुतौ समा-
धनापवर्गाभिधानानि चातुराश्रम्याभिधानानि च प्रत्यक्षाण्युपलभ्यन्ते वचनानि
तान्यपूर्वत्वाद्विधायकानि अपवर्गस्य ससाधनस्य चातुराश्रम्यस्य च भविष्य-
न्तीत्याह । ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयतइति । मृत्युमिति
प्रेत्यभावमित्यर्थः । परं कर्मभ्य इति । कर्मपरित्यागमपवर्गसाधनं सूच-
यति । अमृतत्वमिति चापवर्गो दर्शितः । सूचितं कर्मत्यागमपवर्गसाधनं
श्रुत्यन्तरेण विशदयति । न कर्मणा न प्रजयेति । परेण नाकमिति ।
नाकमित्यविद्यामुपलक्षयति । अविद्यातः परमित्यर्थः । निहितं गुहाया-
मिति लौकिकप्रमाणागोचरत्वं दर्शयति । तमसः परस्तादिति । अविद्या
तमः तस्य परस्तात् । आदित्यवर्णमिति । नित्यप्रकाशमित्यर्थः । तद-
नेनेश्वरप्रणिधानस्यापवर्गोपायत्वमुक्तम् । अथ उदाहृत्य ब्राह्मणमुदाहरति
अथ ब्राह्मणानीति । त्रय इत्यादिना गृहस्थाश्रमो दर्शितः । तप इति
वानप्रस्थाश्रमः । ब्रह्मचारीति ब्रह्मचर्याश्रमः यथाभ्युदयसाधनं कर्म-
माह । सर्वएतइति । चतुर्थाश्रममाह । ब्रह्मसंस्थ इति । तथाक्रतु-
रिति । क्रतुः सङ्कल्पः । कामयमानो य आसीत् स यथायथाकामयमानो
भवति । अकामयमानः कामं परिहरन् तत्परिहारविहितो योऽकामयंस्तस्य
व्याख्यानं निष्काम इति । आत्मकाम इति । केवलचैतन्यात्मकामः
तत्प्राप्त्या आप्तकामो भवति । न तस्य प्राणा इति व्यक्तो भवतीत्यर्थः ।
प्रकृतमुपसंहरति तत्र पशुकामिति । अपरामपि चातुराश्रम्याभिधायिनीं

श्रुतिमाह । ये चत्वार इति । इतश्च फलार्थिन एव चरामर्यवाद इत्याह । फलार्थिनश्चेति । पृष्ट्वा सूत्रं पठति कथम् ।

**समारोपणादात्मन्यप्रतिषेधः (सू. ६१)॥** आत्मन्यग्नीनां समारोपणाद्दृणानुबन्धेनापवर्गस्याप्रतिषेधः । तदनेन च्छलेन प्रत्यक्षविधानं प्रव्रज्याया अपि दर्शितम् । एषणाव्युत्थितस्य विपर्यस्तबुद्धेः अलमाभिरेषणाभिरनर्थहेतुभिरिति कृतबुद्धेः अत एव निवृत्ते फलार्थित्वे समारोपणमात्मन्यग्नीनां विधीयत इति । एवं ब्राह्मणानीति यदेषणाभ्यो व्युत्थितस्य प्रव्रज्याविधानं तदा तदभिधायीनि ब्राह्मणान्युपपन्नानीत्यर्थः ।

**पात्रचयान्तानुपपत्तेश्च फलाभावः (सू. ६२)॥** प्रमृते खलु यजमाने यज्ञपात्राणि यजमानस्य शरीरे यथावयवं निधायान्त्येष्टिः क्रियते । तत्र जरामर्ये कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्येत मरणपर्यन्तानि कर्माणीति प्रसज्येतेत्यर्थः । नन्विष्यत एव पात्रचयान्तत्वं कर्मणामित्यत आह । तत्रैषणाव्युत्थानमिति । तस्मादविशेषेण कर्त्तुः प्रयोजकं फलं भवतीति । फलाभाव इत्यस्य सूत्रावयवस्याविशेषेण फलस्य कर्त्तृप्रयोजकत्वाभाव इत्यर्थः । तदनेनैषणाव्युत्थानश्रुतिविरोधो दर्शितः । तदेवं चातुराश्रम्यस्य श्रुतिरुक्ता । सम्प्रति स्मृत्यादयोऽपि चातुराश्रम्यस्योपदेशकाः सन्तीत्याह चातुराश्रम्यविधानाच्चेति । शङ्कते तदप्रमाणमिति चेत् । जगन्निर्मातुः परमकारुणिकस्य सर्वज्ञस्य भगवतः परमेश्वरस्यागमो भवतु प्रमाणमाप्तोक्तत्वात् । मन्वादीनां त्वाप्तत्वानिश्चयात्कथं तत्प्रणीतानां प्रामाण्यनिश्चय इत्यर्थः । उत्तरं न प्रमाणेनेति । एतदेतत् । भवतु वेदेनाभ्युनुज्ञानादितिहासपुराणप्रामाण्यं धर्मशास्त्राणां मन्वादिप्रणीतानां कुतः प्रामाण्यनिश्चय इत्यत आह । अप्रामाण्ये चेति । सर्वजनपरिग्रहात्तेषामपि प्रामाण्यमित्यर्थः । बुद्धादिस्मृतयस्तु वेदनिन्दितैर्म्लेच्छादिभिः परिगृहीता न त्वार्यैरिति न ताः प्रमाणं भवितुमर्हन्तीत्यर्थः । द्रष्टृवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः । य एव वेदस्य द्रष्टारोऽनुष्ठातारश्च तदर्थस्य त एवेतिहासादीनां प्रवक्तारः प्राचेतसकृष्णद्वैपायनमनुप्रभृतयः । अपि च वैदिकानि कर्माणि स्मार्त्तमितिकर्त्तव्यतामपेक्षन्ते । स्मार्त्तानि च वैदिकानि मन्वादीनीति सर्वमेतदप्रामाण्ये धर्मशास्त्राणां

नोपपद्यते । यदपि च मन्वादयो ऽपि धर्मज्ञानवैराग्यैश्वर्यशालितया अनु-भूयाप्युपदिशन्तीति संभवति तथा ऽपि वेदमूलकत्वमेवेतिहासपुराणादीनां युक्तम् । तथा हि वेदो ऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् । यः कश्चित्कस्य चिद्धर्मो मनुना परिकीर्तितः । स सर्वो ऽभिहितो वेदे सर्वज्ञा-नमयो हि सः इत्यादिभिः स्ववचनप्रपञ्चैरात्मा बोद्धा वेदएवार्पितस्तैरिति । अथायमितिहासादिगोचरो ऽर्थः कस्मात्प्रत्यक्षप्रतीतेन वेदेन नोच्यत इति तदनभिधानादवगच्छामो नूनमयमनभिमतो वेदानां कर्तुरिति । निराकृतो ऽप्ययं पुनर्निराक्रियते दृष्टार्थे विषयव्यवस्थानाच्चेत्यनेन । यदप्युक्तं क्लेशानु-बन्धस्याविच्छेदादिति तद्दूषयति ।

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः** (सू. ६३) ॥ तद्व्या-चष्टे सुषुप्तस्य स्वपितीति । लोकसिद्धतया सुषुप्तावस्थोदाहृता । महाप्रलया-वस्थायामपि क्लेशमुक्ता एवात्मानः केवलमसौ न लोकसिद्धेति नोदाहृता । एताभ्यां तु मुक्तावस्थायां विशेषः यदस्यां क्लेशवासना ऽपि नास्ति । सुषुप्ताव-स्थायां प्रलयावस्थायां च क्लेशविच्छेदे ऽपि तद्वासना ऽस्तीति । यदपि प्रवृ-त्त्यनुबन्धादिति तत्राह ।

**न प्रवृत्तिः प्रतिसंधानाय हीनक्लेशस्य** (सू. ६४) ॥ देहिनः । तद्व्याचष्टे क्षीणेषु रागद्वेषमोहेषु सत्स्वपि न प्रवृत्तिः स्वप्रतिसंधानाय । उपपादितमिदमस्माभिर्यथा दोषतुषावनद्धाः कर्मतण्डुला जन्माङ्कुराय कल्पन्ते न केवला इत्यर्थः । शङ्कते । कर्मवैफल्येति । वैफल्ये शास्त्रस्य कर्मणां फलसाधनताप्रतिपादकस्याप्रामाण्यप्रसङ्ग इति भावः । निराकरोति । न कर्मविपाकेति । विपाकः फलं तस्य प्रतिसंवेदनं भोगः । पूर्वपक्षवाद्याह ।

**न क्लेशसंततेः स्वाभाविकत्वात्** (सू. ६५) ॥ सिद्धान्त्येकदेशी सूत्रे ।

**प्रागु--त्वम्** (सू. ६६) ॥ दध्यादेरुत्पत्तेः प्राक् क्षीरादिषु यो भाव-स्तस्यानित्यत्ववदिति योजना । अपरस्त्वेकदेशी भावमेव दृष्टान्तयतीत्याह ।

**अणुश्यामतानित्यत्ववद्वा** (सू. ६७) ॥ यदेतच्छ्यामं रूपं तद-न्यस्यागमः पार्थिवानां परमाणूनां श्यामतामनादिमाह अत्रपदेन मृदो ऽभिधानादिति भावः । अत्र प्रथममेकदेशिनं दूषयति । सतः स्वपितीति ।

द्वितीयमेकदेशिनं दूषयति । **अनादिरणुश्यामतेति हेत्वभावादयु-क्तम्** । अणुश्यामता कार्या पृथिवीरूपत्वात् । लोहितादिवदिति प्रत्युतानि त्यताहेतुरस्ति । पुरुषप्रयत्नजलोहितादिरूपवैलक्षण्येन त्वस्याप्रयत्नपूर्वक-त्वमात्रेणानादित्वाभिधानमिति नागमविरोधः । तदेवमेकदेशिनौ दूषयित्वा परमसमाधिमाह । अथ तु समाधिः ॥

**न संकल्पनिमित्तत्वाच्च रागादीनाम् (सू ६८)** ॥ चकारमनुक्त-समुच्चयार्थं व्याचष्टे । **कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्च** । समुच्चयो ऽनुक्तस्येति शेषः । तत्र सङ्कल्पनिमित्तत्वादिति विभजते । **मिथ्यासंक-ल्पेभ्य इति** । यद्यप्यनुभूतविषयप्रार्थना सङ्कल्पः तथा ऽपि तस्य पूर्व-भागो ऽनुभवो ग्राह्यः । प्रार्थनाया रागत्वात् । तेन मिथ्यानुभवः सङ्कल्प इत्यर्थः । नन्वेकस्मान्मिथ्याज्ञानात्कुतः कार्यवैचित्र्यमित्यत आह । **रञ्जनीयकोपनीयमोहनीयेभ्य इति** । भव्यगेयादिषु पाठात्कर्त्तरि कृत्यः । ये हेतवः सङ्कल्पा मिथ्याज्ञानसंस्काराः । कर्मनिमित्तत्वं रागादीनां विभजते । **कर्म चे**न निकायेन जातिरुपलक्ष्यते । इतरेतरनिमित्तत्वं रागादीनामाह । **इतरेतरेति** । स्यादेतत् । भवन्त्वनित्याः क्रियाः तथा ऽपि यदेषां निवर्त्तकं मिथ्याज्ञानं तस्य निवृत्तिहेतोरभावात्स एव क्रियानु-बन्धादपवर्गाभाव इत्यत आह । **सर्वमिथ्यासंकल्पानामिति** । अपि चाना-दि क्रियासन्ततिरित्ययुक्तम् । कुतः **सर्वइमे आध्यात्मिका भावा इति** । आत्मानमधिकृत्य प्रवर्त्तमानाः शरीरेन्द्रियादयो भवन्त्याध्यात्मिका इति । अथ यत्नादीनामपि निवृत्तिः इत्यनुत्पत्तिधर्मकाणामपि निवृत्तिप्र-सङ्ग इत्यत आह । **न चैवं सत्यनुत्पत्तिधर्मकं किं चिदिति** । रागादीना-मुत्पत्तिधर्मकाणामेव व्ययधर्मकत्वाभ्युपगमादित्यर्थः । ननु मा भूवन्मि-थ्याज्ञाननिमित्ता रागादयो मिथ्याज्ञाननिवृत्तौ । ये पुनरमी कर्मनिमित्ता-स्तेषां कुतो निवृत्तिः न च कर्मनिवृत्तौ रागादिनिवृत्तिः रागादिमतः कर्म निवृत्तेरभावात् । तस्मान्न मोक्ष इत्यत आह । **कर्म च निकायनिर्वर्तकं** तत्त्वज्ञानकृतान्मिथ्याज्ञानरूपसङ्कल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति । सर्वरागादीनां मिथ्याज्ञानमेव निमित्तम् । कर्माणि तु निकायनियमेन रागा-दीन् प्रवर्त्तयन्तीति कर्मनिमित्तत्वमुक्तमिति भावः । ननु यथा रागादयः

सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या निवर्तन्ते एवं सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या फलमपि मा भूदित्यत आह । सुखदुःखसंवित्तिः फलं तु भवतीति । वार्तिकम् । यावज्जीवसंयोगे हि जरया हि वेत्यनर्थकमिति । मृत्युना वेत्यनेनैव गतार्थत्वादित्यनुक्ता भाष्योक्ता द्वितीया युक्तिरभिहिता वार्तिककृता । यस्मात्स्वयमयष्टकस्येत्यनेन । यज्ञसाधनत्वादिति । यज्ञकर्तृत्वादित्यर्थः । एतदेव स्फुटयति । यस्माद्यजमानो यज्ञाङ्गं भवति । यथा ऽऽह भगवान् जैमिनिः पुरुषश्च कर्मार्थत्वादिति । संकल्पाद्यपेक्षं कर्म रागादिकारणमिति । यज्जातीयस्य जन्मनो यत्कर्म कारणं तज्जन्मोचितामेव मिथ्याज्ञानवासनामभिव्यनक्तीति तद्द्वारेण रागादीनां कारणं भवति । चोदयति । क्षुधादीनामिति । यथा मिथ्याज्ञानसहायं कर्म रागादिहेतुः एवं तत्त्वसहायं फलहेतुरिति चरमदेहस्य तत्त्वज्ञानवतः सदपि कर्म फलकारणं न स्यादित्यर्थः । परिहरति । न निरपेक्षत्वादिति । कर्माशयप्रयुक्तक्षुद्धेतुममूढो ऽप्यसक्तो ऽप्यद्विष्टो ऽपि मूढ इव सक्त इव द्विष्ट इव तत्फलं भुङ्क्ते इति रागाद्यनपेक्ष कर्म स्वफल जनयति तेनासौ फलोपभोगो न बन्धहेतुः मूढादीनां बन्धहेतुफलोपभोगः स चलादृशो रागादिसहायैः कर्मभिः क्रियते न रागादिनिरपेक्षैरित्यवदातम् ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां चतुर्थाध्यायस्याद्यमाह्निकम् ॥



तदेवं संशयप्रमाणप्रमेयाणि परीक्षितानि । प्रयोजनादयो ऽपि यथ संशयस्तथैवमुत्तरोत्तरप्रसङ्ग इत्यतिदेशेन परीक्षिता इति षोडशापि प्रमाणादयः परीक्षिताः । तेषां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरित्युक्तम् । तत्रापि प्रमेयतत्त्वज्ञानं साक्षान्निःश्रेयसहेतुरितरेषां तु तत्त्वज्ञानाङ्गतयेत्युक्तम् । इदमिहेदानीं परीक्ष्यते किं प्रत्येकमात्मादीनां प्रमेयाणां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरुताहो कस्य चिद्देवामेकदेशस्येति । तामिमां परीक्षामवतारयति भाष्यकारः । किं नु खलु भो यावन्तो विषयाः प्रमेयाणि तावत्सु प्रत्येकमिति । प्रतिप्राणभृद्भेदं यावन्त आत्मानः यावन्ति चेन्द्रियाणि चेत्यर्थः । पार्श्वस्थः पूर्वपक्षिणं पृच्छति कश्चात्र विशेषः । पूर्वपक्षिण उत्तरं न तावदेकैकश्येति । समुदायैकदेशाभ्यामनुपपत्तेः । प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इत्ययुक्तमिति पूर्वः पक्षः । सिद्धान्तमाह । मिथ्याज्ञानं वै खलु मोह इति । वैशब्दः खलु पूर्वपक्षावमायां खलुशब्दो हेत्वर्थे । अयुक्तः पूर्वपक्षो यस्मान्मिथ्याज्ञानं मोह इति । न तत्त्वज्ञानमज्ञाननिवृत्तिमात्रेण निःश्रेयसोपयोगि अपि तु संसारनिदानोच्छेदद्वारेण दृष्टेनैव न च तत्त्वाज्ञानं संसारहेतुरपि तु मिथ्याज्ञानम् । तद्बुद्धिश्च तद्विरोधितया तत्त्वज्ञानमपवर्गहेतुरिति । भवत्वेतत्तथा ऽपि पूर्वपक्षस्य किमायातमित्यत आह । तच्च मिथ्याज्ञानं यत्र विषये प्रवर्तमानमिति । स्वसंबन्धिनो ह्यात्मादयो विपर्ययेण परिच्छिन्नाः संसारहेतव इति तद्विषयमेव मिथ्याज्ञानमपनेयं नात्माद्यन्तरविषयं ज्ञानं तेन तत्र मिथ्याज्ञानं मा निवर्तिष्ट निवर्तता वा स्वात्मादिदृष्टान्तेन न तु तस्य संसारनिवृत्तिं प्रत्युपयोगः । यस्य तूपयोगस्तत्र तत्त्वज्ञानं न दुष्करमिति । पृच्छति । किं पुनस्तन्मिथ्याज्ञानं सन्ति यत्र वादिनां नानाविप्रतिपत्तयः । के चिदाहुः । विधूतविविधनामरूपप्रपञ्चोपप्लवविशुद्धचिदानन्द*घनाद्वैतब्रह्मसाक्षात्कारस्तत्त्वज्ञानमिति । अन्ये तु सत्त्वपुरुषान्यताख्यातिम् । धर्मपुद्गलनैरात्म्यज्ञानमित्यपरे । शरीरेन्द्रियाद्यनित्यव्यतिरिक्तनित्यात्मदर्शनमिति वृद्धाः । तदेवं विप्रतिपत्तेः प्रश्नः । उत्तरम् । अनात्मन्यात्मग्रहो ऽहमस्मीति मोहो ऽहङ्कारः । न तावदद्वैतानन्दघनात्मज्ञानं तत्त्वज्ञानम् । भेदस्य प्रत्यक्षसिद्धस्याद्वैतबाधके ऽप-

---

* प्रकाशानन्दीय २ । ३ पृ० पा० ।

ह्योऽनुमपश्यत्वात् । न च प्रकाशानन्दावात्मधर्मावात्मातिरिक्तावात्मस्वभावौ भवितुमर्हतः । सत्यं विज्ञानमानन्दं ब्रह्मेति श्रुतिरानन्दचैतन्यपरत्वभिप्राया । भेद एव च तद्वत्तया कथं चित् सामानाधिकरण्यमुपपद्यते । अभेदे त्वानन्दविज्ञानयोस्तत्पदयोः पर्यायतया सह प्रयोगानुपपत्तिः । न च प्रकृष्टप्रकाशः सवितेत्यत्र प्रकृष्टप्रकाशयोरभेदो ऽप्रकाशस्यापि प्रकर्षसम्भवात् । अप्रकृष्टस्यापि खद्योतादेः प्रकाशसम्भवात् । तस्मादात्यन्तिकं विवेचितम् । सत्त्वपुरुषान्यताख्यातिस्तु सत्त्वस्यैव प्रकृतेरसम्भवादयुक्ता सत्कार्यवादमूलत्वात्प्रधानसद्भावस्य तन्निराकरणेनैव निराकरणम् । धर्मपुद्गलनैरात्म्ये तु क्षणभङ्गभङ्गे नित्यात्मसद्भावकथनेन निराकृते । तस्मात्सुष्ठूक्तमनात्मन्यात्मग्रहो ऽहमस्मीति मोहो ऽहङ्कार इति । अत एव सर्वस्यैवमात्माशीः कृमेरपि मा न भूवं भूयासमिति । सो ऽयमीदृशो ऽभिनिवेशः शरीरादीनामात्मत्वेनाध्यवस्यतो भवति नात्मतत्त्वविदुषः । स खल्वहमिति शरीरादिभ्यो व्यतिरिक्तं शरीरादि पश्यन्न तत्र स्निह्यति स्नेहविरहान्न तप्यते नाप्यनुशोचतीति । अतत्त्वज्ञानवतः संसारं दर्शयित्वा तत्त्वज्ञानवतः संसारनिवृत्तिमाह । यस्तु दुःखमिति । तदेवमुक्तेन प्रकारेण मोहतत्त्वज्ञानयोः संसारापवर्गहेतुभावो यस्मात्तस्मान्मोहमावे प्रेत्यभावफलदुःखानि च हेयानि व्यवस्थापयतीत्यादिर्दूषणप्रहारः । आसेवमानस्याभ्यस्यतो भावयत इति । पर्यायकथनं भावनादार्ढ्योपदर्शनार्थम् । अर्थं गमि परिशोध्यावार्थं सूत्रं पठति ।

दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः (सू. १) ॥

शास्त्रार्थसंग्रहो ऽनूद्यते शास्त्रतात्पर्यसंग्रहो द्वितीयसूत्रेणानूदित इत्यर्थः । किं नु खलु भो इति भाष्यं तदनुपपन्नं यतो न विषयमात्रज्ञानमपवर्गहेतुरपि तु प्रमेयतत्त्वज्ञानमित्यत आह वार्त्तिककारः । तत्र विषयान्तराणामिति । यावन्तो विषया इति न विषयमात्राभिप्रायमपि तु प्रमेयाभिप्रायमित्यर्थः । सुगममन्यद्वार्त्तिकम् । शरीरादिष्वनात्मस्वात्मबुद्धिर्निवर्तनीयेत्युक्तं तत्र प्रथमं कस्मिन्नात्मबुद्धिर्निवर्तनीयेत्यपेक्षायामाह । प्रसंख्यानानुपूर्व्या तु खलु । प्रसंख्यानं समाधिजं तत्त्वज्ञानं तच्च विषये सुकरमिति तत्रैव प्राथमिकस्य प्रथमं प्रयत्नो युक्तः । सूत्रम् ।

दोषनिमित्तं रूपादयो विषयाः संकल्पकृताः (सू. २) ॥

मिथ्याज्ञानं संकल्पस्तेन विषयीकृता इत्यर्थः । कामाः काम्याः अन्ये

खलु अवयविसंज्ञो निवर्तयन्तो ऽवयविनमेव प्रत्यापद्यते तान् प्रत्यापनाय आह। अतः परं का चिदिति। सूत्रम्।

**तन्निमित्तं त्ववयव्यभिमानः (सू. ३)** ॥ निमित्तं दन्तादि तद्विशिष्टा विषया: संज्ञाः प्रियायाः कामुको दन्तोष्ठनासिकादीनवयवाननुभावयन् तस्यां सक्तो भवति। व्यञ्जनान्यवयविनो ऽवयवास्तैः सहोपलम्भात्तेषामनुव्यञ्जनं तत्सादृश्यं तेन तदारोपः। तथा च स्त्रैणानां व्यवहारः। द्रवत्कनकनिर्मलद्युतिरनङ्गलीलैकभूर्महेभकटविभ्रमस्तनभरालसाङ्गी यदि। प्रिया न परिरभ्यते तुलितसिद्धसंजीविनी सहेमहि कुतो ऽन्यथा विषमबाणबाणव्यथाम्। मदनपरितमेनां गाहमानो जनो ऽयं जघनपुलिननाभीमण्डलावर्तरम्याम्। भुवनविलसनायामुन्नसद्भ्रूलतोर्मिं चिरविरहकृतायासमुक्तो चकार। विवेकिनस्त्वशुभसंज्ञां भावयन्तः प्राहुः। मज्जामस्थामय प्रीहां यकृतां चाकृतामपि। पूर्णाः स्नायुशिरास्थूलाः स्त्रियश्चर्मप्रसेविकाः। तथैवो ऽप्यूचुः। स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि। कायमाधेयशोचत्वात्पण्डिता ह्यशुचिं विदुः। अशुभसंज्ञाभावनाप्रयोजनमाह। तामस्य भावयत इति। तत्किमिदानीमवयवानुव्यञ्जनसंज्ञयोर्विषयो नास्त्यशुभसंज्ञाविषय एव परमस्तीत्यत आह। **सत्येव च द्विविधविषय इति।** द्विविध यथासौ कामिनीलक्षणो विषयस्तथा ऽपि रागादिप्रहाणार्थमवयवादिसंज्ञागोचरत्वं परित्यज्याशुभसंज्ञागोचरत्वमस्योपादीयते वैराग्योत्पादनार्थेत्यर्थः। अत्रैव दृष्टान्तमाह। **यथा विषसंपृक्त इति।** न हि विषमधुनी परमार्थतो न स्तः अपि तु वैराग्याय विषसंज्ञा तत्रोपादीयत इत्यर्थः। तदेवं स्वमतेन प्रसंख्यानोपदेशमुक्त्वा पराभिमतप्रसंख्यानं निराकर्तुमुपन्यस्यति। **अथेदानीमर्थं निराकरिष्यता विज्ञानवादिना ऽवयविनिराकरणमुपपाद्यते।** अर्थविशेषे खल्ववयवानुव्यञ्जनसंज्ञे। तथार्थमात्रस्याभावात्कुतो ऽवयवानुव्यञ्जनसंज्ञे तन्निराकरणाय प्रथममवयवी निराक्रियते। अवयवात्परमाणुः ततश्च ज्ञानमात्रमर्थरहितं सिद्धं भवतीत्यभिप्रायः। तत्र संशयपूर्वकत्वाद्दूषणादनस्य विचारस्य संशयं प्रथममाह।

**विद्याऽविद्याद्वैविध्यात्संशयः (सू. ४)** ॥ उपलब्धिर्विद्या अनुपलब्धिरविद्या सच्चोपलभ्यते यथा तडागे तोयम्। असच्चोपलभ्यते यथा

मरुमरीचिकायामुदकम् । सच्च नोपलभ्यते यथा चिरनिखातं भूमौ निध्यादि । असच्च नोपलभ्यते यथा भूतले दृश्यमाने तत्तुल्योपलम्भनयोग्यो घटादिः । तदेवं विद्याऽविद्याद्वैविध्यादवयविनि संशयः । यद्यवयव्युपलभ्यते तथा ऽपि संशयः अथ नोपलभ्यते तथा ऽपि संशय इत्यर्थः । तत्र सिद्धान्ती वक्ष्यमाणमप्यवयविनिराकरणहेतुं निराकरिष्यामीत्याशयवानाह ।

**तदसंशयः पूर्वहेतुप्रसिद्धत्वात्** ( सू. ५ ) ॥ अवयविनः । वार्त्तिककारस्तु स्वयं संशयं निराकरोति । **न विद्याऽविद्याद्वैविध्यं संशयस्य कारणमिति** । पूर्वपक्षवाद्याह वृत्त्यनुपपत्तेरिति । वृक्षस्तिष्ठति शाखादिषु शाखादयो वा वृक्ष इति लौकिकीं प्रतिपत्तिमनुरुध्यमानो विकल्पयति वार्त्तिककारः । **अवयवा अवयविनीति । एकद्रव्यश्चावयवः प्राप्नोति । कुतः एकावयविवृत्तित्वात् ।** भवतु को दोष इत्यत आह । **न चैकद्रव्यं द्रव्यमविनश्यदाधारमस्ति ।** कृतकस्य नित्यत्वप्रसङ्गादिति शेषः । **अवयव्येकदेशेनेति ।** अवयविनो यएकदेशास्तेनावयवो ऽवयविनि वर्त्तत इत्यर्थः । न ह्यस्यावयविनो ऽन्ये अवयवेषु एकदेशा अवयवाः सन्तीति एकेनावयवेनारभ्यत इति सततोत्पत्तिप्रसङ्गः । संयोगाय किल चरमभाविने अवयवद्रव्याधारस्तन्निमित्तानि चापेक्ष्यन्ते । एकद्रव्यस्योत्पत्तिं प्रति न संयोगापेक्षेति यावदवयवमवयव्युत्पद्येतेत्यवयव्यनवरुद्धो न कदा चिदवयवो दृश्येतेत्यर्थः । अवयवव्यतिरेकेण वर्त्तमानो ऽवयव्युपलभ्येत न चास्याधारान्तरमुपलभ्यते दृश्यमानश्चावयवो नाधिकरणमस्येति भवतैव वादिना ऽभ्युपगतमित्यभिप्रायेणाह । **नित्यश्च स्यात् ।** यस्तु मन्यते अवयवानां धर्ममात्रमवयवी न त्ववयवेभ्यो ऽत्यन्तं भिन्नो ऽभिन्नो वा भिन्नत्वे गवाश्ववद्धर्मधर्मिभावानुपपत्तेः । अभेदे ऽपि धर्मस्वरूपवत्तदनुपपत्तेश्च । तस्मात्कथं चिद्भिन्नो ऽभिन्नश्च कथं चिद्धर्ममात्रमवयवानामवयवीति तं प्रत्याह ।

**न चावयव्यवयवाः** ( सू. १० ) ॥ न तावद्भेदाभेदौ परस्पराभावात्मानावेकत्र समवेत इत्युक्तम् । नाप्यात्यन्तिके ऽभेदे धर्मधर्मिभावः तस्माद्यथा ऽऽत्यन्तिकभेदे ऽपि केषां चिदेव कार्यकारणभावः तथा केषां चिदेव धर्मधर्मिभाव इत्येषितव्यम् । तथा च दूषणमित्यर्थः । **अवयवी चैकदेशेनावयवे वर्त्तत इति अवयवसमूहमात्रमवयवी प्राप्नोतीति ।**

अस्यायमर्थः । अवयवे हि वर्त्तमानो ऽवयवीत्युच्यते । अवयवेष्वेकदेशाश्चेदव-यवेषु वर्त्तन्ते एकदेशा एव तर्ह्यवयविनः । ते च नानेत्यवयवसमूहमात्रमव-यवी प्राप्नोति । एकस्मिंश्चावयवे एकदेशे वर्त्तमानो ऽवयवीति न तावदवयवी चिदवयवे वर्त्ततइति तदेकदेशानां तत्र तत्रावयवे वृत्तेः तावन्मात्रेण चावय-विनो ग्रहणमिति यत्रैवास्यैकदेशो वर्त्तते तत्रैव गृहीतव्यः । तथा चैकस्मिन् तन्तौ पटैकदेशो वर्त्ततइति तन्त्वावेकस्मिन् पटो दृश्येतेत्यर्थः । सिद्धान्तवाद्याह ।

एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः (सू. ११)॥

अवयवान्तराभावे ऽप्यवृत्तेरहेतुः (सू. १२)॥ एकदेशेन चावयवी न स्यादवयवेषु वर्त्ततइत्यत्र प्रतिज्ञार्थे अवयवान्तराभावादित्यहेतुः । कस्माद् यद्यप्यवयवान्तरमवयविनो भवति तथाप्यवयवान्तराण्यवयविनो ऽवयवा-न्तरेषु वर्त्तन्ते किमायातमवयविवृत्तेरिति । यश्च यत्रानेकत्र वर्त्ततइति प्रतिजानानः किं कार्त्स्न्येन किमेकदेशेनेति नानुयोक्तव्यः । कस्मात् उभयेन कार्त्स्न्येन एकदेशेन वा न स्वैकार्थसमवायिना एकस्यावयविनो व्याघातात् । तदुपक्षीव्याह अवयवयवी नैकदेशेन वर्त्तते न कार्त्स्न्येन अथ कथं वर्त्ततइति । शङ्कते रूपान्तरानिर्देशादिति चेत् । सोपहासं दृष्टान्तमाह । यथा अचित्रास्तन्तवः पटं चित्रमारभन्तइति । नैया-यिकैः किलाचित्रैस्तन्तुभिश्चित्रः पट आरभ्यतइत्यभ्युपेयते । तच्चैतद-युक्तम् । न तावच्चित्रं रूपमेकं पटसमवेतं स्ववचनविरोधात् । नाना हि चित्रमुच्यते तत्कथमेकमिति । तेन यदुक्तं भवति नानेकमिति तदुक्तं भवति चित्रमेकमिति । यदाहुः चित्र-तदेकमिति चेदिदं चित्रतरं मह-दिति । न च नीलपीतादय एव बहवो ऽव्याप्यवृत्तयश्चित्रवदास्पदमिति सांप्रतम् । रूपादीनां व्याप्यवृत्तित्वात् । तेऽमी त्रिवादाद्यारब्धा नीलपी-तादयो व्यापनीया आश्रयवृत्तयो रूपजातीयत्वाच्च शुक्लपटगतरूपवदिति । उपपन्न उपहासो यथा अचित्रास्तन्तवः पटं चित्रमारभन्तइति । निराक-रोति नोपलभ्यमानरूपाधारत्वात् । अवयविनो रूपं निर्दिश्यता-मिति ब्रुवाणेनेति । अवयवो ऽस्यास्तीत्यवयवी अवयवश्च कार्यं तद्वानवयवी कार्यमिति कार्यकारणभावाभ्युपगमः कुतो भवति । न च प्रवृत्तसाधनं नाम किं चिदस्ति प्रमाणम् । तर्कस्तु भवेत् । न चायं प्रमा-

योनैतिकर्तव्यता विना प्रमाणमर्थं साधयितुमर्हतीत्यर्थः । यदपि त्वयोपहा-
साभिप्रायेण पटरूपं चित्रं दृष्टान्तीकृतं तथाभिप्रायस्तावत्तव यादृशस्तादृशो
वा वचनात्तावदयं दृष्टान्तः प्रतिभाति । दृष्टान्तश्च वादिप्रतिवादिनोरविवाद-
विषय इति तत्साधनं व्यर्थम् । तथा ऽप्युपेत्य चित्रवादं ब्रूमः त्वां प्रति
चित्रं रूपं पटसम्बन्धितया साधयामस्त्वदभिप्रायस्योपहासनिराकरणाये-
त्यर्थः । पटस्य चित्रं रूपमित्यनुभव एवाबाधितः प्रमाणमिति भावः ।
बौद्धः स्वाभिप्रायमुद्घाटयति । अनेकत्वमसङ्ग इति चेदिति । निराक-
रोति । न चित्रशब्दस्यैकानेकविषयत्वात् । यदि नानैव चित्रमुच्येत ततः
स्याद्विरोधः किं त्वेकस्मिन्नपि चित्रपदं प्रयुज्यते । तस्मान्नैकत्वेनास्य विरोध
इत्यर्थः । दोषक आह नैकस्मिन्नदृष्टत्वात् । एकस्मिंश्चित्रग्राहिणो ऽनु-
भवस्यादृष्टत्वात् । पुरुषविवक्षाधीनप्रवृत्तयस्तु क्व नाम दुर्लभा इति भावः ।
परिहरति नाभ्युपेतहानेरिति । न तावदनेकपर्यायश्चित्रशब्दो ऽनेकं चित्र-
मित्यनेकपदेन सामानाधिकरण्यं प्रतिपत्तुमर्हति । पर्यायशब्दानां सह
प्रयोगानुपपत्तेः दृश्यते तु प्रयोगो ऽनेकं चित्रमिति । तस्माद्यथा शुक्लानि
नाना तथा चित्राणि नानेत्यभ्युपेतव्यम् । तथा चैकं शुक्लमनभ्युपगच्छतो
यथा शुक्लनानात्वाभ्युपगमो हीयते एवमेवैकं चित्रमनभ्युपगच्छतश्चित्रनाना-
त्वाभ्युपगमो हीयत इत्यर्थः । शङ्कान्तरमाह । अथानेकमचित्रमिति ।
निराकरोति । एवमपीति । शङ्कते । अथाचित्राणीति । परिहरति एवं
च न किंचिदिति । इष्यत एवास्माभिरेषा ऽवयवसमवेतैः सितहरित-
लोहितादिभिरसमवायिकारणैरवयविनि चित्रं रूपमारभ्यत इति । दोषयति
पुटान्तर इति । पुटान्तरं पार्श्वान्तरम् परिहरति । भवतैवेदमुक्तमिति ।
एको ऽपि गुण आरभत इति मत्वा शङ्कते । चित्रप्रत्ययस्तर्हीति । समा-
धत्ते । न प्रसक्त इति । ननु यदि चित्राचित्राभ्यामारब्धमवयविनो रूपं तदपि
पीतादिवन्निर्दिश्यतां न च शक्यं निर्देष्टुं तस्मान्नास्तीत्यत आह । एताव-
दिति । अनिर्वाच्यमप्यनुभूयमानमशक्यापह्नवम् । यथेक्षुक्षीरादीनां माधुर्य-
स्यान्तरं महदित्यर्थः । न तावदवयवरूपादवयविनो ग्रहणं युक्तमिति ।
न द्रव्यान्तररूपेण द्रव्यान्तरे चाक्षुषत्वं दृष्टं न खलु पृथिव्यादिरूपेण वायुश्चा-
क्षुष इत्यर्थः । प्रकृतमुपसंहरति । तस्मादिति । अविशीर्णान्विता अवधारित

इत्यर्थः । सर्वाग्रहणमवयव्यसिद्धेरिति अत्र प्रत्यवस्थितः पूर्वपक्षी अथेदमा-
हेति । केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धेरित्यादिसूत्रभाष्यवा-
र्त्तिकानि पूर्वपक्षसिद्धान्तयोरतिरोहितार्थानि । अपि चायं वृत्तिविकल्प
आश्रयव्याघातादयुक्त इत्याह ।

अवयवावयविप्रसङ्गश्चैवमा प्रलयात् (सू. १५) ॥ अत्र त्रयः
पक्षाः सम्भवन्ति । यो ऽयमवयवेषु अवयविवृत्तिविकल्पानुपपत्त्या अवयविनो
ऽभावप्रसङ्ग आपाद्यते स आ प्रलयाद्वा निवर्त्तेत आ परमाणोर्वा न क्व चिदपि
निवर्त्तेत इति । तत्र प्रथमद्वितीयविकल्पावाश्रित्येदं सूत्रम् । यद्येष वृत्तिविकल्पः
स्थूले घटाद्यवयविषु तदवयवेष्विति तदभावात्प्रलये व्यवतिष्ठेत । न च
तदा प्रलयः सर्वोपाख्याविरहितो दर्शनविषयः सम्भवतीति दर्शनविष-
याभावादनाश्रयो विकल्प आत्मानमेव न लभते । उपलक्षणं चैतदा
प्रलयादिति । आ परमाणोरित्यपि द्रष्टव्यम् । परमाणूनामप्यतीन्द्रियत्वेन
दर्शनविषयत्वाभावादनाश्रयता विकल्पस्य तदवस्थैव । तदिदमुक्तं निरव-
यवाद्वा परमाणुतो निवर्त्ततेति । अथापीति । अपि चेत्यर्थः । अपि
च प्रलयमभ्युपेत्येदमुक्तमा प्रलयादिति । वस्तुतस्तु ।

न प्रलयो ऽणुसद्भावात् (सू. १६) ॥ निरवयवत्वे प्रमाणमाह ।
निरवयवत्वं तु परमाणोरिति । अथानन्तो यथायमवयवावयविविभागः
कस्मान्न भवतीत्यत आह ।

परं वा त्रुटेः (सू. १७) ॥ त्रुटिस्त्रसरेणुरित्यनर्थान्तरम् । जाल-
सूर्यमरीचिस्थं त्रसरेणु रजः स्मृतम् । यदि त्रुटेः परं द्विविपदके ऽवयववि-
भागो न व्यवतिष्ठते ततो ऽवयवविभागस्यानवस्थानाद् द्रव्याणामसंख्येयत्वा-
त्रुटित्वनिवृत्तिः त्रुटिरपि सुमेरुणा तुल्यपरिमाणा स्यात् । न खल्वनन्तावयवत्वे
कश्चिद्विशेष इत्यर्थः । वार्त्तिकं यावद्वा प्रलयो ऽनिवृत्तिर्वेति । प्रलयपर-
माणुपक्षे विकल्पनिवृत्तिर्नास्ति दर्शनविषयस्तु नास्तीत्यनाश्रयो विकल्पः ।
अनन्तावयवत्वे सर्वस्य विकल्पाघातत्वे दर्शनविषयाभाव इत्यनाश्रयो विकल्प
इत्यर्थः । स्पष्टोदाहरणम् । इयन्तश्च ते परमाणवः संहतास्त्रुटिभाव-
मापद्यन्त इति । सावयवत्वे तु परमाणुशब्दस्यार्थो वक्तव्यः । किमुक्तं भवति
परमाणुरिति परमत्वविशिष्टो ह्यणुः परमाणुः यतः सोऽणीयो नापरमस्तीति

यावत् । तस्मादपि चेत् क्षोदीयो ऽन्यदस्ति नैव परमत्वविशिष्टो ऽणुरित्यर्थः । अथ भिन्नपरिमाणाः परमाण्ववयवास्ततो न्यूनपरिमाणा इति यावत् । ततो न परमाणुः प्रतिषिध्यते परमाण्ववयवा एव परमाणवस्ते चानवयवत्वादकार्याः तथा च परमाण्वारब्धं कार्यं परमाणुरिति कृत्वा आरोप्य वृत्तिविकल्पेन प्रतिषिध्यत इति । अथेदानीमानुपलम्भिकस्तस्य व्याख्यानं सर्वं नास्तीति मन्वान आह ।

**आकाशव्यतिभेदात्तस्य परमाणोर्निरवयवस्यानुपपत्तिः ।** सावयवत्वे तु वृत्तिविकल्पात्तदभाव इति शून्यतैव तत्त्वं भावानाम् । अनाश्रितो ऽपि विकल्पो यथालोकप्रतीति कल्पनामात्रनिमित्तस्तात्त्विकीं शून्यतां गमयति । मिथ्याज्ञानानामपि तत्त्वावगमहेतुत्वदर्शनात् । यथा दूराद्वनस्पतौ हस्तिप्रत्ययप्रवाहो वनस्पतितत्त्वप्रतिपत्तेर्हेतुः । यथा रेखागवयो वा गवयत्वप्रतिपत्तेरित्यादि बहूत्प्रेक्षितव्यमिति भावः । तदेतद्वार्तिककारो दूषयति । **आकाशव्यतिभेदादनित्यः परमाणुरित्यभिदधानो व्यतिभेदार्थं प्रष्टव्य इति । अन्तर्बहिरिति वचनं कार्यस्य कारणान्तरवचनमिति ।** कारणान्तरं कारणविशेषः तस्य वचनमित्यर्थः । अपेत्य परमाणोरवयवान्न तद्विभागस्याकार्यं कारणमिति आकाशव्यतिभेदादित्याकाशहेतुकं व्यतिभेदं विभागमाह । न चाकाशं विभज्यमानयोर्द्रव्यान्तरयोर्विभागस्य कारणमपि तु कर्मेत्यर्थः । **सर्वतो व्यवहितस्य यस्य मध्ये अवयवा न सन्तीति** तत्सुषिरमिति । सर्वतो ऽव्यवहितस्य निरन्तरस्यावयविनः स्वावयवद्वारेण । यदुक्तं भवति । यस्यावयवाः परितो निरन्तरमेवस्थिता मध्ये च न सन्ति तत्सुषिरमिति । यन्मूर्तिमतेन सर्वेण संयुज्यते । मूर्तिमता सर्वेण संयुक्तत्वं सर्वगतत्वं यदतो वार्त्तिककारस्याकाशसंयोगस्याभ्युपगमः प्रौढिवादतयेति लक्ष्यते । स्यादेतत् । आकाशं चेत्सर्वगतं ततो मूर्तिमतां द्रव्याणां तेन प्रतिबन्धाद्गतेरावरणं व्यूहान्तरापादनं च जलौघस्येव भाषादिना भवेन्न चास्ति तस्मान्न सर्वगतमित्यत आह ।

**अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः (सू. २२)॥** यत एवाव्यूहाविष्टम्भावत एवाप्रत्यूहं विभुत्वमस्येत्यर्थः । पुनः शून्यतावादी प्रत्यवतिष्ठते ।

**मूर्तिमतां च संस्थानोपपत्तेरवयवसद्भावः (सू. २३)॥** इत्यर्थः, सिद्धान्तं निवर्तयति । यद्यपि मूर्तिमतामिति संबन्धित्वमात्रेणोपात्तं

सूत्रे तथाऽपि हेतुपदतया वार्त्तिककारो व्याचष्टे । **सावयवाः परमाणवो मूर्त्तिमत्त्वाद् घटादिवदिति** । प्रयोगान्तरमाह **संस्थानवत्त्वादिति** । सूत्रान्तरमनुवृत्तिसहितं पठति ।

**संयोगोपपत्तेश्च** ( सू. २४ ) ॥ इति । पौनरुक्त्यं दर्शयति । **नन्विदमिति** परिहरति । **न चरितार्थमिति । मूर्त्तिर्नामाव्यापिनो द्रव्यस्य चविविधं परिमाणमिति** । परमह्रस्वत्वपरमाणुत्वे परमसूक्ष्मतत्र द्रव्ये व्यवस्थिते ब्याथि तु गृहीत्वा परममहत्त्वपरमदीर्घत्वाभ्यामष्टविध परिमाण भवति । परममहत्त्वपरमदीर्घत्वे च सर्वगतव्यापिनी इति न मूर्त्तिः । असर्वगतद्रव्यपरिमाण मूर्त्तिरिति पारमर्षवचनात् । संस्थानं नाम प्रचयाख्यः संयोगो घटादिषु निर्घटत्वादिवानिव्यक्तिहेतुरिति । संयोगः संयोगमात्र न त्वप्राप्तिपूर्विका प्राप्तिरिति । तस्मादपौनरुक्त्यम् । तदेतच्छून्यतामतमपाकरोति । **यत्तावन्मूर्त्तिमत्त्वादिति** । शून्यतावादी प्रलयान्तत्वाभिमानेनाह । **अथ तावदिति** । सिद्धान्त्याह **अन्तो निरवयव इति** । प्रलयान्तत्वमधस्तान्निराकृतमिति भावः । नन्वधस्तान्निराकरणान्मा भूत्प्रलयान्तो विभागो विभागान्तस्तु भविष्यति किं परमाणवन्ततायहेतोरित्याशङ्कते । **अथान्तो विभागः** ! निराकरोति । **स न युक्त इति** । नासति गुणिनि गुणोऽस्तीत्यर्थः । एतावन्तश्च कल्पाः सम्भविनः । तत्र प्रथमे कल्पे अनेकान्तिकत्वव्याघातौ द्वितीये विभागस्यानाधारत्वप्रसङ्गः तृतीये त्रुटेरमेयत्वप्रसङ्ग इत्याह । **एतावच्चैतत् कल्पजातं स्यादिति** । परमाण्वन्तता विभागस्य ध्रुवन्निरवयवं मूर्तिमन्तं परमाणुं प्रतिपादयतीति । अनन्तत्वे तु त्रुटेरमेयत्वप्रसङ्गो व्याघातः । प्रलयान्तत्वे च विभागस्यानाधारत्वप्रसङ्गो व्याघातः । सावयवशब्दस्यार्थः समानजातीयावयव न केवलं तदारब्धमपि तु तदाश्रितम् । तन्त्वाद्यारब्धं पटादि द्रव्यं तन्त्वाद्याश्रितं च । नन्वेवमपि कुतः सावयवत्वमित्यत आह । **अवयवस्तदाधारस्तस्य समानजातीयारब्धस्य कार्यद्रव्यस्याधारः** तस्मात्सावयवत्वं कार्यविशेषः तस्मात्सावयवाः परमाणव इत्यभिवदता कार्यविशेषः परमाणुरित्युक्तं भवति । कार्यविशेषश्च परमाणुरिति व्याहतम् । आनन्त्ये तु त्रुटेरमेयत्वप्रसङ्गात् । सा खल्वनवयवस्य कल्पितस्य परमसूक्ष्मतया परमाणवाख्या तेन परमाणुरिति किमुक्तं भवति

अनवयवी ऽकार्यश्चेति । सावयव इति किमुक्तं भवति सावयवः कार्यश्चेति प्रतिज्ञापदयोर्व्याघात इत्यर्थः । अथ मा भूद्घटेऽमेयत्वमित्येकपरमाणुपूर्वकत्वं परमाणोः प्रतिपद्यते । शेषमतिरोहितार्थम् । यदि द्वे द्रव्ये अधिकृत्याभिधीयत इति । मध्यस्य हि परमाणोरूर्ध्वाधःपार्श्ववर्तिभिः परमाणुभिर्ये संयोगास्तत्र मध्यस्य पूर्वेण परमाणुना यः संयोगो नासौ मध्यपश्चिमपरमाण्वाश्रितः एवं मध्यमपरमाणुसंयोगो नैव मध्यमपूर्वपरमाण्वाश्रय इति । एवमन्यत्रापि द्रष्टव्यम् । यद्यपि भिन्नदेशा इति समानदेशत्वमसिद्धम् । अथ परमाणूनां संबन्धिनं परमाणुं मध्यममधिकृत्योच्यते तदाश्रिता हि संयोगाः षडपि भवन्तीति तत्राह । न किं चिद्बाध्यत इति । स्यादेतत् । संयोगसमानदेशत्वेन परमाणवो ऽपि संयुक्ताः समानदेशा इति पिण्डस्याणुमात्रत्वप्रसङ्ग इति परोक्तमनुवदति । यत्पुनरेतदिति । तद्दूषयति । तत्रेति । यत् यत्स्थमवेतं स तस्य देशो यथा कुण्डादीनां द्रव्यं न च परमाणवः क्व चित्समवयन्ति किं तु तत्संयोगाः । तेन देशवतां संयोगानामस्तु समानदेशता न तु परमाणूनामदेशत्वादित्यर्थः । देशयति । ननु कार्यकारणे इति । यथेह कुण्डे बदराणीति यथा बदरं कुण्डदेशं एवं तदवयवास्तदवयवाः । न च समवाय एव देशदेशित्वनिबन्धनमपि तु संयोगो ऽपि । न हीह कुण्डे बदरमिह पटे शुक्लत्वमिति वा आधाराधारत्वयो विशिष्यते । तस्माद्बहूनां द्रव्याणां समानदेशत्वदर्शनान्नासिद्धो दृष्टान्त इत्यर्थः । तद्दूषयति । एतदनभ्युपगमेन प्रत्युक्तम् । द्रव्याणामेकत्र समवायेन समानदेशतां ब्रूमो न तु संयोगेन समवायेन हि समानदेशता स्थौल्यपरिपन्थिनी । यथा गन्धरसरूपस्पर्शाः समानदेशा न स्थौल्यमारभन्ते तत्कस्य हेतोः यथाऽमूर्तानां समानदेशसमवायात् । मूर्तास्तु स्पर्शवन्तः समवायेनासमानदेशाः परस्परसंयोगिनो यदि स्थौल्यमारभन्ते किं बाध्यते तस्मात्संयोगेन समानदेशता न प्रतिषिध्यते समवायेन तु प्रतिषिध्यते सा हि स्थौल्यविरोधिनीति सिद्धम् । अभ्युपेत्येवमुक्तं संयोगाः समानदेशा इति । परमार्थतस्तु कुण्डबदरसंयोगस्य कुण्डबदरे आश्रयः तदवयवकुण्डबदरसंयोगस्य कुण्डबदरावयवा इति सिद्धं संयोगानामपि भिन्नदेशत्वमित्याह । न च संयोगा अपीति । उपसंहरति । षण्णां समानदेशत्वादिति । वाक्यमिति । यत्पुनरुक्तं

दिग्देशभेदो यस्यास्ति तस्यैकत्वं न युक्तमिति । परमाणोः किल भवद-भिमतस्यैकस्य दिग्भागाः षट् न चैकस्य दिग्भागे भेदो ऽस्तीति षडेव पर-माणवः । एतद् दूषयति क एवमाह **दिग्देशभेदो यस्यास्तीति** । स्वरूपे-णैका दिक् सर्वगता च नास्या भेदो ऽस्तीत्यर्थः । यद्येकैव दिक् [illegible] तर्हि परमा-णावस्मादयं परमाणुः पूर्वो ऽयं पश्चिम इत्यादयो बुद्धिव्यपदेशभेदाः कुत इत आह । **दिग्देशभेदाश्च दिशः संयोगा** एकत्वे ऽपि दिश आदित्योदय-देशप्रत्यासन्नदेशसंयुक्तो यः [illegible] इतरस्माद्विप्रकृष्टदेशसंयोगात्परमाणोः पूर्वः एवमादित्यास्तमयदेशप्रत्यासन्नदेशसंयुक्तो यः स इतरस्माद्विप्रकृष्टदेशसंयो-गात्परमाणोः पश्चिमः तौ च पूर्वपश्चिमौ परमाणू अपेक्ष्य यः सूर्योदया-स्तमयदेशविप्रकृष्टदेशसंयोगः स मध्यवर्त्ती । एवमेतयोर्यौ तिर्यग्देशसम्बन्धिनौ मध्यस्य पार्श्वेन व्यवस्थितौ पार्श्ववर्त्तिनौ तौ दक्षिणोत्तरौ परमाणू एवं मध्यन्दिनवर्त्तिसूर्यसन्निकर्षविप्रकर्षावपेक्ष्य ऊर्ध्वाधोभावो द्रष्टव्यः । संयुक्तसंयो-गाल्पत्वभूयस्त्वे च सन्निकर्षविप्रकर्षौ पूर्वसंख्यावच्छिन्नस्य चाल्पत्वं परसंख्या-वच्छिन्नस्य [illegible] भूयस्त्वम् । तस्मादेकस्यापि परमाणोः परमाण्वन्तरसंयोगा अव्याप्यवृत्तय एव भागाः । एवं दिशो ऽप्येकस्या अपि संयोगा एव भागाः यो ऽयं परमाणोः षट्केन युगपद्योगो मूर्त्तत्वमात्रप्रयुक्तो न सावयवत्वप्रयुक्त इति न सावयवत्वं गमयितुमर्हतीति । तेन यदुच्यते प्रबन्धसाधनं परैः यन्निरवयवं तन्न षट्केन संयुक्तं यथा विज्ञानं तथा च परमाणुरिति व्यापकविरुद्धोपलब्धि-रिति तन्निरस्तम् । मूर्त्तत्वप्रयुक्तत्वेन षट्कसंयोगस्य सावयवत्वेन व्याप्तेरसिद्धेः । छायातपयोगो ऽपि परमाणोरेकसंयोगस्याव्याप्यवृत्तित्वेनोपपन्नः । नन्वनवस्था नोपपद्यत इत्युक्तं तत्कुत इत्यत आह भाष्यकारः । **अनवस्थायां च प्रत्य-धिकरणं द्रव्यावयवानामानन्त्यात्** । क्रियावत्त्वादीनहेतून् सर्वथा विकल्प्य वार्त्तिककारो दूषयति । ये [illegible] **क्रियावत्त्वादिति** । एतेनासिद्धत्वेन । [illegible] हि घटा-दिकमवयविनमनभ्युपगच्छतो घटादिरस्तीत्यर्थः । **मतुपश्चार्थान्तरे दृष्ट-त्वाद्विरुद्ध इति** । क्रिया परमाणोरर्थान्तरमनिच्छतो मतुप्प्रयोगो विरुद्ध इत्यर्थः । विज्ञानवाद्याह **यदिदं भवान् बुद्धीरिति** । यदि पटस्तन्तुभ्यो भिन्नो भवेत्तन्त्वतिरेकेण गोरिवाश्वातिरेकेणोपलभ्येत । न चोपलभ्यते तस्मा त्पट इति मिथ्याबुद्धिरियम् । तन्तुरित्यपि मिथ्याबुद्धिरंशुभ्यो भेदेनानुपलम्भा-

त् । यथर्मशुरित्यपि तदनेन क्रमेण परमाणुष्वपि बुद्ध्या विविच्यमानेषु याथात्म्यानुपलब्धेर्न बाह्यवस्तु स्थूलं वा क्षोदीयो वास्तीति सर्वा एव बुद्धयः स्वाकारमबाह्यं बाह्यतया आलम्बमाना मिथ्याभूता इति । ननु पटादयः सावयवा भवन्त्वेवं परमाणूनां त्वनवयवत्वाद् बुद्ध्या विवेचनाद्भावाना याथात्म्योपलब्धिरित्यत आह । **परमाणवो ऽपि भागशो विभज्यमानास्तावद्यावत्प्रलय** इति । भवन्तु परमाणवो ऽनवयवा॰ संयोगेभ्यस्तु पद्भ्यो बुद्ध्या विविच्यमानस्य याथात्म्यमुपलभ्यत इति । तदेतद् दूषयति ।

**व्याहतत्वादहेतुरिति** । यस्य विविच्यमानस्य याथात्म्यानुपलब्धिस्तत्कुतश्चिद्विवेचनीयम् अवध्यभावे तदनुपपत्तेः । तथा च तेनावधिना क्व चिदवस्थातव्यम् । अनवस्थाया घटेरमेयत्वप्रसङ्गादित्युक्तम् । तस्मात्परमाणुषु वा तत्संयोगेषु वा तेनावस्थातव्यम् । तथा च यतो विविच्यते भाव, स यथास्यावधिर्याथात्म्येनोपलभ्यत इति बुद्ध्या विविच्यमानस्य सर्वभावानुपपत्त्या व्याघात इति सिद्धम् । दूषणान्तरमाह । **सर्वभावानुपपत्तिरिति** । प्रमाणस्यापि भावात् तद्गतत्वेन तदनुपपत्तौ सर्वभावानुपपत्तेरित्यर्थ. ।

**तदाश्रयत्वादपृथग्ग्रहणम् (सू॰ २८)** ॥ अपृथग्ग्रहणादिति सूत्राय: प्रष्टव्यो जायते । किं विलक्षणव्यवहाराभावः उत भेदाभाव.* उत तन्तुव्यतिरेकेण देशान्तरे ऽनुपलम्भ इति । न तावदाद्य॰ तन्तवो हि भिन्नाभबुद्धिवेद्याः पटस्तु अभिन्नाभबुद्धिवेद्य इति । नापि द्वितीय । तन्तूनामणुदेशत्वात् पटस्य तन्तुदेशत्वात् । तस्मात्तन्तुभ्यो ऽन्यथादर्शनमपृथग्ग्रहणं तत्र भेदे ऽपि तदाश्रितत्वेनोपपद्यमानं नाभेदं गमयितुमर्हतीत्यर्थः । भाष्ये **बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु** । अत्र यत्तदवयवावयविनामैन्द्रियकाणां तत्र पृथग्ग्रहणमविशेषकानामस्फुटतरमतीन्द्रियेभ्यो ऽणुभ्य आनुमानिकेभ्य. प्रत्यवस्थाना तदाश्रितानामवयविना पृथग्ग्रहणमित्यतिस्फुटमित्यर्थः । सप्रत्येन्द्रियके ऽप्यवयवे ऽवयविनो विविच्यमानस्य याथात्म्येन पृथग्ग्रहणमाह । **प्रमाणतश्चार्थप्रतिपत्तेरिति** । यदस्ति घटादिकमवयवि द्रव्यं यथा च स्वाश्रयसमवेतत्वेन गुणाधारतया च यन्नास्ति शशविषाणादि यथा च कार्यकारणभावेन तत्सर्वं प्रमाणत उपलब्ध्या सिध्यति ।

* विलक्षणबुद्धिवेद्यत्वाभाव उत देशाभाव इति ३ । ३ पु॰ पा॰ ।

सुगमं भाष्यम् । यदुक्तं प्रमाणोपपत्त्यनुपपत्तिभ्यां न सर्वाभावानुपपत्तिरिति । तत्र प्रत्यवतिष्ठते विज्ञानवादी ।

**स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः** (सू. ३१)॥ न खलु वास्तवः प्रमाणप्रमेयभावः किं त्वनादिवासनानिबन्धनकल्पनाधीनः । यथा हि न स्वप्ने सन्ति विषया अथ च प्रतिभान्ति कल्पनामात्रेण तथा च सांवृतेनापरमार्थसता प्रमाणप्रमेयभावेन बाह्यार्थशून्यता सिध्यति परमार्थसती प्रत्ययाना। दृष्टा मिथ्याप्रत्ययानामपि तत्त्वप्रतिपत्तिहेतुतेत्यभिहितं पुरस्तादित्यर्थः । तद्व्याचष्टे वार्त्तिककारः । **यथा न स्वप्ने विषयाः सन्तीति** । ननु स्वप्नप्रत्ययानामस्त्वेष धर्मः ये पुनरमी जाग्रत्प्रत्ययाः स्तम्भ इति वा कुम्भ इति वा किमायातं तेषामत्यन्तवैलक्षण्यादित्यत आह । **मायागन्धर्वेति** । जाग्रत्प्रत्यया ह्येवंविधाः सहस्रशो दृश्यन्ते न चैते स्तम्भकुम्भादिप्रत्ययास्ततो विलक्षणा इत्यर्थः । तदेतद्दूषयति ।

**हेत्वभावादसिद्धिः** (सू. ३२)॥ तद्व्याचष्टे भाष्यकारः । **स्वप्नान्ते विषयाभिमानवदिति** । अन्तशब्दो ऽवयववचनो ऽप्यभिन्नत्वमात्रेणावस्थाया प्रयुक्तः । तेन स्वप्नावस्थायां जागरितावस्थायामित्यर्थः । एतदुक्तं भवति । स्वप्नज्ञानस्यायाथार्थ्यमिच्छता बाधकमन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्ययो ऽस्य बाधको वक्तव्यः न चाबाधसमीचीनस्तद्बाधितुमुत्सहत इति समीचीनत्वं जाग्रत्प्रत्ययस्याभ्युपगन्तव्यम् । तथा च जागरितान्ते विषयोपलब्धिवदित्यनुपपन्नम् । वार्त्तिक **ख्यातिरिति चेत्** । प्रत्ययत्वमेव स्वप्नोदाहरणसहितं प्रमाणप्रमेयाभिमानमिथ्यात्वे हेतुरित्यर्थः । **विपर्यये च सामर्थ्याभावादिति** । पूर्वं प्रतिबुद्धेनेति विशेषणं विवक्षित्वोक्तम् । अधुना त्वनुपलब्धेरिति विवक्षित्वोच्यत इत्यपौनरुक्त्यम् । अथ विज्ञानवादी स्वपक्षे प्रमाणमाह । **न चिद्व्यतिरेकिणो विषयाः ग्राह्यत्वाद् वेदनावदिति** । इदमाकूतम् । विज्ञानस्य हि बाह्यो ऽर्थो ग्राह्यो भवन्निराकारस्य सत्तामात्रेण वा भवेत् कारणत्वेन वा एकसामग्र्यधीनत्वेन वा ज्ञानाहितफलाधारत्वेन वा । न तावत्सत्तामात्रेणान्यस्यान्यो विषयः सत्तामात्रस्य विषयान्तरेषु भावात्सर्वे ऽर्थाः सर्वविषया इति सर्वसर्वज्ञतापत्तिः । न च सत्तामात्रमपि विषयत्वव्यवस्थापकम् असतो ऽपि विषयत्वात् । अत एव न

कारणत्वेन विषयभावः । अपि च चक्षुरादयो ऽपि विज्ञानस्य कारणमिति
विषयाः रूपविज्ञानस्य प्रसज्येरन् वर्तमानार्थमपि च विज्ञानं न भवेत् ।
क्षणिकत्वेनोत्पादकस्यार्थक्षणस्योत्पाद्यविज्ञानसमये विनिपातात् । एकसा-
मग्र्यधीनत्वेन तु विषयत्वे वर्तमानावभासितोपपद्यते । सा तु नोपप-
द्यते भवतोऽप्यतीतानागतयोरर्थयो व्यापकत्वादतिव्यापकत्वाच्च इन्द्रिया-
दिक्षणस्यैकसामग्र्यधीनस्यालम्बनत्वप्रसङ्गात् । विज्ञानाहितफलाधार आल-
म्बनमिति चेत् किं पुनर्विज्ञानेनार्थे जन्यते प्राकट्यं ■ चेतदर्थधर्मो
ऽपि सुखादिवत्सर्वपुरुषसाधारणम् । ज्ञानाहितस्यार्थधर्मस्यापि ज्ञानवन्तं
प्रत्यसाधारणत्वदर्शनात् । यथा यस्यापेक्षाबुद्धिजनितं द्वित्वमर्थधर्मः सो
ऽपेक्षाबुद्धिमन्तमेव पुरुषं प्रत्यसाधारण इति । तन्न अव्यापकत्वात् ।
सन्ति खल्वतीतानागतविषयाणि सहस्रशो विज्ञानानि शब्दानुमानजानि
च न चैतान्यर्थे फलमाधातुमुत्सहन्ते अर्थस्य तदानीमसम्भवात् । न
ह्यसतोऽस्ति संभवो ऽसदनुत्पन्नरूपो धर्मो धर्मी ऽस्याविनश्यम् प्रत्युत्पन्न-
रूप इति । स्वकारणादात्मानात्मप्रकाशनशक्तियुक्तमुत्पद्यते ज्ञानं तादृशं
येन कश्चिदेवास्य विषयो न सर्वमिति चेत् । हन्त भोः शक्तेः प्रत्य-
नियतत्वात्किमस्य ग्राह्यमिति वक्तव्यम् । अर्थ इति चेन्न । न ताव-
दयमस्य निर्वर्त्यः अर्थस्यैव ज्ञाननिर्वर्तकत्वात् । न चार्थाधारं फलमाधत्त
इत्युक्तम् । न चासति ग्राह्ये शक्तिसम्भवः तस्मान्नीलाकारं विज्ञानं ग्राह्यं गोच-
रयतीति मनोरथमात्रम् । अस्तु साकारमेव ग्राह्यगोचरम् । तथा हि नीला-
द्याकारं ज्ञानं नीलादिगोचरम् । नीलमस्य स्वरूपं यतः । अत्रेदं वक्तव्यम् ।
किं सर्वात्मना सारूप्यभावाद् विषयभाव आहो कथंचित्सारूप्यभावात् । ■
तावदर्थस्य जडात्मनो ज्ञानेन प्रकाशात्मना सर्वथा सारूप्ये सारूप्ये ज्ञान-
मपि जडं भवेदिति ज्ञानत्वहानिः । एकदेशेन च सारूप्ये सत् क्व नाम ना-
स्तीति सर्वं ज्ञानं सर्वं वेदयेत् । अपि च नीलज्ञानात्समनन्तरप्रत्ययादुत्पन्नं ज्ञानं
न तथा नीलार्थसरूपं यथा नीलज्ञानसरूपमिति समनन्तरप्रत्ययस्तत्सारूप्या-
भ्यां विषयः स्यान्न चैतदस्ति तस्मान्न सारूप्यसमुत्पत्ती अपि विषयलक्षणम् ।
आस्तामस्य सारूप्यसमुत्पत्ती मनस्कारेन्द्रियादिभिस्सार्धं ऽपि यमध्यवस्यति सो
ऽस्य विषयो ऽर्थे ग्राह्यमस्तीति अर्थं यथास्य विषयो न मनस्कारादीनि

चेत् । अथ को ऽयमध्यवसायः । न तावद्ग्रहणं न खलु द्वयाकारो गृह्यते
नीलमित्यनुभवो न तु नीले इति । स्वाकारस्य बाह्यसमारोपो ऽध्यवसाय
इति चेत् । स किं गृह्यमाणे बाह्ये उताऽगृह्यमाणे । न तावद्गृह्यमाणे न हि
नीलद्वयं प्रकाशत इत्युक्तम् । न चारोपविषयमगृहीत्वा ऽऽरोप्यमारोपयितु-
मर्हतीति । न ह्यननुभवन् पुरोवर्त्ति शुक्लभास्वरं रजतमारोपयति तथ । अपि
चागृह्यमाणे बाह्ये प्रवृत्तिनियमो न भवेत् । इतरेषामगृह्यमाणत्वेनाविशेषा-
त्सर्वत्र प्रवृत्तिप्रसङ्गात् । न च साकारज्ञाननये बाह्यसद्भावे प्रमाणमस्ति
अगृह्यमाणत्वात् । ननु नीलाद्याकारस्य कादाचित्कत्वमेव प्रमाणम् । तथा
ऽपि यद्यस्मिन्सत्यपि कदाचिद्भवेत्तत्तदितरापेक्षम् । यथा सत्यपि सोपाने वि-
च्छिन्नगमनरचनप्रतिभासाः प्रत्ययाः सन्तानान्तरापेक्षास्तथा च सत्यप्यालयस-
न्ताने षडपि प्रवृत्तिप्रत्यया इति स्वभावहेतुः वासनापरिपाकप्रत्ययकादाचित्क-
त्वात् कदाचिदुत्पाद इति चेत् । नन्वेकसन्तानपतितानामालयविज्ञानानां तत-
त्प्रवृत्तिविज्ञानजननशक्तिर्वासना तस्याश्च कार्यजननं प्रत्याभिमुख्यं परिपाकः
तस्य च प्रत्ययः स्वसन्तानवर्त्ती पूर्वक्षणो हेतुः सन्तानान्तरापेक्षानभ्युपगमात् ।
तथा च सर्वे आलयसन्ताने पतिताः परिपाकहेतवो न वा कश्चिदपि अवि-
शेषात् । क्षणभेदाच्छक्तिभेदस्तस्य कादाचित्कत्वात्कार्यकादाचित्कत्वमिति
चेत् । नन्वेकस्यैव नीलविज्ञानजननसामर्थ्यं शक्तिप्रबोधजननसामर्थ्यं च
क्षणान्तरस्य तत्र स्यात् । सत्त्वे वा कथं क्षणभेदात्सामर्थ्यभेद इत्यालयस-
न्तानवर्त्तिनः सर्वे समर्था इति समर्थहेतुसद्भावे कार्यक्षेपानुपपत्तिः । स्वसन्ता-
नमात्राधीनत्वे हि निषेध्यस्य कादाचित्कत्वस्य विरुद्धं सदातनत्वं तस्योपल-
ब्ध्या तु कादाचित्कत्वं निवर्त्तमानं हेत्वन्तरापेक्षत्वेन व्याप्यत इति प्रति-
बन्धसिद्धिः । न च सन्तानान्तरनिमित्तानि प्रवृत्तिविज्ञानानि सन्तत्यविकत-
राणामपि नित्यसन्निधानाद्विज्ञानानामदेशात्मकत्वेन दूरत्वानुपपत्तेर्व्यतिरि-
क्तस्यानभ्युपगमात् । नापि कालतो विप्रकर्षसम्भवः अपूर्वसत्त्वप्रादुर्भा-
वानभ्युपगमात् । तदिदमनुमानं सौत्रान्तिकानां बाह्याभ्युपगम इति तदयु-
क्तम् । स्वसन्तानमात्रनिमित्तत्वे ऽपि नीलादिविज्ञानानां कादाचित्कत्वोप-
पत्तेः सन्दिग्धव्यतिरेकित्वेन हेतोरनैकान्तिकत्वात् । ननूक्तं न क्षणभेदः का-
र्यभेदहेतुरिति कल्पितस्य सन्तानस्य सर्वसामर्थ्यविरहिणो भेदः कार्यभेदहे-

तुरिति न तु परमार्थसतः क्षणस्य कार्यभेदहेतुत्वमिति को ऽन्यो भेदं साध-
द्रष्टुमर्हति । ननु यदि क्षणभेदः शक्तिभेदहेतुस्ततो भिन्नानां क्षणानां नैका
शक्तिः स्यात् तथा चैकेन केन चिन्नीलज्ञाने जनिते तन्नीलज्ञानं क्षणान्तरान्न
स्यात् । यदि भिन्नानां नैकं सामर्थ्यम् अथ बाह्यार्थवादिनो ऽपि कथं भि-
न्नानां नीलोत्पलसन्तानानामेकनीलोत्पलाकारज्ञानधारासामर्थ्यम् । यदुच्यते
अन्यदेव नीलविज्ञानं यन्नीलोत्पलसन्तानान्तरात् । वयमपि ब्रूमहे अन्यदेव
नीलविज्ञानं यत् क्षणान्तरादिति । तस्मात्कश्चिदेव तादृशः स्वलक्षणभेदो
जायते य एक एवेदं कार्यभेदं जनयति न कार्यान्तरमिति । तस्मात्स्वा-
कारस्यापि ज्ञानस्यार्थो न गोचरो न वागोचरः यतो ऽनुमानमिति ।
न च प्रत्यक्षवदनुमानमप्यर्थगोचरं तस्मात्स्वाभूत वार्तिककृता न चित्त-
व्यतिरेकिणो विषयाः ग्राह्यत्वाद्वेदनुवदिति । नीलादयो हि विषया उभ-
यवादिसिद्धास्तेषां चित्तभेदाभेदयोर्विप्रतिपत्तिः । तथैव चित्तव्यतिरेकः परै-
रभ्युपगतः प्रतिषिध्यते यावच्च प्रतिषिध्यते सर्वो ऽनुपलब्धेरिति ग्राह्यत्वा-
दित्ययं हेतुर्विरुद्धव्याप्तोपलब्धिः । प्रतिषेध्यश्चित्तव्यतिरेकस्तद्विरुद्धस्तदव्य-
तिरेकस्तेन व्याप्तं ग्राह्यत्वं तस्योपलब्धिरेव तन्निषेध्यस्यानुपलब्धिरिति ।
अथ तावदेतद्वक्तव्यम् । ग्राह्यत्वस्याभेदेन व्याप्तौ सत्यां भेदं निवर्तयेद्
न त्वभेदेनास्य व्याप्तिः । तथा हि यदेतन्नीलं स्थूलं शिष्टमुपलभ्यते
तस्यास्य विच्छेदः स्थौल्यं च न ज्ञानस्यात्मा नानादिग्देशव्यापिता हि
स्थौल्यम् । न चैकमदिग्देशात्मकमनवयवि ज्ञानं नानादिग्देशव्यापि सम्भ-
वति । यथा ऽऽह । तस्मान्नार्थेन विज्ञाने स्थूलाभासस्तदात्मनः । एकत्र
प्रतिषिद्धत्वाद्बहुष्वपि न सम्भव इति । तस्मादर्थविच्छेदो ऽपि न ज्ञानात्मकः ।
तस्य तथात्वे परमार्थतो ऽर्थाद्विच्छिन्नं ज्ञानं स्यात् । तस्मादयमपि न
ज्ञानमित्यसन्नभ्युपगन्तव्यः । न च सदसतोरैक्यमित्यनात्मा ऽपि विज्ञाने
प्रकाशमानश्यामनिच्छता ऽपि स्वीकर्तव्यम् तथा च सदपि प्रकाशिष्यते । नन्वना-
त्मन्यर्थे ऽकिंचित्करं विज्ञानं कथमर्थप्रकाशकम् । अथाकिंचित्करं ज्ञानं
स्योपे कथमस्य प्रकाशकम् । स्वभावादिति चेद् स्वभावो न दण्डवारितः ।
यद्धि यस्य स्वभावः तस्य नान्यापेक्षा यथा निम्नस्य स्वभावो ऽधस्पन्दे । स्वभा-
वतस्त्वर्थस्य ज्ञानमिति न तदीयत्वे अन्यदपेक्षते । अतत्तुल्यात्वे च ज्ञान-

मर्थस्येति चेद् अथ संबन्ध एव सम्बन्धिनोः कथम् । सम्बन्धान्तरकल्पनाया-
मनवस्था । तस्माद्यथा सम्बन्ध एव संबन्धान्तरमन्तरेण सम्बन्धिनोः एवं ज्ञान-
मपि सम्बन्धान्तरमन्तरेणार्थस्येति समानम् । न चातिप्रसङ्गः । स्वकारणादुत्प-
न्नस्य कस्य चिद्विज्ञानस्य कश्चिदेव विषयो नान्यः । न स्वभावाः पर्यनुयो-
गमर्हन्ति एवं भवतैव मा भवत एवं कस्मान्न भवतीति । अकिंचित्करस्य
रूपविज्ञानस्य कथं रूपविषयतेति चेत् । किं रूपविज्ञानं प्रमाणं विवक्षित्वे-
दमुच्यते आहो फलं विवक्षित्वा । यदि प्रमाणं ततो न तदकिंचित्करं
तस्य हानोपादानोपेक्षाप्रसवहेतुत्वात् । अथ फलं तदयुक्तम् । क्व नाम फलं
किंचित्करं न हि गतिजन्या नगरप्राप्तिश्चैत्रस्य चैत्रनगरसंयोगसमवायाय
किं चित्करोति । एवमर्थविषयत्वाय स्वाभाविकाय न ज्ञानेन किं चिदपरं
जनयितव्यम् । अर्थप्रतिबद्धत्वं ज्ञानस्यार्थविषयत्वं न हि ज्ञानमनुव्यवसा-
यज्ञानेन निरूप्यमाणमर्थनिरूपणं विना शक्यं निरूपयितुमित्युक्तम् ।
कर्मण्यसमवेतं कथं कर्मण इति चेद् अथ फलसमवायः कर्मण्यसमवेतः
कथं कर्मण । पारतन्त्र्यादिति चेत् किमिदं पारतन्त्र्यं तन्निरूपणाधी-
ननिरूपणत्वमिति चेत् तदिहापि समानमन्यत्राभिनिवेशात् । तस्मादभे-
देन ग्राह्यस्याग्राह्यत्वाद्ग्राहकस्य विरुद्धत्वाच्च न भेदं निवर्तयितुमर्हतीति
दूषणे स्थवीयसि सत्येव दूषणान्तरमाह वार्तिककारः । वेदना सुख-
दुःखे चित्तं विज्ञानमिति । अभ्युपेत्याह **यथाभिन्नविज्ञानं वेदना-**
त इति । यथा ऽङ्गुल्यग्रं न तेनैवाङ्गुल्यग्रेण स्पृश्यते एवं ज्ञानं न तेनैव ज्ञानेन
ग्रहीतुं शक्यते । ननु न गृहीतिर्ग्राह्या न ज्ञाप्या कर्मभावो विद्यते क्रियाफ-
लशालितया कर्म भवति न चास्यामस्ति फलान्तरम् अपि तु स्वयमाविर्भूत-
स्वभावा गृहीतिरपराधीनप्रकाशा ग्राह्येत्युच्यते । यदि वेद्याः स्वयं न प्रकाशेत
नार्था अपि प्रकाशेरन् तत्प्रकाशाधीनप्रकाशा हि ते । तथा हि यद्यत्प्रका-
शाधीनप्रकाशं तत्तस्मिन् प्रकाशमाने प्रकाशते यथा दण्डप्रकाशाधीनप्रकाशो
दण्डिप्रकाशः ज्ञानप्रकाशाधीनप्रकाशश्च विषय इति स्वभावहेतुः । न
च ज्ञानादन्यत्स्वसंवेदनं न दृष्टमित्येतावता स्वसंवेदनं विज्ञानं न भवेदिति
दर्शनादर्शनाभ्यां न हेतुर्गमको ऽपि तु स्वसाध्याविनाभावात् । स च
विपर्यये बाधकप्रमाणप्रवृत्त्या सिध्यतीति कृतं दृष्टान्तेनेत्यत आह । न कर्म

क्रिया चैकं भवतीति । इदमपाकूतम् । किं पुनरिदमर्थानां संवित्प्रकाशाधीनप्रकाशत्वं नाम न हि संवित्प्रकाशेनार्थे प्रकाशान्तरं जन्यते । अपि च लिङ्गप्रकाशाधीनप्रकाशो हि लिङ्गिप्रकाशः न च लिङ्गे प्रकाशमाने प्रकाशते किं तु लिङ्गप्रकाशे लिङ्गी । यदुच्येत न ज्ञानादतिरिक्तोऽर्थप्रकाशो ज्ञानप्रकाशश्च किं तु ज्ञानमेव स्वसंवेदनमर्थस्य स्वात्मनश्चेति । एवं तर्हि किमायातं न ह्यात्मैवात्मायत्तः । न च ज्ञानमेवात्मनः परस्य च प्रकाश इति सिद्धम् । अन्यो हि ज्ञानप्रकाशो मानस ऐन्द्रियकश्चार्थप्रकाशः । न च प्रमाणज्ञानप्रकाशाधीनोऽर्थप्रकाशः किं तु प्रमाणज्ञानसत्ताधीनः फलाधीनं तु न किं चिदित्यावेदितम् । तत्सिद्धमेतद्विवादाध्यासितं विज्ञानं स्वप्रकाशाद्भिन्नं प्रकाशमानत्वात् । सत्त्वान्तरप्रकाशस्य सत्त्वान्तरप्रकाशवत् । तदनेनाभिसंधिनोक्तं न च कर्म च क्रिया चैकं भवतीति । एतेन सहोपलम्भनियमादभेदो नीलतद्धियोरिति परास्तं वेदितव्यम् । अर्थज्ञानोपलम्भयोरेकोपलम्भतैव नास्ति कुतः पुनरस्य नियम इति । अथ यथाश्रुतः सहोपलम्भो हेतुरित्युच्यते ततो विरुद्धः अभेदे सहार्थासंभवात् । कृतप्रपञ्चश्चायमर्थो न्यायकणिकायामिह तु विस्तरभयान्न प्रपञ्चित इत्युपरम्यते । **सोऽपि दृष्टं विज्ञानभेदमनुयोक्तव्य इति** । न संतानमात्रनिबन्धनो विज्ञानभेदो भवितुमर्हति नीलपीतादिरूपः नापि संतानान्तराधिपत्यसन्निधाननिबन्धनो विज्ञानानाममूर्तात्मकानां स्वरूपेण देशविप्रकर्षायोगात् । नापि कालविप्रकर्षोऽपूर्वसत्त्वप्रादुर्भावाभावादिति भावः । यदुक्तं **स्वप्नवद्विज्ञानभेदमिति** । बाह्याभावेऽप्याध्यात्मिको विज्ञानभेदहेतुरस्तीति भावः । निराकरोति **सोऽपीति** । स्वप्नज्ञानमपि पारम्पर्येण बाह्यनिबन्धनमित्यर्थः । अबाह्यनिमित्तकत्वं स्वप्नप्रत्ययस्याभ्युपेत्याह । **अथ स्वप्नपक्षेऽपीति** । सर्गः पक्षः । न चेह विज्ञानं चिन्तनीयमपरं चिन्तकमिति वाच्यम् । व्यतिरिक्तालम्बनत्वानभ्युपगमादिति भावः । अभ्युपेत्य त्वबाह्यनिमित्तत्वं स्वप्नप्रत्ययानामेतदुक्तम् । बाह्यनिमित्तत्वमेव [illegible] पारमार्थिक इत्याह । **ये चैते स्वप्नप्रत्यया इति** । **ममापीति** । अपिशब्दः संभावनायाम् मम पक्षे संभाव्यतमेतत् यत्सर्वएव प्रत्यया मिथ्या भवन्तीत्यर्थः । सुगममितरत् । **मध्या** निद्रा । विषयमन्तरेण विज्ञानस्फुटता यावत्क्वचित् सामान्यविशेष-

तद्वतां ग्रहणं स्फुटता सामान्यमात्रग्रहणमस्फुटता तच्चोभयमपि विषये दुष्करं तदाकारोत्पत्तेरशक्यत्वादित्यर्थः । यद्यन्ने असत्यर्थे विज्ञानभेदो दृष्ट इति चेत् । स्वप्नमायागन्धर्वनगरमृगतृष्णादिविज्ञानेष्वनुवर्त्तमानेषु विषयेन्द्रियमनोदोषनिमित्तत्वमस्तु ये पुनरमी प्रेतानां सर्वेषामनुवृत्तिमन्तः पूयपूर्णनदीप्रत्यया न ते बाह्यविषया दोषवशाद्भवितुमर्हन्ति । दोषनिमित्तत्वाद्बहूनामनुवृत्तेरभावात् । अदुष्टेन्द्रियार्थसन्निकर्षजत्वे तु जलरुधिराकारविरोधात् । तस्मादनादिवासनावैचित्र्यलब्धजन्मतया अर्थनिरपेक्षा एव विविधाकारा बुद्धय उदयन्ते व्ययन्ते चेति साम्प्रतमिति यद्यर्थः । न तत्र नद्यस्तीति स्वमतदार्ढ्येनोक्तम् । *न व्याघातादिति । अयमभिसन्धिः । जलरुधिरयोः रसवीर्यविपाकादिभेदात्तोयरसवीर्यविपाकादिदर्शनान्नद्यास्तोयपूर्णत्वे निश्चिते पूयपूर्णत्वनिश्चयः प्रेतानां मिथ्येति निश्चये तदनुवृत्तेर्दोषानुवृत्तिः कल्पनीया दोषश्च प्रेतशरीरनिर्वर्तकं कर्मैव । यथोक्तं तुल्यकर्मविपाकोत्पन्नाः प्रेता इति । कर्मणो वासना ऽन्यत्र फलमन्यत्र कल्पत इति । फलं पुत्रपश्वादि तदपि विज्ञानं तदा यत्र वासनावति ज्ञाने कर्मवासना तत्रैव पुत्राद्याकारं विज्ञानं फलमिति सामानाधिकरण्यमुपपद्यते । पुत्रपश्वादौ स्वरूपे फले वैयधिकरण्यं स्यात् तथा चातिप्रसङ्ग इति भावः । निराकरोति । तदनभ्युपगमादिति । न पुत्रादि स्वरूपेण फलमपि [illegible] तन्निमित्ता प्रीतिः । तस्या एव चेतनेन काम्यमानत्वात् तद्वृत्तत्वाच्च फलत्वेति भावः । मुक्तकेनार्थं साधयित्वा प्रयोगमाह । मदीयाभिसन्धिरिति । यदि चित्तमात्रं पक्षीक्रियेत तदा दृष्टान्तो नास्तीत्यत उक्तं मदीयाभिसन्धेरिति । मदीयाहङ्कारानास्पदत्वे सतीति विशेषणाद्व्यवच्छिन्नेन व्यभिचारः । आरोपनिराकरणार्थमप्यवच्छेदेन हेतुना नासमर्थविशेष्यतेति । अपि च मिथ्योपलब्धीनां बाह्यानालम्बनत्वमास्थाय तत्प्रवृत्तीनां बाह्यानालम्बनत्वं साधनीयम् । तासां बाह्यानालम्बनत्वं बाधकाधीनं बाधकं चात्र समारोपितस्थलमात्राभिमाने निवर्तयति न तु पुरोऽवस्थितधर्मसामान्यं शुक्तिमात्रम् । तस्मान्न बाधकानुरोधादपि मिथ्याज्ञानं बाह्यानालम्बनमिति स्वप्नवदिति दृष्टान्तः साध्यविकल इत्याह । एवं सति

---

* अत्र पुस्तके निराकरोतीत्यधिकः पाठः क पु ।

मिथ्याज्ञानस्य प्रधानाश्रयत्वे मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानाद्बाधकात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिषेधो न त्वर्थस्य सामान्यस्यापीति शेषः । शेषं भाष्ये । भाष्यं सुबोधम् । यस्तु माध्यमिको मिथ्याबुद्धिदृष्टान्तेन बाह्यापह्नवं कृत्वा तेनैव दृष्टान्तेन विज्ञानाभावं कृत्वा विचारासहत्वं तत्त्वभावानां व्यवस्थापयां बभूव ॥ प्रत्याह ।

**बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् (सू. ३६)** ॥ अर्थे हि निषिद्धे भवेदप्येतत् । तद्व्यवस्थापने तद्वदेवाप्रत्यूहं बुद्धिसद्भावो ऽपि सिध्यति । न चैवं वादिनः प्रमाणमस्त्यप्रमा च प्रमाणेन विचारासहत्वं भावानां व्यवस्थापयन् श्लाघनीयप्रज्ञो देवानांप्रिय इति । न च कल्पनामात्रनिमित्त उपायस्तत्त्वज्ञानाय पर्याप्तः । न च वस्तुन्याहितत्वज्ञानस्य मिथ्याहस्तिज्ञाननिबन्धनमपि तु प्रणिहितमनस इन्द्रियार्थसन्निकर्षविशेषः । न चासौ मिथ्याज्ञानसमये आसीत् । न च मोहाभ्यासः समीचीनाय ज्ञानाय कल्पते स हि मोहमेव द्रढयतीति सर्वमवदातम् । सो ऽयं माध्यमिको ऽनुभूयमानां मिथ्याबुद्धिं नापह्नोतुमर्हति । तया च मिथ्याबुद्धिं प्रतिपद्यमानेन तस्या निमित्तं वक्तव्यमित्युक्तम् ।

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः (सू. ३७)** ॥ मिथ्याबुद्ध्या स्वनिमित्तं लक्ष्यते तेन मिथ्याज्ञाननिमित्तस्य द्वैविध्यमित्यर्थः । यत्र स्थाणौ पुरुष इति ज्ञानं भवति तत्र तत्त्वं स्थाणुरिति प्रधानं पुरुष इति यः पूर्वं पुरुषो ऽभूदित्यर्थः । एवं तावद्रूपबुद्धीः प्रतिपाद्य गन्धादिबुद्धीरपि प्रतिपादयति भाष्यकारः । गन्धादौ प्रमेयइति । उपसंहरति । तस्मादयुक्तमेतदिति । दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्युक्तम् । अथ तत्त्वज्ञानं कथमुत्पद्यत इति । न तावदागमतः समर्पितेनो धा तत्त्वज्ञानमहङ्कारनिवृत्तिं कर्तुमुत्सहते । दोषनिमित्तेषूत्पन्नज्ञानानामपि पूर्ववदहङ्कारदोषानुवृत्तेः । साक्षात्कारस्तूपायाभावादयुक्त इति । अस्योत्तरं सूत्रम् ।

**समाधितत्त्वाभ्यासात् (सू. ३८)** ॥ समाधिपदं व्याचष्टे भाष्यकारः । **स तु प्रत्याहृतस्येन्द्रियेभ्यो मनस इति** । अनेन विक्षेपं निवर्तयति । इन्द्रियेभ्यः प्रतीपमाहृतस्य मनसः क्वचित् हृत्पुण्डरीकप्रदेशे आत्मनो

निर्जीकषि धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगो ऽयम् । स खलु
ना. सुप्तावस्थायामस्तीत्यत उक्तं तत्त्वबुभुत्साविशिष्ट इति । तदभ्यासश्च
तद्विषयप्रयत्नोत्पादपौनःपुन्यं तस्मादादरनैरन्तर्यदीर्घकालविशिष्टात्तत्त्वबुद्धि-
,, रुत्पद्यते । एतदाक्षेपसूत्रमवतारयति । यदुक्तं सति हि तस्मिन्निति ।
इन्द्रियविषयैरपहृतमनसो न धारणा । तथा च तदभ्यासाभावान्न तत्त्वसा-
क्षात्कार इति सूत्रार्थः । समाधानसूत्रमवतारयति । अस्त्वेतत्समाधिव्यु-
त्थाननिमित्तमिति । सूत्रम् ।

पूर्वकृतफलानुबन्धात्तदुत्पत्तिः (सू. ४१) ॥ पूर्वकृतः समाधिः
तस्य फलं संस्कारः तस्यानुबन्धः स्थेमा तस्मादिति सूत्रार्थः । तद्व्याचष्टे
,, भाष्यकारः । पूर्वकृत इति । प्रविविच्यते विविच्यते ऽनेनेति प्रविवेकः* प्रकृष्टः
संस्कारः स चात्मधर्म इति । कस्मात्पुनर्दृश्यमानः संस्कारः कल्प्यत इत्यत
,, आह । निष्फलो हीति । प्रयत्नविशेषा हि विचारवो बहवो ऽपि परस्पर-
मसहभवन्तो न तत्त्वसाक्षात्काराय पर्याप्ता इति तज्जनिताः संस्काराः
कल्प्यन्ते तेषां स्थेम्ना सम्भवति सम्भूयकारितेत्यर्थः । प्रचयकाष्ठा प्रचया-
वधिः यतः परमपरः प्रचयो नास्ति । तत्सहकारिशालितया प्रकृष्टाया
समाधिभावनाया समाधिप्रकर्षः समाधिभावना तस्यामित्यर्थः । पूर्वपक्षया-
त्याह । यथार्थविशेषप्राबल्यादिति । न खल्वयमीदृशो बाह्यार्थस्य
महिमा यत इन्द्रियादानपेक्षादेवात्मनो बुद्धिर्जनयिष्यत इत्यभिमानः पूर्वप-
क्षिणः । सिद्धान्तसूत्रम् ।

न निष्पन्नावश्यंभावित्वात् (सू. ४४) ॥ व्याख्यातम् । न खलु
तण्डुला अत्यन्तं फलीकृता अपि पिठरोदकदहनसंयोगप्रचयमन्तरेण पुलाका
भवन्तीति भावः । [illegible] समाधिविशेष एव तत्त्वज्ञानसाधनम् । नैवम् कि [illegible] ।

तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चात्मविध्युपायैः
(सू. ४६) ॥ सर्वाश्रमिणां धर्मसाधनम् । अहिंसा सत्यमस्तेयं ब्रह्मचर्य-
मपरिग्रह इति यमः । नियम इति । सर्वाश्रमिणो ऽसाधारणो धर्मोपायः
योग इति विपर्येण योगशास्त्रं पातञ्जलं लक्षयति । योगाचारः प्रकाशिता

---

* अत उत्तरं धर्मस्याधो प्रविवेकाच्चेति धर्मप्रविवेक इत्यधिकः पाठः पु. २ ।

आहारविशेषः सकृद्वानवस्थानमित्यादि यतिधर्मोक्तम् । एते ऽपि तत्त्वज्ञान-क्रमोत्पादक्रमेणापवर्गसाधनमित्यर्थः । ननु यद्येते तत्त्वज्ञानोत्पादक्रमेणापवर्गोपायः कृत तर्ह्यान्वीक्षिक्येत्यत आह ।

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः** (सू. ४७) ॥ तद्व्याचष्टे **तदर्थमिति** प्रकृतम् । आत्मविद्या ऽऽन्वीक्षिकी । अभ्यासः सततक्रिया तत्र प्रयत्न इत्यर्थः । प्रयोजनमाह **प्रज्ञापरिपाकार्थम्** । परिपाकस्तु संशयच्छेदनम् । किं देहाद्यतिरिक्त आत्मा उत नेति संशयः । तस्य च्छेदन लोकस्य तत्त्वज्ञानमात्मनि तदवरोध । **अध्यवसितं** प्रमाणेन । तस्याभ्यनुज्ञानं तर्केण । सब्रह्मचारी सहाध्यायी । गुरुशिष्यसहाध्यायिभ्यो ऽन्यः । शास्त्रेणानुशिष्टः शिष्टः श्रेयोऽर्थिन श्रेयसि मोक्षलक्षणे श्रद्धा.। तेषामपवर्गे श्रद्धादर्शनादस्ति तदुपायाभ्यासः प्रायभवीय इत्यनुमीयते । तेन तेषामपि प्राग्भवीयसंस्कारवशात्प्रतिभोपासनीयेति । **अभ्युपेया***दभिमुखमुपेत्य जानीयात् गुर्वादिभिः सहेत्यर्थः । **नीतार्थम्** गतार्थम् । तदनेन गुर्वादिभिर्वादं कृत्वा तत्त्वनिर्णय उक्तः यदि च मन्येत **पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्य** गुर्वादेस्तस्मान्न वादो ऽनुचित इति । तत्रेदं सूत्रमुपतिष्ठते ।

भा ॥ ॥

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे** (सू. ४९) ॥ व्याचष्टे **तमभ्युपेयादिति** वर्तते । एतो गुर्वादि प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेनात्मनः शरीरादिभ्यो भेद बुभुत्सहस्त्यमिदधान स्वपक्षमनवस्थापयन् स्वदर्शन गुर्वादिकृताद्विचारात्प्रमेयतोच्छेदेन सिद्धान्तव्यवस्थापनलक्षणात् स्वदर्शन परिशोधयेत् । **अन्योन्यप्रत्यनीकानि च प्रावादुकानां** ” **दर्शनान्ययुक्त**परित्यागेन युक्तपरिग्रहणेन च परिशोधयेदिति वक्ष्यते । ननु यत्र वादस्यैव दर्शयमीदृशी तत्त्वनिर्णये दत्तजलाञ्जली तर्हि जल्पवितण्डे इत्यत आह । **स्वपक्षरागेण चैके न्यायमतिवर्तन्ते** । तत्र ।

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्** (सू. ५०) ॥ इति सूत्रम् । तद् व्याचष्टे **अनुत्पन्नतत्त्वज्ञानानामिति** । न केवल तदर्थं घटमानाना जल्पवितण्डे अपि तु **विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य** ।

---

* ४८ सूत्रव्याख्यानम् ।

**ताभ्यां विगृह्य कथनम्** (सू. ५१) ॥ इति सूत्रम् । यस्तु स्वदर्शनविलक्षितमिथ्याज्ञानावलेपदुर्विदग्धतया सद्विद्यावैराग्याद्वा लाभपूजाख्यातिस्थार्थितया कुहेतुभिरीश्वराणां जनाधाराणां पुरतो वेदब्राह्मणपरलोकादिदूषणप्रवृत्तस्तं प्रति वादी समीचीनदूषणमप्रतिभया ऽपश्यन् जल्पवितण्डे अवतार्य विगृह्य जल्पवितण्डाभ्यां तत्त्वकथनं करोति विद्यापरिपालनाय । मा भूदीश्वराणां मतिविभ्रमेण तच्चरितमनुवर्तिनीनां प्रजानां धर्मविप्लव इति । इदमपि प्रयोजनं जल्पवितण्डयोः । न तु लाभख्यात्यादि दृष्टम् । न हि परहितप्रवृत्तः परमकारुणिको मुनिर्दृष्टार्थं परपीडोपायमुपदिशतीति । *यद्वार्त्तिकम् । व्यापकत्वादन्तःकरणस्येति । अस्य वक्ष्यमाणो ऽभिसन्धिः । निराकरोति । **नोक्तोत्तरत्वात्** । साध्यं दूषयद्भिरित्यर्थः । यद्वृत्ता स्वाभिप्रायमुद्घाटयति । **स्वाङ्गगतीत्यनेनेति** । यावद्धस्तावच्छिन्ने आत्मप्रदेशे प्रयत्नो न जायते न तावत्तत्र कर्म न च तत्रात्ममनःसन्निकर्षे विना प्रयत्नः । न च मनस इन्द्रियसंयोगं विनेच्छाम् । न चाणुना मनसा इन्द्रियेण हस्तेन वा पर्यायेण संभवः । तस्माद्व्यापक इति शङ्कार्थः । निराकरोति **न शरीरात्ममनःसंयोगयौगपद्यात् प्रयत्नदर्शनयोर्युगपदुत्पत्तेः** । तत्रात्मशरीरसम्बन्धात्स्वाङ्गगतिरिति । पाणिचालनेच्छापेक्षादात्ममनःसंयोगेन पाणिं चालयामीत्येवमाकारः प्रयत्नो जायते तत्र प्रयत्नवदात्ममनःसंयोगात्पाणौ क्रिया जायते । यद्यप्यात्मनः सर्वाङ्गे संयोगो न विशिष्यते तथा ऽपीच्छाविशेषादुत्पन्नः प्रयत्नविशेषः पाणावेव कर्म करोति । नान्यत्र प्रयत्नवदात्मसंयोगात्सुषुप्तः प्रेरणम् । यद्यपि चानयोः प्रयत्नयोर्न युगपदुत्पादः तथा ऽपि तदुत्पत्त्यन्तरे ऽत्यल्पत्वात्कालभेदो न लक्ष्यते । नन्वेकस्मिन्नात्मप्रदेशे वर्तमानसंयोगो वा प्रयत्नो वा कथं देशान्तरे असंयोगिन्यप्रयत्नवति कार्यमारभतइत्यत आह । **न चात्मनः प्रदेशाः सन्तीति** । परिशिष्टं वार्त्तिकं भाष्यव्याख्यया व्याख्यातम् ॥

**इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्य-टीकायां चतुर्थोऽध्यायः समाप्तः ॥**

---

* एवं वार्त्तिकम् ३८ सूत्रस्य ततः पञ्चमाध्यायसमाप्तिपर्यन्तं टीकाकृता भाष्यस्येव व्याख्या मन्त्वावन्ते व्याख्यातम् ।

अथ प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्च तत्किमपरमवशिष्यते यदर्थं पञ्चमो ऽध्याय आरभ्यत इत्यत आह । **साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति** भाष्यम् । तस्यार्थमाह वार्त्तिककारः । **जातेः संक्षेपेणोक्ताया** इत्यादि । यद्यपि जातिनिग्रहस्थानभेदा जातिनिग्रहस्थानसामान्यलक्षणानन्तरं प्रथमे ऽध्याये युक्ता लक्षयितुं तथा ऽप्येषां बहुत्वात्प्रमेयपरीक्षायां विलम्बो मा भूद् अपेक्षिता चासौ शिष्यैः । संशयादिपरीक्षां तु विना प्रमेयपरीक्षा न शक्यते । तस्मान्मुनिः शिष्यानुरोधेन परीक्षां तावद्बुनेयां बभूव । तदनन्तरमवशिष्टं जातिनिग्रहस्थानविशेषलक्षणं वर्तयति । जल्पवितण्डापरीक्षा चानन्तरं प्रयुक्ता तदङ्गं च जातिनिग्रहस्थाने इत्यवान्तरसंगतिरस्तीति सर्वमवदातम् । विशेषोपयोगि सामान्यलक्षणमाह । **तत्र जातिर्नामेति** । प्रतिषेधबुद्ध्या प्रयुक्त इति शेषः । आह्निकारम्भमाक्षिपति । **जातेः प्रयोगप्रतिषेधादि**ति । परिवर्जनं तु सामान्यज्ञानादपि भवत्र विशेषज्ञानमपेक्षत इति भावः । समाधत्ते **नारम्भप्रयोजनस्योक्तत्वात्** । एतदेव स्मारयति **स्वयं च सुकरः प्रयोग इति** । प्राश्निकैः कसमा जातिरित्युक्ते स्वयं च सुकरः प्रयोग इति । अथ वा सद्विद्याविद्विषा अधिक्षिप्ते तत्त्वे अह्नाय तन्निरासहेतावस्फुरति वादिनां पुरत एकान्तपराजयाद्वरं संदेहो ऽप्यस्तु कथं जित्वरपराजयो वेति बुद्ध्या पांसुभिरिवावकिरन् जातिं प्रयुङ्क्ते । तेन हि लोके तत्त्वमवस्थापितं भवति । अन्यथा ऽसन्मार्गप्रवृत्तो लोकः स्यात् । न च नयचपेटादिभिर्विद्याविद्विषो निराकरणे तदुत्थापितकुहेतुनिराकरणधीरस्ति लौकिकानाम् । तस्मान्न नयचपेटादय उपदेष्टव्याः शास्त्रकृतेत्यभिप्रायवानाह । **साधुसाधननिराकरणार्थं चेति** । अतत्त्वविषयत्वेन परमार्थतो ऽसाध्वपि साधनमह्नाय दूषणस्याप्रतिभासनात्साध्वित्युक्तम् । लाभपूजाख्यातिकामश्चेत्यन्वाचये चकारः । प्रसिद्धं तावत्तत्त्वपरिपालनं प्रयोजनं तस्मिन्सत्येतदप्यन्वाचीयत इत्यर्थः । मतान्तरं निराकर्तुमुपन्यस्यति । **असाधुसाधनेति** । तत्त्वविषयमपि साधनमसाध्विति विदितवान् वादकाले चाप्रतिभया ऽसाधुत्वोपपादनं न स्फुरति । अथाप्येतदिति स्मरन्नेवासौ जातिं प्रयुङ्क्ते तदिदमुक्तमनभिज्ञतया साधनदोषस्येति । अथ वा जानन्नपि

जाति प्रयुङ्क्ते तस्य साधनस्य दोषप्रदर्शनार्थं प्रसङ्गव्याजेन मदीयं साधनदूषणाभासम् यथा त्वदीयमपि साधनाभासं यदि त्वत्साधनं सम्यक् तदा मदीयमपि सम्यक् स्यादिति प्रसङ्गः तद्व्याजेन साधनं दूषयतीत्यर्थः । तदेतत्परमतं दूषयति । **एतत्त्विति ।** जात्यभिधाने हि पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगश्चेति द्वयं निग्रहस्थानं तस्माद्दुष्टेत्युक्तम् । **अथ न बुध्यते तत्किमिति जातिं प्रयुञ्जीतेति ।** यो हि सभादर्शनमात्रात्पूर्वाभ्यस्तमपि विस्मरति तस्य केव कथा अननुभाषितपूर्वजात्युद्भावनस्येति भावः । एतेन बुद्ध्वा ऽबुद्ध्वा वेति विकल्पावसरेणानैकान्तिके साधने प्रयुक्ते पञ्चानां साधर्म्यसमवैधर्म्यसमविकल्पसमसाध्यसमवर्ण्यसमानां जातीनां प्रयोगः प्रत्युक्तः । **पूर्वापरभाव इति ।** पूर्वस्य युक्तस्य साधनस्य युक्तमुत्तरम् । अपरस्यायुक्तस्य साधनस्यायुक्तमुत्तरमिति । ननु साधर्म्यसमादीन्युच्यते न च वस्तुतः साधर्म्यसमादीनां साम्यमस्ति स्थापनया तथा सत्यजातित्वप्रसङ्गादित्यत आह । **समीकरणार्थं प्रयोग इति ।** आभिमानिकसाम्यं न वास्तवमित्यर्थः । साधर्म्येण समः यस्मिन् प्रयोग इति शेषः । तदिदमुक्तं **समार्थः** साधर्म्यसमार्थं समीकरणार्थं **प्रयोगो** ऽनुप्रयुक्त इति । एवं वैधर्म्येण सममित्यत्र विग्रहे स्वरूपेण साम्यमुक्त्वा विशेषहेत्वभावेन साम्यमाह **विशेषहेत्वभावो वेति ।** ये त्वाहुः सर्वेष्वेवापदेशेषु सर्वासामेव जातीनां प्रयोग इति तान् प्रत्याह । **सर्वापदेशव्याप्तिः सर्वजातिप्रयोगस्य ।** अपदेशो हेतुवचनम् । ये पुनः साधर्म्यसम इत्यादौ समशब्दस्तस्य साधनवादिजातिवादिनोस्तुल्यार्थत्वाद् यादृशो वादी तादृशः प्रतिवाद्यपि साधर्म्येण दुष्ट इति मन्यन्ते तान्प्रत्याह **न च वादिप्रतिवादिनोस्तुल्यता समार्थः** प्रतिवादी जातिवादी विवक्षितः । प्रतिषेधाविति सूत्रपदेन पुल्लिङ्ग समर्थयते । अन्यथा जातेः प्रकृतत्वात्सामानाधिकरण्येन साधर्म्यवैधर्म्यसमे इति स्यात् । तद्धर्मविपर्ययोपपत्ते कृते साध्यविपर्ययोपपत्त्यर्थमित्यर्थः । **भाष्य निदर्शनं क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगादिति ।** अस्ति ह्यात्मनः क्रियाहेतुर्गुणः प्रयत्नो ऽदृष्टं वा लोष्टस्यापि क्रियाहेतुर्गुणः स्पर्शवद्वेगवद्द्रव्यसंयोग इति । एवमुपसंहृते परः साधर्म्येण प्रत्यवतिष्ठते निष्क्रिय आत्मा विभुत्वादाकाशवदिति । अत्र च साधनमाभासमुत्तरं च न जातिः । विभु-

त्वस्याक्रियत्वेन स्वभावतः प्रतिबन्धात् । तेनैतदुपेत्य वार्तिककार उदाहरणान्तरमाह । **यथा नित्यः शब्द उत्पत्तिधर्मकत्वाद् इदं तु सम्यक्साधनमुत्तरं त्वाभासमिति** । साधर्म्योक्ते साधर्म्यसमः वैधर्म्योक्ते वैधर्म्यसमः । यत्र साधर्म्योक्ते वैधर्म्यसमः वैधर्म्योक्ते साधर्म्यसम इति । कथं पुनरियं जातिः । अथ प्रकरणसमोद्भावनं सम्यगुत्तरमेव कस्मान्न भवतीत्यत आह । **अनयोश्च** साधर्म्यवैधर्म्यसमयोरुत्तरम् ।

**गोत्वाद्गोसिद्धिवत्तत्सिद्धिः (सू. ३)** ॥ भवेदेवं यद्यन्वयव्यतिरेकमात्राद्धेतोर्गमकत्वं स्यात् ततो विशेषग्रहणाभावात्प्रकरणसमत्वं भवेत् । न त्वेव भवति स्वाभाविकसम्बन्धभाजो गमकत्वात् । स्वभावसंबद्धं च कृतकत्वमनित्यत्वेन न त्वमूर्तत्वस्य नित्यत्वेन स्वाभाविकः सम्बन्धः । बुद्धिकर्मादौ व्यभिचारात् । तस्माद्ग्रहणाविशेषत्वान्न प्रकरणसमः । **यथा गोत्वाद्गौः सिध्यति** स्वाभाविकप्रतिबन्धात् । **न तु सास्नादिसंबन्धादिति** भाष्यं सास्नादीत्यतद्गुणसंविज्ञानो बहुव्रीहिः । तेन व्यभिचारिणः शृङ्गादयो गृह्यन्ते । वार्तिकम् **एकस्यानन्वयादेकस्याव्यावृत्तेः** । एकस्य सत्त्वस्याश्वा ऽनन्वयाद् अश्वादौ व्यभिचारादनन्वयः । एकस्य ककुदत्वादेर्वैधर्म्यस्य गोष्वेवाव्यावृत्तेः महिषादावपि व्यावृत्तेरित्यर्थः ।

**साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः (सू. ४)** ॥ उभयसाध्यत्वात्साध्यसमः । षण्णां जातीनां साध्यदृष्टान्तयोर्धर्मविकल्पादित्यनेन पञ्चैव लक्षणानि सूचितानि । तानि च जातिसमाख्याभिर्भिद्यन्ते विशिष्यन्ते । अनित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते यदेव प्रतिवादी प्रसङ्गेन प्रत्यवतिष्ठते यदि घटसाधर्म्यात्कृतकत्वादनित्यः शब्दः तस्मादेव घटसाधर्म्याद्रूपादिमता ऽपि शब्देन भवितव्यम् । न चेद्रूपादिमान्न तथा ऽनित्यो ऽपि । न चास्ति विशेषहेतुः कृतकत्वादनित्येन भवितव्यं न पुना रूपादिमतेति । सो ऽयं साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैचित्र्याद्धर्मोत्कर्षं प्रसञ्जयति स उत्कर्षसमः । एवं तदेव साध्यदृष्टान्तयोर्धर्मवैचित्र्यमपकर्षेण विशिष्यमाणमपकर्षसमस्य लक्षणम् । साध्यदृष्टान्तयोर्धर्मवैचित्र्यात्स्वरूपेण साध्यासाधनत्वप्रसञ्जने वर्ण्यावर्ण्यसमौ । साध्यदृष्टान्तधर्मविकल्पहेतु-

कवर्ण्यत्वनिबन्धनं च हेत्वादावयवयोगित्वप्रसञ्जनं साध्यसमः। अत एवोभयसाध्यत्वादिति साध्यत्वे हेतुमाह साध्यसमस्य सूत्रकारः। भाष्यकारो ऽपि हेत्वाद्यवयवसामर्थ्ययोगीनि प्रत्यास्तत्प्रसञ्जनं साध्यसमं मन्यते। तदेतद्वार्त्तिककृदाह। **घटो वा ऽनित्य इत्यत्र को हेतुरिति।** न च यदि समाख्याभेदेन विशिष्यमाणं लक्षणपदं भिन्नार्थं तर्हि समाख्यापदान्येव लक्षणानि सन्तु कृतं लक्षणपदेनेति वाच्यम्। लक्षणपदसहितानामेव तेषां लक्ष्यभेदप्रतिपादकत्वादिति। आद्यां षण्णां जातीनां प्रत्याख्यानम्।

**किंचित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः (सू. ४)॥**

यस्य धर्मिणः साध्यधर्मेण स्वाभाविकसम्बन्धः साधको धर्म उपपद्यमानउपपन्नो भवति स धर्मस्तस्य साध्यधर्मस्य साधनं साध्यधर्मिण्युपसंह्रियते। **तथा च शब्देनेति** उपनयपदेनेत्यर्थः। यत्पुनरेतद्विभागजाविभागजविकल्पशब्दनित्यानित्यविकल्प इति तत्राह **यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि नैवं विभागजत्वम्।** अयमर्थः विकल्पसममुत्तरं वदता हि यथा सत्युत्पत्तिमत्त्वे घटो न विभागजः शब्दस्तु विभागज इति व्यवस्थितो विकल्पः एवं सत्युत्पत्तिमत्त्वे सत्यपि विभागजश्शब्दो ऽपि नित्यो भविष्यति घटस्त्वनित्य इत्युक्तम्। तत्र तावदुत्पत्तिधर्मकत्वं यथा सत्यनित्यत्वे घटादौ दृष्टम् आकाशादिषु चासत्यनित्यत्वे न दृष्टं तेनानित्यत्वेन स्वाभाविकप्रतिबन्धमवधारितं नैवमुत्पत्तिधर्मकत्वस्य विभागजत्वेनाविभागजत्वेन वा स्वाभाविकसम्बन्धो गृहीतो येनोत्पत्तिमत्किंचिद्विभागजं किंचिदविभागजं न भवेत्। तस्माद्विकल्पसमं जात्युत्तरं वदता ऽप्रतिनिबन्धेन विभागजत्वेन शब्दस्य नित्यत्वं वक्तव्यं तत्रेदमुपतिष्ठते **यथोत्पत्तिधर्मकत्वमन्वयव्यतिरेकि**अनित्यत्वं प्रति **नैवं विभागजत्वं** शब्दनित्यत्वं प्रत्यन्वयव्यतिरेकीति। तदसाधारणमित्यर्थः। असाधारण्यमाह। **न हि किंचिद्विभागाज्जायमानं नित्यमनित्यं वा दृष्टम्।** ननु विभागजो विभागो ऽनित्यो दृष्ट इत्यत आह। **यथोक्तविशेषणमिति।** कारणमात्रविभागपूर्वकः शब्दो विभागजस्तु विभागः कारणाकारणविभागपूर्वक इति सिद्धं कारणमात्रविभागपूर्वकत्वमसाधारणमित्यर्थः। षण्णां जातीनां प्रत्याख्यानमुक्त्वा वर्ण्यावर्ण्यसाध्यसमानामपरं प्रत्याख्यानमाह।

**साध्यातिदेशाच्च दृष्टान्तोपपत्तेः (सू. ६) ॥** इति । तद्व्याचष्टे **दृष्टान्तः साध्य इति ब्रुवतेति ।** चतुर्दशविधजातिवादिनामिह दूषणमुपन्यस्यति । **यत्त्वत्रोक्तं जातीनां पौनरुक्त्यमिति ।** लक्षणभेदाभेदाभ्या किल लक्ष्यभेदाभेदौ लक्षणं चेद्भेदकमिति न पश्यति । तस्माद्विकल्पसमावयवेनोत्कर्षसमादीनामन्तर्भाव इत्यर्थः । दूषयति । **न पौनरुक्त्यं** तत्तल्लक्ष्यपदरहितानि षड् लक्षणानि उभयसाध्यत्वाद्वैन्यनेन सह लक्षणानि पठति । न केवलं लक्ष्यभेदात्प्रयोगभेददर्शनाच्च । यद्युक्ते यदि लक्ष्यभेदाज्जातिभेदस्तत **आनन्त्यमिति चेत् ।** निराकरोति । **नानवधारणादिति ।** न लक्ष्याणामवधारणमस्त्येषामानन्त्यात् । लक्षणोपग्रहेण चतुर्विंशतिर्जात्य इत्यर्थः । लक्ष्याणां लक्षणाभेदे ऽपि भेदे निदर्शनमाह । **तथा हि प्रकरणसमैकेति ।** सुगममितरत् । प्राप्त्यप्राप्तिसमाविति लक्ष्यपदम् । शेषं लक्षणम् । असत्साध्यते न तु सत् । प्राप्तं च सत् । अतस्तत् प्राप्तसमं नात् । तस्मान्न साध्यम् । अपि च येन यस्य प्राप्तिस्तेन तस्यैक्यमेव यथा गङ्गा सागरं प्राप्ता सागरेणाभिन्ना तद्वदेवाभिन्ने चेत्साध्यसाधने नास्ति साध्यसाधनभावः तस्य भेदाधिष्ठानत्वादित्यपि द्रष्टव्यम् । अप्राप्तिसमस्तु स्फुट एवेति । ननु प्राप्त्यप्राप्तिसमयोर्मिलितयोः साधनप्रतिषेधस्यैकत्वात् कथं प्राप्त्यप्राप्तिसमौ भिन्नावित्यत आह । **अनयोर्भेदोपदेशो विवक्षात इति ।** साधनप्रतिषेधस्यैकत्वे ऽपि प्राप्य वा ऽप्राप्य वेति विकल्पभेदाद्भेदविवक्षेत्यर्थः । अभेदविवक्षाया त्वेकमेवोत्तरम् । यथा वृक्षाणां बहुत्व विवक्षित्वा बहुवचनप्रयोगो वृक्षा इति । तद्बहुत्वसंख्याया एकत्वं विवक्षित्वैकवचनम् वनमिति । उदाहरणेन साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमिति जातिसामान्यलक्षणं मन्वानो देशयति । **जातिलक्षणाभावादिति ।** परिहरति । **न सूत्रार्थापरिज्ञानादिति ।** सूत्रे नोदाहरणसाधर्म्यं विवक्षितमपि [illegible] येन केन चित्साधर्म्यं विवक्षितम् । अत एव येन केन विद्यमानेनाप्यन्येन साधर्म्यम् । व्याप्तेन वा हेतुना साधर्म्यमिति न सामान्यलक्षणायोग इति । प्रत्याख्यानम् ।

**घटादिनिष्पत्तिदर्शनादिति ।** सूत्रं तद्व्याचष्टे मृत्पासानां दण्डादीनां न गङ्गासागरवदविशेषः । मृदवयवाः पूर्वव्यूहपरित्यागेनेति ।

साध्यं कर्म तच्च मृदवयवास्तौ च पिण्डे समवेत्यव्यभिचारः । घटस्तु फलं न साध्य इति भावः । **को ऽप्राप्त्यर्थ इति** । अप्राप्तस्य साधकत्वे ऽतिप्रसङ्ग इति भावः । उत्तरं **परस्परोपश्लेषमन्तरेण साधकत्वमिति** । अन्यथा तूद्देशेनासौ प्राप्त एव । यदुद्देशेनाभिचारः श्येनादिना क्रियते तस्यैव प्रत्यवायो भवति नान्यस्येति नियमः । अत्रापि संयुक्तसंयोगादिः संबन्ध उपेयः । तस्यापि हेतुत्व क्रिया प्रति दृष्टम । यथा पङ्कोत्स्याणां भुवि । सुगममन्यत् ।

**दृष्टान्तस्य कारणानपदेशात्प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ** (सू. ९)॥ दृष्टान्तस्य कारणं प्रमाणं तस्यानपदेशात्प्रसङ्गसमः साध्यसमो हि दृष्टान्ते साध्यहेत्वाद्यवयवं प्रसञ्जयति । पञ्चावयवप्रयोगसाध्यता दृष्टान्तस्य गतस्यानित्यत्वस्य प्रसञ्जयतीत्यर्थः । प्रसङ्गसमस्तु दृष्टान्तगतस्यानित्यत्वस्य प्रमाणमात्रसाध्यतामित्यर्थेनानयत् । **भाष्ये साधनस्यापि** । दृष्टान्तगतस्यानित्यत्वस्य साधनं प्रमाणं वाच्यमिति । वार्त्तिके **घट एव तावदनित्य इत्यत्र को हेतुरिति** । अत्र किं प्रमाणमित्यर्थः । **भाष्ये प्रतिदृष्टान्त उदाह्रियते** । क्रियाहेतुगुणयुक्तमाकाशमक्रियं दृष्टं तस्मादनेन प्रतिदृष्टान्तेन कस्मात् क्रियाहेतुगुणयोगी निष्क्रियत्वमेव न साध्यत्यात्मन इति शेषः । यदि पुनरियमनैकान्तिकदेशना स्यात् क्रियाहेतुगुणयुक्तस्याप्यक्रियत्वं दृष्टं यथा ऽऽकाशस्येति तदा सदुत्तरं स्यात् । न त्वेवमेतदिति भावः । शङ्कते । **काष्ठाकाशसंयोगस्येति** । निराकरोति । **न तत्समानोपपत्तेः** । तत्समानधर्मणो धर्मिणः क्रियावत्त्वोपपत्तेः । यदि तथाभूतमप्याकाशं कस्मान्न करोतीत्यत आह **यस्त्वसाविति** । यस्तु मन्यते कार्योत्पादेऽवयवानामेव कारणं न दृष्टकार्यकरणसाधर्म्यमात्रमपीति तस्य दूषणान्याह **यदि चेति** । यदि प्रज्ञापनार्थमुत्तरं भाष्यतो दृष्टान्तः । तत्र लौकिकपरीक्षकाणां बुद्धिसाम्यादिति शेषः । **स च कथमहेतुर्न स्यादिति** । कथं हेतुः स्यादिति । **अभ्युपगमादिति** । मदीयस्य च दृष्टान्तस्याभ्युपगमान्न त्वदीयो दृष्टान्त इत्यर्थः । अथैव प्रयुङ्क्ते यथा मदीयो न दृष्टान्तस्तथा त्वदीय इति तथापि व्याघातान्न दृष्टान्तो मदीयस्यादृष्टान्तत्वे साध्ये प्रतिदृष्टान्तेन हि तेन मदीयस्यादृष्टान्तता साध्या स चेच्च दृष्टान्तः मदीयस्यादृष्टान्तता साध्येति व्याहतमित्यर्थः ।

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः** (सू. १२) ॥ उदाहरणपुरःसरं भाष्यकारो व्याचष्टे अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्त इति । तदभावात्कारणाभावादनित्यत्वस्य कार्यस्याभावे नित्यत्वं प्राप्तम् । नित्यत्वानित्यत्वाभ्यां राश्यन्तराभावादिति । तस्य प्रत्याख्यानम् ।

**तथा भावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः** । (सू. १३) ॥ नित्यत्वेन हि शब्दस्य धर्मेणानुत्पत्त्या प्रत्यवस्थेयम् । न चानुत्पन्नः शब्द इति नित्य इति चानुत्पत्तिधर्मक इति च सम्भवति । उत्पन्नस्त्वनुत्पत्तिधर्मा च शब्दश्चानित्यश्चेति नानुत्पत्त्या शक्यं प्रत्यवस्थातुमित्यर्थः । कारणोपपत्तेरिति प्रयत्नानन्तरीयकत्वस्य ज्ञापकस्योपपत्तेर्न कारणस्य प्रयत्नानन्तरीयकत्वस्य प्रतिषेध इत्यर्थः । यदुक्तं कारणाभावादनित्यत्वस्य कार्यस्याभावे नित्यत्वं प्राप्तमिति तत्राह वार्तिककारः । ज्ञापकश्चायं हेतुर्न कारक इति । कारको हि हेतुर्निवर्तमानः स्वकार्यं निवर्तयति न तु ज्ञापकस्तदभावेऽपि भूमेः चिरनिखातानां निध्यादीनामनिवृत्तेरिति ततश्च विशेषणमनर्थकं प्रागुत्पत्तेरिति । प्रागुत्पत्तेर्हि सतामपयस्य उत्पत्तिः प्रागपि चेदसावभ्युपगतः प्रागिति विशेषणमनर्थकम् । उत्पत्तेरभावे सदैवानुत्पत्तिधर्मकत्वादित्यर्थः । अपरे तु प्रागुत्पत्तेः कारणाभावादित्युक्ते अर्थापत्तिसमैवेयं जातिरिति मत्वाऽन्यथोत्तरमाहुः यदेवमुच्यते प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति तदर्थादप्रयत्नानन्तरीयकत्वे नित्यत्वमुक्तं भवतीत्यर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमैवेयं जातिरित्यभिमानः । अथ कृते लक्षणस्य जात्यानुसारं दृश्यते नास्य नियम इति । तदेतदन्येषां मतं दूषयति । एतदिति । आहुरिति । जातिलक्षणाभावान्नेयं जातिरिति चेत् । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः न चानुत्पत्तिसमायाः साधर्म्यं वैधर्म्यं वाऽस्ति केनचिदित्यर्थः । निराकरोति । नानुत्पत्तेरहेतुभिः सारूप्यादिति । यथा ऽनुत्पन्नास्तन्तवो न पटस्य कारणं तथा शब्दोत्पत्तेः प्रागनुत्पन्नं प्रयत्नानन्तरीयकत्वं नानित्यत्वस्य कारणमिति साधर्म्येण प्रत्यवस्थानमित्यस्ति सामान्यलक्षणमित्यर्थः । एतावता चार्थापत्तिसमायाः अनुत्पत्तिसमातो भेदो दर्शितः यदनुत्पत्तेरहेतुभिः साम्येन कार्यप्रतिषेधात् । अर्थापत्तिसमायां वाक्यार्थविपरीतारोपेण प्रतिषेधादिति ।

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः** (सू. १४) ॥ दृष्टान्तः प्रयत्नानन्तरीयकत्वस्य हेतोर्घट इति । यथा हि विशेषदर्शनं निश्चयस्य कारणमस्तीति निश्चयोत्पत्तिरेव साधर्म्यदर्शनमात्रमस्ति संशयस्य कारणमिति संशयेनापि भवितव्यमित्यर्थः । सूत्रार्थप्रयोजनमाक्षेपसमाधानाभ्यां स्फुटीकरोति । **संशयसमा साधर्म्यसमाया** इति । अस्य प्रत्याख्यानसूत्रम् ।

**साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः** (सू. १५) ॥ न सामान्यदर्शनमात्रं संशयस्य कारणमपि तु विशेषादर्शनसहितं विशेषदर्शने तु तद्रहितं न कारणमिति सूत्रार्थः । उभयथा चेति । साधर्म्यविशेषदर्शनाभ्यामित्यर्थः । **नित्यत्वानभ्युपगमाच्च सामान्यस्येति** नित्यं संशयकारणत्वानभ्युपगमात्साधर्म्यस्येत्यर्थः ।

**उभयसाधर्म्यात्प्रक्रियासिद्धेः प्रकरणसमः** । (सू १६) ॥ उपलक्षणं चैतद् उभयसाधर्म्यादिति । उभयवैधर्म्यादित्यपि द्रष्टव्यम् । एतद्व्याचष्टे भाष्यकारः । **उभयेन नित्येन चानित्येन चेति** । द्वितीयश्च नित्यसाधर्म्यात्प्रतिपक्षं प्रवर्त्तयति नित्यः शब्दः श्रावणत्वाच्छब्दत्वरद्विति । अथ द्वितीयसाधनप्रवृत्तौ प्रथमस्य साधनस्य किं भवतीत्यत आह । **एवं च सति प्रयत्नान्तरीयकत्वादिति** । हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्त्तते । मा अतिवर्त्तिष्ट प्रकरणं को दोष इत्यत आह । **प्रकरणानतिवृत्तेर्निर्णयानतिवर्त्तनम्** । निर्णयानिष्पत्तिरित्यर्थः । एवमनित्यसाधनवादिनं प्रत्युत्तरं दर्शयित्वा नित्यसाधनवादिनं प्रत्याह । **समानं चैतन्नित्यसाधर्म्येणोच्यमानेऽपि** । तदेव साधर्म्येण प्रकरणसमद्वयमुक्तं तथा वैधर्म्येण प्रकरणसमद्वयं नित्यानित्यसाधनवादिनावेव प्रत्याह । **समानं चैतदिति** । उभयवैधर्म्यादिति । नित्याकाशवैधर्म्यात्कृतकत्वादनित्यघटवैधर्म्याच्चाश्रावणत्वादिति तदेव प्रकरणसमचतुष्टयम् । पूर्वपक्षं[*] वार्त्तिकं **संशयसमासाधर्म्यसमाभ्यामिति** । परिहरति **नोभयपक्षसाधर्म्यात्तद्भेदोपपत्तेरिति** । प्रकरणसमे हि स्वपक्षनिश्चयेन मया वादिपक्षसाधनदूषणीयमिति बुद्ध्या प्रवर्त्तते । साधर्म्यसमसंशयसमयोस्तु वादिसाधनेन

* अत्र टेर्वेति २ । ३ पु पा ।

साम्यमापादनेन तद्दूषणं न तु प्रतिपक्षनिरसनेनेति विशेषः । इह [illegible] साम्यमापादनं न साधनेन किं [illegible] दूषणैरित्येतावता समार्थः प्रयोगः सम इति बोद्धव्यम् । अस्य प्रत्याख्यानम् ।

**प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ।** (सू. १७) ॥ द्वयोः साधनयोस्तदानीमगृह्यमाणविशेषयोः को ऽयमभिमानः प्रतिवादिनो यन्मया स्वपक्षसाधनेनैव वादिनः साधनं दूषणीयमिति । समानबलयोश्चेदयमात्मीयात्साधनात्स्वपक्षसिद्धिमिच्छति अतो ऽनिच्छन्नपि वादिनो ऽपि साधनात्सिद्धिमभ्युपगमयितव्यः । अन्यथा स्वसाधनात्साध्यसिद्धिमुपजीव्य प्रतिपक्षसाधनं दूषयति न तु तस्मात्प्रतिपक्षसिद्धिमभ्युपगच्छतीति व्यक्तमिव राजकुलस्थितिरिति । तत्र व्याचष्टे सूत्रभाष्ये योजयितव्ये । प्रतिपक्षात्प्रतिपक्षसाधनात्प्रकरणस्य प्रक्रियमाणस्य साध्यस्येति यावत् । सिद्धेः समानात् स्वसाधनात् प्रतिषेधस्य प्रतिवादिसाधनस्य स्वसाध्यसिद्धिद्वारेण परकीयसाधनप्रतिषेधस्यानुपपत्तिः । कस्मात्प्रतिषेधानुपपत्तिरित्यत उक्तं प्रतिपक्षोपपत्तेः फलतः परकीयसाधनस्य समानात्स्वसाधनात्प्रक्रियासिद्धिं स्वसाध्यसिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति प्रतिवादिना । नन्वेवं प्रकरणसमाद्द्वयोर्हेत्वभावे नोद्भावनीयं प्रतिवादिना जात्युत्तरप्रसङ्गादित्यत आह । तत्त्वा- भा. **नवधारणाच्च प्रक्रियासिद्धिः** ।* स्वसाध्यनिर्णयेन परसाध्यविघटनबुद्ध्या प्रतिवादिना साधनं प्रयुज्यमानं प्रकरणसमजात्युत्तरं भवति । सत्प्रतिपक्षतया वादिनः साधनमनिश्चायकं करोमीति बुद्ध्या प्रतिपक्षसाधनं प्रयुञ्जानो न जातिवादी सदुत्तरवादित्वात् । सत्प्रतिपक्षताया हेतुदोषस्यानैकान्तिकादिवद्दूषणत्वात् । तत्त्वानवधारणादित्यनेन प्रकरणसमोदाहरणं दर्शितम् । वार्त्तिकं विरुद्धाव्यभिचार्यपि उक्तोत्तरं इति । तुल्यबलयोरेकतरस्मात्स्वसाध्यसिद्धिमभ्युपगच्छतोर्द्वयोरपि फलतो व्यभिचारः सिध्यति । न च विरुद्धाव्यभिचारी समस्ति । अव्यभिचारो ह्यविनाभावः स च वस्तुरूपपरिनिष्ठानुरूपपरिनिष्ठो न विरुद्धाव्यभिचारिणि मा ऽस्तीत्यर्थः ।

**त्रैकाल्यासिद्धेर्हेतोरहेतुसमः** (सू. १८) ॥ सूत्रभाष्यवार्त्तिकानि प्रमाणसामान्यपरीक्षाव्याख्यानेन व्याख्यातानि ।

---

* त्रैकाल्यानुपपत्तिरिति २ । १ । ८ सू. पाठः ।

अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः (सू. २१) ॥ उदाहरणपुरःसरं सूत्रं योजयति । अनित्यः शब्द इति । अनित्यसाधर्म्यादनित्यं शब्दं ब्रुवाणो भवाननन्तरं नित्यसाधर्म्यान्नित्यत्वं शब्दस्य ब्रूत इत्यर्थः । न साधर्म्यसमादो वादाभिप्रायवर्णनमित्यतो भेदः । अस्य प्रत्यादेशसूत्रम् ।

अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः (सू. २२) ॥ तद्व्याचष्टे अनुपपाद्य सामर्थ्यमिति । तदेव यदनुक्तं वचनाल्लभ्यते यत्कल्पनमन्तरेण वचनार्थो न घटते यथा पीनो देवदत्तो दिवा न भुङ्क्त इत्युक्ते रात्रौ भुङ्क्त इति । यथा वा यागेन स्वर्गं भावयेदित्युक्तेऽन्तरा ऽपूर्वं कृत्वेति । वाक्यार्थोपपादने तस्य सामर्थ्यात् । न त्वव्यभिचारिणः साधर्म्यात्साध्ये साध्यमानेऽर्थादुक्तं भवति व्यभिचारिणोऽपि साधर्म्येण साधयितव्यमिति । तस्य वाक्यार्थोपपादनेऽसामर्थ्यात् । तदन्तरेण वाक्यार्थोपपत्तेः । यदि पुनरनुपलब्धसामर्थ्यमनुक्तमपि गम्येत ततस्त्वया नित्यत्वापादने शब्दस्योच्यमानेऽनुच्यमानमनित्यत्वं प्रत्येतव्यम् । तथा च भवदभिमतस्य नित्यत्वस्य व्यावृत्तिः । तदिदमाह अनित्यपक्षस्यानुक्तस्य सिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति । विपर्ययेणापि प्रत्ययस्यानपभरात् । अनैकान्तिकत्वमाह उभयपक्षसमा चेयमिति । व्यभिचाराच्चानैकान्तिकत्वमाह । न चेयं विपर्ययमात्रादिति । न हि भोजननिषेधाद्दिवाभोजनविपरीतं सर्वत्र कल्पते । घनत्वं हि ग्राव्णः पतनानुकूलगुरुत्वातिशयसूचनार्थं न त्वितरेषां पतनं वारयति । वार्त्तिकं सुबोधम् ।

एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः (सू. २३) ॥ यदि घटसाधर्म्यात्प्रयत्नानन्तरीयकत्वाद् घटेनाविशेषोऽनित्यत्वाख्यः शब्दस्य सत्त्वात्साधर्म्यात्सर्वेषां सर्वाविशेषप्रसङ्गः । न त्वेवं यथा प्रयत्नानन्तरीयकत्वादपि साधर्म्यान्न शब्दघटयोरनित्यत्वमविशेष इति प्रतिषेधोऽविशेषसमः । अविशेष इत्यस्य विवरणमुभयोरनित्यत्वमिति । दोषश्च वार्त्तिके साधर्म्यसमातो न भिद्यत इति । परिहारवार्त्तिकं नैकसमस्तेति। अस्य प्रत्यादेशसूत्रम् ।

क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः (सू. २४)।। क्वचित्साधर्म्ये प्रयत्नानन्तरीयकत्वादौ सति शब्दादेर्घटादिना सह तद्धर्मस्य घटधर्मस्यानित्यत्वस्योपपत्तेः क्वचित्साधर्म्ये शब्दस्य भावमात्रेण सह सत्त्वादौ भावमात्रधर्मस्यानुपपत्तेः प्रतिषेधाभाव इति योजना । एतदुक्तं भवति अविनाभावसंपन्नं साधर्म्यं गमकं न तु साधर्म्यमात्रमिति । सद्भावोपपत्तिनिमित्तमिति सद्भावस्थापकमित्यर्थः । अथान्तरे वैनाशिकः सत्ताव्यापकमनित्यत्वं मन्वानो देशयति । अथ मतमनित्यत्वमेव धर्मान्तरमिति । निराकरोति । एवं खलु वै कल्प्यमान इति । पूर्वपक्षोत्तरपक्षनिर्वाहस्तृतीये प्रपञ्चितः । अपि च सन्तः केचन प्रमाणावधृतनित्यत्वाः यथा ऽऽकाशादिगात्मपरमाणवः केचित्प्रमाणविनिश्चितानित्यभावा यथा घटादयः तस्मात्सत्त्वमनैकान्तिकत्वादसाधकमित्याह सतश्च नित्यानित्यभावादिति । अपि च यन्निषेधाय प्रसङ्गसाधनं प्रतिषेध्यं साधयति । न तु निषेधतीत्याह सर्वभावानां सद्भावोपपत्तेरिति । वार्तिकं क्वचित्साधर्म्यमुपलभ्यत इति व्याख्यातयेति शेषः । अथ शब्दधर्मो गृह्यत इति तथाह व्यर्थं वा सर्वभावग्रहणम् । उक्तश्च विशेषो ऽन्वयव्यतिरेकसंपन्नो हेतुरिति प्रयत्नानन्तरीयकत्वं न तूत्तरः सद्भावोपपत्तेरित्यन्वयव्यतिरेकसंपन्न इति ।

उभयकारणोपपत्तेरुपपत्तिसमः (सू. २५)।। यद्यनित्यत्वकारणं प्रयत्नानन्तरीयकत्वमुपपद्यते तदस्ति शब्दस्येत्यनित्यः शब्द इति । प्रकरणसमायां जातौ पक्षप्रतिपक्षसाधनयोः समानबलत्वे ऽपि प्रतिवादी स्वसाधनात्स्वपक्षसिद्ध्या वादिसाधनदूषणे प्रवर्तते उपपत्तिसमायां तु स्वसाधनेनैवेति विशेषः । अस्य प्रत्यादेशसूत्रम् ।

उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः (सू. २६)।। वाद्यभिमतस्य साधनस्योपपत्तौ यत्कारणं तस्य प्रतिवादिना ऽभ्यनुज्ञानादिति भावः । प्रकरणसमप्रत्याख्यानवदस्यापि प्रत्याख्यानं द्रष्टव्यम् । सुगमे भाष्यवार्तिके ।

निर्दिष्टकारणाभावे ऽप्युपलम्भादुपलब्धिसमः (सू. २७)।। अनित्यत्वकारणस्येति । ज्ञापकस्येत्यर्थः । ननु यत्कृतयोगप्राथम्ययोः साधनधर्मो विषयो न तु साध्यधर्मः स हि तत्कृतयोगस्य विषयः यत्र प्रयुज्यते यो यः प्रयत्नानन्तरीयकः स सर्वो ऽनित्यः अनेन हि प्रयत्नानन्तरीयकत्व-

मनित्याद्व्यतो व्यावर्त्तितम् । अनित्यत्वं त्वनियतं स यद्यप्रयत्नानन्तरीयके शब्दे ऽन्यत्र वा भवेत् कः प्रयत्नानन्तरीयकत्वस्यानित्यत्वनियमविरोधः एवं हि स भवेद् यदि नित्यो ऽपि प्रयत्नानन्तरीयको दृश्येत न त्वेवमस्ति तस्मादुपलब्धिसमाया उत्थानमेव नास्ति बीजाभावादित्यत आह वार्त्तिककारः **सर्वसाध्यारोपेणाव्यापकत्वं साधनस्येत्युपलब्धिसमार्थः** । यद्यपि वर्णात्मकः शब्दो ऽनित्यत्वेन साध्यतया विवक्षितः प्रकरणादनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति तथा ऽपि शब्दमात्रमनेन पक्षीकृतमित्यारोप्य भागासिद्धत्वारोपे एवं साधनस्येत्युपलब्धिसमार्थः । समारोपमेवोदाहरणान्तरेण दर्शयति । **सर्वमनित्यमिति** शब्दो नित्य इति प्रतिज्ञायामपि सर्वमनित्यमित्यारोप्येति योजना । भाष्यकारोदाहरणापरितोषश्चोदाहरणान्तरप्रदर्शनबीजम् । यस्त्वनित्यः शब्द इति प्रतिज्ञायां सर्वानित्यत्वारोपो निर्बीज इति न तुष्यति तं प्रत्याह । **श्रूयमाणेति** । यद्यप्यनित्यः शब्द इति श्रूयते तथा ऽपि सामर्थ्याद्वाद्य इति विवक्षितः शब्दान्तरोत्पादकस्य सजातीयोत्पादकत्वमिति । एवं च नायोगव्यवच्छेदेन शब्दानित्यत्वं हेतुरव्यापकत्वात् । नाप्यन्ययोगव्यवच्छेदेन हेत्वन्तरस्य विद्यमानत्वादिति जातिवादिनो ऽभिसन्धिरिति । अस्य प्रत्याख्यानसूत्रम् ।

**कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः (सू. २८)**॥ तद्वाचष्टे **प्रयत्नानन्तरीयकत्वादिति ब्रुवतेति**। कारणतः प्रयत्नाच्छब्दस्योत्पत्तिनियमो विधीयते वर्णानामनित्यत्व साधयितुम् । न तु कार्यस्य कारणनियमः प्रयत्नादेव सर्वः शब्दो जायते न तु वायुसंयोगाद्वंशभङ्गादिति नियम उच्यते येनाव्यापकत्वं हेतोः स्यादिति । सूत्रार्थस्तु कारणान्तरादपि ज्ञापकान्तरादपि तद्धर्मोपपत्तेः साध्यधर्मोपपत्तेरप्रतिषेध इति । एतदेव वार्त्तिककारो व्याचष्टे **अनित्यः शब्दः इति ब्रुवता** प्रयत्नानन्तरीयकत्वेनेति शेषः । **साध्यान्तराणां** वाद्यामृदङ्गशब्दानां कारणमनित्यत्वव्यापकं न प्रतिषिध्यते । यदपक्षीकृतानामपि कारणान्तरादनित्यत्वस्य भवति काम भवत्वित्यर्थः । नापि शब्दस्य साध्यस्यानित्यत्वे कारणान्तरं प्रत्ययभेदभेदित्वादि प्रतिषिध्यते । एकदेशिमतमाह । **अपरे तु परिहारं ब्रुवते यदेव प्रयत्नानन्तरीयकमिति** । तदेतद् दूषयति **एतत्तु नाविवादादिति** । अयमभिसन्धिः ।

तथा तत्प्रतिषेध्यमिति भावः । अनुपलब्धेः प्रमेयमाह । यत्रास्ति सो ऽनुपलब्धेरिति । ननु ज्ञायतां किमेतावता ऽपीत्यत आह । सो ऽयमावरणाद्यनुपलब्धेरनुपलम्भ इति । त्वया हि जातिवादिना आवरणाद्यनुपलब्धेरनुपलम्भेनावरणोपलम्भाभावरूपं च प्रसञ्जयता ऽनुपलम्भस्य स्वविषयालोपेन प्रत्यक्षस्येयम् । यत्र चेद्यरमस्यावरणातदुपलम्भो विषयो यत्रमनेन भावाभावबुद्धिव्यपदेशव्यवहाराः सकललोकयात्रावाहिनो ऽनुकूलिता भवन्ति तदिदमुक्तं सो ऽयमावरणाद्यनुपलब्धेरनुपलम्भ आवरणोपलम्भनिषेधविषयं प्रमाणमुपलब्ध्यभावे ऽनुपलब्धौ स्वविषये प्रवर्त्तमानो न स्वविषयमनुपलब्धिं प्रतिषेधति अपि तूपलब्धिमेव जातिवादिनस्तु निषेध्येन तथा च सर्वलोकव्यवहारः समुच्छिद्येतेति भावः । अप्रतिषिद्धा चावरणाद्यनुपलब्धिरावरणादीनामभावं प्रति हेतुत्वाय कल्पते । ननु च मानुपलम्भभावमभावग्रहहेतुं मा भूवन्नभवः परभागे सुरिणवदवद्भावयत्य इत्यत आह । आवरणादीनि स्विति । उपलभ्ययोर्वोपलब्धिर्वा नानुपलम्भमात्रान्नास्तीति सिध्यति अपि तु दर्शनयोग्य सदिति नातिप्रसङ्ग इत्यर्थः । ननूपलब्धेः स्वविषयस्य प्रतिपादिकाया अभावादावरणादयो मा नामोपलभ्यन्ताम् अभावस्तु तेषां कुतस्त्य इत्यत आह अनुपलम्भात्प्रतिषेधकात्प्रमाणादनुपलब्धेर्यो विषयः उपलब्ध्यभावः स गम्यते । न सन्त्यावरणादीनि शब्दस्याग्रहकारणानीति । तत्किमिदानीं सावादेवोपलम्भनिषेधकं प्रमाणमुपलब्ध्यभावं गमयति नेत्याह । अनुपलम्भात्तूपलब्धिनिषेधकात्प्रमाणादनुपलब्धिरावरणस्य सिध्यति । कस्मादित्यत आह । विषयः स तस्योपलब्धिनिषेधकस्य प्रमाणस्यानुपलब्धिः ततश्चावरणाद्यभाव इति द्रष्टव्यम् । न केवलं निषेधविषयप्रमाणगम्यता ऽनुपलब्धेरुपपत्तिगम्या अपि सर्वजनप्रत्यात्मवेदनीयेत्याह सूत्रकारः ।

ज्ञानविकल्पानां च भावाभावसंवेदनादध्यात्मम् (सू ३१) ॥

व्याघ्रे अहेतुरिति वर्तते । शरीरे शरीरइति । प्रागुच्चारणाच्छब्दस्यानुपलब्धेरसत्त्वे साध्यमाने नैकान्तिकत्वं स्याद् यदि तु पश्चाद्विशिष्येत आवरणाद्यसंभवे सतीति ततो हेत्वन्तरं नाम निग्रहस्थानं स्यादित्याशङ्क्य वार्त्तिककार आह । आवरणाद्यसंभवे सत्त्वाभ्युपगमे च सत्यनुपलब्धेरिति

प्रयोगः । सत्त्वाभ्युपगमे चेत्यस्योपादानप्रयोजनमाह । **आवरणाद्यसंभवे सत्त्वाभ्युपगमे विपर्ययस्याव्यभिचारान्नार्थापत्तिसमः** । अयमर्थः । यद्यावरणाद्यसंभवे सत्यनुपलब्धेरित्युच्यमाने कश्चिदर्थापत्तिसमया जात्या प्रत्यवतिष्ठते आवरणासंभवे सत्यनुपलब्धेरित्युच्यमाने अर्थादापतितमावरणादिसंभवे सत्युपलब्धेरिति । यदा तु सत्त्वाद्यभ्युपगम इति विपर्ययस्तूच्यते तदावरणाद्यसंभवे सत्यनुपलब्धेरसत्त्वमित्यस्य विपर्यय एवं प्रयोक्तव्यः । सत्त्वोपगमे चावरणाद्यसंभवे सत्युपलम्भेनेति अस्य विपर्ययस्याव्यभिचाराद् नार्थापत्तिसम इत्यर्थः ।

**साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः (सू. ३२)** ॥ अस्ति घटेनानित्येन सर्वभावानां सत्त्वं साधर्म्यमिति । अस्य प्रत्याख्यानसूत्रम् ।

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्याच्च (सू. ३३)** ॥ तदिदं जातिवादिना साम्यमापाद्य परमार्थप्रतिषेधमाह ।

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः (सू. ३४)** ॥ साधर्म्यमात्रं चाश्रित्य साध्यविनाभावरहितमिति । देश्यवार्तिकमविशेषसमात इति । परिहरति **नियत** इति । यथाविशेषसमउत्तरमिति । सर्वानित्यत्वं हि प्रसञ्जयता न शब्दानित्यत्वं निषिद्धं भवतीति तथोक्तमित्यर्थः । अत्र शङ्कते **नासाधनादिति** । परिहरति । न **विशेषहेतूपपत्तेरिति** । सुगममन्यत् ।

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः (सू. ३५)** ॥ धर्मस्य सर्वदा भावाद्धर्मिणो ऽपि सर्वदा भावः । न ह्यस्ति संभवः सामान्यसमवायातिरिक्तधर्मा नित्या धर्मा चानित्य इति । अस्य प्रत्यादेशसूत्रम् ।

**प्रतिषेध्ये नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभावः (सू. ३६)** ॥ नित्यमनित्यभावादिति हेतोरभ्युपगमे ऽनभ्युपगमे च दोष इत्यर्थः । उत्पन्नस्य निरोधादभावः शब्दस्यानित्यत्वम् । तत्र च परिप्रश्नानुपपत्तिः । यदि निरोधकाले ऽभावो नित्यत्वं तदा ऽपि प्रश्नानुपपत्तिः । अथाप्यसन्मते समवायस्तदा ऽपि तदनुपपत्तिः अनित्यत्वं हि शब्दस्यापरान्त-

पच्छिन्नसत्तासमवायः । न चासौ शब्दाधेयस्तस्य स्वतन्त्रत्वादेवेत्यर्थः । वार्त्तिकम् । पृथग्धर्मत्वेनानित्यत्वस्यानभ्युपगमादिति । अनात्यन्तिकसत्तासमवायो ह्यनित्यता न चासौ समवायात्पृथग्धर्मो न च समवायोऽपि धर्मः ऽनाश्रितत्वात्पारतन्त्र्येण तु निरूपणात्स्वाध्य विद्धर्मोत्युच्यत इति । अपि चानात्यन्तिकसत्तायोगो ऽनित्यतेत्युक्ते न युक्तः प्रश्न इति । न हि घटमानयेति प्रेषितः परिहृत्य पृच्छति किं घट आनेतव्य उत पट इति तादृगमेतदित्यर्थः । अपि चानित्यता नित्या ऽनित्या वेति विकल्पो नावतरति विरोधादित्यत आह । आत्यन्तिकानात्यन्तिकभावयोगश्चैकस्येति । शङ्कते प्रतिपेध्यं त । इयमभ्युपगच्छतो ऽप दोष इत्येतत्परमेतद् न [illegible] स्वपचोपद्रवेणपरमेतदिति शङ्कार्थः । निराकरोति न विकल्पानुपपत्तेरिति । विरोधस्य चोक्तोत्तरत्वादिति । परिप्रश्नानुपपत्तेरित्युत्तरं विरोधस्योक्तमित्यर्थः ।

प्रयत्नकार्यानेकत्वात्कार्यसमः (सू. ३७) ॥ उदाहरणपूर्वकमस्यार्थं व्याचष्टे प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति । *कार्यत्वानित्यत्वे च परस्परासकीर्णे प्रथमएवाध्याये दर्शिते । उदाहृत्य जातिमवतारयति । एवमवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिपेध उच्यत इति । प्रयत्नानन्तरीयकत्वं प्रयत्नानन्तरोत्पादो वा स्यात् प्रयत्नानन्तरोपलम्भो वा । न तावत्पूर्वः कल्पो ऽसिद्धत्वात् । तस्मात्प्रयत्नानन्तरोपलम्भ आस्थेयः तत्र कार्यसम प्रतिपेधमाह प्रयत्नानन्तरमुपलभ्यमानानां प्रयत्नानन्तरमात्मलाभश्च दृष्टो यथा घटादीनां व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानां मूलककीलकादीनां तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहो स्विदभिव्यक्तिरिति विशेषो नास्ति । तदेव कार्याविशेषेण प्रत्यवस्थानं कार्यसमः । येन तु कार्यसमा जातिरन्यथैवोक्ता तद्यथा नित्यः शब्दः कृतकत्वाद् घटवदित्युक्ते अन्यद् मृत्पिण्डादिकार्यत्वं घटस्य अन्यत्तु विभागप्रयत्नवायुप्रेरणाभिघातकार्यत्वं शब्दस्य तस्माच्छब्दकृतकत्वस्य घटादिकृतकत्वाद्भेदात्र साधनं कृतकत्वमनित्यत्वस्येति । सेय कार्यान्यत्वेन प्रत्यवस्थानात्कार्यसमेति । तदाह कार्यत्वान्यत्वलेशेन यत्साध्यासिद्धिदर्शनं

* कार्यत्वानित्य प्रथम इति ३ पु अधिक पाठ ।

तत्कार्यसममिति भदन्तेनोक्तम् । कीर्तिरप्याह । साध्येनानुगमात्कार्यसामा-
न्येनापि साधने । सम्बन्धिभेदाद्भेदोक्तिदोषः कार्यसमो मत इति । तदनेन यदी-
श्वरसाधननिराकरणायोक्तम् । तनुगिरिसागरादीनामन्यत्कार्यत्वम् अन्यच्च
प्रासादाट्टालगोपुरादीनामिति तदपि जात्युत्तरमेवेत्युक्तं भवति । न च प्रत्यक्षदृ-
श्यमानं बुद्धिमदन्वयव्यतिरेकानुविधानं सौधादीनामिव तनुभुवनादीनां
नास्तीत्येतावता भेदेन कार्यभेदे शब्दमात्राभेद इति साम्प्रतम् । अमुष्या भाव-
लक्षणस्य कृतकत्वस्य अस्थानत्वस्य वा वस्तुन एवाभेदात् । तस्मादेतदप्यु-
क्तम् । वस्तुभेदे प्रवृत्तेपि शब्दसाम्यादभेदिनः । न युक्ता ऽनुमितिः पाण्डुद्रव्या-
दिव हुताशने । न चेयं जातिरुत्कर्षापकर्षसमाभ्यां भिद्यते साध्यदृष्टान्तयो-
र्धर्मविकल्पेन प्रवर्तमानत्वात्तस्मात्सूत्रकारोक्त एव कार्यसमोऽवकीर्ण इति युक्त-
मुत्पश्यामः । अस्य प्रत्यादेशसूत्रम् ।

कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः (सू. ३८) ॥

कार्यस्योत्पत्तिर्न लक्षणस्यान्यत्वे ऽभिव्यक्तिलक्षणात्कार्यात्प्रयत्नस्याभिव्यक्ति [illegible]
न्यहेतुत्वं न भवतीत्यत आह । अनुपलब्धिकारणव्यावरणादेरुपपत्तेरभि-
व्यक्तिहेतुत्वं स्यात् एवं तु नास्तीति व्यतिरेकपरं द्रष्टव्यम् । सति का-
र्यान्यत्व इति भाष्यं सूत्रयोजनीयम् । यत्र प्रयत्नानन्तरमित्यत्र यत्-
तयोरध्याहारः तत्र प्रयत्नानन्तरमभिव्यक्तिर्यत्रानुपलब्धिकारणं व्यवधानमु-
पपद्यत इति । कस्मादनुपलब्धिकारणोपपत्तेः प्रयत्नाभिव्यङ्ग्यत्वमित्यत आह ।
व्यवधानापोहाच्चेति । चो हेत्वर्थे प्रयत्नानन्तरभाविन इति । विषयेण
विषयिणमुपलक्षयति प्रयत्नानन्तरभाविन इत्यर्थः । अनुपलब्धिकारणोपपत्तेरि-
त्यस्य व्यतिरेकप्रधानतामाह । न तु शब्दस्यानुपलब्धीति । देश्यवार्तिकं
संशयसमात इति । परिहरति उभयसाधर्म्यादिति ।

विशेषानुपलब्धौ सत्यामुभयसाधर्म्यात्संशयसमः । इदं तु
विशेषोपलब्धिमर्थविशेषाभिव्येति विशेषः । तदिदमुक्तमयं तु न तथेति । देश-
यति साधर्म्यसमात इति । निराकरोति न हेत्वध्यारोपणादिति ।
प्रयत्नानन्तरीयकत्वादित्ययं प्रयत्नानन्तरमुपलब्धेरित्यध्यारोप्य प्रतिषिध्यते ।
साधर्म्यसमे तु नारोपणमित्यर्थः । तदेवं जात्युत्तरवादिनं प्रति साधनवा-
दिना सर्वत्रैव सम्यक् समाधानं स्वसाधनस्य वक्तव्यम् । यत्र यति तस्य-

निर्णये कथापर्यवसानं भवति । यदि पुनर्वाद्यपि जातिवादिनं प्रति साधनाभासेन प्रत्यवतिष्ठते ततः षट्पक्ष्या सत्या न तत्त्वनिर्णयावसाना कथा भवेदिति विव्यहिमः सूत्रकारः समाधानाभासवादिनं प्रति षट्पक्षीमवतारयति ।

**प्रतिषेधेऽपि समानो दोषः (सू. ३९)** ॥ तदेतत्सूत्रावतारपरं भाष्यं हेतोश्चेदनैकान्तिकत्वमुपपाद्यते प्रतिवादिना ऽनैकान्तिकत्वादसाधकः स्यादिति यदि चानैकान्तिकत्वादसाधकं वादिनो वचनं प्रतिषेधे ऽपि समानो दोषः । यो ऽयं प्रयत्नकार्यानित्यत्वादिति प्रतिषेधो जातिवादिनं सो ऽप्यनैकान्तिकः । स हि ऐकान्तिकः स्यात् यदि सर्वमेव प्रतिषेधेद् यतस्तु किंचित्प्रतिषेधति किंचिन्न तस्मादयमनैकान्तिकः अतो ऽसाधक इत्यर्थः । व्याख्यान्तरमाह । अथ वा शब्दस्येति । नित्यपक्षे ऽभिव्यक्तिर्नोत्पाद एवमनित्यपक्षे उत्पादो नाभिव्यक्तिरित्ययं विशेषो न विद्यत इत्यत्र प्रतिषेधे ऽपि समानो दोष इत्यर्थः । न केवलमस्यां जातावयं समाधानाभासो वादिनो ऽपि तु सर्वत्रैव जातावित्ति दर्शयन् विभजति सूत्रकारः ।

**सर्वत्रैवम् (सू. ४०)** ॥ अस्मिन्समाधाने प्रयुक्ते वादिना पुनर्जातिवादी प्रत्यवतिष्ठते ।

**प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः (सू. ४१)** ॥ प्रतिषेधो जातिवादिनस्तस्य विप्रतिषेधो मूलसाधनवादिनस्तस्मिंस्तुल्यो दोष इति जातिवादिनः प्रत्यवस्थानमित्यर्थः । अथ पञ्चमे पक्षे साधनवादिनश्चतुर्थपक्षवादिनं प्रति मतानुज्ञापादनमाह ।

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा (सू. ४२)** ॥ सेयं मतानुज्ञा तृतीये पक्षे पञ्चमपक्षवादिनो ऽपि साधनवादिन इति जातिवादी षष्ठपक्षस्थित आह ।

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः (सू. ४३)** ॥ स्वपक्षेण लक्ष्यते तदुत्थानत्वाज्जातिः स्वपक्षलक्षणा अनैकान्तिकत्वोद्भावनलक्षणा तामभ्युपेत्य अनुद्धृत्य प्रतिषेधे ऽपि जातिलक्षणे समानो ऽनैकान्तिकत्वदोष इत्युपपद्यमानं स्वपक्षे ऽपि दोषं परपक्षे जातिवादिपक्षे साधनवाद्युपसंहरति । तत्र चानैकान्तिक

हेतुं ब्रूते तदेवं स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षे यत्स्वयं दूषणं दत्तं तस्याभ्युपगमाद्वादिनोऽपि समानो दोष इति । जातिवादिनो वचनं षष्ठे पक्षे स्थितस्य तदेवं विस्तीर्य संकलय्याह । तत्र खलु स्थापनाहेतुवादिन इति । सेयं षट्पक्षी समानदोषापादनेनानिर्णायकत्वात्पौनरुक्त्याच्च न तत्त्वनिर्णयाय पर्याप्ता तस्मात्समाधानाभासेन जातिवादिनं प्रति न प्रत्यवस्थेयं किं तु सम्यक् साधनेन तथा च षट्पक्षी उपहता नावतरति । तत्त्वनिर्णयपर्यवसाना च कथा भवति । यदि त्वस्य कदा चित्सम्यक्साधनवादिनोऽपि प्रतिभाक्षयात्समाधानं न स्फुरति ततोऽत्यन्तपराजयाद्वरं संशयोऽपीति न्यायेन समाधानाभासेनापि प्रत्यवस्थेयमेवेत्याशयवानाह । **तेषां साध्वसाधुतायामिति** । भाष्यव्याख्यया वार्त्तिकमपि व्याख्यातम् । एतास्तु जातयो न तत्त्वविवेकमुपकुर्वन्ति प्रयुज्यमानतया निराकरणीयतया त्वासामप्युपकार इति ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिक-
तात्पर्यटीकायां पञ्चमस्याध्यायस्याद्यमाह्निकम् ॥



विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पाद्विघातान्निग्रहस्थानबहुत्वमिति संक्षेपेणोक्तं तदिदानीं विभजनीयम्। तत्र यदेवमाहुः सर्वो ऽयं साधनदूषणप्रकारो बुद्ध्यारूढो न वास्तव इति। तान् प्रत्याह **पराजयवस्तूनीति**। पराजयो वस्त्वेव्विति पराजयस्थानानीत्यर्थः। काल्पनिकत्वे कल्पनायाः सर्वत्र सुलभत्वात्साधनदूषणव्यवस्था न स्यादिति भावः। निग्रहस्थानानि पर्य्यायान्तरेण स्पृशति। **अपराधेति**। यथाहुरसाधनाङ्गं वचनमदोषोद्भावनं द्वयोर्निग्रहस्थानत्वमन्यत् न युक्तमिति तान् प्रत्याह। **सामान्यतो द्वे निग्रहस्थाने**। सामान्यविवक्षायां प्रतिज्ञाहान्यादयो द्वाविंशतिरपि न भिद्यन्ते तत्वकर्तृसाधनाङ्गं वचनमदोषोद्भावनमिति भवद्भिः संगृहीतमृषिणा च विप्रतिपत्त्यप्रतिपत्तिभ्यामिति न कश्चिद्विशेषः। अत्र विचारयति **कर्तृकर्मकरणानामिति**। तत्रैके वर्णयन्ति पक्षस्येति। यथा पक्षोद्देशेन साधनं प्रवर्तमानं पक्षस्य एवं तदुद्देशेन दूषणानि प्रवर्तमानानि पक्षस्यैवेति। एवं चाहुर्दूषणानीति। न्यूनतादयो हि सर्वे पक्षोद्देशेन प्रवर्तमानाः पक्षस्यैवेत्यर्थः। दूषयति **एतत्तु न सम्यगिति**। पक्षोद्देशेन प्रवृत्तेः पक्षविषयतां नापजानीमः साक्षात् तद्विषयतां निराकुर्मः। तस्य वस्तुधर्मत्वादवस्थानात्। एवं साधनमपि यथासमर्थं तत्र प्रयुज्यमानं न स्वतो दुष्यति यत्र न समर्थे सम्पादयन्नेव तस्मात्कर्तुरेव दोष इत्याह। **तस्मादसमर्थयोरिति**। न केवलं स्वातन्त्र्यात्कर्तुर्निग्रहो ऽपि तु तदाधारत्वाद्विप्रतिपत्त्यप्रतिपत्त्योरित्याह। **विप्रतिपत्त्यप्रतिपत्त्योश्चेति**। ननु वाक्ये न्यूनतादयो दोषा न पुरुषाश्रया इत्यत आह। **विप्रतिपत्त्यप्रतिपत्ती चेति**। न स्वरूपेण वाक्यं दुष्टं तस्य सादवस्थ्यादित्युक्तं किं तु पुरुषस्य विप्रतिपत्त्यप्रतिपत्तिभ्यां तथा प्रतिभाति तेन वाक्यगतन्यूनतादिदर्शनात्पुरुषे विप्रतिपत्त्यप्रतिपत्ती प्रतीयेते तेन द्वारेण पुरुषो निगृह्यते न तु वाक्यमेवातश्च प्रतिज्ञादोष इत्युच्यते। नायमपि नियमो यद्वाक्यद्वारेण पुरुषो निगृह्यते अज्ञानादिषु तदभावादित्याह। **कानि चिन्निग्रहस्थानानीति**। प्रकृते **द्वैविध्यानुपपत्तिरिति**। सामान्यं विवक्ष्यते विशेषो वा सामान्यविवक्षायां निग्रहस्थानमित्येवास्तु तस्य सर्वथाविशेषात्कुतो द्वैविध्यं विशेषविवक्षायां प्रतिज्ञाहान्यादीनि बहूनीत्ययुक्तं द्वैविध्याभिधानमुभयथा ऽपीत्य-

र्थं । निराकरोति न सामान्यभेदविस्तरस्य विवक्षातः प्रवृत्तेरिति । सामान्यविवक्षायामिति निग्रहस्थानमिति नोक्तम् दष्टेद्वयादविशेषप्रसङ्गात् । तस्मात् लक्षणं प्रणयता ऽन्यथा तदसम्भवादवान्तरसामान्यद्वैविध्यविवक्षया सामान्य लक्षितम् । भेदानां तु विस्तरविवक्षया प्रतिज्ञाहान्यादयो ऽपि प्रपञ्चिता इत्यर्थः । आन्तर्गणिकानां तु भेदानामानन्त्यमित्याह । उदाहरणमात्रमस्त्वाचेति । द्वाविंशतिसङ्ख्यावच्छिन्नो भेद उदाहरणमात्रम् । आन्तर्गणिकभेदविवक्षया त्वानन्त्यमित्यर्थः । भाष्यमनुभाष्यापिपति प्रायेण प्रतिज्ञेति । समाधत्ते । क्रियावचनदोषप्रकारेणेति । वचनदोषप्रकारेणेत्येतावन्मात्रे वक्तव्ये क्रियादोषाभिधानं दृष्टान्तार्थम् । नन्वाधाराधेयो ऽप्ययुक्तः पुरुषाश्रयत्वादित्यत आह । न चाधाराधेयभाव इति । अपरमपि भाष्यमनुभाष्याक्षिपति तत्त्वबाधेत्यत्तत्त्ववादिनं चेति । समाधत्ते । न पराम्पद्दिष्टे ति । सम्यक् साधने जात्युत्तरे दत्ते तस्य जातित्वमनुद्भावयँस्तत्त्ववाद्यपि निगृह्यत इत्यर्थः । लक्षणं तु ।

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः (सू २)॥**

तदेतत्सूत्रं भाष्यमतेन तावद् व्याख्ये प्रतिदृष्टान्तस्य यो धर्मस्तं यदा स्वदृष्टान्ते ऽभ्यनुजानातीति । तदत्र व्याख्यानमुपन्यस्य वार्त्तिककारो दूषयति । एतत्तु न बुध्यामहे कथमत्र प्रतिज्ञा हीयत इति । अनित्यः शब्द ऐन्द्रियकत्वाद् घटवदिति साधने प्रयुक्ते प्रतिवादिना चानैकान्तिकत्वे सामान्येनोद्भाविते तृतीयस्थानपतितो वादाह । अस्तु तर्हि सामान्यवद् घटादिर्नित्य इति । तथा सत्यैन्द्रियकत्वमनैकान्तिकं न भवति नित्यमात्र नित्याद् घटादीनामपि नित्यत्वाभ्युपगमादित्याशयेन यद्यपि तथा ऽपि वाक्यादनैकान्तिकदोषोद्धारमपराकृतमलुप्ता स्वदृष्टान्ते नित्यता प्रतिपद्यते नित्यतानिप्रतिपत्तेश्चासिद्धता दृष्टान्ते दोषो भवति साध्यविकलतेत्यर्थः । सो ऽप दृष्टान्तदोषेण हेतुदोषेण वा विरुद्धत्वेन घटादीनामपि नित्यत्वाभ्युपगमेनैन्द्रियकत्वस्य हेतोः साध्यानित्यत्वविरुद्धेन नित्यत्वेन व्याप्तत्वाद् निग्रहो वादिनो न प्रतिज्ञाहानिः । न खल्वनेनास्तु शब्दो नित्य इति प्रतिज्ञा परित्यक्ता किं त्वस्तु घटो ऽपि नित्य इत्युक्तं यदि दृष्टान्तपरित्यागेन प्रतिज्ञातार्थस्याऽसिद्धेः प्रतिज्ञाहानिरित्युच्यते ततः सर्व एव दोषः प्रतिज्ञा-

हानि विना सर्वस्मादेव दोषात्प्रतिज्ञाहानेरुपपत्तेः । तस्मात्कथं चिद् दृष्टान्तपरित्यागेन प्रतिज्ञाहानिरुपवर्णितव्या न चासौ प्रधान प्रतिज्ञाहानिं विना भवितुमर्हतीत्याह । **दृष्टान्तं च जहदिति** । तदेव भाष्यकारीयं व्याख्यानं दूषयित्वा स्वमतेन व्याचिख्यासुः पृच्छति । कथं तर्हीति । **दृष्टश्चासावन्ते निगमने व्यवस्थित इति दृष्टान्तः** । दृष्टान्तप्रतिदृष्टान्तौ पक्षप्रतिपक्षावुच्येते । एतदुक्तं भवति । प्रतिदृष्टान्तस्य प्रतिपक्षस्य सामान्यस्य यो धर्मो नित्यत्वं तं स्वपक्षे शब्दे ऽभ्यनुजानाति । उदाहरणमाह । **यथा नित्यः शब्द ऐन्द्रियकत्वादिति । द्वितीयपक्षवादिनि सामान्येन प्रत्यवस्थितइदमाह तृतीयपक्षे स्थितो वादी यदि सामान्यमैन्द्रियकं नित्यं शब्दो ऽप्येवं भवत्विति । एषा प्रतिज्ञाहानिः** । अत्र चानैकान्तिकत्वेन प्रत्यवस्थितइत्युपलक्षणं येन केन चित्प्रकारेण स्वप्रतिज्ञार्थानिर्वाहं पश्यन् प्रतिज्ञार्थं जहत्प्रतिज्ञाहानिमाप्नोतीति परमार्थः । यदप्युच्यते स्वयमेव घटमनित्यमैन्द्रियकमुदाहृत्य घटस्यैन्द्रियकत्वं पश्यन् कथमनुन्मत्तः सन् सामान्यस्य नित्यस्यैन्द्रियकत्वदर्शनमात्राच्छब्दे नित्यत्वमभ्युपगच्छेत् किं तूभयथ दर्शनात्संशयितः स्यात् । तत्र सर्वं नित्यमिति साङ्ख्यीयराद्धान्ताश्रयेणापि स्वपक्षनिर्वाहं पश्यतो ऽनैकान्तिकत्वोद्धारार्थं प्रेक्षावतो ऽपि प्रवृत्तिसम्भवात् । न चात्यन्तिकं प्रेक्षावत्त्वमिह ग्राह्यम् । तादृशस्य निग्रहाधिकरणत्वानुपपत्तेः । तस्माद्यथा वाक्प्रति विचारो नास्त्येव प्रामाणिकमपि प्रति निग्रहावतारो नास्तीति मध्यमो जनो निग्राह्यः । तस्य च सम्भवन्त्येव प्रमादा इति । शङ्कते । **प्रसङ्गविधानादिति चेत्** । निराकरोति तच्च न अत एव तत्प्रसङ्गे: । हेतुदोषबुद्धिर्धीर्धी. प्रसज्जयन्नभ्युपगच्छत्येव न हि साङ्ख्यीय राद्धान्तमनभ्युपगच्छन्नैकान्तिकत्वमुद्धर्तुमर्हतीति भावः । तदनेन परमत निराकृतप्रायमपि साक्षान्निराकर्तुमुपन्यस्यति । **हेतुदोषेणानैकान्तिकत्वलक्षणेन चरितार्थत्वान्न प्रतिज्ञाहानिर्निग्रहस्थानमित्यन्ये** । यदाह कीर्तिः । तस्मादैन्द्रियकत्वस्य नित्यानित्ययवृत्तेर्व्यभिचाराद्साधनाङ्गस्योपादानान्निग्रहो न प्रतिपक्षधर्मस्याभ्यनुज्ञानादिति । निराकरोति । **नानैकान्तिकदोषपरिहारेण विप्रतिपत्तेस्तदुपपत्तेः** । यदा हि साङ्ख्यपक्षावलम्बनेन शब्दनित्यत्वमभ्युपैति तदा प्रतिज्ञाहानिः न विरुद्धो हेतुर्नाप्यनैकान्तिको विप-

साभावात् केवलं प्रतिज्ञानार्थहानमेवास्य पराजयस्थानं विप्रतिपत्तेः स्वसाध्यविरुद्धप्रतिपत्तेरिति सर्वमवदातम् ।

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तदर्थनिर्देशः प्रतिज्ञान्तरम् (सू, ३)॥** तच्छ्वाघष्टे प्रतिज्ञातो मीमांसकं प्रति वैशेषिकेणानित्यः शब्द इति तस्य साधनमैन्द्रियकत्वाद् घटवदिति एवमुक्तस्य प्रतिषेधो मीमांसकेन क्रियते प्रतिदृष्टान्तेन हेतुर्व्यभिचारः तमाह सामान्यमैन्द्रियकं नित्यमिति । तस्मिन्प्रतिषेधे मीमांसकेन कृते धर्मविकल्पात्तथा निर्देश इति यावद्वाच्यते तावदर्थोऽत्रैव धर्मविकल्पादित्यनूद्य व्याचष्टे । दृष्टान्तप्रतिदृष्टान्तयोर्घटसामान्ययोः साधर्म्यमैन्द्रियकत्वं तद्योगे तद्धर्मभेदात् सामान्यमैन्द्रियकं सर्वगतमैन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात्तदर्थं प्रतिज्ञातार्थसिद्ध्यर्थं शब्दस्यासर्वगतत्वं मीमांसकान् प्रतिपादयितुं निर्देशः तस्य हि शब्दस्यासर्वगतत्वमसिद्धम् । प्रश्नपूर्वकं निर्देशस्वरूपमाह कथम् । यथा घटोऽसर्वगतोऽनित्य इति एवं शब्दोऽप्यसर्वगतोऽनित्य इति । इदं हि प्रतिज्ञावाक्यम् अनित्यः शब्द इतिवदसर्वगतः शब्द इति मीमांसकं विप्रतिपन्नं प्रति निर्देशान्न तु कृतकत्वादिवदुदाहरणसाधर्म्यादस्य हेतुलक्षणमस्ति साध्यनिर्देश. प्रतिज्ञेति तु प्रतिज्ञालक्षणयोगात्प्रतिज्ञान्तरमेव यद्यप्यस्य मनसि वर्तते असर्वगतत्वं साधयित्वा मया असर्वगतत्वे सतीति ऐन्द्रियकत्वं हेतुर्विशेषणीय इति तथाप्येतदनेन न कृतं किं त्वसर्वगतः शब्दो घटवदित्युक्त्वैव विरत. परार्थानुमाने च वचनगता गुणदोषा विचार्यन्ते न तु वचनानपेक्षं वस्तु तदिदमाह असर्वगतः शब्द इति द्वितीया प्रतिज्ञा हेतुरहिता । अस्य प्रश्नपूर्वकं निग्रहस्थानत्वमाह तत्कथमिति । अनर्थकं निष्प्रयोजनमिष्टार्थसिद्ध्यभावादिति । वार्तिकं तत्रानित्यः शब्द इति प्रतिज्ञा प्रथमा । अस्याः सामान्येनैन्द्रियकेण हेतोरनैकान्तिकत्वात्प्रतिहतो वादी प्रतिवादिना असर्वगतः शब्दोऽनित्य इति प्रतिज्ञान्तरं पूर्वप्रतिज्ञासिद्ध्यर्थं करोतीत्युपपद्यते । पृच्छति कथमिति । उत्तरम् । साधनसामर्थ्यापरिज्ञानात् । अनित्यः शब्द ऐन्द्रियकत्वाद् घटवदित्येतावदुक्त्वा निराकाङ्क्षो वादी न त्वसर्वगतत्वे सतीति साधनं विशेषितवान् न चा विशिष्टं साधनमर्थं समर्थं विशिष्टं तु समर्थं तस्य सामर्थ्यमपरिज्ञायाविशिष्टे तदारोप्याविशिष्ट-

साधनं प्रयुक्तवान् । तत्र निराकाङ्क्षो वादी सव्यभिचारहेतुप्रयोगादेव परा-
जीयते न तु प्रतिज्ञान्तरप्रयोगात् । यदि तु वादिन्यपर्यवसितवादे एव मध्ये
प्रतिवादिना हेतोरनैकान्तिकत्वे उद्भाविते तमेव हेतुमसर्वगतत्वे सतीति
विशेष्टुं मीमांसकं प्रति शब्दस्यासर्वगतत्वं प्रतिजानीते । असर्वगतः शब्द
इति प्रतिज्ञाय च न हेतुं ब्रवीति तदनैकान्तिकत्वोद्भावनप्रतिज्ञान्तरक-
रणाद्वानैकान्तिकत्वेन पराजीयते अपि तु प्रतिज्ञान्तरादेव न हि प्रतिज्ञा
प्रतिज्ञान्तरं साधयितुमर्हतीति । सो ऽयं प्रतिज्ञामात्रस्यासाधकत्वाप्रतिपत्त्या
ऽसाधकस्यैव वा साधकत्वप्रतिपत्त्या पराजीयते । तदेतदाह न च
प्रतिज्ञा प्रतिज्ञान्तरं साधयति । तेन प्रतिज्ञा प्रत्यर्थं समर्था तदपरि-
ज्ञानात्पञ्चावयवसाध्ये च सामर्थ्यारोपणात्तदपरिज्ञानादिति विप्रनिर्दिष्टः प्रस-
ज्यप्रतिषेधपर्युदासौ विवक्षितौ तेनाज्ञानाद्विपरीतज्ञानाच्च प्रतिज्ञान्तरं निग्रह-
स्थानमिति । यत्पुनरुच्यते परैः अत्यन्तासंबद्धमेतद् यत्प्रतिज्ञा प्रतिज्ञा-
साधनायेति यो हि प्राक् प्रतिज्ञामुक्त्वा हेतूदाहरणादिकं वक्तुं जानाति स
कथं विदनुक्रमं साधनस्य जानात्येव जानन् कथमविक्लान्तःकरणः प्रतिज्ञा-
मेव प्रतिज्ञासाधनायोपाददीतेति । तत्र ब्रूमः नायं प्रतिज्ञया प्रतिज्ञा साध-
नीयेति बुद्ध्वा प्रवृत्तः किं त्वसर्वगतत्वं शब्दस्य मीमांसकं प्रति साधयित्वा
तेनैन्द्रियकत्वं विशिष्यानैकान्तिकत्वमुद्धरणीयमिति मनोरथेन प्रवृत्तः प्रति-
ज्ञां कृतवान् असर्वगतः शब्द इति । अथास्य प्रतिवादिसंभ्रमात्पर्यनुयो-
गाद्वा स्तम्भितत्वे साधनाप्रतिभया तूष्णीं भवतः प्रतिज्ञावतो ऽपि प्रतिज्ञान्तरं
भवति निग्रहस्थानम् । अयं च विकलान्तःकरणस्य निग्रहो भवद्भिरप्युक्त
एव तदभ्युपगमस्याप्रतिभया तूष्णींभावादिति यद्भिः सो ऽयमीदृशो ऽसम्य-
लापो भवद्भिः शास्त्रे निबन्धनीयो न त्वस्माभिरिति व्यक्तमियं राजकुल-
स्थितिरिति सर्वं चतुरस्रम् ॥

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः** (सू. ४) ॥ अत्र प्रतिज्ञा-
हेत्वोरिति प्रतियोगिद्वयमात्रोपलक्षणपरम् । तेन दृष्टान्तादयो ऽपि प्रतियोगिन
द्रष्टव्याः । एतदुक्तं भवति येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते
प्रमाणान्तरं च विरोधकं स विरोधो नाम निग्रहस्थानम् । तदुपस्थितस्य
प्रतिज्ञावयवस्याप्युपलक्षणार्थत्वात् । न चैवं भाष्यहानेरन्यायः एकदेशेना-

व्यापकेन समुदायसंपर्के स हि भवति न तु व्यापकेन संपर्के व्यापकं चानवयवेन इदप्रतियोगिमिथुनयोर्विरोधः अतो यथाश्रुति तावत्सूत्रं व्याचष्टे वार्तिककारः यत्र प्रतिज्ञा हेतुना विरुध्यत इति । द्वयोर्विरोधे यस्य प्रमाणान्तरानुग्रहस्तेन तद्बाध्यत इति ,तेन तद्वि-रुध्यत इत्युच्यते । यत्र प्रतिज्ञया हेतुर्विरुध्यते तदुदाहरति । यथा गुण-व्यतिरिक्तं द्रव्यं भेदेनाग्रहणादिति । अत्र हि भेदेनाग्रहणादित्यनेन भेदग्रहणनिषेधेन ,ग्राह्याभाव उपलक्ष्यते । तेनैव हेत्वर्थो भवति गुणव्यति-रिक्तं द्रव्यमव्यतिरेकादिति । सो ऽयं प्रतिज्ञाहेतुपदयोर्व्याप्तिस्मरणापेक्ष एव परस्परव्याघातो ऽस्तिनास्तिपदयोरिव । न चैवंविधः शब्दे नित्यत्व-कृतकत्वयोर्येन कृतकत्वप्रवृत्तिसङ्गो ऽयं हेत्वाभासः स्यात् । तत्र हि कृतक-त्वस्य नित्यत्वेन व्याप्तिस्मरणापेक्ष एव विरोधः प्रतीयते न त्वयं तथा अस्तिनास्तिवत्स्वभावविरोधात् । यद्यप्ययमसिद्धो ऽपि हेतुस्तथा ऽप्यस्या-सिद्धिर्बाधकप्रमाणान्तरमनुसृत्य प्रतिपत्तव्या प्रतिज्ञाविरोधस्तूच्चारणमात्रा-देव प्रथमत एव गम्यत इति । तेनैव दूषितेनासिद्धिः पश्चात्तनी न दूषण-त्वाय कल्पते भस्मीकृते दहनवत् । प्रतिज्ञाहेतुविरोधमात्रेण च निग्रह-सिद्धेः सूत्रद्वयमात्रेण प्रतिज्ञाया बलवत्तास्मरणात् । प्रतिज्ञायाश्चात्र बलवत्त्वं प्रमाणान्तरानुग्रहात् । तथा हि दर्शनस्पर्शनाभ्यामेकार्थप्रतिसंधानाद्रूपादि-व्यतिरिक्तं द्रव्यं सिध्यतीति तदनुगृहीता प्रतिज्ञैव हेत्वर्थं बाधत इति । एतेनैवेति । तद्यथा ,श्रमणा गर्भिणीति श्रमणा ब्रह्मचारिणी नान्तर्वत्नी भवितुमर्हति जितेन्द्रियस्योपस्थसंयमो हि ब्रह्मचर्यं न वा साधनाङ्गस्य प्रतिज्ञाया वचनादेव निगृहीत इति कृत विरोधोद्भावनेन निष्पादितक्रिये कर्मणि अविशेषाभिधायिनो दूषणस्य दूषणन्यायातिपातादिति सांप्रतम् । प्रतिज्ञायाः साधनाङ्गत्वस्य प्रथमएवाध्याये दर्शितत्वात् । हेतुविरोधो ऽपि यत्र हेतुना प्रमाणान्तरेणानुगृहीतेन प्रतिज्ञा बाध्यते । यथा सर्वं पृथगिति प्रतिज्ञा न किं चिदेकमित्यर्थः । हेतुः समूहे भावशब्दप्रयोगादिति समु-दाये घटादिप्रयोगादित्यर्थः । नास्त्येकमेकसमुदायस्येति वचने मिथो विरु-ध्येते विनैव व्याप्त्यनुस्मरणमिति । न च सर्वेनास्तित्वशब्दादिनो नैकसमुच्चयो ऽस्तीति वक्तव्यम् भवति हेतौ साध्यसिद्धेरयोगात् । न च कल्पितस्य,

हेतोः साधनाङ्गत्वेन तत्र तत्र निवेदितम् । अथ चैकसमुच्चयस्य प्रमाणानुप-
हार्द्दत्वं किं विदिति प्रतिज्ञा हेतुना बाध्यते । एतेन लक्षणेन प्रतिज्ञाया दृष्टा-
न्तविरोधो ऽपि वक्तव्यः । यथा अनित्यः शब्दः प्रमेयत्वात् यत्प्रमेयं तन्नित्यं
यथा ऽऽकाशमिति साधर्म्यदृष्टान्तः । यद्यप्यत्र वस्तुतो हेतुरनैकान्तिकस्तथा*
ऽपि दृष्टान्तस्य प्रतिज्ञाविरोधेनैव निगृह्यते विरोधस्य वाक्ये प्रथममवगतेः ।
अनित्ये घटादावुपलब्धेरनैकान्तिकत्वमनित्यप्रतिपत्तेस्तत्त्वावगम्यत्वादिति । हेतो-
श्च दृष्टान्तादिभिर्विरोध एतेन वक्तव्य इत्यनुषज्यते यथा नित्यः शब्द
ऐन्द्रियकत्वादनैन्द्रियकद्व्यणुकवदिति । अत्राप्यैन्द्रियकत्वानैन्द्रियकत्वयोः श-
ब्दतो विरोधः प्रतीयते साधनवैकल्यं तु वस्तुस्वभावालोचनयेति विशेषः ।
एवमुपनयेन विरोधो ऽनैन्द्रियकश्च शब्द इति । अत्रापि वस्तुस्वभावालोचनया
ऽनैन्द्रियकत्वासिद्धिः प्रतीयते शब्दतस्तु विरोध इति । प्रमाणविरोधश्च
प्रतिज्ञाहेत्वोर्वक्तव्यः । यद्यपि बाधितविषय हेत्वाभासान्तर्गत तथापीहाप्य
स्तीति विरोधहेत्वाभासयोश्च निग्रहस्थानयोः समावेशो ऽस्तु न क्व चिद्वि-
षये समावेशादानर्थक्यम् । विषयान्तरे समावेशाभावादर्थवत्त्वात् । वर्णित-
मानन्तरमेव भिन्नविषयत्वमिति । तदेव साधनवादिनो विरोधं निग्रहस्था-
नमभिधायेतरवादिनो ऽपि निग्रहस्थानमनेनैव संगृहीतमित्याह । परपक्ष-
सिद्धेन गोत्वादिनेति । यदा हि बौद्धेन प्राभाकरं प्रति साध्यते अनित्यः
शब्दः श्रावणत्वादिति । यद्यनित्यत्वं न भवेच्छ्रावणत्वं [illegible] स्यादिति
प्राभाकरो ऽनैकान्तिकत्वमुद्भावयति श्रावणं शब्दत्वं नित्यं चेति । तदा-
स्यानैकान्तिकत्वोद्भावनं स्वकीयशब्दत्वनिराकरणविरुद्धमिति । परप-
क्षसिद्ध गोत्वाद्यपेक्षणं विषये विरुद्धं द्रष्टव्यम् । सिद्धान्तविरुद्धं च साधन
विरुद्धमित्याह । स्वपक्षानपे क्ष । ननु यदानैकान्तिकोद्भावनमपि विरुद्ध
कस्तत्रानैकान्तिकत्वापादनस्य विषय इत्यत आह । उभयपक्षसंप्रति-
पन्नस्त्वति । देशयति । दृष्टान्ताभासा इति । अवयवान्तरं हि
प्रतिज्ञाहेत्वादिभ्य उदाहरणं तेन हेत्वाभासोक्त्या तस्य संग्रहः । साध-
र्म्येण तूदाहरणाभासस्य हेतुदूषकत्वेन सर्वमेव हेतुदूषकमिति भावः ।

* नित्यमिति नास्ति ३ पु ।

परिहरति हेत्वाभासपूर्वकत्वादिति । हेत्वाभासा इत्यत्र हेतुशब्दः स्वार्थमपरित्यज्य दृष्टान्तमुपलक्षयति । उपलक्षणे हेतुरुक्तः हेत्वाभासपूर्वकत्वाद्धेत्वाभासप्रधानकत्वाद् दृष्टान्ताभासेनापि हेतुरेव दूष्यते यतः न चैतावता प्रतिज्ञादिदोषोपलक्षणप्रसङ्गः । न हि यत्र यत्र निमित्तमस्ति तत्सर्वमुपलक्षणीयं किं तु यदुपलक्ष्यते तत्रावश्यं निमित्तं वक्तव्यम् । न च सूत्रकारस्य सर्वत्र लाघवादरो दृष्ट इत्युक्तम् । तस्मात्सर्वं रमणीयम् ॥

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः । (सू. ५) ॥**

ऐन्द्रियकत्वस्य हेतोरनैकान्तिकत्वोद्भावनेन शब्दानित्यत्वपक्षे प्रतिषिद्धे वादी प्रतिवादिनं पृच्छत्यनैकान्तिकत्वमुद्दिधीर्षुः कः पुनराहानित्यः शब्द इति । यद्यहमनित्यः शब्द इति प्रतिज्ञातमपह्नोतुं शक्नोमि तदा न सामान्येन नित्येन मे हेतुरनैकान्तिको भवतीति बुद्ध्या ऽपह्नुते ना ऽयमेवंवादी न शक्यो ऽनैकान्तिकत्वेन जेतुम् । अपह्नवस्यापह्नवत्वावेदने ऽनैकान्तिकत्वोद्धारात्तस्मादनैकान्तिकस्यानैकान्तिकत्वस्थापनायापह्नवस्यापह्नवत्वमुद्भावनीयम् । तत्र किमपह्नवत्वमुद्भाव्यानैकान्तिकत्वं व्यवस्थाप्य निगृह्यतामुतापह्नवादेवेति संशये अपह्नवत्वोद्भावनेनैव पूर्वापरव्याहतेर्निगृह्यते नानैकान्तिकत्वेन तत्पूर्वकत्वादनैकान्तिकत्वस्थापनस्य । तस्माद्यदुक्तं कीर्तिना किमिदानीं हेत्वाभासादुत्तरप्रतिज्ञासंन्यासोक्त्या तस्य प्रतिवादिनो हेत्वाभास एवास्तु निग्रहस्थानमिति तदपास्तम् । प्रतिज्ञासंन्यासस्यैव पूर्वभावित्वात् । यदपि तेनोक्तं पक्षप्रतिषेधे तूष्णींभवतस्तूष्णींभावो नाम निग्रहस्थानं प्रलपतश्च प्रलपितं नामेत्याद्यपि वाच्यं स्यादिति । तदप्यसाम्प्रतम् । न हि तूष्णींभावेन प्रलपितादिभिर्वा शक्यमनैकान्तिकत्वमुद्धर्तुं यथा प्रतिज्ञार्थापह्नवेन न चैते हेत्वाभासोद्भावनस्य पुरस्तात्तनाः तस्मादेतदप्यविचारिताभिधानं यत्किञ्चिदिति ।

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम्** (सू. ६) ॥ व्याख्यातुं निदर्शनमाह **निदर्शनमेकप्रकृतीदं व्यक्तं भूतभौतिकेन्द्रियमेकप्रकृतीनां विकाराणां परिमाणात्** । यथा एकमृत्पूर्वा घटशरावोदञ्चनादयः परिमिता दृष्टाः यावान् प्रकृतेर्व्यूहः संस्थानं तावान्विकार इति । न चैतदुदाहरणं साधनविकलमित्याह इदं चेति ।

उपनयमाह अस्ति चेदमिति । निगमनमाह तदेकप्रकृतीनामिति । अस्य परिमितत्वस्य हेतोर्व्यभिचारेण प्रत्यवस्थानं प्रतिवादिनः । नानाप्रकृतीनां घटरुचकादीनामेकप्रकृतीनां च घटशरावादीनां दृष्टं परिमाणमिति । एवं प्रत्यवस्थिते प्रतिवादिनि वादी पश्चात्परिमितत्वं हेतुं विशिनष्टि एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनादिति प्रकृतिः स्वभावः एकस्वभावसमन्वये सतीत्यर्थः । एकप्रकृतिसमन्वयं स्फुटयति । सुखदुःखमोहसमन्वितं हीदं सर्वं व्यक्तं परिमितं गृह्यते । तथा हि । मैत्रदारेषु नर्मदायां मैत्रस्य सुखबुद्धिर्भवति तत्सपत्नीनां च दुःखबुद्धिः चैत्रस्य तामविन्दतो रागावरुद्धस्य मोहो विषादः । नर्मदया भावान्तराणि व्याख्यातानि । तदेवं यत्रैकस्वभावसमन्वये सति परिमाणं तत्रैकप्रकृतित्वमेव तद्यथैकमृत्स्वभावस्वभावेषु घटशरावोदञ्चनादिषु । घटरुचकादयस्तु नैकस्वभावाः मार्दवसौवर्णादीनां स्वभावानां भेदात् । निर्दिष्टयाथ सूत्रं योजयति तदिदमविशेषोक्ते हेतौ प्रतिषिद्ध इति । अस्य निग्रहस्थानत्वमाह । सति च हेत्वन्तरभाव इति । अपि च यदि हेत्वन्तरवचने विश्वमेकप्रकृति साध्यते तदा निदर्शनं नास्ति सर्वस्य पक्षे निक्षेपात् । अथ निदर्शनसिद्ध्यर्थं किं चित्पक्षाद्व्यतिरिच्यते ततस्तेनैवानैकान्तिकत्वम् । अन्वितानां परिमितानां भिन्नप्रकृतिकत्वादित्याह । हेत्वन्तरवचने सति हेत्वर्थनिदर्शन इति । हेतुः साधनम् अर्थः साध्यः तौ हेत्वर्थौ निदर्शयति व्याप्यव्यापकभावेनेति निदर्शनः हेत्वर्थयोर्निदर्शनो हेत्वर्थनिदर्शनो दृष्टान्तः स यद्युपादीयते ततो नेदं व्यक्तमेकप्रकृति भवति दृष्टान्तस्य प्रकृत्यन्तरोपादानात् । वार्तिकं साधनान्तरोपादाने पूर्वस्येति । इतोऽनन्तरावसर एव वादिनि यदि प्रतिवादी हेत्वर्थे व्यभिचारयति वादी च तृतीयपटके स्थितो हेतुं विशेषयति तदा साधनान्तरोपादानान्निगृह्यताम् उतानैकान्तिकसाधनोपादानात् । न तावदनैकान्तिकसाधनादस्य निग्रहो हेतुविशेषणेन समाहितत्वादिति । तस्माद्धेत्वन्तरवचनादेव निगृह्यते पूर्वस्य वस्तुतोऽसमर्थस्यासामर्थ्यख्यापनात् । सामर्थ्ये वा हेत्वन्तरानर्थक्यमिति सूक्तम् ।

**प्रकृतादर्थादप्रतिसंबन्धार्थमर्थान्तरम् (सू. ७)॥** व्याचष्टे यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे सति वादिकल्पे विसंवादायामित्यर्थः ।

**हेतुतः साध्यसिद्धौ प्रकृतायां वादी साधनं ब्रूयात् नित्यः शब्दो ऽस्पर्शत्वादिति** । अथान्तरे सुखादिभिर्व्यभिचारेण हेतोरसामर्थ्यं पश्यन् तत्प्रच्छादनार्थं प्रसक्तानुप्रसक्त्या तं समर्थमुपन्यस्यन्नर्थान्तरेण निगृह्यते ।
**अभिधेयस्य क्रियान्तरयोगात्** क्रियाविशेषस्य योगाद्विशिष्यमाणरूपो ऽभिद्यमानरूपः शब्दो नामेति यथा वृक्षस्तिष्ठति वृक्षं छिनत्ति वृक्षेण चन्द्रमसं पश्यति वृक्षायोदकमासिञ्चतीत्यादि । तदेवमभिधेयस्य क्रियाविशेषयोगाद्विशिष्यमाणरूपः शब्दो नामेति । आख्यातस्वरूपमाह । **क्रियाकारकसमुदाय** इति । विपर्ययेण विपर्ययिणमुपलक्षयति । पचति पच्यत इत्येवमादयः शब्दाः क्रियां कारकं कर्तारं कर्म चाभिवदन्ति तदेतल्लक्षणमविद्धमतिव्यापकं च न हि कर्ता कर्म वा आख्यातेनाभिधीयते । क्रियाविशेषणतयोः प्रतिलम्भात् । अनन्यलभ्यस्य च शब्दार्थत्वात् । कर्तृकर्मणोश्च कारकान्तरेभ्यो भावनायामभ्यर्हिततमत्वेन तस्याभिधाननियमादविरुद्धं कारकाभिधानम् । अतिव्यापकं च पाचकः पाक्य इत्यादेर्नाम्नो ऽपि क्रियाकारकसमुदायाभिधायित्वात् । तदस्मिन् लक्षणे ऽपरितुष्यन् लक्षणान्तरद्वयेनाख्यातपदान्युपसंगृह्णाति । **कारकसंख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम् ।** पचति पच्यत इत्यादौ कर्तुः कर्मणो वा संख्यया कालेन वर्तमानादिना विशिष्टा क्रिया प्रतीयते । कालस्य तु विद्यत इत्येतावतोक्तो न तु प्रथमे लक्षणे पचेत यजेतेत्येवमादौ तद्योगाप्रतीतेः । अनेन लक्षणेन स्वपिति शुष्यत इत्यादीनामाख्यातानामसंग्रहः कारकतत्संख्ययोरप्रतीतेः तत्संग्रहाय द्वितीयं लक्षणमाह । **धात्वर्थमात्रं च कालाभिधानविशिष्टम्** अभिधीयत इत्यभिधानं प्रयोगेष्विति । **नाम्नो वा ऽऽख्यातस्य वा तदर्थादभिद्यमानरूपा निपाताः** । यथा समुच्चयविकल्पादिनामपदैः समुच्चयादयः समुच्चेतव्यान्नामार्थादाख्यातार्थाद्वा भेदेनोच्यन्ते तत्र षष्ठीप्रयोगात् । तेषां समुच्चयो विकल्पो वेति नैव चादयः स्वार्थान्नामार्थादाख्यातार्थाद्वा भेदेनाभिदधति । रूप्यन्ते प्रतिपाद्यन्ते रूपाणि अर्थान्नामार्थादाख्यातार्थाद्वा अभिद्यमानं रूपं प्रतिपाद्यमानं येषां निपातानां ते तथोक्ताः । **उपसृज्यमानाः** समीपे प्राक् प्रयुज्यमानाः **क्रियावद्योतका उपसर्गाः** अवद्योतनं चोपलक्षणम् । अधिकार्था विपरीतार्थाश्चोपसर्गा गृह्यन्ते । यथा ऽभ्यागच्छति प्रतिष्ठत इत्यादिषु

तदस्य निग्रहस्थानत्वं वार्त्तिककार उपपादयति । अभ्युपगतेति । यथा च साधनवादिनो ऽर्थान्तरं निग्रहस्थानमेवमुत्तरवादिनो ऽपि द्रष्टव्यम् ।

**वर्णक्रमनिर्देशवन्निरर्थकम् । (सू ८) ॥** वर्णक्रमनिर्देशवदिति वतिः । अथ यदा द्राविडः स्वभाषया तद्भाषानभिज्ञमार्यं प्रति शब्दनित्यत्वं प्रतिपादयति तदा तन्निरर्थकं निग्रहस्थानं स खल्वार्यभाषां जानन्सामर्थ्यप्रच्छादनाय तद्भाषानभिज्ञतया वा स्वभाषया साधनं प्रयुक्तवान् सो ऽत्र पूर्वस्मिन्कल्पे विप्रतिपत्त्या निगृह्यते उत्तरस्मिंस्त्वप्रतिपत्त्या । वस्तुतः साधनसामर्थ्ये ऽपि मूकवदर्थप्रतिपादकशब्दाप्रतीतेस्तत्प्रतिपादनासमर्थत्वात् । अत एव दृष्टान्तसाधनतया वर्तिना च वर्णक्रमो दर्शितो न पुनरेतदुदाहरणं निग्रहस्थानस्य येन कपोलवादिवादादपि प्रसङ्गः । यथा हि द्राविडस्यार्थभेदविवक्षोत्थापितं वचनं नैव वर्णक्रमनिर्देशः कपोलवादिवच्च वा अप्रतिपादकत्वसामान्याद्वर्णक्रमनिर्देशवदिति दृष्टान्तः । अत एवाह भाष्यकारः । एवंप्रकारमिति । न पुनरिदमेवेत्यर्थः । वार्त्तिकमुदाहरणं भाष्यवति । एवंप्रकारोदाहरणमित्यर्थः । साधनानुपादानादिति । अर्थप्रतिपादकं पञ्चावयवं वाक्यं साधनं तेनैव नोक्तं तस्य स्वसमयेन प्रतिपादकत्वे ऽप्यार्यान् प्रत्यप्रतिपादकत्वादित्यर्थः ।

**परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् (सू ९) ॥** यदुक्तं परिषदा प्रतिवादिना च न विज्ञायते समानसंकेतेन वादिना त्रिरभिहितं यावद्भिर्वारैः परिषत्प्रतिवादिनोरर्थप्रत्ययो भवति स च प्रायेण त्रिभिरिति त्रिरभिहितमित्युक्तम् । ननु समानसंकेतेन वादिना त्रिरभिहितमविज्ञातार्थं चेति न संभवति । संभवे वा परिषत्प्रतिवादिनो दोषो न च अज्ञानावबोधे प्रतिपादकस्य कश्चिदपराधः । न हि बधिरो गीतं न शृणोतीति गायनस्य कश्चिदपराध इत्यत आह । श्लिष्टशब्दमसति प्रकरणादौ नियामके यथा श्वेतो धावतीति । अप्रतीतप्रयोगं जर्भरीतुर्फरीतु इति । अतिद्रुतोच्चारितमित्येवमादिना कारणेन तदविज्ञातार्थम् । अस्य निग्रहस्थानत्वमाह । असामर्थ्येति । वार्त्तिकं भाष्यव्याख्यया गतार्थम् ।

**पौर्वापर्यायोगादप्रतिसंबद्धार्थमपार्थकम् (सू १०) ॥** यथानेकस्य पदस्याश्लिष्टस्य प्रतीतयोगस्याद्रुतोच्चारितस्य वाक्यस्य वानेकस्य पौर्वा-

पर्यं प्रयोगः संबन्धो नास्तीति तस्मादसंबन्धार्थता गृह्यते तदपार्थकं निग्रह-
स्थानं निष्प्रयोजनं कस्मात् समुदायार्थस्य वाक्यार्थस्य वा ऽपायाद्वाक्यस-
मासाख्यार्थप्रत्यायनप्रयोजनो हि पदानां वाक्यानां वा प्रयोगो ऽसति तस्मि-
न्नपार्थकमित्यर्थः । वाक्यस्य पौर्वापर्यासंबन्धउदाहरणमाह । यथा दश
दाडिमानि षडपूपा इति । पदानां पौर्वापर्यासंबन्धे उदाहरणमाह ।
कुण्डमजाजिनम् इति । रौरुकं सरुपंचन्थि पाय्यं पाययितव्यम् । अप्र-
तियोगी शङ्कः 'वार्त्तिककारः शङ्कते । निरर्थकापार्थकयोरिति । परप्रत्या-
यनप्रयोजनं हि वचनोच्चारणं तत्र निरर्थकेनापार्थकेनापि न परः प्रतिपा-
द्यत इति तयोरभेदः । न च वर्णक्रममात्रमेकत्रान्यत्र च पदानीत्येता-
वता भेदेनोपादानं युक्तम् । एकत्र वाक्योपादानमन्यत्र पदोपादानमित्यपा-
र्थकयोरवान्तरभेदेन भेदोपादानप्रसङ्गादिति शङ्कार्थः । निराकरोति ।
भिद्यत इति । पृच्छति । कथम् । उत्तरम् । तत्रानर्थके वर्णमात्रम्
अभिधेयशून्यम् इह त्वपार्थकपदानि पद्यते गम्यते ऽभिधेयमेभिरिति पदानि
वाक्यानि चाभिधेयवन्ति असंबद्धानि निरभिधेयनिष्प्रयोजनयोर्निरर्थकापार्थ-
कयोर्महान्विशेषः । न त्वीदृशो वाक्यपदयोर्निष्प्रयोजनयोर्विशेषो येनावान्तर-
भेदमाद्रियामहे । परप्रत्यायनप्रयोजनाभावमात्रविवक्षया त्वविशेषे सर्वनिग्रह-
स्थानाविशेषः सर्वत्र परप्रत्यायनाभावात् । भावे वा निग्रहस्थानानुपपत्तेः ।

अवयवविपर्यासवचनमप्राप्तकालम् (सू. ११) ॥ व्याचष्टे प्रति-
ज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः लक्षणानतिक्रमेण क्रमः उक्त-
मेतदस्माभिः प्रथमाध्याये । अनपेक्षिताभिधायिनो वचनात्परे प्रतिपद्यन्ते ना-
न्यस्य तत्र प्रथमं साध्यनिर्देशो ऽपेक्षितः परेण तु साधननिर्देशः तत्र यद्ययं प्रथमं
साधनमेव प्रयुञ्जीत कथमपेक्षितं ब्रूयात् अनपेक्षिताभिधायी च कथं प्रतिपादको
नाम । तदेवं सर्वाण्येव हेतुवचनादीनि क्रमवन्ति नाक्रमाणि प्रतिपादयितुमर्ह-
न्तीति विपरीतक्रमेभ्यो ऽप्यर्थक्रमानुसरणादेवार्थप्रतिपत्तेः । सो ऽयं प्रतिज्ञा-
दीनामर्थे यत्तादृशो य एषां क्रममन्तरेण न शक्यो वक्तुमिति । अवयववि-
पर्यासे त्वाकाङ्क्षाभावात् तत्पूर्वकत्वाच्च पदार्थसंबन्धस्यासंबन्धं निग्रहस्थान-
मित्यर्थः । वार्त्तिकं नैवमपि सिद्धेरित्येके । यथा ऽऽकुरपावि न कश्चित्
क्रमनियम स्वार्थसिद्धेरुभयथाविशेषात् । यदुच्येत अर्थशब्दपदयमस्माकं सम-

यो यदनेन क्रमविशेषेणार्थः प्रत्येतव्यो नान्येनेति अतस्तथैव प्रणीयते न क्रमान्तरेणेत्यत आह । समयानभ्युपगमाच्च । पदेष्वेव समयपूर्वकः प्रत्ययो न वाक्येषु अभिनवकविविरचिततत्समयानपेक्षादेव वाक्यादर्थप्रतीतेः । स्यादेतद् वाक्येष्वपि क्रमनियमो दृष्टः यथा पाचयां बभूवेति न पुनर्बभूव पाचयामिति अत आह प्रयोगाच्चेति । तत्र लौकिकः प्रयोगो नियत इह त्वनियतव्यत्ययस्यापि दृष्टः प्रयोग इत्यर्थः । तदेतद्दूषयति । यस्मादसत्यैवमपि सिद्धेरिति । तथोत्तरं प्रयोगोपेतशब्दवदेतत् स्यात् । एतदेव विवृणोति । यथा गौरित्यस्मिन्नर्थे एव पदस्यार्थे गावीति प्रयुज्यमानं पदं ककुदादिमन्तमर्थं प्रत्याययति । यद्यपि शब्दानामर्थप्रत्यायनं न स्वाभाविकं तथाऽपि परमेश्वरसङ्केतपूर्वकमद्य यावदनुवर्तते ऽत एव साधवो ऽर्थभेदे शब्दभेदा येषां पारमेश्वरसङ्केतः तदपभ्रंशात्तु प्रवर्तमाना अत्यर्थे ऽसाधवः शब्दा अपभ्रंशा भवन्ति । तदुक्तमत्र साधुभिर्भाषितव्यमित्यादयो विधयो धर्मेषु निन्दार्थवादाश्च मन्त्रो हीनः स्वरतो वर्णतो इत्यादयः । वेदानां च प्रामाण्यं प्रतिपादितं द्वितीयेऽध्याये । न चायमर्थो ये ये साधवस्ते [illegible] धर्महेतव इति किं तु धर्मानुष्ठाने तदनुरूपभाषणे प्राप्ते साधुभिरेवेति नियम्यते । तदेव व्यवस्थिते अविशेषेण गोगाव्यादिशब्दा आर्यैः प्रयुज्यमाना दृश्यन्ते तत्रैते किमविशेषेणैव साधव उत कश्चिदेकः साधुः तत्पूर्वकेतरेभ्यः प्रतीतिः तत्रैकशब्दस्य साधुत्वकल्पनायामितरस्मात् तन्मूलतयार्थप्रतिपत्त्युपपत्तौ न सर्वेषु साधुत्वकल्पना युक्ता । यथा ऽऽह स्म भगवान् जैमिनिरन्याय्यश्चानेकशब्दत्वमिति । तथापि कतमस्य साधुत्वमेकस्यैतेष्विति जिज्ञासायां तत्र तत्त्वमभियोगविशेषात्स्यादिति यो ऽभियुक्ततमैरिन्द्रपाणिनिप्रभृतिभिः साधुत्वेनाभिज्ञातः स्मर्यते स साधुरितरो ऽसाधुरिति निश्चीयते । तेन यद्यपि लौकिका गाव्यादिशब्देभ्य एव गवाद्यर्थमधिगच्छन्तीति दृष्टार्थमात्रव्यवहारिणः प्रतिपत्तिस्तथा ऽपि परीक्षकाणां विचारयतामेवं विचारक्रमो यद्वृद्धेनैव गोशब्दे प्रयोक्तव्ये प्रमादादन्यथाशब्दः प्रयुक्तः ततश्च वृद्धतरेण गोशब्दमनुचिन्त्य गोत्वं प्रतीतम् । यथा ऽऽहुः । अम्बाम्बेति यदा बालः शिक्षमाणः प्रभाषते । अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः । एवं साधौ प्रयोक्तव्ये यो ऽपभ्रंशः प्रयुज्यते । तेन साधुव्यवहितः कश्चिदर्थो ऽभिधी-

त्यर्थः । परेषां मतमुपन्यस्यति एके त्विति । एके तु प्रतिज्ञान्यूनं नाम निग्रहस्थानं नास्तीति ब्रुवते । दूषयति एतत्तु न युक्तमिति । किं प्रतिज्ञान्यूनं निग्रहस्थानान्तरं न भवति अथ निग्रहस्थानमेव न भवति । तद्देशात् किमसौ निगृह्यते न वेति । प्रथमकल्पे दोषमाह यदीति । द्वितीयकल्पे दोषमाह अथ न निग्रह इति । प्रतिज्ञायाः साधनाङ्गत्वमुक्तमित्यर्थः । यत्तु पठीति दिङ्नागसिद्धान्तपरिग्रहपर्वेति । एतत्तु दूषयति । एतदपीति । विद्धसाध्ययोः सिद्धान्तप्रतिज्ञयोर्महान् भेद इत्यर्थः ।

हेतूदाहरणाधिकमधिकम् ( सू. १३ ) ॥ तदेतन्नियमाभ्युपगम इति भाष्यम् । यत्र कथमेतत्साध्यं सिध्यतीति जिज्ञासा तत्रैकेनैव साधनेन साध्यसिद्धेः साधनान्तराभिधानमनर्थकमिति । निष्प्रयोजने कर्मणि प्रवृत्तस्याभिधायिनः साधनस्य साधनन्यायातिपातात् । यत्र तु प्रतिवादिनः परिषदो वा जिज्ञासा भवति कति साधनानि सम्भवन्त्यस्मिन्नर्थे इति तत्र यावन्ति साधनानि तावन्ति सर्वाण्येव वाच्यानि अन्यतराभिधाने निग्रहप्रसङ्गादिति । नाधिकं निग्रहस्थानमिति यथाहुस्तन्मतमुपन्यस्यति । तच्च न दार्ढ्यादिति । दूषयति न दार्ढ्यार्थेति । यदि निश्चयो दार्ढ्यं तदेकस्मादेव प्रमाणाद्भवति अनिश्चायकस्याप्रमाणत्वात् । अथ स्फुटत्वं तदपि चेन्निश्चयः स ततोऽन्यः अथ सामान्यविशेषवत्त्वं यथा न तदनुमानसहस्रेऽपि तेषां सामान्यवद्द्रव्यमात्रविषयत्वात् । शङ्कते अथ प्रवर्तिते द्वे अपि ज्ञापके इति । नास्माकमनधिगतार्थगन्तृत्वं प्रमाणत्वं येनैकेनाधिगते प्रमाणान्तरमप्रमाणं स्यात् । अपि तु गन्तृमात्रं प्रमाणं तच्च द्वितीयस्याप्यविशिष्टमिति शङ्कार्थः । निराकरोति सत्यं द्वे अपि ज्ञापके इति । पुरुषोऽपराध्यते यो ज्ञातमर्थमजिज्ञासितं ज्ञापयति न तु प्रमाणं तद्धि सामर्थ्येन मेये प्रवर्तत एव । यदि जिज्ञासायां सत्यां प्रवर्तते प्रतिपादयति चेदं नास्य कश्चिदपराध इति । न हि धान्येष्वलूनेषु दात्रमपराध्यते भवति तस्मादनपेक्षितकारणादनपेक्षस्याप्यप्रवृत्तस्य पुरुषस्य निग्रह इति स्थितम् ।

शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ( सू. १४ ) ॥

अर्थादापन्नस्य स्वशब्देन पुनर्वचनं पुनरुक्तम् । ( सू. १५ ) ॥

तदनेन सूत्रद्वयेन पुनरुक्तमेकमेव निग्रहस्थानं कथं विद्यानान्तरभेदविवक्षया

विविधमुक्तं प्रपञ्चार्थम् । तदेव पुनरुक्तं क्व चिच्छब्दाभ्यासात् क्व चित्पर्यायान्तरात् क्व चिदर्थादिति । आक्षिपति नासाधनादिति । समाधत्ते सत्यमिति । अल्पविलक्षयोर्वक्तृनैपुण्यं चिन्त्यते । पुनरुक्तप्रयोगे त्वनिपुणः स्याद् अनपेक्षिताभिधानात्साधनस्य विषयः साध्यो ऽर्थो न सिद्धः तस्यापरिज्ञानान्निगृह्यते । वैयर्थ्यं चानर्थक्य विरुद्धप्रयोजनत्वं चाभिमतम् । तथा हि पुनरुक्तप्रयोगे तत्प्रयोजनानुसरणसमाकुलचित्तः प्रथमाभिधानादापाततः प्रतीतमप्यर्थमप्रतीतमिव मन्यमानो न निवर्तितुमर्हतीति ततश्च प्रतिपादनाय प्रवृत्तो न प्रतिपादयितेति विरुद्धप्रयोजनत्वाद्वैयर्थ्यं स्यादित्युपपन्नं निग्रहस्थानमिति ।

विज्ञातस्य परिषदा त्रिरभिहितस्याप्यप्रत्युच्चारणमननुभाषणम् (सू. १६) ॥ व्याचष्टे विज्ञातस्य वाक्यार्थस्येति । निग्रहस्थानत्वे ऽस्योपपत्तिमाह । अप्रत्युच्चारयन् किमाश्रयं प्रतिषेधं ब्रूयादिति । वार्तिक नेदं निग्रहस्थानमिति केचित् । उत्तरेण तद्गुणदोषनिरूपणेन प्रतिवादिनो मूलस्यामूलस्यावख्यापनात् । यत्त्विमजले उत्तरेण गुणदोषवत्ते-तीति । तस्मान्निह पुनरुच्चारितेनोच्चारणेनास्ति प्रयोजनमिति शेषः । अस्ति हि कश्चिदिति क्व चित्पाठः । तथास्ति हीति निपातद्वय वाक्यालंकारे द्रष्टव्यम् । पुंसां विचित्रस्वभावत्वात् कश्चिदुत्तरे समर्थो न प्रत्युच्चारणे सो ऽयमुत्तरमभिदधानः तावता ऽननुभाषणमात्रेण निग्रहमर्हतीति । ननु यद्यननुभाषणं न निग्रहस्थानं तदा ऽनुभाषितमुपक्रम्य सर्वमननुभाषयन्नपि न निगृह्येतेत्यत आह । यस्त्वारभ्य न निर्वाहयेत् उत्तरं तु ब्रूयात् तस्य स्यात् स्वीकारमात्रमसामर्थ्यकृतं न तु तत्त्ववादित्वविहतिरि-त्यर्थः । तमेतं भदन्ताक्षेपं समाधत्ते नोत्तरविषयापरिज्ञानादिति । दूष्यविषयं हि दूषणम् अतश्च दूष्यानभिधाने न शक्यं वक्तुम् । न खलु प्रतिज्ञाहेतूदाहरणोपनयनिगमनदोषास्तत्स्वरूपमनभिधाय शक्या दोषत्वेनाख्यापयि-तुमित्यनुच्चारयन् दोषमभिधातुमर्हतीति । तदिदमुक्तं तदिदं व्याहत-मुच्यते नोच्चारयति उत्तरं च ब्रवीतीति । स्यादेतद् न प्रतिवादिना सर्वं दूषणीयम् अन्यतमावयवदूषणेनैव साधनस्य दूषितत्वेन दोषान्तरा-भिधानवैयर्थ्यात् । न खलु मृतो मृत्युना रक्षितो मारयितुं शक्यः एवं दूषि-

तमपि दूषयितुं तस्मात्सत्यपि दूष्यबाहुल्ये ऽन्यतमं दूष्यं तथा च सर्वानु-
भाषणे सर्वस्यादूष्यत्वाद् यद्दूषणीयं तत्पुनरनुवाद्यमिति सर्वानुवादे द्विरनु-
वादो ऽदूष्यानुवादश्चेति दूषकनिग्रहस्थानद्वयं तस्मादनुभाषणमेव निग्रहस्था-
नमिति विपरीतमापतितमित्यत आह अप्रतिज्ञानाच्चेति । एतद्विभक्तौ
न चेदं प्रतिज्ञायते । पूर्वमेवाग्रन्थेन सर्वमुच्चारयितव्यं पश्चादुत्तरं यद्दूष्यं
तदनुवादेनाभिधेयं येन दूष्यानुवादो द्विरनुवादश्च दोषौ स्यातामपि तु
यथा कथं चिदुत्तरं वक्तव्यम् । उत्तरवादवस्योत्तरमाश्रयाभावे न युक्तमिति
तदाश्रयमात्रमनुवदितव्यं तदन्तरेणाशक्याभिधानत्वादुत्तरस्येति । तस्मा-
दुक्तं तन्मात्रस्याप्रत्युच्चारणमननुभाषणं न सर्वस्याप्रत्युच्चारणमननुभाषणमि-
त्यर्थः । नन्वप्रतिभाया निग्रहस्थानत्वविधानेनाननुभाषणस्यापि विहित-
त्वं तद्विशेषत्वात् । न खलु नानुभाषत इत्येतावतैव निगृह्यते अपि त्वन-
नुभाषमाणो दूष्यं न बुध्यते अबुध्यमानश्च तदुत्तरं न प्रतिपद्यते ततो
ऽप्रतिभया निगृह्यते । तदेवमननुभाषणमप्रतिभाविशेष इति अप्रतिभाया
विहिते निग्रहस्थानत्वे तद्विशेषे ऽपि विहितं भवति । यथा गवि सास्नादि-
मत्त्वे विहिते शाबलेये ऽपि विहितं भवति न पुनस्तत्र सास्नादिमत्त्ववि-
धानाय पृथग् यत्नान्तरमारभन्ते । अत्र ब्रूमः । न तावदुत्तराप्रतिपत्तिसामा-
न्यविशेषो ऽननुभाषणं पुंसां सामर्थ्यवैचित्र्यात् । कश्चिद्दूष्यं दूषणं च विद-
न्नपि नानुभाषितुं पारयति वचनकुण्ठत्वात् । तस्माद्वक्त्वाप्रतिभाया-
मननुभाषणमन्यथात्वाप्रतिभाया विशेषो ऽननुभाषणमिति । कश्चिद्दूषणविषयं
वेदानुभाषते च उत्तरप्रतिपत्तिविकलस्तु स्यात्सो ऽयमप्रतिभया निगृह्यते
नाननुभाषणेन तत्र सामर्थ्यात् । कश्चित्पुनर्दूष्यमेव न जानाति सो ऽज्ञा-
नेन निगृह्यते न चाज्ञाने ऽननुभाषणमवश्यंभावि धारयन्तो ऽर्थानित्यपि
वाक्यमुदीरितमपरस्य रूपमात्रपाठमात्रेणानुभाषयेयुः । अप्रतिभा त्ववश्यं
भवेद् न ह्यस्ति सम्भवो दूष्यं न वेदास्य दूषणं तु वेदेति । तथा ऽपि स्वरूप-
तस्तावद्भेदः न हि यदेव दूषणविषयमज्ञानमप्रतिभा तदेव दूष्यविषयमज्ञानं
तस्मात्सत्यप्यननुभाषणाप्रतिभाज्ञानानामनुत्तराभिधानफलत्वे तुल्ये पृथा-

न्तरभेदविवक्षया भेदेनोपन्यासः । त्रिरभिहितस्येति । त्रिरभिधानमेव-मप्रतिपद्यमानस्याविज्ञाततया न वादि ऽधिकार इत्यभिसंधिमत इति ।

**अविज्ञातं चाज्ञानम् (सू. १७)॥** तद्व्याचष्टे विज्ञातार्थस्य परि-षदेति । निग्रहस्थानसामान्यलक्षणमत्र योजयति वार्त्तिककारः । अप्रति-पत्तिर्निग्रहस्थानमिति । उत्तरस्याप्रतिपत्तिरप्रतिभा तद्व्याचष्टे । परप-क्षेति । वार्त्तिके श्लोकपाठादिभिरवज्ञां दर्शयतीति । पर्यन्ते हि निग्रहस्थाने प्रसक्तानुप्रसक्तं तन्निग्रहार्थं नाप्यतेनावतारयता न प्रकृतावधानं क्रियते इह त्वज्ञानमेतावता भेदेनोपन्यास इति । इयं चाप्रतिभा सम्यक्-साधनोपन्यासे दूष्या साधनाभासोपन्यासे तु पर्यनुयोज्योपेक्षणम् ।

**कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः (सू. १९)॥** साधनस्य दूष-णस्य वोपन्यासमभ्युपगम्य तदशक्तः प्रतीयमान एव प्रतिवादिना द्राक्-ध्यानो वा कठोरत्वमवगम्याकस्मात्कार्यं व्यासङ्गाभ्युपगमं कथां व्यव-च्छिनत्ति तत्र विक्षेपो नाम निग्रहस्थानम् । तदनेनाप्रतिभया तूष्णींभावो ऽपि संगृहीतो वेदितव्यः । कार्यव्यासङ्गाभ्युपगमकथाविच्छेदमात्रोपलक्षण-त्वात् । न चेदमर्थान्तरं तत्र प्रकृतमेव साधयामीति व्याजेन प्रसक्तानुप्रस-क्तावतारेण कथाविच्छेदाभावात् इह तु कथाविच्छेदात् । न चास्य हेत्वा-भासेष्वन्तर्भावः । न हि विक्षेपस्यान्यतमलिङ्गधर्मानुविधाने नापि प्रकृतसा-ध्यसिद्धये प्रयोगो येन हेत्वाभासः स्यात् । न च वादिनो विक्षेपो हेत्वाभासः । अनन्तरं कथामभ्युपेत्यैव हेतुमनभिधायापसरणात् । यदि चायं सम्यग्वा हेतुमभिधाय तत्समर्थनासमर्थो ऽपसरेत् किमेतावता न निगृह्यते हेत्वाभासेन वा निगृह्येत [illegible] तु व्यासङ्गादेव । अनर्थकापार्थकाभ्यां तु भेदो ऽस्य स्फुट एव । न ह्यवाचकपदसंकेतः प्रतिपादको येनानर्थकः स्यात् । नापीह पदानि वाक्यानि वा पौर्वापर्येणासंबद्धानि येनापार्थकः स्यात् । न चावधानं येनाप्रतिभा भवेत् । तस्माद्विविधः पृथक् निग्रहस्थानमिति सिद्धम् ।

**स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्गो मतानुज्ञा (सू. २०)॥** व्याचष्टे यः परेण देशितं दोषं स्वपक्षे ऽभ्युपगम्य अथ ब्रवीति अभ्यु-पगम्यानुद्धृत्य आह । मतानुज्ञेति । अनभ्युपगमे ऽनापद्दोषादिति भावः ।

वार्त्तिकं किं तु परस्वेनाननुज्ञातेनादत्तेनेत्यर्थः । प्रसङ्गविधानाच्च निग्रहस्थानमित्यन्य इति । यदि पुरुषत्वाच्चोरोऽहं ततो भवानपि चोरः स्यात् । न च भवत एवमिष्टं तस्मात्त्वय्येवानैकान्तिकत्वान्नायं हेतुरिति प्रसङ्गविपर्ययः तस्मान्नात्मनश्चोरत्वमनेनाभ्युपगतमिति मतानुज्ञा नार्थो निग्रहस्थानमित्यर्थः । निराकरोति एतत्तु न कस्मात् अत एव कुतः यत एवासौ उत्तरे कर्त्तव्ये प्रसङ्गं करोति अत एव निगृह्यते । यदि हि वादी प्रतिवादिनं ब्रूयात्सत्यमहं चोर एवेति तदा किमनैकान्तिकत्वं वक्तुं यात्कर्तुं तस्मात्पुरुषत्वं न चोरत्वहेतुः अपि तु परस्वेनादत्तेन संबन्ध इत्युत्तरे कर्त्तव्ये यदुत्तराभासमाह तेन ज्ञापयति नूनमयं सम्यगुत्तरं न जानाति सम्यगुत्तराज्ञानान्निगृह्यते तच्चोत्तरापरिज्ञानं मतानुज्ञाद्वारेणोद्भाव्यमानं मतानुज्ञेत्युच्यते ॥

निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ( सू.२१ ) ॥

व्याचष्टे पर्यनुयोज्यो नामेति । निग्रहस्योपपत्तिः प्रमाणतः सिद्धिस्तयेत्यर्थः । एतत्तु न तावद्वादिनोद्भावनीयं न ह्यसौ स्वस्यसाधनावद्यमनुन्मत्त उद्भावयति नापि प्रतिवादिना न ह्यनुन्मत्त आत्मानमात्मना निगृह्णाति । अपि तु पर्यनुयोज्यं जानानः कस्मादुपेक्षते तस्मात्सभापतिना वादिप्रतिवादिभ्यामननुयुक्तया वा परिषदा तन्निग्रहस्थानमुद्भावनीयम् । अत्र च तत्त्वनिर्णयावसाने वादे द्वयोरपि निग्रहात्परिषदेव विजयते जल्पवितण्डयोश्च तत्त्वानपेक्षपुरुषसामर्थ्यपरीक्षणप्रवृत्तयोः प्रतिवादी निगृह्यते । साधनाभासवादिना ऽपि वादिना स्फुरता प्रतिवादी स्तम्भितो यतः सम्यक्साधनोपन्यासो विहितः । प्रतिवादिन उत्तराप्रतिपत्तिरप्रतिभा साधनाभासोपन्यासे च उत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणमिति विशेषः । वार्त्तिकं नान्यवचनादित्येके । यत्र प्रतिवादी तूष्णीं भवति तत्र तूष्णींभावेनैव वादिन उत्तरानर्हतां दर्शयन्नस्य साधनाभासवादितां सूचयति यथास्य दोषोद्भावनं सम्यग्दोषमनुक्त्वा करोति तथाप्यसौ दुष्टमुत्तरं ददत्तत्साधनदोषमेव सूचयति । उपदिशन्ति हि वृद्धाः दुष्टे हि साधने दुष्टोत्तरं देयमिति । तस्मादवचने ऽन्यवचने वा न पर्यनुयोज्योपेक्षणं निग्रहस्थानमुभयथा ऽप्यनुपेक्षणादित्यर्थः । दूषयति तच्च नेति । साधनस्य हि सम्यग्दोषं जानन् तमेव ब्रूयात् । यो ऽयं प्राप्तावसरो

ऽभ्रुवन् विभ्रुवन् वा नूनं न सम्यङ्क्षु दोषं जानाति । निश्चितप्रमाणभा-
वस्य पुरुषस्येङ्गितादिभिरभिप्रायं सूच्यते न त्वनिश्चितप्रमाणभावस्य । यथा
ऽऽहुः । श्रुतिस्मृत्यतिरेकेण युक्तजल्पाकभाषितम् । तद्याथार्थ्यं तु दृष्टं चेद्
दुष्टमेवावधार्यताम् । इति सूक्तं जानानो ऽप्ययं किमर्थमन्यद् ब्रवीतीति ॥

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः** (सू २२) ॥ न चायमप्रतिभातो न भिद्यते । सा ह्युत्तराप्रतिपत्तिरियं त्वनु-
त्तरस्येवोत्तरत्वेन विप्रतिपत्तिरिति महान् विशेषः । अनेनैव सर्वा जातयो
निग्रहस्थानत्वेन संगृहीता भवन्ति । न च हेत्वाभासानामितो न भेदः
ते हि वादिनो निग्रहस्थानमयं तु प्रतिवादिन इति महान्विशेषः । अत
एव भवतामपि गाथा असाधनाङ्ग वचनमदोषोद्भावनं द्वयोः निग्रहस्थानम-
न्यत्तु न युक्तमिति नेष्यते इति । अप्रतिभाया एव प्रसज्य प्रतिषेधात्मिकाया
अस्या निरनुयोज्यानुयोगस्य भेदं दर्शयति भाष्यकारः । **निग्रहस्थानलक्ष-
णस्य मिथ्याध्यवसायात्** समारोपादित्यर्थः । सुगमं वार्तिकम् ॥

**सिद्धान्तमभ्युपेत्यानियमात्कथाप्रसङ्गो ऽपसिद्धान्तः** (सू २३)॥
अभ्युपेत्येत्यस्य व्याख्यानं **कस्य चिदर्थस्य तथाभावं प्रतिज्ञायेति** ।
**प्रतिज्ञातार्थविपर्ययादिति** । अभ्युपेतार्थविपर्ययात्सिद्धान्तविपर्ययादित्य-
र्थः । तदेतदनियमादित्यस्य व्याख्यानम् । तत्र सांख्यीयं सिद्धान्तमाह । यथा
न ऽसदिति । तस्य पर्यायान्तरेण कथनं न सत इति । नासदात्मानमित्यस्य
पर्यायान्तरेण विवरणं नासदुत्पद्यत इति । सो ऽयं सिद्धान्तः सांख्यानां तम-
[illegible]स्य तद्विपर्ययात्कथाप्रसङ्गमाह स्वपक्षमवस्थापयति । पक्षस्थापनं दर्श-
[illegible] । एका प्रकृतिर्व्यक्तस्योपलभ्यमानस्यार्थजातस्य युक्तेति । प्रतिज्ञा विकारा-
[illegible]नेति व्यक्तस्यैवानुवादः । अन्वयदर्शनादिति हेतुः । मृदन्वितानामिति
[illegible]र्म्यौदाहरणं तथा ऽयं व्यक्तभेदः सुखदुःखमोहसमन्वितो गृह्यते इत्युप-
निगमनमाह तस्मात्समन्वयदर्शनाद्धिस्वव्यक्तस्य कोरित्यपेक्षायामुत्तर
[illegible]ादिभिरिति । एकप्रकृति सर्वो विकार इति सेयं कथा सिद्धान्तमभ्युपेत्येत-
[illegible]धान् सांख्यो नैयायिकेन पर्यनुयुज्यते । दूषणाय पृच्छ्यते । अथ प्रकृ-
[illegible]विकार इति कथं लक्षितव्यमिति । स एव नैयायिकेन पृष्टः सांख्य
[illegible]तरमाह । अवस्थितस्य मृदादेर्धर्मान्तरं निवृत्तौ घटादिविनाशे यद्धर्मा-

न्तर मणिकादि प्रवर्तते अथदेव जायते वा प्रकृतिर्मृद्रादि ।
निवर्तते प्रवर्तते वा स विकार इति । एतस्मिन्नुदाहरणे ऽपसिद्धान्त ये
सो ऽयं प्रतिज्ञातार्थस्य सिद्धान्तार्थस्य वादी विपर्ययादनियमात्
स्वयति प्रतिघात सिद्धान्त' ध्वन्यनेन नापदाविर्भवतीति तत्पद
स्तिरोभवतीति न विनश्यतीति । तथा ऽपि कस्मादनेन सिद्धान्ते
अय सिद्धान्तेनैव कस्मान्न बाध्यत इत्यत आह । सदसतो…
हि लौकिक प्रमाणसिद्ध सिद्धान्तस्त्वभ्युपगममात्रसिद्धो ऽप्रामाणिक
सिद्धान्तो बलवता बाध्यते । तदेतन्मृदुमेधसामपि न स्यादिति
प्रेक्षावतां कर्तृणामपि तु पटुमेधसामप्युत्पादविनाशो प्रवृत्त्युपरमो
न स्यातामित्यर्थ । अथ प्रत्यवस्थित. साध्यो नैयायिकेन पु…
आत्मलाभ सतश्चात्महानमभ्युपैति ततो ऽस्यापसिद्धान्तो भव…
माभ्युपैति ततो ऽस्य न सिद्ध्यति । विकारो ह्यनेन पक्षीकृत एकप्रकृति
विकारलक्षणाभावेन विकाराणामनिरूपणात् तदभावे न प्रतिज्ञा
हेत्वर्थ आश्रयासिद्धत्वात् । नन्वेवं प्रतिज्ञातार्थविरोधित्वात्प्र…
स्यापसव्योत्पादस्य हेत्वाभास एव निग्रहस्थान भवेत् । प्रतिज्ञ
हेत्वाशङ्क्य वार्तिककार आह । प्रतिज्ञातार्थव्यतिरेकेणेति । अ…
प्रकृतयो विकारा एकप्रकृतिकत्वादित्यत्र हेतु साध्यविरुद्धेन व्य…
चितो येन विरुद्धो भवेत् । नाप्येकप्रकृतिकत्व विकाराणां यदुक्तं
समन्वयेन हेतुना येन प्रतिज्ञाविरोधो भवेत् । वैधर्म्येण च प्रति…
विरोध इत्युक्तं वार्तिककृता स्वसिद्धान्तस्य गोत्वादेर्नित्यत्व…
द्विरोध इति । अपि च तत्र बलवता सिद्धान्तेनानैकान्तिकदेशना ,
इह तु सिद्धान्त एव बाध्यते । दुर्बल इत्युदाहरणपेनकल्पनानि
तस्माद्यत्र प्रतिज्ञार्थेन विरोध तत्र विरुद्धो हेत्वाभास प्रति…
या इह तु प्रतिज्ञार्थव्यतिरेकेणाभ्युपगमान्तरेण विरोध इति पृथग्
परविरुद्धार्थाभिधायिनो ऽसामर्थ्यान्निग्रहस्थान सम्प्रतिपन्नयोरिति ।

हेत्वाभासाश्च यथोक्ताः (सू॰ २४) ॥ व्याचष्टे हेत्व…
रणेति । यदानुक्तमपि किं विदधाति निग्रहस्थानं तत्प्रकारेण …
यथोक्ता इति सूत्रावयवनिराकरणीयमाशङ्कामाह । किं पुनर्लक्षणान्ता

निग्रहस्थानतामापद्यन्ते यथा प्रमाणानि प्रमेयत्वं तेषा-
ःपु॰                    लक्षणानां प्रमाणत्वं प्रमाण्य-
लक्षणान्तरेण प्रमाणानि प्रमेयत्वमापद्यन्तइति यद्वाया:
आह भगवान् सूत्रकार: यथोक्ता इति । सकलशास्त्रार्थमुपसंह-
तइमे प्रमाणादय उद्दिष्टा लक्षिताः परीक्षिताश्चेति । इति
समाप्तौ । वार्त्तिककार: संगृह्णाति जातीनां समपञ्चानामिति ।
धर्मलक्षणमिति । समासेन जातीनामपि प्रतिज्ञादिनिग्रहस्थाने
निवेश इति सूचयति । शास्त्रस्य चोपसंहार इति । तदने
इय वद्भिरुद्दिष्ट इत्यनेन कृत इत्यर्थ: ॥

यदभूत् किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम् ।
उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात् ॥ १ ॥
संसारजलधिसेतौ वृषकेतौ सकलदुःखशमहेतौ ।
तस्य फलमखिलमर्पितमेतेन प्रीयतामीशः ॥ २ ॥
तत्त्वज्ञानप्रथमसुहृद्भिर्गुरूणामनुध्येकाला
सेयं मोक्षामृतमयफला सूक्तिमञ्जुप्रवाला ।
प्रत्यक्षागममयमहान्यायमूला मनोज्ञा
टीकावीरुद्भवतु कृतिनां नन्दिनी षट्पदानाम् ॥ ३ ॥
क्रूरा: कृतो ऽञ्जलिरयं बलिरेष दत्त:
कार्यो मया प्रकरणं च यथाभिलाषम् ।
अभ्यर्थये वितथवाङ्मयपांसुवर्षै-
र्मा मा ऽऽविलीकुरुत कीर्तिनदी: परेषाम् ॥ ४ ॥

इति श्रीमिश्रवाचस्पतिविरचितायां न्यायवार्तिक-
तात्पर्यटीकायां पञ्चमो ऽध्यायः समाप्तः ॥

समाप्तश्चायं ग्रन्थः ॥

शुभम्भूयात् ॥